* श्रीः *

# परिभाषेन्दुशेखरः

## तत्त्वप्रकाशिका-समलङ्कृत-भूति-भूषितः ।

नत्वा साम्बं शिवं ब्रह्म नागेशः कुरुते सुधीः ।
बालानां सुखबोधाय परिभाषेन्दुशेखरम् ॥ १ ॥

---

॥ श्रीगणेशाय नमः ॥

प्रणम्य श्रीविश्वनाथं रामकृष्णः सतां मुदे ।
तनोति भूतितिलकं परिभाषेन्दुशेखरे ॥

सत्स्वपि महाभाष्यकैयटाद्याकरग्रन्थेषु परिभाषार्थतत्त्वप्रतिपादकेषु प्रतिपित्सूनां प्रतिपत्तिसौकर्यायेमं ग्रन्थमारभमाणोऽत्र श्रोतॄणां प्रवृत्तयेऽनुबन्धचतुष्टयं प्रदर्शयन्, विघ्नोच्छेदपूर्वकसमाप्तये कृतं शिष्टाचारानुमितश्रुतिभाष्यादिबोधितेतिकर्तव्यताकं मङ्गलं शिष्यशिक्षायै अभ्यासशालिनामनुषङ्गतो मङ्गलाय च रचयति—नत्वेति । अनावृतस्य सविकल्पकविषयत्वासम्भवादाह—साम्बेति । अम्बा प्रधानं तया शबलितमित्यर्थः । यद्वा—अम्बा = पार्वती तत्सहितम् ; शिवम् = विश्वेश्वरम् , ब्रह्म = तत्स्वरूपमिति ।

---

## अथ तत्त्वप्रकाशिका प्रारभ्यते ।

गणेशं प्रणमामीशं विघ्नसंहारहेतवे ।
यस्य गण्डस्थले राजिर्भ्रमराणां विराजते ॥
यत्कृपालवमात्रेण सुलभाः सर्वसिद्धयः ।
तं गुरुं परमं वन्दे श्री'दामोदर' संज्ञकम् ॥
नत्वा विश्वेश्वरं साम्बं मुदे गणपतिर्विदाम् ।
करोति 'भूति' तिलके व्याख्यां "तत्त्वप्रकाशिकाम्" ॥

नत्वेतीति । स्वनिष्ठापकृष्टत्वप्रकारकबोधप्रकारकबोधानुकूलव्यापार एव नमस्कारपदार्थः । 'देवान्नमस्करोति देवदत्तः' इत्यादौ देवदत्तवृत्त्यपकृष्टत्वप्रकारको बोधः 'अहं त्वत्तोऽपकृष्टः' इत्यकारको देवदत्तवृत्तिस्तत्प्रकारको बोधः 'अयं जनो मत्त आत्मानमपकृष्टं जानाति' इत्याकारको देववृत्तिस्तदनुकूलो व्यापारो देवदत्तवृत्तिरिति लक्षणसमन्वयः । व्यापारश्च—करशिरःसंयोगरूपो नमःपदप्रयोगरूपश्च । एवं 'धनलाभाय शूद्रं नमस्करोति' इत्यादावपि लक्षणसमन्वयः स्वयमूहनीयः ।

यद्वा—अम्बयति = जीवयतीत्यम्बोत्पादनशक्तिः, शेतेऽस्मिन् जगदिति व्युत्पन्नशिवशब्देन संहारशक्तिरुच्यते, ताभ्यां सहितम्; ब्रह्म, बृंहयति = पालयतीति व्युत्पत्त्या ब्रह्मपदेन पालनशक्तिमद् गृह्यते इति शक्तित्रयविशिष्टमित्यर्थः। यद्वा—अम्बयतीत्यम्बो = विष्णुः, शिवः = शङ्करः, ताभ्यां सहितम्; ब्रह्म = ब्रह्माणम्; नत्वेत्यर्थः। यद्वा—अम्बा = माता = सती-देवी, तया सहितम्; शिवम् = शिवभट्टम् = स्वपितरं ब्रह्मस्वरूपिणम्; नत्वेत्यर्थः। न च मातृरूपार्थस्य सनिरूपकत्वेन शिवभट्टनिरूपितमातृत्वस्यैव स्वरसतः प्रतीतेः सतीदेवीसाहित्यमनुपपन्नमिति वाच्यम्; गोत्रवर्गे पितामह्याः सर्वतः श्रैष्ठ्येन तन्नमनेऽपि क्षतिविरहात्। अत एव सत्स्वपि गोत्रजान्तरेषु तस्या एव प्रथमभागार्हत्वेन धर्मशास्त्रादौ प्रसिद्धिः। किञ्च सनिरूपकार्थबोधकपदसमभिव्याहृतषष्ठीस्थले स्वप्रकृत्यर्थनिरूपिततादृशार्थग्रहणेऽपि साहित्यबोधकपदसमभिव्याहारे उपस्थितत्वाविशेषेण साहित्यानुयोगिनिरूपितमातृत्वग्रहण इव नतिकर्तृनिरूपितमातृत्वग्रहणेऽपि क्षतिविरहः। बाल्यदशायां मृतमातृकस्य नागेशस्य पितामह्यैव पालनं कृतमतोऽत्र कृतज्ञेन तेन तन्नमनं कृतमिति कश्चित्। केचित्तु—परिभाषेन्दुशेखरमित्यावर्त्य धातूनामनेकार्थत्वात् परितो भासमानो द्विकलात्मक इन्दुः शेखरे यस्य तं चन्द्रशेखरम्; शिवं नत्वेत्यर्थ इति वदन्ति।

नागेश इति। आत्मनामेति निषेधस्तूच्चारणविषयो न लेखनविषय इति बोध्यम्। अत एव गोनर्दीय आह भट्टोजीदीक्षितकृतिरित्यादिस्तत्र तत्र ग्रन्थकर्तां लेखः सङ्गच्छते (यद्वा—कृ...) कन्यायेन समाहितं कैश्चित्। तन्न, मङ्गलस्य विघ्नध्वंसादिप्रयोजकत्वस्यानुमितश्रुत्यादिबोधितत्वेऽपि आत्मनामोच्चारणजन्यदुरितध्वंसप्रयोजकत्वस्याप्रसक्तेः। ...यदपि—आत्मनामेति निषेधस्य, स्वकीर्त्यनुवृत्तये स्वनामग्रहणस्य शिष्टाचारानुगृहीतत्वात् तद्बोधकानुमितस्मृत्या बाध इति। तदपि न, स्वकीर्त्यनुवृत्तये स्वनामलेखनस्य शिष्टाचारविषयत्वेऽपि उच्चारणस्य तद्विषयत्वाभावेन स्मृतिबाधकल्पनस्याप्रामाणिकत्वात्। धर्मिग्राहकमानेन स्वकीर्तिप्रयोजकताया

---

नन्वेवमपि—'देवं नमस्कृत्य शूद्रं नमस्करोति' इत्यापद्येत, स्वनिष्ठापकृष्टत्वप्रकारकबोधप्रकारको बोधः 'अयमेतस्मादात्मानमपकृष्टं जानाति' इत्याकारकः शूद्रवृत्तिबोधः तादृशबोधरूपफलाश्रयत्वेन तस्यापि कर्मत्वादिति चेत्—सत्यम्। नात्र शुद्धसमवायः फलतावच्छेदकसम्बन्धः, अपि तु—स्वविषयविषयावधिवृत्तित्वसमानाधिकरणसमवाय एव। स्वपदेन च द्वितीयो बोधो ग्राह्यः, तद्विषयः प्रथमो बोधः तद्विषयोऽपकृष्टत्वं तदवधिर्देवस्तद्वृत्तित्वसमानाधिकरणसमवायेन फलतावच्छेदकेन फलाश्रयत्वं देवस्य न शूद्रस्य, न च तटस्थस्येति न तस्य कर्मत्वापत्तिः। नापि स्वापेक्षया अपकृष्टे 'देवदत्तं नमस्करोति' इति प्रयोगानुपपत्तिरिति बोध्यम्।

गिरिधरोपाध्यायास्तु—उत्कर्षप्रतिपत्त्यनुकूलव्यापारो नतिपदार्थः, प्रतिपत्त्यन्वयि विशेष्यित्वं समवेतत्वं चैतद्द्वयं द्वितीयार्थः; तथा च शिवसमवेतशिवविशेष्यताकोत्कर्षप्रतिपत्त्यनुकूलो व्यापार इति बोधः। यदि च अभिध्याय ...उत्कर्षप्रतिपत्तिस्तदा उत्कर्षप्रतिपत्तीच्छैव नमस्कारपदार्थः, इच्छायाञ्च उद्देश्यतया प्रतिपत्तेरन्वयः। एतेन च ईश्वरादिसमवेतप्रतिपत्तेर्नित्यतया व्यापारस्य तदनुकूलत्वविरहेण शिवादिपदसमभिव्याहारे नमःपदप्रयोगासङ्गतिरित्यपास्तम् इत्याहुः ॥ १ ॥

**प्राचीनवैयाकरणतन्त्रे वाचनिकान्यत्र पाणिनीयतन्त्रे ——**

---

ुमितस्मृतितो लाभेन स्वकीर्तिप्रयोजकत्वदुरितानुकूलत्वयोर्विरोधाभावेन बाध-
क्तसम्भवस्याप्यभावाच्च, यथा-चिकित्साशास्त्रस्थेन रोगविशेषग्रस्तपुरुषोद्देश्यकेन
ानविधिना सह न धर्मशास्त्रस्थसुरापाननिषेधस्य बाध्यबाधकभावः । अत
यागीयपशुवधजन्यदुरितदूरीकरणाय प्रायश्चित्ताचरणमपि शिष्टव्यवहारविषयो
ते । वस्तुतस्तु-स्वकीर्त्युद्देशेन स्वनामोच्चारणस्य शिष्टाचारविषयत्वमेवाप्रामा-
ामिति ध्येयम् । केचित्तु—निषेधोऽयं पारिभाषिकनामविषयो न यौगिकनाम-
यः, नागेश इति यौगिकं नामेति न दोष इति । तन्न, पारिभाषिकनामान्तरानुप-
ात सङ्कोचे प्रमाणाभावाच्च । केचित्तु – नागानामीशः = प्रभवः, तान् = पतञ्जलीन्-
ा द्वितीयान्तं वर्णयन्ति । केचिच्च—निषेधस्य द्वादशेऽह्नि पित्रादिकृतनामपरत्वात
वहारेषु नागोजीभट्टेति नाम्न, प्रसिद्धत्वेन नागेश इति नाम्नस्तत्त्वे मानाभावः ।
एव ग्रन्थान्ते नागोजीभट्टकृत इति स्वनामोल्लेखः; नागेश इति तु नागस्य
ञ्जलेः ईलेन्दमीस्तां श्यति तनूकरोतीति गूढाभिप्रायकं स्वविशेषणमुपादत्ते, न तु
ाश इति स्वनामेति वदन्ति । अन्ये तु—नागेशः पतञ्जलिरेवैतद्ग्रन्थकर्ता, अहन्तु
ळं भाष्यादित उपयुक्तवाक्यानि एकत्र संघटयामि लेखक इवेति ग्रन्थकर्तुः प्रौढतां
यन्ति । कुरुत इति । यत्तु—सुखबोधस्य बालनिष्ठत्वेन कर्तृगामित्वाभावान्नात्मने
प्रसक्तिरिति । तन्न, बालनिष्ठसुखबोधजन्यापूर्वस्य फलतयाऽभिप्रेतत्वेन तस्य च
गामितया दोषाभावात् । यद्वा—प्रकथने उपयोगे वा 'गन्धनावक्षेपणे' त्यात्मने-
द् । सुधीरिति । प्रेक्षावतां स्वग्रन्थस्यानुपादेयत्वनिरासायैतत्, न तु आत्म-
सनायेति बोध्यम् । बालानाम् = भाष्यकैयटाद्याकरग्रन्थतो निखिलपरिभाषार्थ-
र्यासमर्थानां व्युत्पन्नानामित्यर्थः ! सुखबोधाय । सुखेनाल्पायासेनैवाखिल-
भाषार्थतत्त्वबोधायेत्यर्थः । परिभाषेन्दुशेखरम् । परिभाषा इन्दुरिव प्रकाशकत्वेन
वरे यस्य तं ग्रन्थम् , परिभाषार्थस्य मुख्यप्रतिपाद्यत्वेन मस्तकधृतत्वारोपः ।

अत्र बालानामित्युक्त्या निरुक्तबालानामधिकारित्वम् , सुखबोधायेत्यनेन
दृशसुखबोधस्य प्रयोजनत्वम् , परिभाषेन्दुशेखरमित्युक्त्या च परिभाषार्थनिर्णयस्य
षयत्वञ्चेत्यनुबन्धत्रयं सूचितम् , सम्बन्धरूपतुरीयानुबन्धश्च स्फुटत्वान्नोक्तः ।
नुबन्धत्वम्—प्रवृत्तिप्रयोजकज्ञानविषयत्वम् , अधिकारिणः प्रवृत्तिप्रयोजककृति-
ध्यत्वप्रकारकज्ञानविषयतया प्रयोजनविषययोश्च तादृशेष्टसाधनत्वप्रकारकज्ञान
षयीभूततया च लक्षणसमन्वयः ॥ १ ॥

यद्यपि परिभाषेन्दुशेखरमित्यनेन विषयो दर्शितस्तथाप्यत्र सर्वासां परिभा-
णां व्याख्यानाभावेन न्यूनतापत्तिरतस्तां परिहरन् , व्याख्येयपरिभाषाः प्रतिजा-
ते—प्राचीनेति । प्राचीनवैयाकरणानामिन्द्रादीनाम् , तन्त्रे = शास्त्रे, वाचनिकानि =
चनरूपाणि, विनयादित्वात्स्वार्थे ठक् ; ज्ञापकन्यायाभ्यां सिद्धानि = प्रमितानि;

भाष्यवार्तिकयोरुपनिबद्धानि यानि परिभाषारूपाणि तानि व्याख्यायन्ते ।

---

भाष्यवार्तिकयोः = भाष्यवार्तिककारयो रुपनिबद्धानि = अभिप्रेतानि, यानि परिभाषारूपाणि तानि अत्र ग्रन्थे व्याख्यायन्ते । व्याख्यानञ्च—प्रकृतशास्त्रप्रवृत्तिनिवृत्त्युपयोगित्वेन प्रतिज्ञानविशिष्टमत्र विवक्षितम्, तेन 'अकृतव्यूहा०' इत्याद्युपन्यासेऽपि न प्रतिज्ञाविरोधः ।

नन्वत्र ज्ञापकन्यायसिद्धानीति विशेषणेन वाचनिकीनामसङ्ग्रह इति चेद्, अत्र केचित्—प्रायेणेति शेषं कृत्वा वाचनिकीनां सङ्ग्रहमाहुः । अन्ये तु—ज्ञापकन्यायशब्दावर्शआद्यजन्तौ ज्ञापकन्यायसिद्धपरौ, सिद्धशब्दश्च वाचनिकपरस्तेन 'निदिश्यमानस्ये०' त्यादिवाचनिकीनां सङ्ग्रह इत्याहुः । सदाशिवभट्टास्तु—'भाष्यवार्तिकयोरिति पृथक् कोटिस्तेन ज्ञापकन्यायसिद्धानां भाष्याद्यनुपन्यस्ताना 'मकृतव्यूहा०' इत्यादिपरिभाषाणां ज्ञापकन्यायासिद्धानां केवलवाचनिकीनाञ्च सङ्ग्रहमाहुः । केचिच्च—वाचनिकानीत्यस्य आवृत्त्या तासां सङ्ग्रहमाहुः । केचिच्च—प्राचीनवैयाकरणतन्त्रे वाचनिकान्यपि पाणिनीयतन्त्रे ज्ञापकन्यायसिद्धान्यपि यानि भाष्यवार्तिकयोरुपनिबद्धानि तान्येवात्र व्याख्यायन्त इति व्याचख्युः । वस्तुतस्तु—ज्ञापकन्यायासिद्धानि व्याख्येयपरिभाषारूपाणि नैव सन्तीति प्राचीनेत्यादेर्यथाश्रुतार्थ एव समीचीनः । यस्मिन्विधिरित्यादौ वाचनिक्येषेत्याद्युल्लेखस्तु भाष्ये एतस्यां ज्ञापकन्यायौ नोपन्यस्तौ केवलं वचनरूपेण पठितेत्येवार्थः, न तु तौ न स्त इति ।

व्याख्येयपरिभाषात्वञ्च—सङ्केतग्राहकभिन्नत्वे सति शब्दधर्मिकसाधुत्वप्रकारकशास्त्रजन्याप्रामाण्यज्ञानानास्कन्दितबोधे सहकारित्वेन मुन्यभिप्रेतत्वे सति पाणिन्युच्चरितभिन्नत्वम्, 'षष्ठी स्थानेयोगे'त्यादीनां पाणिन्युच्चरितत्वेऽपि 'निर्दिश्यमानस्यादेशा भवन्ती' त्यानुपूर्वीमद्वाक्यस्य पाणिन्यनुच्चारितत्वान्न दोषः । कासाञ्चिदनेवंविधत्वेऽपि पाणिनिप्रयत्नानुमितत्वसादृश्यादारोपितं परिभाषात्वमनुसन्धेयम् ।

अथात्र शास्त्रत्वसम्पत्तिमन्तरा बाधचिन्ताया असम्भवात् शास्त्रत्वसम्पादनोद्देशनामकं 'व्याख्यानत०' इत्यारभ्य—'एकदेशविकृतमि'त्यन्तं प्रथमम्, शास्त्रत्वसम्पत्तौ च बाधचिन्ताया उचितत्वात् 'परनित्ये' त्या 'द्युभयनिर्देश०' इत्यन्तं बाधबीजनामकं द्वितीयम्, पुर्वोक्तप्रकरणद्वयावशिष्टानामर्थानां बोध-

---

न दोष इति । नन्वेवमपि 'अकः सवर्णे दीर्घः' इत्यस्य 'इको यणचि' इत्येदपेक्षया व्याप्यत्वेन तस्य च व्यापकत्वात्तस्मिन् सवर्णाजतिरिक्तत्वेन सङ्कोचात्तद्बोधोपयोगिबोधजनकत्वेन परिभाषात्वम् 'अकः सवर्णे०' इत्यत्रातिव्याप्तमिति चेन्न । लक्ष्यधर्मिकसाधुत्वप्रकारकबोधाजनकत्वस्यापि निवेशेनादोषात् । एवं निषेधशास्त्राणामपि परिभाषात्वं न भवति, पृथग्बोधजनकत्वाभावात् । कासाञ्चिदिति । स्वातन्त्र्येण व्यवस्थापिकानाम् 'असिद्धं बहिरङ्गम्०' इत्यादीनामित्यर्थः ।

## अथ शास्त्रत्वसम्पादनोद्देशनामकं प्रथमं प्रकरणम् ।

**ननु लणअइउण्सूत्रयोर्णकारद्वयस्यैवोपादानेनाणिण्ग्रहणेषु सन्देहादनिर्णयोऽत आह—**

---

कत्वादेवाऽन्ते निरूपणाहं शास्त्रशेषनामकं तृतीयं प्रकरणं सन्दर्भशुद्धिमनुरुध्य क्रमेण ग्रन्थकार उपनिबबन्ध ।

तत्र च तात्पर्यनिर्णायकप्रमाणनिरूपणात् सर्वशास्त्रोपकारकत्वेन वर्णसमाम्नायस्थमहेश्वरप्रणीतणकारानुबन्धज्ञापितत्वेन चाभ्यर्हितत्वात् प्रथममुपन्यासमर्हन्तीं परिभाषां व्याचिख्यासुरवतारयति—नन्विति । णकारेति । णपदं विद्यमानणकारपरम्, तेन उक्तसूत्रयोर्विद्यमानौ यौ णकारौ तद्द्वयस्येत्यर्थः; एतेन—प्रत्येकसूत्रे णद्वयाभावेन द्वन्द्वानुपपत्तिरित्यपास्तम् । अणिण्ग्रहणेषु = तद्ग्राहकप्रत्याहारपदेषु; सन्देहात् = तात्पर्यसन्देहात्; अनिर्णयः = 'तात्पर्यसन्देहाच्छाब्दबोध एव ने'ति मते शाब्दबोधाभावः । 'तात्पर्यसन्देहात्सन्देहात्मकः शाब्दबोध' इति मते निर्णयात्मकशाब्दबोधाभाव इत्यर्थः ।

नन्वादिरन्त्येनेति शास्त्रेणाद्यन्ताक्षिप्तसमुदायघटकबोध्यस्यैवाजादिपदप्रतिपाद्यताया बोधितत्वेन प्रकृताकारादिणकारान्तसमुदायान्तःपातिवर्णबोध्यत्वरूपाण्पदसङ्केततावच्छेदककुक्षौ समुदायस्याकारादिणकारान्तत्वेनानुगतरूपेणैव प्रवेशात् सङ्केतभेदाभावेन कथं तात्पर्यसन्देहः । नहि पश्वादिपदं शृण्वन् 'किं पीतलाङ्गूलावच्छिन्नबोधतात्पर्येणायमेतत्पशुपदमुदचीचरत्, उत श्वेतलाङ्गूलावच्छिन्नबोधतात्पर्येणे'ति कश्चित्सन्दिहानो भवति, लाङ्गूलस्य पशुपदशक्तौ विशेषरूपेण प्रवेशाभावादिति चेत्—सत्यम् । एवं सति पूर्वणकारस्य वैयर्थ्यापत्त्येदृशस्यानुगतधर्मस्याण्पदसङ्केत-

---

ननु—तात्पर्यसन्देहोऽपि तदैव यदा सङ्केतभेदो भवति, सङ्केतभेदश्च तदैव यदा शक्यतावच्छेदकभेदः शक्यतावच्छेदकतावच्छेदकभेदो वा । यथा—घटपदात् घटत्वेनानेकव्यक्त्युपस्थितावपि शक्त्यन्तराभावेन सन्देहोत्थापकार्थान्तरानुपस्थितौ उपस्थितिविषयतावच्छेदकावच्छिन्नबोधप्रयोजकतात्पर्यसन्देहस्याभावस्तद्वदत्रापि सन्देहस्य दुरुपपादत्वमतः शङ्कासमाधानाभ्यां प्रकृते सङ्केतभेदमुपपादयन्नाह—नन्विति ।

**सन्दिहानो भवतीति** । पशुपदशक्तिप्रमावतः पुरुषस्य पीतत्वादिविशेषरूपेण लाङ्गूलावच्छिन्नबोधजनकत्वाभाववत्प्रकारकनिश्चयात्मकप्रतिबन्धकसद्भावेन सन्देहासम्भवादिति भावः । **विशेषरूपेणेति** । पीतत्वादिनानारूपेणेति तदर्थः ।

# व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम् ॥१॥

तावच्छेदकताया अनभ्युपगमेन त्रिकवृत्तिचतुर्दशवृत्त्योर्व्याप्यव्यापकयोरन्यतमत्वयोरेव सङ्केततावच्छेदकतायाः कल्पनेन नानाशक्तिकत्वात्सन्देहः स्यादेवेति बोध्यम्। वस्तुतस्तु—अन्त्येत्सदृशेन सहित आदिसदृशः स्वघटकानुयोगिकसादृश्यप्रतियोगित्वेन विवक्षितवर्णनिष्ठान्ततानिरूपकस्य स्वघटकानुयोगिकसादृश्यप्रतियोगित्वेन विवक्षितवर्णनिष्ठादितानिरूपकस्य समुदायस्य घटकानां संज्ञेति आदिरन्त्येति सङ्ग्राहकवाक्यार्थस्य सर्वाभिमतत्वेन सूत्रस्थाणघटक-णस्य 'अइउण् सूत्रस्थणकारसदृशत्वेन विवक्षायामकारस्य 'अइउण्'-सूत्रघटकाकारसदृशत्वेन विवक्षायाञ्च तदण्पदशक्यतावच्छेदककुक्षौ अ इ उ इत्येतत्त्रितयवृत्तिसमुदायत्वस्य, उक्तणकारस्य लण्घटकणकारसदृशत्वेन विवक्षायाञ्च तादृशगा तच्चतुर्दशवर्णसमुदायवर्तिनः समुदायत्वस्य च प्रवेशात् पीलुत्वस्येवात्र शब्दस्यैक्येऽप्यर्थस्य भेदात् शक्यतावच्छेदकभेदेन सङ्केतभेदात तात्पर्यसन्देहः समुचित एवेति दिक् ।

---

अन्यतमत्वयोरिति। ननु तद्भिन्नभिन्नत्वमन्यतमत्वमिति प्रतियोगितया सर्वजगत्प्रवेशाद्—गौरवम्। किञ्च 'अ इ-उ' एतदन्यतमत्वम्—अकारभिन्नत्वे सति य इकारभिन्नस्तद्भिन्नत्वे सति य उकारभिन्नस्तद्भिन्नत्वम्, एवमकारभिन्नत्वे सति य उकारभिन्नस्तद्भिन्नत्वे सति य इकारभिन्नस्तद्भिन्नत्वमित्येवं रीत्या विशेष्यविशेषणभावे विनिगमनाविरहात् एकशक्तिविषये एव नानाशक्यतावच्छेदकापत्तिरिति चेन्न। 'अ—इ—उ' एतदन्यतमत्वम्—अकारभेद—इकारभेद—उकारभेद—एतद्भेदत्रयात्यन्ताभावत्वम्। अत्र भेदत्रयस्य 'एकत्र द्वयम्' इति रीत्या त्रित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन भेदानामभावे विशेषणत्वेन भेदाना परस्परमन्वयाभावाद्विनिगमनाविरहाभावेन नानाशक्यतावच्छेदकत्वापत्तेरभावात्।

अणुपदशक्यतावच्छेदककुक्षावकारादिणान्तत्वस्याप्यननुगतत्वेन तेन रूपेण समुदायत्वस्य शब्दत ऐक्येऽपि वस्तुतो भेद एवास्तीति प्रतिपादयन्नाह—वस्तुतस्त्विति।

तात्पर्यसन्देहः समुचित इति। नन्वनेकतात्पर्यस्यापि हर्यादिपदे दृष्टत्वात्लोकनेन विरोधाभावात्तात्पर्यसन्देहोऽपि न शक्यते सम्भावयितुम्। अत एव (एकत्रानेकतात्पर्यसद्भावाङ्गीकारादेव) चानेकतात्पर्यवशेन प्राप्तानेकविषयकानेकशाब्दबोधवारणाय तद्विषयकशाब्दबुद्धित्वावच्छिन्नं प्रति इतरार्थविषयकतात्पर्यज्ञानस्य कल्पितं प्रतिबन्धकत्वं सङ्गच्छते; अन्यथा—यत्किञ्चिदेकविषयकतात्पर्यज्ञानबलेनैकस्यैव कस्यचिच्छाब्दबोधस्य प्रसक्त्याऽनेकविषयकशाब्दबोधस्य प्रसक्तेरेवाभावेन तादृशानेकविषयकशाब्दबोधोत्पत्तिवारणाय कल्पितस्य प्रतिबध्यप्रतिबन्धकभावस्य वैफल्यं प्रसज्येतेति चेन्न। 'आप्तोच्चरितं पदं वाक्यं वा स्वसमवेततात्पर्यान्तरज्ञानीयविशेष्यताऽसमानाधिकरणतात्पर्यज्ञानीयविशेष्यतावत्; आप्तोच्चरितत्वात्; यद्यदाप्तोच्चरितं पदं वाक्यं वा तत्तत्स्वसमवेततात्पर्यान्तरीयविशेष्यताऽसमानाधिकरणतात्पर्यज्ञानीयविशेष्यतावत्, यथा—'अदेङ् गुणः' इति; इदमण

**विशेषस्यान्यतराद्यर्थरूपस्य व्याख्यानाच्छिष्टकृतात् प्रतिपत्तिर्निश्चयो, यतः सन्देहाच्छास्त्रमलक्षणमननुष्ठापकं लक्षणमलक्षणं तथा न, शास्त्रस्य निर्णयजनकत्वौचित्यादित्यर्थः। असन्दिग्धानुष्ठानसिद्ध्यर्थेऽत्र शास्त्रे सन्दिग्धे,च्चारणरूपाचार्यव्यवहारेण सन्देहनिवृत्तेर्व्याख्यानातिरिक्तनिमित्तानपेक्षत्वं बोध्यत इति यावत् ।**

---

अन्यतरादीति। आदिपदं बहुकोटिकसंशये अन्यतमपरिग्रहाय। शिष्टकृतादिति। शिष्टपदेन निखिलशब्दधर्मिकसाधुत्वप्रकारकयथार्थज्ञानवान् इह गृह्यते। हि यत इति। हिशब्दस्त्वर्थे इति तु परे। अननुष्ठापकमिति। शब्दविशेषधर्मिकसाधुत्वप्रकारकनिश्चयजनकत्वाभाववन्नेत्यर्थः। असन्दिग्धेति। सन्दिग्धं सन्देहो भावे क्तः, न विद्यते सन्दिग्धम् = सन्देहो यस्मिन्नित्यर्थः, सन्दिग्धेति ( पदं ) भावक्तान्तप्रकृतिकार्शआद्यजन्तम्, सन्देहजनके लाक्षणिकं वा। तथा च सन्देहरहितप्रवृत्तिप्रयोजकेऽत्र शास्त्रे सन्देहजन-काइउण् घटककाकारकर्मकोच्चारणरूपाचार्यव्यवहारेण निरुक्तार्थरूपा 'व्याख्यानतो' इति परिभाषा ज्ञाप्यत इत्यर्थः पर्यवस्यति।

---

इत्यपि पदम्; तस्मात्तथा' इत्यनुमानेन आप्तोच्चरितवाक्यत्वावच्छेदेन तत्समवेततात्पर्यान्तरीयविशेष्यत्वासमानाधिकरणतात्पर्यज्ञानीयविशेष्यतावत्त्वनिश्चये, 'अण्पदम् अ-इ-उ-एतत्त्रितयविषयकबोधजनकत्वप्रकारकतात्पर्यज्ञानविशिष्टविशेष्यतावत्, आहोस्वित् अ इ-उ-ऋ-लृ-ए-ओ-ऐ-औ-ह-य-व-र-ल-इत्येतच्चतुर्दशविषयकबोधजनकत्वप्रकारकतात्पर्यज्ञानविशिष्टविशेष्यतावत्' इत्याकारकस्य सन्देहस्योपपादयितुं शक्यत्वात्। ज्ञानवैशिष्ट्यञ्च विशेष्यतायाम्—स्वनिरूपितत्व—स्वसमवायिसमवेततात्पर्यान्तरीयविशेष्यताऽसामानाधिकरण्यैतदुभयसंसर्गेण इति।

मूले—हि यत इति। परिभाषायां हि शब्दो हेतुं बोधयति, लक्षणशब्दस्य बोधजनकत्वमर्थः, अननुष्ठापकमित्यस्य प्रवृत्तिप्रयोजकत्वाभाववदर्थः, तस्य च बोधेऽन्वयः, शास्त्रमित्यध्याहारः, प्रवृत्तिप्रयोजको बोधश्च प्रकृते शब्दविशेषधर्मिकसाधुत्वप्रकारकनिश्चयात्मकः, शास्त्रमतोऽननुष्ठापकबोधजनकं नेति शाब्दबोधः। यतः = यस्माद्धेतोः, यद्यच्छास्त्रं तत्सर्वमनुष्ठापकमेवातस्तात्पर्यसन्देहमात्रात्तदभावस्तत्रानुचित इति तात्पर्यम् 'न हि सन्देहादलक्षणम्' इति परिभाषाशयेति भावः।

अन्ये तु—इदं व्याख्यानमनुचितम्, यद्यल्लक्षणं तत्सर्वमनुष्ठापकमिति व्याप्तेः 'न बहुव्रीहौ' इत्यादिप्रत्याख्यातलक्षणानां 'त्वत्कपितृक' इत्यादिलक्ष्याननुष्ठापकत्वेन व्यभिचारेणासम्भवात्। तस्मा'द्धिशब्दस्त्वर्थे'। तथा च सन्देहात् तु = सन्देहमात्रेण तु, लक्षणमलक्षणं न भवति—प्रत्याख्यानादिना लक्षणमलक्षणं भवदपि सन्देहमात्रेण लक्षणमलक्षणं=साक्षात्परम्परया वाऽसन्दिग्धानाहार्यप्रामाण्यज्ञानानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकबोधजनकं न भवतीत्यर्थः, लक्षणशब्दस्येदृशार्थ एव वैयाकरणनिकाये रूढेः। एवञ्चाननुष्ठापकमिति मध्यमपदलोपी कर्मधारयोऽपि व्यर्थ एवेत्याहुरित्याशयेनाह—हि शब्दस्त्वर्थे इति तु परे इति।

**तेनाणुदित्सवर्णस्येत्येतत्परिहाय पूर्वेणाणग्रहणम्, परेणेणग्रहणमिति लणसूत्रे भाष्ये स्पष्टम् ॥ १ ॥**

---

सन्देहनिवृत्तेर्व्याख्यानापेक्षत्वमिति परिभाषास्वारसिकार्थं विहाय, व्याख्यानातिरिक्तनिमित्तानपेक्षत्वमिति वक्रोक्त्या प्रतिपादनन्तु—यत्र व्याख्यानेन तदतिरिक्तप्रमाणेन वा सन्देहनिवृत्तिः प्राप्ता, तत्र व्याख्यानाज्जायमानसन्देहनिवृत्तेरेव प्रकृतशास्त्रप्रवृत्तिप्रयोजकत्वमिति बोधनाय। अतएव 'हृदयस्ये'ति सूत्रे लेखोच्चारणसामर्थ्यात् लेखेति घञन्ते तात्पर्यं प्राप्नोति, तथापि ज्ञापकपरभाष्यव्याख्यानेन अणन्त एव लेखपदस्य तात्पर्यमवधार्यते, न तु घञन्ते। तथा च 'यथोत्तरं मुनीनां प्रामाण्यमि'ति वचनमप्येतत्सिद्धार्थानुवादकमेव। यथोत्तरं मुनीनां प्रामाण्यमित्यस्योत्तरोत्तरमुन्यभिप्रेतेऽर्थे पूर्वपूर्वमुनीनां तात्पर्यमित्येवार्थः, न तु पूर्वमुनीनामप्रामाण्यमिति; अन्यथैतद्दृष्टान्तेन सम्पूर्णशास्त्रस्याप्रामाण्यापत्तिः। यत्तु—शेखरकृतोक्तं 'धिन्विकृण्व्योरच्चे'त्यकारविधानमेतज्ज्ञापकमिति। तन्न, स्वस्य स्वाप्रामाण्यसाधकत्वानौचित्यात्। मम तु—शिवोच्चरितणकारानुबन्धेन व्याख्यातृवचसः प्राबल्यबोधनान्न दोषः। केचित्तु—व्याख्यातृवचसां व्याख्येयवचनार्थतात्पर्यनिर्णायकत्वस्यौत्सर्गिकत्वेन तदर्थं परिभाषारम्भस्तज्ज्ञापकञ्च विफलम्, न हि क्षुन्निवृत्तये भोजनं कार्यमिति वचनमाचार्येण निरमायि। यथोत्तरं मुनीनामित्यर्थस्तु न परिभाषासाध्यस्तस्यार्थस्य पाणिनिना 'धिन्विकृण्वो'ति सूत्रस्थाकारेण ज्ञापितत्वात्। भाष्यकारादिभिर्मद्वचसो यत्रार्थे तात्पर्यं बोधितं सोऽर्थो ममाभिप्रेत इति

---

व्याख्यानातिरिक्तेति। परिभाषायां 'व्याख्यानतः' इतिपदोत्तरमेवकाराध्याहाराल्लब्धमेतत्। सिद्धार्थानुवादकमेवेति। 'द्वयोर्विरोधे ततोऽपि प्रकृष्टज्ञानवता मध्यस्थेन निर्णीयते' इति लोके दृष्टतया अत्रापि महेश्वरोच्चरितणकारद्वयेन बोधितेनानेन निर्णयः कर्तव्यः; अन्यथा त्रयाणामपि ऋषित्वाविशेषात् कस्य वचनं प्रमाणं कस्य वाऽप्रमाणमिति दुरुपपादं स्यात्तदेतदाह—मम त्विति।

सिद्धान्तमाह—केचित्त्विति। अकारेणज्ञापितत्वादिति। प्रक्रियालाघवाय लोप एव विधातव्येऽकारविधानमुक्तार्थे ज्ञापकम्। न चात्वे सति अकारलोपस्य स्थानिवद्भावाद्गुणो न भवति इदानीं स्यादिति वाच्यम्। लोपपक्षेऽपि 'न धातुलोप' इत्यनेन गुणनिषेधस्य सिद्धेरिति भावः।

नन्वार्धधातुकनिमित्तक एव लोपे 'न धात्वि'ति निषेधः प्राप्नोति, तत्र धातुलोप इति बहुव्रीह्याश्रयणात्। प्रकृते लोपस्य चोकारस्य सन्नियोगशिष्टतया विधानेनोकारस्य निमित्तत्वाभावात्, पूर्वकालवर्तिबुद्ध्या विषयीकृतस्यैव च निमित्तत्वात्, विधेयतातिरिक्तविषयतया एव निमित्ततापदार्थत्वात्। अत एव च ''न चैष आर्धधातुकनिमित्तको लोप' इति भाष्यं सङ्गच्छतेइति चेत्—सत्यम्। सूत्रकृन्मते सूत्रसार्थक्याय धातुलोप इति तत्पुरुष एवाऽऽस्ताम्। एवञ्च 'न धातुलोपः' इत्यस्य प्राप्त्या गुणाभावसिद्धेरकारविधानं व्यर्थं सत् ज्ञापकं भवितुमर्हति, बहुव्राश्रयणफलानां स्थानिवद्भावमाश्रित्यान्यथासिद्धत्वात। तथा सति भाष्यमते सूत्रस्य प्रत्याख्यानमित्यन्यदेतदित्याशयात्।

तत्र संज्ञापरिभाषाविषये पक्षद्वयमित्याह—

**यथोद्देशं संज्ञापरिभाषम् ॥ २ ॥**

**कार्यकालं संज्ञापरिभाषम् ॥ ३ ॥**



उद्देशमनतिक्रम्य यथोद्देशम् । उद्देश उपदेशदेशः । अधिकरणसाधनश्चायम् । यत्र देशे उपदिश्यते तद्देशे एव वाक्यार्थबोधेन गृहीतशक्त्या गृहीत-

---

'यथोत्तरमि'त्यत्र–स्वसम्मतिरुक्ता । 'व्याख्यानत' इत्यतः स्वरसतस्तादृशार्थाप्रतीतिः, निरुक्तार्थे ज्ञापितेऽपि णकारस्य स्वांशेऽचारितार्थ्यञ्चेति वदन्तीति दिक् ॥ १ ॥

सकलपरिभाषाविषयं परिभाषाद्वयं वक्तुमुपक्रमते—तत्रेति । शास्त्रे इत्यर्थः, तेन शास्त्रत्वावच्छेदेन संज्ञापरिभाषाविषयकं पक्षद्वयम्, न तु प्रत्येकं संज्ञात्वाद्यवच्छेदेनेति भावः । उद्देशमनतिक्रम्येति । 'परावरयोगे चे' ति क्त्वा, 'यथाऽसादृश्य' इत्यव्ययीभावः । गृहीतशक्त्येति । इदं संज्ञाविषयकम्, संज्ञाशास्त्रजन्यवाक्यार्थबोधरूपशक्त्यनुभवोपोद्बलितसंस्कारेणैव तत्तत्साङ्केतिकविधिशास्त्रघटकपदानुभवोद्बुद्धेनोपस्थितिशाब्दबोधयोर्निर्वाहे विधिदेशे पुनरेतत्प्रतिसन्धानस्य नोपयोग इति भावः ।

अथैवं संज्ञाविषये कार्यकालपक्षानुत्थितिः, प्रदर्शितदिशैव उपस्थित्यादेरुपपत्त्या विधिप्रदेशे संज्ञाशास्त्रजन्यवाक्यार्थस्यानुपयोगादिति चेन्न । अनुभवेनोपस्थित्यौ-

---

ज्ञापिते च भाष्यकारादिबोधिते एव सूत्रार्थे सूत्रकृतोऽपि तात्पर्यमित्यर्थे, तेन प्रत्याख्यानवादिमतं प्रबलमेवंविधविषये इति च ध्वन्यते । तथा सति सूत्रस्य दृष्टार्थकत्वाभावेनाकारविधानं गुणाभावाय चरितार्थं वेदितव्यम् । ध्वनितश्चायमर्थो भाष्यकृता–'अपि च प्रत्याख्यायते स यो..:, तस्मिन् प्रत्याख्याते गुणः स्यादेव, तस्मादत्वं वक्तव्यम्' इत्यादिना ग्रन्थेनेत्यवधेयम् ॥ १ ॥

न तु प्रत्येकं संज्ञात्वाद्यवच्छेदेनेति । अत्रेदं तात्पर्यम्—शास्त्रे पक्षद्वयमित्येतन्मात्रोक्तौ—'उद्देश्यतावच्छेदकव्यापकत्वं विधेये भासते' इति न्यायेन शास्त्रत्वावच्छेदेन पक्षद्वयप्राप्त्या विधिसूत्रादावपि तदापत्तिः; केवलं संज्ञापरिभाषाविषये पक्षद्वयमित्येतदुक्तौ च—प्रत्येकं संज्ञात्वावच्छेदेन पक्षद्वयं प्राप्नोतीत्यतः उभयमुपात्तम् । तथा च 'शास्त्रत्वं संज्ञापरिभाषासमुदायनिष्ठं ग्राह्यमिति तदवच्छेदेन पक्षद्वयम्' इत्यत्रैव तात्पर्यग्राहकत्वं संज्ञापरिभाषाविषये इत्यस्य । संज्ञापरिभाषासमुदायनिष्ठशास्त्रत्वञ्च—लक्ष्यधर्मिकसाधुत्वप्रकारबोधोपयोगिबोधजनकत्वप्रकारकेच्छया पाणिन्याद्युच्चरितानुपूर्वीमद्वाक्यकदम्बविशेषत्वमिति बोध्यम् । एतेन—प्रतिसंज्ञापरिभाषं पक्षद्वयं प्राप्नोतीति क्वचिद्यथोद्देश एव, क्वचित्कार्यकाल एव, क्वचिदुभयमित्येतदसङ्गतं स्यादित्यपास्तम्; प्रतिसंज्ञापरिभाषं पक्षद्वयाभावेऽपि शास्त्रे पक्षद्वयस्य सत्त्वादिति भावः ।

परिभाषार्थेन च सर्वत्र शास्त्रे व्यवहारः। देशश्चोच्चारणकाल एवात्र शास्त्रे व्यवह्रियते। तत्तद्वाक्यार्थबोधे जाते 'भविष्यति किञ्चिदनेन प्रयोजनमि'ति ज्ञानमात्रेण सन्तुष्यद्यथाश्रुतग्राहिप्रतिपत्त्रपेक्षोऽयं पक्ष इतीदूत्सूत्रे कैयटः।

केचित्तु—परिभाषाविषये तस्मिन्नित्यादिवाक्यार्थबोधे सप्तमीनिर्देशादि क्वेति पर्य्यालोचनायां सकलतत्तद्विध्युपस्थितौ सकलतत्तत्संस्कारा्य गुणभेदं परि-

---

पयिकसंस्कारे जननीये अपेक्षाधियोऽपि सहकारितया यस्य श्रोतुः यत्संज्ञाशास्त्रजनित-बोधविषये उपेक्षाबुद्धिर्जाता, तत्पारिभाषिकपदस्य तदर्थानुभावकतायास्तत्तद्विधि-प्रदेशेऽप्रसक्त्या पुनस्तत्र संज्ञाशास्त्रजन्यबोधस्याऽऽवश्यकत्वात्। एवञ्चापेक्षाधीसहकृते तत्तद्वाक्यार्थबोधे सति दृढतरसंस्कारस्य जननात् वारंवारं तत्तद्बोधस्यानपेक्षि-तत्वेनापेक्षाधिय एव यथोद्देशपक्ष-बीजता; उपेक्षाधियश्च कार्यकालपक्ष-बीजता पर्यवस्यति।

स्वमतमाह—केचित्त्विति। सकलतत्तदिति। यत्संस्कार उद्बुद्धस्तत्सकलेत्यर्थः, तद्विषय एव च यथोद्देशपक्ष इति भावः। गुणभेदम्=गुणशास्त्रविधेयभेदम्। एकवाक्यतयैवेति। पदैकवाक्यतयेति भावः। एकवाक्यता च त्रिधा—पदैकवाक्यता, अर्थैकवाक्यता, वाक्यैकवाक्यता चेति। तस्मिन्निति शास्त्रस्य पदोपस्थापकत्वपक्षे 'इको यणची'त्या-दिसप्तम्यन्तपदघटितशास्त्रैः सह स्वघटकपदप्रयोज्यविषयता—निरूपितविषयताप्रयोज-कपदघटितत्वरूपा आद्या; तस्यार्थोपस्थापकत्वपक्षे विधिशास्त्री 'याची' त्यादिसप्तम्य-न्तपदानां लक्षणया अजव्यवहितपूर्वत्वाद्यर्थतात्पर्यकत्वरूपे च स्वोपस्थाप्यार्थनिष्ठ-विषयता—निरूपितविषयताप्रयोजकपदघटितत्वरूपा द्वितीया; उपजीव्योपजीव-कभावापन्नबोधप्रयोजकत्वरूपा तृतीया; यथा 'क्ङिति चे' त्यादिनिषेधशास्त्राणां 'सार्वधातुके'त्यादिनिषेध्यशास्त्रीयसार्वधातुकेत्यादिपदसम्बन्धिक्ङिद्भिन्नसार्वधातुकाद्यर्थ-

---

संस्कारे जननीये इति। स्मरणं प्रत्यनुभवस्य कारणत्वोपपत्तये मध्ये संस्काराख्यो व्यापारः आत्मन्यङ्गीक्रियते, तस्य संस्कारस्यात्मनि सर्वदा सत्त्वात् सर्वदा स्मरणवारणाय, उद्बुद्ध-संस्कारस्यैव स्मरणं प्रति कारणत्वमङ्गीक्रियते; उद्बोधकैकसम्बन्धिज्ञानादिसत्त्वेऽपि कुत्रचित् स्मरणादर्शनात् दृढतरस्यैव संस्कारस्य कारणत्वमङ्गीक्रियते; संस्कारदार्ढ्यं प्रति चापेक्षाबुद्धेः कारणत्वम्, उपेक्षाबुद्धौ च न दृढतरसंस्कार उत्पद्यते। एवञ्चोपेक्षाबुद्धौ नैष्फल्यज्ञानं कारणम्, अपेक्षाबुद्धौ च साफल्यज्ञानमिति बोध्यम्। तथा च 'आदैचो वृद्धिपदवाच्याः' इति शक्तिग्रहे जाते साध्वनुशासनेऽस्मिन् शास्त्रे सङ्केतग्रहस्यानुपयोगात् 'इदं शास्त्रमनर्थकम्' इत्याऽऽनर्थक्यज्ञानेनो-पेक्षाबुद्धिश्चेत् कार्यकालपक्षः।

यद्यपीदानीं फलं न दृश्यते, तथापि 'इदं शास्त्रमाप्तमहर्षिणा प्रणीतमतोऽनर्थकं न भवति, किन्तु भविष्यति किञ्चिदनेन प्रयोजनम्' इति सार्थक्यबुद्ध्याऽपेक्षाबुद्धिश्चेत् यथोद्देशपक्षः, इत्ये-तदाशयेनाह—अपेक्षाधिय एवेत्यादिः।

कल्प्यैकवाक्यतयैव नियमः। कार्य्यकालपक्षे तु त्रिपाद्यामप्युपस्थितिरिति विशेषः। एतदेवाभिप्रेत्य अधिकारो नाम त्रिप्रकारः कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति, यथा-प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयति' इति 'षष्ठी स्थाने' इति सूत्रे भाष्य उक्तम्। अधिकारशब्देन पारार्थ्यात्परिभाषाऽप्युच्यते। कश्चित्परिभाषारूप इति कैयटः। दीपो यथा-प्रभाद्वारा सर्वगृहप्रकाशक एवमेतत्स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारकमिति तत्तात्पर्यम्। एतच्च पक्षद्वयसाधारणं भाष्यम्, पक्षद्वयेऽपि प्रदेशैकवाक्यताया इतः प्रतीतेः।

तत्रैतावान्विशेषः—यथोद्देशे परिभाषादेशे सर्वविधिसूत्रबुद्धावात्मभेदं परिकल्प्य तैरेकवाक्यता परिभाषाणाम्। तदुक्तम्—'क्ङिति चे'ति सूत्रे कैयटे। 'यथोद्देशे प्रधानान्यात्मसंस्काराय सन्निधीयमानानि गुणभेदं प्रयुञ्जन इति।

---

नि॰यिकत्वरूपा। कार्यकालपक्षे त्विति। तुरेवार्थे, कार्यकाले एव त्रिपाद्यामुपस्थितिर्नान्यपक्षे इत्यर्थः। त्रिपाद्यामपीति। अपिना सपादीसङ्ग्रहः। वस्तुतः-इदं शास्त्रत्वावच्छिन्नोद्देश्यताकपरिभाषाविषयकम्, शास्त्रत्वसम्पादकपरिभाषाणान्तु पक्षद्वयेऽपि त्रिपाद्यामुपस्थितिः, तत्परिभाषाप्रवृत्तेः प्राक् त्रैपादिकस्य शास्त्रत्वाभावेन 'पूर्वत्रासिद्धमि'त्यनेनासिद्धत्वप्रतिपादनासम्भवात्। त्रिप्रकार इति। मूलोक्त एकः, द्वितीयो यथा—रज्ज्वाऽयसा वा बद्धं काष्ठमनुकृष्यते, तद्वदनुकृष्यते चकारेणेति; चकारमन्तरापि योगे योगे उपतिष्ठत इति तृतीयो 'ऽङ्गस्ये'ति सूत्ररूपः। अधिकारत्वञ्च—स्वदेशे लक्ष्यसंस्कारोपयोगिविधिशास्त्रीयवाक्यार्थबोधोपकारकवाक्यार्थाननुभावकत्वे सति विधिशास्त्रीयलक्ष्यसंस्कारोपयोगिवाक्यार्थबोधप्रयोजकत्वम्। संज्ञादिवारणाय सत्यन्तम्, शेष इत्यत्राव्याप्तिवारणाय वाक्यार्थे विधिशास्त्रीयवाक्यार्थबोधोपकारकेतिविशेषणं सत्यन्ते। एवम्=दीपवत्। एतत्=परिभाषाशास्त्रम्। स्वबुद्धीति। स्वविधेयबुद्धीत्यर्थः। यथोद्देशपक्षाभिप्रायकमिदं भाष्यमिति कैयटमतं खण्डयति—एतच्चेति। यथोद्देशपक्षाभिप्रायकत्वे तु—परिभाषाविषये कार्यकाल पक्ष एव न स्यात्, परिभाषामात्रस्याधिकारपदेन ग्रहणात्; तदाऽऽह=पक्षद्वयेऽपीति। इतः=भाष्यात्। आत्मभेदम्=परिभाषाविधेयभेदम्। परिकल्प्य=बोद्धृभिः परिभाषाणां तैर्विधिशास्त्रैः सहैकवाक्यता क्रियत इत्यर्थः; तैः विधिशास्त्रैरिति कर्तृपदं वा। अत्र क्रियत इत्यध्याहाराञ्च

---

वस्तुत इति। इदं प्राचां मतेन। नवीनमते तु—शास्त्रत्वावच्छिन्नोद्देश्यताकपरिभाषाणाम् 'अन्तरङ्ग' इत्यादीनां त्रिपाद्यामप्रवृत्तिरेव। तुरप्यर्थे इति। अपिना परिभाषाशास्त्रस्यापि ग्रहणम्। तस्यापि लक्ष्यसंस्कारोपयोगिप्रदेशवाक्येन सहैव भवतीत्यर्थः। 'लक्ष्यसंस्कारोपयोगी' त्यस्य च लक्ष्यधर्मिकसाधुत्वप्रकारकबोधोपयोगीत्यर्थः। एतेन—पदार्थोपस्थितियोग्यताज्ञानादिसामग्रीसत्त्वे शाब्दबोधस्य दुर्वारतया इदमसङ्गतमित्यपास्तम्।

कार्यकाले तु—तत्तद्विधिप्रदेशे परिभाषाबुद्ध्यैकवाक्यतेति। अत्रैकदेशस्थ इत्यनेन तत्र तत्र तद्बुद्धावपि तत्तद्देशस्थत्वं वारयति, यथा—व्यवहर्तॄणां कार्यार्थमनेकदेशगमनेऽपि न तत्तद्देशीयत्वव्यवहारः, किन्त्वभिजनदेशीयत्व-व्यवहार एव, तद्वन्निषेधवाक्यानामपि निषेध्यविशेषाकाङ्क्षत्वाद्विध्येकवाक्य-तयैवान्वय इति परिभाषासादृश्यात्परिभाषात्वेन व्यवहारः 'क्ङिति चे'त्यत्र भाष्ये। तत्रैकवाक्यता पर्युदासन्यायेन, प्रसज्यप्रतिषेधेऽपि तेन सह वाक्यार्थ-बोधमात्रेणैकवाक्यताव्यवहारः।

संज्ञाशास्त्रस्य तु कार्यकालपक्षे न पृथग्वाक्यार्थबोधः, किन्तु प्रदे-

---

समानकर्तृकत्वहानिः। व्यवहर्तॄणामिति। स्वसम्बन्धिनः कस्यचित्तत्र गमनेऽपि न स्वस्य तद्देशस्थत्वं भवति सुतरां तु तद्देशीयत्वम्, यथा—दीपप्रभायास्तत्र गमनेऽपि न दीपस्य तद्देशस्थत्वमेवं परिभाषाया अपि तत्र देशे स्वविधेयगमनेऽपि न तद्देशस्थ-त्वमित्यर्थः! वस्तुतः—परिभाषाया अचेतनत्वेन गमनासम्भवात्तद्विधेयस्मरणमात्रेण तत्र वर्तमानत्वबुद्धेरसम्भव इति प्रतिपादयति—तत्र तत्र तद्बुद्धावपीति।

यत्तु—प्रधानस्य राज्ञो नाप्रधानभृत्यादिनाऽऽकर्षणम्; न हि प्रयाजादिवाक्यै-दर्शपौर्णमासादिवाक्यमाकृष्यत इति परिभाषाशास्त्रेण कथं विधिशास्त्रमाकृष्येतेति नागेशमतमयुक्तमिति। तदयुक्तम्; परिभाषादेशे विधिसूत्रोपस्थितावपि तेन तदा-कर्षणाभावात्। अत एव ग्रन्थकर्त्रा 'तत्र तत्र तद्बुद्धावपी'त्याद्येवोक्तम्; न हि भृत्यादेरप्रधानस्य राजविषयकज्ञानं प्रति तादात्म्येन प्रतिबन्धकत्वमृते भवतः कोऽप्यभ्युपैति। प्रत्युत उभयाकाङ्क्षारूपप्रकरणात्मकचतुर्थप्रमाणेन प्रयाजादिवा-क्यार्थे निर्णीते भाव्याकाङ्क्षायां तत्र दर्शपूर्णमासप्रधानवाक्योपस्थित्यैव तयोरङ्गा-ङ्गिभावः सर्वसम्मतः।

ननूक्तपक्षद्वयस्य संज्ञापरिभाषामात्रविषयकत्वे 'क्ङिति चे'ति सूत्रे कार्यकाल-पक्षोक्तिरसङ्गतेत्यत आह—निषेधवाक्यानामिति। नञो भेदपरतया क्ङिति नेत्यस्य विधावुपस्थितौ क्ङिद्भिन्नसार्वधातुकेत्यादिक्रमेणार्थे निरुक्तपदैकवाक्यते-त्यर्थः। ननु प्रथमान्तान्यसमभिव्याहृतासमस्तनञो न भेदबोधकत्वमत आह—प्रसज्येति। एकवाक्यतेति। वाक्यैकवाक्यतेत्यर्थः। निषेधशास्त्रस्य निषेध्यशास्त्रीय-पदधर्मिकार्थविशेषविषयकबोधजनकत्वप्रकारकतात्पर्यग्राहकत्वात् विषयतानामु-पजीव्योपजीवकभावो बोध्यः। संज्ञाशास्त्रस्य त्विति। तुरप्यर्थे। न पृथगिति। लक्ष्यसं-स्कारोपयोगी नेत्यर्थः।

अत्रायं विवेकः—कार्यकालपक्षे 'वृद्धिरादैजि'त्यादौ वाक्यार्थबोधे सति तस्मिन्नै-ष्फल्यग्रहेणोपेक्षाबुद्ध्या तदभ्यासाभावेन दृढतरसंस्काराभावात् 'मृजेर्वृद्धिरि'त्येत-द्वाक्यार्थबोधकाले उद्बोधकान्तरसत्त्वेऽपि संस्कारलोपात्तदुद्बोधाभावेन 'मृजेर्वृद्धिरि'

त्यस्य देशे 'वृद्धिरादैजि'त्यस्य पुनर्वाक्यार्थबोधात् तेन सह पदैकवाक्यता। अत्र पक्षे विधिदेश एव संज्ञाशास्त्रस्य सफलवाक्यार्थबोधाद्विधिदेशीयत्वमेव। अत एव 'अयादिभ्यः परैव प्रगृह्यसंज्ञे'ति भाष्यं सङ्गच्छते। 'अमी' इत्यत्र 'चाणोऽप्रगृह्यस्ये'त्येतदेकवाक्यताप 'अदसो मादि' त्येतद्दृष्ट्या मीत्वस्य सिद्धत्वेन प्रगृह्यसंज्ञायां नानुनासिकः। यथोद्देशपक्षे तु 'वृद्धिरादैजि'त्यस्य वाक्यार्थबोधरूपे शक्तिग्रहे वृत्ते, भविष्यति किञ्चिदनेन प्रयोजनमिति भाविफलानुसन्धानादपेक्षाबुद्ध्या आचार्यवाक्ये विश्वासवता छात्रेण तदभ्यासेन दृढतरसंस्कारेण 'मृजेर्वृद्धिरि'त्येतद्वाक्यार्थबोधकाले एकसम्बन्धिज्ञानमिति विधया संस्कारोद्बोधे सत्यादैचामुपस्थितौ 'वृद्धिरादैजि'त्येतद्वाक्यार्थबोधस्य पुनर्नापेक्षा, सफलवाक्यार्थबोधाधिकरणदेशस्यैव मुख्यदेशत्वव्यवहारात्। अत्र पक्षे संज्ञाशास्त्रस्य स्वदेश एव सफलवाक्यार्थबोधात् पाठदेशीयत्वमेव। अत ए 'वागच्छतममी३' इत्य'त्रेदूदेदि'त्येतद्दृष्ट्या प्लुतस्यासिद्धत्वेन द्विमात्रत्वात्प्रगृह्यसंज्ञाया 'मणोऽप्रगृह्ये'ति नानुनासिकः] अत्र विषये कार्यकालपक्षस्वीकारे तु-ईदूदेदित्यस्याणोऽप्रगृह्येत्येतद्देशीयत्वापत्त्या तद्दृष्ट्या प्लुतस्य सिद्धत्वेन द्विमात्रत्वाभावात्प्रगृह्यसंज्ञाभावे नानुनासिकापत्तिः। एवमेव 'तस्मिन्नि' त्यादिपरिभाषाविषये पक्षद्वयं बोध्यमिति प्राचीनमतम्।

नवीनास्तु—'तस्मिन्नि'त्यादिपरिभाषाशास्त्राणां वाक्यार्थबोधे सति सप्तमीनिर्देशादि क्वेति पर्यालोचनायां कतिपयविध्युपस्थितौ तेन सहैकवाक्यतयाऽन्वयबाधेन साफल्यग्रहे सति दृढतराभ्यासाद् अनुपस्थितविधिविषयेऽपि पूर्ववत्तत्तद्विधेयोप-

---

तेन सह पदैकवाक्यतेति। इदं प्राचां मतेन, तैः संज्ञाशास्त्राणां पदैकवाक्यतयाऽन्वयः स्वीक्रियते। नव्यैश्च संज्ञासूत्रजवाक्यार्थबोधस्य विधिसूत्रजबोधं प्रति कारणतया कारणत्वस्य कार्यनियतपूर्ववृत्तित्वेनैककालिकोत्पत्तिकत्वस्यासम्भवेन पदैकवाक्यत्वस्य वक्तुमशक्यत्वाद्वाक्यैकवाक्यतयाऽन्वयः स्वीक्रियते। परिभाषाजन्यबोधस्य तु न विधिसूत्रघटकपदधर्मिकशक्तिग्राहकत्वमिति न सूत्रघटकपदजन्यबोधकारणत्वमिति न वाक्यैकवाक्यत्वम्, अपि तु पदैकवाक्यत्वमेव।

एवमेवेति। यथोद्देशपक्षे—परिभाषाशास्त्रजन्यवाक्यार्थबोधे साफल्यग्रहेणापेक्षाधिया दृढतरसंस्कारोत्पादेन 'इको यणची'त्यादिविधिशास्त्रजन्यवाक्यार्थबोधकाले'ऽची'त्याद्यौपश्लेषिकाधिकरणबोधकपदज्ञानेनोद्बुद्धसंस्कारजनितेन गृहीतपरिभाषाविधेयार्थस्मरणेन पदैकवाक्यतया लक्ष्यसंस्कारको बोधः। यद्वा-परिभाषार्थज्ञानरूपप्रकरणगृहीततात्पर्यानुपपत्त्या अचीति पदस्य अजव्यवहितपूर्वत्वे लक्षणया वाक्यैकवाक्यतया लक्ष्यसंस्कारको बोध इति। कार्यकाले तु—प्रदेशवाक्येन सहैव बोधो न पृथगिति संज्ञाशास्त्रवदेव सर्वं बोध्यम्। पूर्वत्वपरत्वव्यवस्थाऽपि तद्वदेव। 'एकदेशस्थ' इति भाष्यन्तु एतन्मते यथोद्देशपक्षाभिप्रायकमेव। 'ङमो ह्रस्वादची'ति सूत्रस्थभाष्यविरोधपरिहारस्त्वग्रे स्फुटीकृत एव। परिभाषाविषये यथोद्देशपक्षफलन्तु—अन्तरङ्गशास्त्रस्यासिद्धतया बहिरङ्गपरिभाषाया अप्रवृत्त्या 'राज्ञः' इत्यत्र श्चुत्वसिद्धिः। कार्यकालपक्षफलन्तु-परिभाषाणां त्रिपाद्यामपि प्रवृत्तिरिति बोध्यम्। गृहीतपरिभाषार्थेन तु न निर्वाहः, 'पूर्वत्रासिद्धमि'ति सूत्रस्थभाष्यविरोधात्।

शवाक्येन सहैव। अत एव 'वाणोऽप्रगृह्यस्ये'त्येतदेकवाक्यताप'न्नादसो मादि'त्येत-

---

स्थितौ न पुनर्वाक्यार्थबोधापेक्षा। परिभाषाविषय एवेदृशजिज्ञासुसत्त्वे प्रमाणञ्च निरुक्तभाष्यकैयटाद्येव। एवं शिष्यजिज्ञासया ये विधय उपस्थितास्तद्विषय एव यथोद्देशत्वमनुपस्थितविधिविषये कार्यकालत्वम्, 'पूर्वत्रासिद्धमि'त्यनेन त्रिपाद्या असिद्धत्वात्पूर्वोक्तशिष्यजिज्ञासायां सत्यामपि आचार्येण त्रैपादिकस्य नोपस्थितिः कृता, अत्रापि भाष्यादिव्यवहार एव शरणमिति प्राहुः।

अत एवेति। प्रदेश एव सकलवाक्यार्थबोधेन प्रदेशस्य मुख्यदेशत्वादेवेत्यर्थः।

---

प्राहुरिति। अत्रायं परिभाषाविषये प्राचीननवीनमतविवेकः। नव्यमते—यथोद्देशपक्षे परिभाषादेशे एव विधिशास्त्राणामुपस्थितया पदैकवाक्यतयैव लक्ष्यसंस्कारको बोधः, विधिशास्त्राणामुपस्थितौ च 'सप्तमीनिर्दिशादि क्व' इति छात्राणां जिज्ञासैव बीजम्।

प्राच्यमते तु—अस्ति किञ्चिदस्याः प्रयोजनमित्यपेक्षाबुद्धिपूर्वकपरिभाषावाक्यार्थबोध स्वदेशे एव एकवाक्यतया बोधस्तु विधिदेशे एव। नवीनमते स्वदेशे पदैकवाक्यतयैव लक्ष्यसंस्कारकबोधोदयेनोपेक्षाबुद्धेरनवकाशेन येषां दैवाद्देशे उपस्थानं तेषु यथोद्देशः, येषां चानुपस्थितिस्तैः स्वदेशे स्वसंस्काराय परिभाषाशास्त्रविधेयमात्रमुपस्थाप्यते इत्ययमेव कार्यकालपक्षः, न तु परिभाषा तत्रोपतिष्ठते। एवञ्च नव्यमते नोपेक्षाऽपेक्षाबुद्धी तत्पक्षयोर्बीजमूले इति वेदितव्यम्। 'न च कार्यकालपक्षे'ङमो ह्रस्वादीत्यादावि'ति मूलोक्तशङ्काग्रन्थस्तु प्राचामनुरोधेन। प्राचीनमते तु त एव बीजभूते इति कार्यकालपक्षे परिभाषाया एव विधिदेशे उपस्थानं गुरुणा क्रियते, उपेक्षाबुद्ध्या छात्राणां विधेयार्थस्मरणासम्भवात्। नव्यमते उभयपक्षे परिभाषाणां पाठदेश एव मुख्य इति तत्कृतैव पूर्वत्वपरत्वव्यवस्था ज्ञेया। अत एव 'एकदेशस्थ०' इति भाष्यं सङ्गच्छते। प्राचीनमते तु यथोद्देशे पाठदेश एव मुख्यः, कार्यकाले तु विधिदेशीयत्वेन स एव देशो मुख्यः। विधिदेशीयत्वादेव 'तावताऽप्यसिद्धिरि'ति 'पूर्वत्रे'ति भाष्यं स्वरसत उपपद्यते। परमुख्यासंभवे गौणेनापि पूर्वत्वपरत्वव्यवस्थेति न 'ङमो ह्रस्वादि'ति सूत्रस्थभाष्यविरोधः। 'एकदेशस्थ' इति भाष्यन्तु—यथोद्देशपक्षाभिप्रायेणेति।

वस्तुतस्तु—पूर्वत्रेति भाष्यानुरोधात् प्राचीनाभिमत एव कार्यकालपक्षो नागेशसम्मतः, अन्यथा तावताऽप्यसिद्धिरित्यभिप्रायके 'कथमि'ति प्रश्नस्य निर्दलतापत्तेः। किञ्च—यथोद्देशपक्षोऽपि प्राचीनसम्मत एव नागेशेनाभिप्रेयते; 'केचित्तु'मतम्—एकदेशिन एव बोध्यम्। 'एकदेशस्थ' इति भाष्यं यथोद्देशपक्षाभिप्रायेण। अभिज्वालकत्वञ्च—संस्कारकत्वमात्रम्, न तु एकवाक्यतया संस्कारकत्वमिति बोध्यम्। किञ्च—परिभाषाणां विधिदेशे उपस्थितावपि तद्देशीयत्वं वारयति इदं भाष्यमिति सर्वमुपपन्नमित्यलम्।

त्प्रति न भुत्वाद्यसिद्धम्, असिद्धत्वस्य कार्यार्थतया कार्यज्ञानोत्तरमेव तत्प्रवृत्तिः, कार्यज्ञानं च प्रदेशदेश एवेति तद्देशस्थस्यासिद्धत्वात्पूर्वग्रहणेनाग्रहणात् । एवं तद्बोधोत्तरमेव विरोधप्रतिसन्धानं चेति तत्रत्यपरत्वमेव विप्रतिषेधसूत्रप्रवृत्तौ बीजम् । अत एव कार्यकालपक्षे'ऽयादिभ्यः परैव प्रगृह्यसंज्ञे'त्यदसो मादि'ति सूत्रे भाष्य उक्तम् ।

आकडारादधिकारस्थभपदसंज्ञादिविषये तु—यथोद्देशपक्ष एवेति तत्रत्यपरत्वेनैव बाध्यबाधकभावः । पदादिसंज्ञानां तत्र जातशक्तिग्रहेणैव त्रिपाद्यामपि व्यवहारः । अत एव पूर्वत्रासिद्धमिति सूत्रे परिभाषाणामेव त्रिपाद्यामप्रवृत्तिमाशङ्क्य, कार्य-

---

अत एवेति । सफलवाक्यार्थबोधाधिकरणमुख्यदेशमादाय विप्रतिषेधशास्त्रप्रवृत्तिस्वीकारादेवेत्यर्थः । अयादिभ्यः परैवेति । अत्र पक्षे—'अदसो मादि'त्यस्य 'प्लुतप्रगृह्या' इत्येतदेकवाक्यत्वादित्यर्थः ।

यथोद्देशपक्ष एवेति । अत्र मान'मपादानमुत्तराणि कारकाणि बाधन्ते' इति भाष्यम् । अत्र विषये कार्यकालपक्षस्वीकारे तु—अपादानसंज्ञाया 'अपादाने पञ्चमी'त्येतदेकवाक्यतापन्नाया एव 'कर्मणि द्वितीये'त्येतदेकवाक्यतापन्नकर्मसंज्ञापेक्षया परत्वेन कर्मादिसंज्ञानां परत्वादपादानसंज्ञाबाधकत्वकथनमसङ्गतं स्यात् । तत्फलन्तु 'राज्ञ' इत्यत्र नलोपाभावः, अन्यथा 'ऽल्लोपोऽनः' इत्येतदेकवाक्यतापन्न 'यचि भमि'त्येतद्दृष्ट्या 'नलोपः प्रातिपदिके' त्येतदेकवाक्यतापन्न-'स्वादिष्वसर्वनामस्थाने'इत्यस्यासिद्धत्वेन नलोपो दुर्वारः स्यात् । न च निरवकाशतया भसंज्ञा बाधिका स्यादिति वाच्यम्; 'नित्यवीप्सयोरि'त्येकवाक्यतापन्नपदसंज्ञाबाधनद्वारा प्रकृतिमात्रस्य प्राप्तद्वित्वाभावसम्पादनेन सूत्रस्य चारितार्थ्यादसिद्धकाण्डैकवाक्यतापन्नपदसंज्ञाबाधने मानाभावात् । किञ्च यदा कार्यं तदा संज्ञेत्यस्यैव कार्यकालत्वेन 'दण्डिने'त्यत्र भसंज्ञाप्रयुक्तकार्याभावेन भत्वाप्राप्त्या स्वादिष्विति पदत्वमादाय नलोपः, 'नद्ये'त्यत्र 'इकोऽसवर्णे' इति प्रकृतिभावश्च स्यादिति भसंज्ञादिविषये यथोद्देशपक्षः स्वीकार्यः । अत्र भाष्यान्तरं प्रमाणयति—अत एवेति ।

यद्यपीदं भाष्यं सर्वसंज्ञाविषये यथोद्देशपक्षे प्रमाणभूतम्, तथाप्यन्यसंज्ञाविषये कार्यकालस्याप्युक्तत्वेनैतद्भाष्यमाकडारीयसंज्ञायामेव यथोद्देशपक्षत्वे पर्यवस्यति ।

---

अयादिभ्यः परैवेतीति । संज्ञाशास्त्राणामिदमेव कार्यकालपक्षफलम् । त्रिपाद्यां प्रवृत्तिस्तु न तत्फलम्, भपदसंज्ञायाज्जातशक्तिग्रहेण त्रिपाद्यामपि व्यवहारसिद्धेः; अन्यथा संज्ञानामुपजीव्यत्वात् तां विना त्रिपादिस्थशास्त्राणां वाक्यार्थबोधासंभवेन नैरर्थक्यापातात् ।

मानाभावादिति । ननु—असिद्धकाण्डैकवाक्यतापन्नपदसंज्ञाया भसंज्ञया बाधाभावे 'राजन्य' इत्यत्र पदसंज्ञया नलोपे जाते 'नस्तद्धिते' इत्यस्याप्राप्त्या 'ये चाभावकर्मणोः' इति व्यर्थं स्यादित्यस्ति मानमित्यरुचेराह—किञ्चेति ॥ २ ॥

**कालपक्षाश्रयेण समाहितमित्याहुः। यथोद्देशपक्षः प्रगृह्यसंज्ञाप्रकरणे भाष्ये ॥२॥**

**कार्यकालमित्यस्य च कार्येण काल्यते = स्वसन्निधिं प्राप्यत इत्यर्थः। कार्येण स्वसंस्कारा स्ववृत्तिलिङ्गचिह्नितपरिभाषाणामाक्षेप इति यावत्।**

---

अनस्तद्धणे'त्यस्य वारणा 'याल्लोपोऽनः'इत्यत्र कार्यकालपक्षोपपादनन्तु एकदेशिन इति न तद्विरोध इति शेखरे स्पष्टम्। तद्वा—अत एवेत्यस्य पक्षद्वयेऽपि त्रिपाद्यां संज्ञाशास्त्रस्य प्रवृत्तौ बाधकाभावादित्यर्थः। तदेवाऽऽह—परिभाषाणामिति।

आहुरिति। संज्ञापरिभाषाणां प्रत्येकं पक्षद्वयस्वीकारे न फलम्, किन्तु 'आगच्छतमग्नी ३' इत्यादिफलानुरोधात् संज्ञाविषये यथोद्देशः; 'पूर्वत्रासिद्धमि'ति सूत्रभाष्यात् परिभाषाविषये कार्यकालः। 'अयादिभ्यः परे'ति भाष्यस्थपरशब्दोऽपवादत्वपर एव। 'अनुदात्तं पदमेकवर्ज्यमि'त्यादिपरिभाषाणां त्रिपाद्यामप्रवृत्तिस्तु 'अन्तरङ्ग'परिभाषावत्सर्वसम्मतैव। न 'चामूषामि'त्यादौ षत्वं न स्यात्, यथोद्देशपक्षे आदिरन्त्येनेत्येतद्दृष्ट्या 'अदसोऽसेरि'त्यादेरसिद्धत्वेनोकारादेरनिण्त्वात्, मम तु—'आदेशः प्रत्यययोरित्ये'तदेकवाक्यताप'न्नादिरन्त्येने'त्येतद्दृष्ट्या ऊत्वस्य सिद्धत्वेनेण्त्वात् षत्वं भवत्येवेति वाच्यम्; जातिपक्षे दोषाभावात्। अत्र पक्षे आदिरन्त्येनेति शास्त्रं मध्यगवृत्तिजातिमतां संज्ञां करोति, उत्वादिजातेश्च सिद्धासिद्धोकारवृत्तित्वेन सिद्धस्येवासिद्धोकारादेरिण्पदशक्यत्वबोधने बाधकाभावः। न 'चाइउण्'सूत्रे स्वदृष्ट्या तस्यासिद्धत्वेनोत्वेन रूपेणाऽपि कथमसिद्धमूकारं सङ्गृह्णीयादिति वाच्यम्; चतुर्दशसूत्र्या अष्टाध्यायीबहिर्भूतत्वेन 'पूर्वत्रासिद्धमि'त्यनेनासिद्धत्वप्रतिपादनासम्भवात्, अणादिसंज्ञाया'मइउणि'त्यादिसूत्राणां तत्तज्जातिपुरस्कारेण सङ्ग्रहरूपव्यापारस्यानुपयोगाच्च।

ननु संज्ञाविषये यथोद्देशस्यैव स्वीकारे 'राजन्+अस्, पुरुष+स्' इत्यवस्थायां पूर्वं भसंज्ञायामल्लोपापत्तिः। न चान्तरङ्गानपीति न्यायेनाल्लोपो नेति वाच्यम्; यथोद्देशपक्षे 'अल्लोपोऽन' इत्यत्र 'यची'त्यस्यानुपस्थित्या लुगुत्तरमपि भसंज्ञायाः सत्त्वेन लोपप्राप्तेर्लुकोऽन्तरङ्गनिमित्तविनाशकत्वाभावात्। संज्ञाविषये कार्यकालस्वीकारे तु—'अल्लोपोऽन'इत्यत्र 'यची'त्युपस्थित्या लुगुत्तरं यजादिप्रत्ययपूर्वत्वाभावेन लोपाप्रसक्तेरिति चेन्न। कार्यकालपक्षेऽपि पदैकवाक्यतयाऽन्वयस्य दूषितत्वेन 'यची'त्यनुपस्थितेः पक्षद्वयेऽपि दोषसाम्यात्, यथोद्देशपक्षास्वीकर्तृमते दोषदानस्यायुक्तत्वात्, अन्तरङ्गानपीति न्यायेन भसंज्ञायाः पूर्वमप्रवृत्त्या दोषाभावात्। न च संज्ञाविषयेऽन्तरङ्गानपीति न्यायाप्रवृत्तिः, अत एव 'ञ्नित्स्वरे प्रत्ययलक्षणप्रतिषेधः' इति वार्तिकं सङ्गच्छते, अन्यथा 'गर्गाः' इत्यादावित्संज्ञायाः प्रागेवोक्तन्यायेन लुकि स्वराप्राप्त्या वार्तिकासङ्गतिरिति वाच्यम्; इत्संज्ञायामुक्तन्यायाप्रवृत्तिस्वीकारेऽपि संज्ञामात्रेऽप्रवृत्तिस्वीकारे प्रमाणाभावात्। इति यथोद्देशपक्षविचारः ॥ २ ॥

कार्यस्य काल एव कालो=देशो यस्य स कार्यकाल इत्यर्थे एकदेशस्थः सर्वं शास्त्रमभिज्वलयती'ति भाष्यविरोधोऽत आह—कार्येण काल्यत इति। कार्येण=तद्विधायकशास्त्रेण। परिभाषाणाम्=तद्विधेयानाम्। आक्षेपः=स्मरणम्।

**अत एव 'पूर्वत्रासिद्धमि'ति सूत्रे भाष्ये त्रिपाद्या असिद्धत्वात्तत्र सपादसप्ताध्यायीस्थपरिभाषाणामप्रवृत्तिमाशङ्क्य, यद्यपीदं तत्रासिद्धं तत्त्विह सिद्धमित्युक्त्वा, तावताप्यसिद्धिरित्यभिप्रायके कथमिति प्रश्ने—'कार्यकालं संज्ञापरिभाषं यत्र कार्यं तत्रोपस्थितं द्रष्टव्यमि'त्युक्तम् ।**

---

अत एवेति । परिभाषाणां विधेयार्थस्मरणादेवेत्यर्थः । तावताऽप्यसिद्धिरित्यस्य संस्कारकस्य सिद्धत्वेऽपि संस्कारकदृष्ट्या संस्कार्यस्यासिद्धत्वेन संस्कारासम्भव इत्यर्थः ।

ननु नागेशमते—परिभाषादेशे येषां शास्त्राणां वाक्यार्थबोधो जातस्तेषु यथोद्देशपक्षः, येषां न जातस्तेषु कार्यकाल इत्यस्य सत्त्वेन तावताऽप्यसिद्धिरिति शङ्कोत्थितिर्न सम्भवतीति चेत्; शृणु । यथोद्देशपरिभाषामात्रस्वीकारे अप्रवृत्तिशङ्का, द्वितीयपरिभाषास्वीकारेण समाधानम् ।

यद्यपीति । अयं भावः—त्रैपादिकं विधिशास्त्रं स्वसंस्काराय परिभाषादेशेऽसिद्धत्वान्न गच्छति; तथापि सापादिकपरिभाषाशास्त्रमिहागन्तुं शक्नोतीति सिद्धान्तिनोक्ते पूर्वपक्षी पुनराह—कथमिति । अयं भावः–पूर्वत्रासिद्धमि' त्यनेन परिभाषादृष्ट्या त्रैपादिकविधेरसिद्धत्वात्कथं त्रैपादिकविधिं संस्कुर्यादिति? तत्राऽऽह–कार्यकालमिति । अयमाशयः—यथा–कश्चिन्मर्त्य इह लोके देवानपश्यन्नपि भाग्यवशाद्देवैः स्वर्गं प्राप्यमाणः सर्वान देवान् पश्यति, हरि गर्भस्थ इव हेमाद्रिशर्मा मनुष्यो लङ्कां गतो रावणादिराक्षसानिव तद्देशमाहात्म्यात्, तथेहापि त्रिपाद्यामुपगतं परिभाषाशास्त्रं त्रैपादिकविधि पश्यति देशमाहात्म्यादेव । अन्यथा कार्यकालपक्ष उच्छिन्न एव स्यादिति ।

केचित्तु–एतद्ग्रन्थस्वारस्यात्परिभाषाविषयेऽपि प्राचीनोक्त-कार्यकाल एव

---

परिभाषायां प्रमाणमाह—मूले अत एवेति । परिभाषाणामप्रवृत्तिमिति । संज्ञाशास्त्राणान्तु जातशक्तिग्रहेणैव त्रिपाद्या व्यवहारस्य सिद्धत्वादिति प्रागुक्तत्वात् परिभाषाणामित्युक्तमिति भावः । इदम् = त्रिपादीस्थम् । तत्र = सपादसप्ताध्यायीस्थे परिभाषाशास्त्रे । तत्तु = परिभाषाशास्त्रन्तु । इह = त्रिपाद्यामित्यर्थः ।

एतद्ग्रन्थस्वारस्यादिति । 'पूर्वत्रासिद्धम्' इतिसूत्रस्थशङ्कासमाधानपरभाष्यग्रन्थस्वारस्यादिति तदर्थः । नागेशमते कार्यकालपक्षेऽपि परिभाषाशास्त्रं स्वदेशे तिष्ठदेव कथमसिद्धं त्रैपादिकशास्त्रं संस्कुर्यादतस्तत्रोपस्थानं परिभाषाशास्त्राणां तैरपि मन्तव्यम् । तथा सति 'यत्र कार्यं तत्रोपस्थितं द्रष्टव्यमि'ति भाष्यं स्वरसत उपपद्यते । तद्देशस्थत्वेन च पूर्वदेशस्थत्वव्याघातात् 'पूर्वत्रासिद्धम्' इत्यस्याप्रवृत्त्या निष्टङ्कं संस्कारकशास्त्रप्रवृत्तिः सिद्ध्यतीति भावः । व्यापारार्थमन्यत्र गमने सम्प्रति तद्देशे एव तिष्ठामि, न तु स्वाभिजनदेशे इतिवत् परिभाषाणां कार्यकालपक्षे त्रिपादीस्थत्वव्यवहार एव भविष्यतीति तत्त्वम् । तस्मात् प्राचीनमतमेव ज्यायः ।

प्राचीनोक्तेति । तथा सति संज्ञापरिभाषयोरुभयोरपि विषये एकरूपता सिद्ध्यतीत्यपरमनुकूलम् ।

न च कार्यकालपक्षे 'ङमो ह्रस्वादि'त्यादौ 'तस्मादित्युत्तरस्य' 'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति परिभाषाद्वयोपस्थितौ परत्वा'दुभयनिर्देशे पञ्चमी, निर्देशो बलीयानि'ति तस्मिन्नितिसूत्रस्थभाष्यासङ्गतिः, उभयोरेकदेशस्थत्वेन परत्वादित्यस्यासङ्गत्यापत्तेः, स्पष्टं चेद'मिको गुणे'त्यत्र कैयट इति वाच्यम् ; विप्रतिषेधसूत्रेऽष्टाध्यायीपाठकृतपरत्वस्याश्रयणेनादोषात् । न हि कार्यकालपक्ष इत्येतावता तदपैति । पक्षद्वयेऽपि प्रदेशेषु स्वबुद्धिजननेनाविशेषात् । न हि तत्पक्षेऽप्यचेतनस्य शास्त्रस्य स्वदेशं विहाय तद्देशगमनं सम्भवति । नाप्य-

---

नागेशसम्मतः । अत एव नागेशेन केचिदित्युक्तम् । अत एव चाग्रिमः'न चे'ति शङ्काग्रन्थोऽपि सङ्गच्छते; अन्यथा स्वदेशत्यागाभावस्य तत्तद्देशस्थत्वं वारयतीत्यादिनोक्तत्वेनैतद्ग्रन्थस्य निर्दलत्वापत्तिरित्याहुः ।

अन्ये तु— नागेशमते सर्वपरिभाषाविषये कार्यकालपक्ष एव; 'सप्तमीनिर्देशादि क्वे'त्यत्रातद्गुणसंविज्ञानबहुव्रीहिणा विप्रतिषेधे, 'असिद्धं बहिरङ्गम्, सन्निपात, अनुदात्तं पदमेके'ति चतसृणां परिभाषाणां सङ्ग्रहः । 'कश्चिदेकदेशस्थ' इति भाष्यन्तु उक्तपरिभाषाचतुष्टयविषयमेव । अत एव कार्यकालपक्षे 'ङमो ह्रस्वादि'ति शङ्काग्रन्थः सङ्गच्छत इति वदन्ति ।

न चेति । यद्यपि तद्देशस्थत्वं वारयतीत्युक्त्या नैतच्छङ्कोत्थितिस्तथापि प्राचीनमतानुसारेणैतद्ग्रन्थसत्त्वान्न दोषः । अत एवात्र "स्पष्टं चेदमिको गुण इत्यत्र कैयट" इत्युक्तम् । विधिवाक्येनैकवाक्यत्वाद्वा, स्वदेशं विहाय पथिकवद्देशान्तरगमनाद्वा, प्रदेशेऽस्मदादिबुद्धिजननाद्वा स्वदेशत्याग इत्याक्षेपाणां क्रमेण निरासमाह–न हीति । प्रदेशेषु = विधिवाक्यविषये । स्वबुद्धिजननेन = स्वविधेयार्थबोधनेन । अविशेषात् = विधिवाक्यैकवाक्यतायाः पक्षद्वयेऽपि सत्त्वादित्यर्थः । यद्वा–प्रदेशेषु = परिभाषादेशेषु । स्वबुद्धिजननेन = सफलवाक्यार्थबोधेन, अविशेषात् = पक्षद्वयेऽपि परिभाषाणां पाठदेशस्यैव मुख्यदेशत्वेन तदनुरोधेन विप्रतिषेधशास्त्रप्रवृत्तेर्वक्तव्यतयाऽत्र विशेषाभावादित्यर्थः । संज्ञाशास्त्राणां कार्यकालपक्षे तु विधिदेशे एव सफलवाक्यार्थबोधसत्त्वेन तद्देशस्यैव मुख्यदेशतया'ऽयादिभ्य' इति भाष्यसङ्गतिरिति तत्त्वम् । द्वितीयं निरस्यति—न हीति । तृतीयं निरस्यति—नापीति । न 'चायादिभ्य' इति भाष्यासङ्गतिः; तत्रत्यसंज्ञापदस्य संज्ञाकार्यप्रकृतिभात्रोपलक्षकत्वात्, परत्वादित्यास्यापवादत्वादित्यर्थकत्वाद्वा ।

---

मूले–स्पष्टं चेदं• कैयट इति । तत्र क्रोष्ट्रीयसम्मतविप्रतिषेधखण्डनावसरे 'नैष युक्तो विप्रतिषेधः" इति भाष्यप्रतीकमुपादाय 'यथोद्देशे परिभाषयोः पौर्वापर्यम्, न तु कार्यकालतायाम्' इति हि तेनोक्तम् ।

केचिदित्युक्तमिति । अन्यथा–'परे तु' इत्यादिना वदेदिति भावः ।

स्मदादिबुद्धिजननेन स्वदेशत्यागो भवति। अत एव भाष्ये एकदेशस्थस्यैव सर्वशास्त्राभिज्वालकत्वमुक्तम्। अत एव तस्मिन्निति सूत्रे कैयटः—सूत्रपाठापेक्षया परत्वस्य व्यवस्थापकत्वमिति। 'इको गुणे'ति-सूत्रस्थकैयटस्तु—चिन्त्य एव, अन्यथा सर्वशास्त्राणां प्रयोगार्थत्वेन प्रयोगरूपैकदेशस्थत्वेन क्वापि परत्वं न स्यात्। किञ्च 'क्ङिति चे'ति सूत्रस्थकैयटरीत्या विधिसूत्राणां यथोद्देशपक्षे

---

प्राञ्चस्तु—यत्र मुख्यदेशगतं परत्वमादाय व्यवस्था न सम्भवति, तत्र गौणपरत्वमङ्गीक्रियते; सकलवाक्यार्थबोधाधिकरणदेशश्च मुख्यदेश इत्युक्तमेव। 'इग्म' इत्यत्र कार्यकालपक्षे द्वयोरेकदेशस्थत्वेन तदसम्भवात् गौणं पाठदेशमादाय व्यवस्था। 'अयाद्भ्य' इत्यत्र तु—मुख्यदेशमादाय व्यवस्थासम्भवान्नाष्टाध्यायीपाठकृतं गौणं तमादाय विप्रतिषेध इत्यस्य प्रवृत्तिः। अत एव "पट्व्या, मृद्व्या' 'इत्यत्र लक्ष्यगतगौणपरत्वमादाय परत्वात्परयणादेशः; 'परिवीरित्यत्र परत्वाद्दीर्घ' इति च भाष्योक्तं सङ्गच्छत इति प्राहुः॥ इति कार्यकालपक्षविचारः।

वस्तुतो—यथोद्देशकार्यकालपक्षयोर्निरुक्तबीजकत्वे विधिशास्त्रादावपि तत्सम्भवेन संज्ञापरिभाषामात्रविषयकत्वमशक्यं वक्तुम्। किञ्च—'यथोद्देशमि'-त्यादेः परिभाषात्वव्यवहारप्रयोजकविषयसङ्कोचकत्वादेरभावेन परिभाषात्वमप्यशक्यं वक्तुम्। अत एव वाक्यसंस्कारपदसंस्कारपक्षादीनां परिभाषात्वेन व्यवहारः शास्त्रकृच्छैलीपरिशीलितः क्वचिदपि नोपलभ्यते। भाष्ये तत्र तत्र यथोद्देशमित्याद्युल्लेखस्तु—प्रकारद्वयस्यैव सम्भवाद्वस्तुस्वरूपपरिकीर्तनपरः। किञ्च-प्रदर्शितमूलकैतत्पक्षद्वयोपन्यासस्य विशिष्य फलमप्यशक्यं वक्तुम्। न ताव'त्तस्मिन्निती'-त्यादेस्त्रिपाद्यां प्रवृत्तिः कार्यकालपक्षफलम्, शास्त्रत्वसम्पादकपरिभाषाणां त्रिपाद्यां प्रवृत्तेः पक्षद्वयेऽपि सूपपादत्वात्। तद्दृष्ट्या त्रिपाद्या असिद्धत्वन्तु न; त्रैपादिकविधिशास्त्राणां शास्त्रत्वसम्पादकगुणशास्त्रप्रवृत्तितः प्रागप्रामाण्यज्ञानानास्कन्दितबोधजनकत्वरूपशास्त्रत्वस्यैवासम्भवाच्छास्त्रत्वमुपजीव्यासिद्धत्वबोधकेन 'पूर्वत्रासिद्धमि'; त्यनेनासिद्धत्वबोधनस्याशक्यत्वात्। 'पूर्वत्रे'त्यनेन च शास्त्रत्वेन रूपेणैवासिद्धत्वबोधनमावश्यकम्। अत एव 'रोरी'त्यादावुत्वादिघटितनिर्देशसङ्गतिः। शास्त्रत्वावच्छिन्नोद्देश्यता 'कासिद्धम्बहिरङ्गमन्तरङ्गेऽनुदात्तमि' त्यादिपरिभाषाचतुष्टयन्तु त्रिपाद्यां न प्रवर्तते, एतत्प्रवृत्तितः प्रागेव शास्त्रत्वस्य सिद्धतया 'पूर्वत्रासिद्धमि'त्यनेनासिद्धत्वबोधनस्य दुर्निवारत्वात्। एवं यथोद्देशपक्ष 'स्यागच्छतममी ३' इत्यपि न फलम्, पक्षद्वयस्यैवाभावेन संज्ञासूत्रदृष्ट्या प्लुतस्यासिद्धत्वेन प्रगृह्यसंज्ञायां

---

मूले—परत्वं न स्यादिति। तथा सति विप्रतिषेधशास्त्रासङ्गतिरिति भावः।

ननु—विप्रतिषेधशास्त्रासङ्गतिभयात् प्रयोगरूपो देशो न गृह्यते इत्यरुचेराह—किञ्चेति।

**परिभाषादेशे सन्निधानेन तेषां परत्वं व्याहन्येत । एवञ्च वृक्षेभ्य इत्यत्र 'सुपि चे'त्यतः परत्वाद् 'बहुवचने झल्येदि'त्येत्त्वमित्याद्युच्छिद्येत, इत्यलम् ॥ ३ ॥**

**इत्संज्ञका अनुबन्धास्तेष्ववयवानवयवत्वसन्देह आह—**

---

नानुनासिकः। शास्त्रे परत्वपूर्वत्वे अष्टाध्यायीपाठकृते एव। एवं स्थिते योऽत्र बहुशः "प्राचीन नवीन मतविवेक-परिश्रमः, पदैकवाक्यता वाक्यैकवाक्यतेत्यादिविचारः' स सर्वोऽपि काकदन्तपरीक्षावदुपेक्षणीय एवेति दिक् ॥ ३ ॥

यथोद्देशमित्यत्र संज्ञायाः प्रस्तुतत्वात् इत्संज्ञोत्तरं प्रत्याहार इति भाष्येणेत्संज्ञायाः सर्वशास्त्रप्रवृत्तेः प्रागभावित्वेन प्राधान्याद्वा तद्विषयिणीं परिभाषां वक्तुमुपक्रमते—इत्संज्ञका अनुबन्धा इति। इत्संज्ञोपलक्षणम्, तेनेत्संज्ञायोग्यत्वमनुबन्धत्वमिति फलितम्। अवयवानवयवत्वसन्देह इति। बोधकावयवानवयवत्वसन्देहे इत्यर्थः। एतेन-सन्घटकनकारे सन्निरूपितावयवत्वमस्ति न वा, सनिरूपितावयवत्वमस्ति न वे'त्युभयविधसन्देहस्य श्रोत्रेणैव निवर्त्यतया नानुमानापेक्षेत्यपास्तम्; 'सनो बोधकत्वं सशब्दस्य वे'ति बोधकत्वसंशयस्य तत्प्रयुक्तस्य सनो नकारे बोधकावयवानवयवत्वसन्देहस्य च श्रोत्रेणानिवर्त्यतयाऽनुमानस्योपयोग इति भावः। सन्देहेऽन्यतरोपादानेनैव सिद्धे उभयोपादानं परिभाषाद्वयसाधारणमिदमवतरणमिति बोधयितुम्। अनवयवत्वसन्देहे इत्युक्तौ—तस्यानवयवत्वतदभावान्यतरकोटिकसन्देह इत्यर्थात् 'अनवयवत्वाभाववान् अनवयवत्वव्याप्यवान् वे'ति सन्देहस्यापि अनवयवत्वसन्देहरूपत्वेन 'एकान्ता अनुबन्धाः' इत्यनुमितीय-पक्षतात्वं न स्यात्। अवयवत्वसन्देह इत्युक्तौ तु–'अवयवत्ववान अवयवत्वाभावव्याप्यवान् वे'ति सन्देहस्यापि तद्रूपत्वेन 'अनेकान्ता' इत्यनुमितीयपक्षतात्वं च न स्यात्, प्राचीनैः साध्य-तदभावा-

---

मूले—परत्वं व्याहन्येतेति। न चेष्टापत्तिरेव, अत आह—एवञ्चेति। उच्छिद्येतेति। इदमप्यसङ्गतम्—मुख्यासम्भवेऽपि गौणपरत्वग्रहणस्य सर्वसम्मतत्वादिति भावः ॥ ३ ॥

उपक्रमते—मूले-इत्संज्ञा इति। यच्छब्दयोगः प्राथम्यमिति बलेनानुबन्धस्य पूर्वं प्रयोगार्हत्वेऽपि, 'इत्संज्ञका' इत्यस्य 'पूर्वं प्रयोगः' सङ्गतिप्रदर्शनाय बोध्यः। अनुबन्धपदस्य च स्ववाच्ये लक्षणा, एतेन उभयोः प्रवृत्तिनिमित्तैक्येन कथमभेदान्वय इति निरस्तम्।

ननु—एकधर्मिकविरुद्धकोटिद्वयावगाहिज्ञानस्य सन्देहपदार्थतया सन्देहपदस्योपात्तधर्मविरुद्धकोट्युपस्थापकत्वमित्यस्य स्वभावसिद्धतया एककोट्युपादानेनापि विरुद्धकोट्युपस्थापनं स्यादेवेति द्वितीयकोट्युपादानं किमर्थमत आह—सन्देहेऽन्यतरोपादानेनेति।

पक्षतात्वं न स्यादिति। अयम्भावः—प्राचीनाः साध्यसंशयस्यैव पक्षतात्वमभ्युपगच्छन्ति। साध्यसंशय इत्यस्य साध्यप्रकारकः साध्याभावप्रकारको वा संशयः इत्येवार्थः, न तु साध्यप्रकारताकत्वे सति साध्याभावप्रकारताकसंशय इति, 'पर्वतो वन्ह्यभाववान् वन्हिव्याप्यवान् वा' 'पर्वतो वन्हिमान् वन्ह्यभावव्याप्यवान् वा' इत्यादिसंशयानामपि तैः पक्षतात्वाङ्गीकारात्। साध्यप्रकारकत्वमित्यस्य साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारकत्वमर्थः; साध्याभावप्रकार-

## अनेकान्ता अनुबन्धा इति ॥ ४ ॥

**अनेकान्ता अनवयवा इत्यर्थः । यो ह्यवयवः स कदाचित्तत्रोपलभ्यत एव, अयं तु न तथा, तदर्थभूते विधेये कदाप्यदर्शनात् । 'शित्किदि'त्यादौ**

---

न्यतरस्मिन् पक्षसम्बन्धावगाहिसंशयस्यैव पक्षतात्वोपगमात्, पर्वतो वह्निमानित्यनुमितौ 'पर्वतो वह्न्यभाववान् वह्निव्याप्यवान् वे'ति सन्देहस्य पक्षतात्वाङ्गीकारात् । सनः सन् इत्यत्र विभक्तिदर्शनम्, 'चिकीर्षती'त्यादिलक्ष्ये अदर्शनं च निरुक्तसंशयोयकोटिद्वयोत्थापकं बोध्यम् । व्यतिरेकेण हेतुं निरूपयति—यो ह्यवयवः स कदाचित्तत्रोपलभ्यत एव, अयं तु न तथेति । तत्रेति । बोधक इत्यर्थः । पक्षे हेतुरस्ति नवे'ति सन्देहनिवृत्त्यर्थं हेतोः साधकं हेत्वन्तरमाह—तदर्थभूत इति । स्वविधेय इत्यर्थः । "अनुबन्धाः बोधकानवयवाः बोधकावयवत्वेनोपलब्धिविषयत्वाभावात्, अनुबन्धाः बोधकावयवत्वेनोपलब्धिविषयत्वाभाववन्तः तदर्थभूते विधेये कदाऽप्यदर्शनादि"त्यनुमानद्वयं हेतुवाक्यं पूर्वमप्रदर्श्य व्याप्तिं प्रदर्शयतो ग्रन्थकारस्याभिमतमिति स्वरसतः प्रतीयते ।

केचित्तु—विधेये कदापीति हेतुमेव व्यतिरेकव्याप्त्या पक्षे सङ्घटयति—यो हीति । तत्रेति । विधेय इत्यर्थ इति वदन्ति ।

अथैवं प्रकारद्वयेऽपि 'आद्गुणः' इति गकारे हेतुसत्त्वाद् व्यभिचारः; स्वरूपबोधकानवयवत्वसाधनेन निरुक्तगकारे व्यभिचारवारणे तु—प्रकृतसंशयाविरोधित्वेनास्यानुमानस्याप्रयोजकत्वापत्तिरिति चेन्न । स्वघटितघटकवृत्तिश्रावणप्रत्यक्षविषयतावच्छे-

---

तावत्त्वमित्यस्य च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववत्त्वावच्छिन्नप्रकारताकत्वमिति । एवञ्च अनवयवत्वसन्देहे इत्येतन्मात्रोक्तौ तस्यानवयवत्वतदभावान्यतरकोटिकसंशयार्थकतया तेन 'अनवयवत्वाभाववान् अनवयवत्वव्याप्यवान् वे'ति संशयस्यापि धर्तुं शक्यतया तस्य 'एकान्ता अनुबन्धा' इत्यनुमितीयपक्षतात्वं न स्यात्, अवयवत्व—तदभावान्यतरकोटिकसंशयस्यैव अवयवत्वसाध्यकानुमितौ पक्षतात्वाङ्गीकारात्, उक्तसंशये अवयवत्वस्वरूपानवयवत्वाभावरूपसाध्यप्रकारकत्वेऽपि साध्यतावच्छेदकधर्मावच्छिन्नप्रकारताकत्वाभावान्न तत्त्वम्; एवमग्रेऽपि । उभयकोट्योरुपादाने तु तादृशसंशयस्य परस्परं विरुद्धकोटिद्वयावगाहित्वेन उभयानुमितीयसाध्यप्रकारताकत्वेनोभयानुमितौ पक्षतात्वं सिद्धमिति ध्येयम् ।

**यो ह्यवयवः० अयं तु न तथेतीति ।** व्यतिरेकव्याप्तिप्रदर्शनरूपोदाहरणग्रन्थात्पूर्वं बोधकावयवत्वेनोपलब्धिविषयत्वाभावादिति हेतुः स्वयमूहनीय इति तात्पर्यम् । एतेन—प्रतिज्ञा-हेतू-दाहरणो-पनय-निगमनानां वाक्यानां क्रमेण लेखनस्योचितत्वेन प्रतिज्ञानन्तरमुदाहरणलेखनमसङ्गतमित्यपास्तम् ।

**बोधकानवयवा इति ।** न तु बोध्यानवयवत्वं साध्यम्, 'तस्य लोपः' इति शास्त्रेण तस्य स्वत एव सिद्धत्वादिति भावः ।

**केचित्त्विति ।** अत्र पक्षे—'तदर्थभूते विधेये' इति हेतुः प्रतिज्ञानन्तरं योजयित्वा व्याख्येयः, साध्यं प्रति व्याप्यव्याप्यस्यापि व्याप्यत्वात्तस्य हेतुत्वम् ।

**अप्रयोजकत्वापत्तिरिति ।** 'पर्वतो वह्निमान्न वा' इत्याकारकसंशयानन्तरं 'पर्वतो महान-

दकधर्मावच्छिन्नविधेयताप्रयोजकपदानवयवत्वस्य साध्यत्वेनादोषात्। यस्मिन्ननवयवत्वं निरूपणीयं तत्स्वम्, निरुक्तणकारे हेतोः सत्त्वेऽपि तद्गुणपदस्य गुणपदावच्छिन्नविधेयताप्रयोजकत्वेन स्वघटितघटकवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविधेयताप्रयोजकत्वाभावेन तदनवयवत्वरूपसाध्यस्यापि सत्त्वेन न दोषः। साध्यदले विधेयता च साक्षादवच्छिन्ना बोध्या, तेन गुणपदस्य गुणपदत्वेन बोधकतया अदेङ्निष्ठविधेयतायाः परम्परया गुणपदत्वावच्छिन्नत्वेऽपि न क्षतिः। न चैवमप्यकारे विधेये ककारस्य 'अश्वत्थाम' इति लक्ष्ये अभावेन कारप्रत्ययककारे हेतोः सत्त्वेन तद्घटितघटकावर्णवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकात्वरूपधर्मेण साक्षादवच्छिन्नविधेयताप्रयोजकाकाररूपपदावयवत्वस्यैव सत्त्वेन तदनवयवत्वरूपसाध्याभावेन व्यभिचार इति वाच्यम्; साध्यदलीयवृत्त्यन्तपदस्य स्वघटितपदघटकयावद्वृत्तीत्यर्थकरणेन (स्वम्=ककारस्तद्घटितमकार इति पदम्, तद्घटकयावद्वृत्तिश्रावणप्रत्यक्षविषयतावच्छेदको धर्मश्चाकारशब्दत्वम्, तद्धर्मावच्छिन्नविधेयताया अप्रसिद्ध्या तत्प्रयोजकपदानवयवत्वस्यापि निरुक्तककारे सत्त्वेन) अदोषात्। न च यावदिति पदनिवेशे 'द्वयसज्दघ्नञ्मात्रच्' इति समस्तपदस्य चकाररूपानुबन्धघटितपदघटकयावद्रूपतया तद्वृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकतादृशशब्दत्वरूपधर्मावच्छिन्नविधेयताया अप्रसिद्ध्या तत्प्रयोजकपदानवयवत्वस्य केवलान्वयित्वेन तदनुमानस्य बोधकावयवत्वबुद्धिनिवर्तकत्वं न सम्भवतीति वाच्यम्; यावत्पदेन स्वघटितं यत्पदाघटितं पदं तद्घटकानुबन्धेतरविभक्तीतरस्य यावतो ग्रहणेनादोषात्। तथा चानुबन्धघटितं पदघटितं विभक्तिघटितं च समुदायमादाय तथाविधधर्मावच्छिन्नविधेयताऽप्रसिद्ध्या न दोष उद्भावनीय इति बोध्यम्।

ननु प्रत्युच्चारणं शब्दो भिद्यते, न वा?। आद्ये—सनः सकारे हेतोः सत्त्वेन व्यभिचारः। अन्त्ये—मनिनोऽनुबन्धनकारे हेत्वभावाद्भागासिद्धिरिति चेन्न। स्वघटितं यत्पदाघटितं पदं तद्घटकप्रयोज्यविधेयतावच्छेदकधर्माभावादिति तदर्थेनादोषात्। विधेयतावच्छेदकधर्मश्च विशेष्यविशेषणदलप्रविष्टयावत्पदार्थसंकुचितो ग्राह्यः। तथा च अकाराव्यवहितपूर्वत्वविशिष्टसकारत्वरूपस्य विधेयतावच्छेदकसत्त्वस्य सकारे सत्त्वेन, विधेयतावच्छेदक 'मनत्व'स्य मकारोत्तराकारोत्तरनत्वरूपस्यानुबन्धे नकारे असत्त्वेन च न दोषः। न च कुकि मुमि चानुबन्धयोर्विधेयतावच्छेदकधर्मसत्त्वाद्भागासिद्धिरिति वाच्यम्; 'कुक्मुमोः ककारमकारौ स्वघटितपदघटकबोधकानवयवौ स्वघटितपदघटकबोधकावयवोत्तरानवयवोत्तरत्वादि'त्यनुमानेन दोषवारणात्। स्वमनुबन्धस्तद्घटितं पदम् = कुक् मुम् इति, तद्घटकबोधकावयवौ=

---

सीयवन्ह्यभाववान्' इत्यनुमितेरिव, प्रकृतसंशयानिवर्तकत्वेन प्रकृतानुमानस्याप्रयोजकत्वमिति भावः।

स्वघटितपदघटकबोधकानवयवाविति। स्वम् = अनुबन्धस्तद्घटितं पदं = कुगिति, तद्घटकबोधकम् = बोधकत्वेन निश्चितं कुगिति, तदनवयवाविति तदर्थः।

ननु—अनुमानान्तरेण 'कुक् मुमोः' ककारमकारयोर्बोधकानवयवत्वसाधनेऽपि पूर्वोक्तानुमानेऽनुबन्धत्वस्य पक्षतावच्छेदकत्वाङ्गीकारे भागासिद्धिस्तदवस्थैव, प्रकारान्तरेण (कुक्मुम्घटक-ककारमकार-

**समीपेऽवयवत्वारोपेण समासो बोध्यः । 'वुञ्छण्कठे'त्यादौ णित्त्वप्रयुक्तं कार्यं पूर्वस्यैवेत्यादि तु व्याख्यानतो निर्णयम् । 'हलन्त्यमि' त्यत्रान्त्यशब्दः परसमीपबोधकः ॥ ४ ॥**

---

आद्यककारमकारौ, तदुत्तरानवयवौ = उकारौ, तदुत्तरत्वस्याऽबन्धे वर्तमानत्वात्सम-न्वयो बोध्यः ।

यद्वा — स्वघटितपदाघटितपदघटकप्रयोज्यविधेयतावच्छेदकधर्मवत्त्व-स्वघटितघट-कबोधकावयवोत्तरानवयवानुत्तरत्वरूपोभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभावादित्येक एव हेतुरनवयवत्वसाधकः । सनादौ अन्त्यसम्बन्धसत्त्वेऽपि आद्यसम्बन्धाभावात्, कुगादावाद्यसम्बन्धसत्त्वेऽप्यन्त्यसम्बन्धाभावादुभयसम्बन्धावच्छिन्नप्रतियोगिताकाभाव-सत्त्वान्न क्वापि दोषः ।

ननूक्तानुमितेः पूर्वं सनत्वस्य विधेयतावच्छेदकत्वे बाधकाभावेन तस्य नकारेऽपि सत्त्वमिति चेन्न । विधेयवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्माभावादिति तदर्थेन सशब्दस्यैव विधेयतया तद्वृत्तितादृशधर्मस्य नकारेऽभावेन दोषाभावात् ।

समीपेऽवयवत्वारोपेणेति । ननु — समीपेऽवयवत्वारोपे अत्र पक्षेऽपि औशादाव-नेकाल्त्वात्सर्वादेशाद्यापत्त्या 'नानुबन्धकृतमि'त्यादिपरिभाषात्रयकरणमावश्यकमिति चेन्न । 'माङ्' इति निर्देशादिज्ञापकेन इत्त्वघटितधर्मप्रयुक्ते कार्ये एवाऽऽरोपकरणेनादोषात् । अत एवात्र पक्षे परिभाषात्रयानारम्भरूपं लाघवं भाष्योक्तं सङ्गच्छते ।

नन्वेवं छणो णकारे कप्रत्ययावयवत्वापत्तौ 'ऋश्यक' इत्यत्रादिवृद्ध्यापत्तिरत आह—पूर्वस्यैवेति । व्याख्यानत इति । दन्नचश्चकाराद्व्याख्यानात् स्वसमभिव्याहृतत्व-स्वाघटितपदाघटकत्वोभयसम्बन्धेन स्वविशिष्टे स्वनिरूपितमवयवत्वमारोप्यते; छणो णकारे आद्यसम्बन्धसत्त्वेऽपि ( स्वं कशब्दस्तद्घटितं पदम् = छणिति, तद्घट-कत्वरूप ) द्वितीयसम्बन्धाभावान्न कनिरूपितावयवत्वारोपः । अत्र घटकत्वं व्यपदेशिवद्भावानतिदिष्टं ग्राह्यम्, तेन 'लोपशि'त्यत्र लोप इति पदाघटितं शितिपदं व्यपदेशिवद्भावेन तद्घटकत्वस्य शकारे सत्त्वेऽपि वस्तुतोऽघटकत्वेन शे लोपनि-रूपितावयवत्वसिद्धिः । आद्यसम्बन्धनिवेशात् अत्र शकारे 'त्यदादीनामः' एतद्-कारनिरूपितावयवत्वाभावसिद्धिः । ङमुटि 'ङम्-उट्' इति पदद्वयमिति वादिमते-टकारे ङम्निरूपितावयवत्वाय अत्र पदमनुबन्धेतरघटितं ग्राह्यम्, तेन ङमघटितम् उट् इति पदमनुबन्धेतरघटित नास्तीति तद्घटकत्वस्य टकारे सत्त्वात् ङमष्टित्व-सिद्धिः । ङमुडित्येकमेव पदमिति पक्षे त्वदोष एवेति बोध्यम् ।

ननु इत्त्वघटितधर्मातिदेश एव समीपेऽवयवत्वारोपस्य ज्ञापितत्वेन उप-देशावयवत्वाभावादन्त्यत्वानुपपत्तिरत आह—अन्त्यशब्द इति । एतत्प्रवृत्तेः प्रायनु-बन्धत्वाभावेन अनवयवत्वाभावान्न लक्षणोपयोग इति केचित् ।

---

भिन्नानुबन्धत्वस्य पक्षतावच्छेदकत्वाङ्गीकारेण ) भागासिद्धिवारणेऽप्यनुमानद्वयाङ्गीकारेण गौरवं स्फुटमेवेत्यतः पक्षान्तरमाह—यद्वेति । सुगममन्यत् ॥ ४ ॥

वस्तुतस्तु—

## एकान्ताः ॥ ५ ॥

इत्येव न्याय्यम्। शास्त्रे तत्रोपलम्भादन्यत्रानुपलम्भाच्च। अनवयवो हि काकादिरेकजातीयसम्बन्धेन गृहवृक्षादिषु उपलभ्यते, नैवमयम्। एवं

---

अत्र पक्षे प्रमाणम्—वक्ष्यमाणपरिभाषात्रयज्ञापकानि, 'उपदेशेऽजनुनासिक' इति सूत्रे उपदेशग्रहणञ्च। तत्फलञ्च—'आभ्र आँ अटित' इत्यत्रादितश्चेतीट्प्रतिषेधो मा भूत्, तस्य चानेकान्तपक्षे एव समीपेऽवयवत्वारोपेण सम्भव इति। स्पष्टं चेदं 'सिद्धमनुबन्धानामनेकान्तत्वादि'त्यादिना घुसंज्ञासूत्र-वाऽसरूपसूत्रादौ भाष्ये। एतत्फलं 'ध्वसोरेद्धावि'त्यत्र शे लोपनिरूपितावयवत्वारोपात्तस्य शित्त्वेन सर्वादेशत्वसिद्धिः। अत्र पक्षे—'गुप्तिजि'त्यादौ सनादिशब्दानां सो भवतीत्यर्थः। अनुवादे सनीत्यादौ तु—इत्संज्ञकनकारपूर्ववर्तिबोध्ये सशब्दे इत्यादिरर्थः। अत्र पूर्वत्वादिनिवेशान्न णाणादौ दोषः। एव'मुन्वि च पद' इत्यत्र इत्संज्ञकन्वकारपूर्ववर्तिबोध्ये उशब्दे इत्यर्थस्तेन पदे किं तन्त्रयुतमित्यत्र न दोषः, अत्रोकारस्येत्संज्ञकन्वकारपूर्ववर्ति वेशब्दबोध्यत्वादिति दिक्॥ ४॥

यद्यप्यत्र पक्षे—'नानुबन्धकृतमि'त्यादि वक्ष्यमाणपरिभाषात्रयं नारम्भणीयम्; तथाप्यारोपकवाक्यकरणम्, अनुबन्धघटितात्सौत्रविभक्तिकल्पनम्, आद्यन्तशब्दयोर्लक्षणास्वीकार इति गौरवम्, 'आनङ्' नकारादावुक्तहेतुसत्त्वेन साध्याभावाद्व्यभिचारः, "विधेयेऽदर्शनरूपहेतोः सिद्धि'स्तस्य लोप' इत्येतद्वाक्यार्थबोधाधीना, तदर्थबोधश्च 'हलन्त्य'सूत्रवाक्यार्थबोधाधीनः, तद्वाक्यार्थबोधश्च 'पदार्थज्ञानविधया लक्षणाग्रहाधीनः, तद्ग्रहश्चानवयवत्वग्रहपूर्वकशाक्यार्थबोधग्रहपूर्वकः, अनवयवत्त्वग्रहश्च प्रकृतहेतुज्ञानपूर्वक" इति चक्रकापत्तिश्चेत्यतः सिद्धान्तमाह— वस्तुतस्त्विति। एकान्ता इति। स्वघटितपदाघटितपदघटकबोधकावयवा इत्यर्थः, स्वघटितेत्यादिनिवेशात् छणो णकारे करूपबोधकावयवत्वं नेति बोध्यम्। तत्रेति। बोधक इत्यर्थः। तत्रोपलभ्यमानत्वमात्रस्य हेतुत्वे—काकादीनामपि वृक्षादिषूपलभ्यमानत्वादन्यत्रानुपलम्भस्यैव हेतुत्वे शशशृङ्गादीनामपि तत्त्वाच्च हेतुसत्त्वेन साध्याभावाद्व्यभिचाराद्धेतुदले उभयोपादानम्। सनवयवनकारादेरपि सम्बन्धान्तरेणान्यत्रोपलम्भाद्धेत्वसिद्धिरत—एकजातीयेति। येन सम्बन्धेन तत्रोपलभ्यमानत्वं तद्रूपावच्छिन्नसंसर्गेणान्यत्रानुपलभ्यमानत्वमिति तदर्थः। एवञ्च नकारस्य सनि सम-

---

शशशृङ्गादीनामपि तत्त्वाच्चेति। स्वप्नानुरोधेन बौद्धस्य तस्याऽऽवश्यकत्वात्।

सनि = सन्रूपे बोधके इत्यर्थः। तत्र बोधकत्वनिश्चयप्रकारश्चानुपदं टीकाकृता वक्ष्यते। समवायेनोपलब्धस्येति। नकारस्य सनयुतसिद्धतया 'वृक्षे शाखा' इतिवत् समवायेन तत्रोपलम्भसम्भवादिति भावः। प्रतिपादितञ्चाग्रे टीकाकृता सनयुतसिद्धत्वम्। अत एव 'वृक्षस्था शाखा वृक्षैकान्तोपलभ्यते' इति भाष्यं सङ्गच्छते इति भावः।

हि बहुव्रीहिरपि न्यायत एवोपपन्नः, अन्त्यादिशब्दे लक्षणा च न ।

---

वार्येणोपलब्धस्यान्यत्र तेन सम्बन्धेनानुपलभ्यमानत्वान्न दोषः । यद्यपि 'अवयव-स्तत्रोपलब्धेरि'ति भाष्यतस्तत्रोपलम्भादित्येव हेतुः प्रतीयते, तथापि कैयटेन 'यो हि संशायको हेतुः स कथं निश्चायक' इत्याशङ्क्य, तत्रोपलम्भादित्यस्य 'तत्रैवोपलम्भा-दि'त्यर्थकरणेन समाहितत्वात्तदनुसारेणायं ग्रन्थ इति ध्येयम् । न च बोधकत्व-स्याद्याबाध अनिर्णीतत्वेन हेतोरसिद्धिरिति वाच्यम् ; अनुबन्धघटिते सनादौ पक्षे विभक्तिप्रकृतित्वेन हेतुना बोधकत्वं प्रसाध्य, तद्घटकानुबन्धादौ तत्रैवोपलम्भादिति हेतुना बोधकावयवत्वसाधनेनादोषात् । अत्रोपलब्धिविषयत्वाभावादित्यस्योपल-ब्धिविषयत्वयोग्यत्वाभावादित्यर्थः, तेनोत्पन्नविनष्टघटस्यान्यत्रोपलम्भाभावेऽपि तद्योग्यत्वसत्त्वान्न क्षतिः । न च घटरूपादौ घटावयवत्वापत्तिः, घटरूपादेर्घटा-दन्यत्रासत्त्वादिति वाच्यम् ; इष्टापत्तेः; गुणक्रियादिसमुदायस्यैव सांख्यमत इव

---

यो हि संशायक इति । तत्रोपलभ्यमानस्य रूपद्वयदर्शनात् , यथा वृक्षे उपलब्धायाः शाखाया अवयवत्वं बलाकायाश्चानवयवत्वम्, तद्वत् बोधके उपलभ्यमानस्यानुबन्धस्य अवयवत्वमन-वयवत्वं वा इति कैयटेन व्याख्यातत्वादिति भावः । तदनुसारेणायं ग्रन्थ इति । वस्तुतस्तु— संशायकोभयकोटिमध्ये अन्यतरकोटयुपमर्दे अवशिष्टैव कोटिर्निश्चायिका भवति, यथा—'पर्वतो वह्निमान् धूमात् , पर्वतो वह्न्यभाववान् जलह्रदवत्त्वात्' इत्युभयकोटिकसंशये जलाभाववद्देशनिश्च-येन अभावकोटयुपमर्दे धूमादिति हेतुः पर्वते वह्निसाधकः, एवमेव प्रकृते बोध्ये अदर्शनेन विशिष्टा-द्विभक्तिदर्शनेन च प्राप्तेऽनैकान्तैकान्तत्वसन्देहे कारणकलापैर्निषिद्धे चानेकान्तपक्षे विशिष्टाद्विभक्ति-दर्शनरूप एव हेतुरेकान्तपक्षसाधको भवितुमर्हतीति तत्त्वम् ।

हेतोरसिद्धिरिति । सनि बोधकत्वनिश्चयं विना नकाररूपानुबन्धे घटकत्वसम्बन्धेन बोधके उपलभ्यमानत्वस्यानिश्चयादिति भावः । यस्य कस्यचिद्बोधकत्वमस्तीति निश्चयस्य नोक्तनिश्चयजनक-त्वम् , प्रत्युत तद्विरोधित्वमेव, 'सन्घटकस्य कस्यचित्' इति वाक्येन सशब्दस्यापि धर्तुं शक्यतया तदानीं घटकत्वसम्बन्धेन नकारस्य तत्रानुपलम्भविषयकस्यापि ज्ञानस्य पक्षे उदयसम्भवात् । एतेन—'तदपि तुच्छम् ; प्रथमानुमानेनैवाभिमतसाध्यसिद्ध्या द्वितीयानुमानस्यानुपयोगात्' इति केषाञ्चिदुक्तिः परास्ता ।

यदपि—'किञ्चे'त्यादिना नकारस्य समवायसम्बन्धेन आकाशे उपलम्भः; न सन्शब्दे इति । तदपि स्वतन्त्रसिद्धान्तानवबोधव्यामोहितं वचः; वैयाकरणानां मते विभूनां नित्यानां द्रव्यरूपाणाञ्च वर्णानामाकाशे कथमपि समवायासम्भवात् । अत एव 'अइउण्' सूत्रे भाष्ये— 'आकाशदेशः शब्दः' इत्येवोक्तम् , न तु आकाशगुण इति । विवेचितञ्चैतत् मञ्जूषायां विस्तरेण । तार्किकमतमनुसृत्य स्वमते दोषदानस्यात्यन्तमनुचितत्वञ्च ।

वयन्तु — वर्णपदातिरिक्तावयवडव वाक्यस्फोट एवेति सिद्धान्ते सत्यपि, अपोद्धारकल्पनया वाक्येषु पदकल्पनम् , पदेषु प्रकृतिप्रत्ययादिकल्पनम् , तेषु च वर्णकल्पनमितिवत् प्रकृतेऽपि अव-यवावयविभावकल्पनं स्वीकार्यं शास्त्रप्रक्रियानिर्वाहाय । नकाररूपावयवस्य अवयविनि समवायेन सत्त्वञ्च 'वृक्षस्था शाखा वृक्षैकान्ता' इतिवत् आधारत्वारोपेणेति भ्रमः ।

**किञ्चानवयवत्वे णशकप्रत्ययादौ णादेरित्त्वानापत्तिः प्रत्ययादित्वाभावात्,**

---

वैयाकरणमतेऽपि द्रव्यत्वाङ्गीकारात् अत्र च सर्वाधारतानियामकसम्बन्धेतरसम्बन्धो ग्राह्यः, तेन कालादावेव कालिकादिसम्बन्धेनोपलम्भेऽपि न कालावयवत्वं तेषामिति बोध्यम् ।

अत्र केचित्—'अनुबन्धाः बोधकावयवाः बोधकायुतसिद्धत्वात , यो यदयुतसिद्धः स तदवयवः, यथा शाखादिः' इति नकारानुबन्धस्य सनयुतसिद्धत्वात् तदवयवत्वमक्षतम् । न चैवं बोधकानां स्वावयवायुतसिद्धत्वेन तदवयवत्वापत्तिः; व्यापकत्वविशिष्टायुतसिद्धत्वस्य हेतुत्वेन समुदायस्य स्वावयवाव्यापकत्वेनादोषादिति वदन्ति । अत्र पक्षे 'गुप्तिजि'त्यादौ विधेयताप्रयोजकसनादिपदस्य नकारेत्संज्ञकः सो भवतीत्यर्थः । इत्संज्ञालोपौ तु पक्षद्वयेऽपि सूत्रे एव, अनुबन्धविनिर्मुक्तपदार्थस्यैवोपस्थितेरनुवादे 'सनी'त्यादौ नकारेत्संज्ञके सशब्दे इत्यादिरर्थः ।

अन्ये तु—'अनुबन्धाः बोध्यावयवाः बोधके उपलभ्यमानत्वात् , सनः सकारवदि'त्यनुमानेनानुबन्धानां बोध्यावयवत्वं सिध्यति । न चेदमप्रयोजकम् ; 'स्वं रूप'शास्त्रस्यानुकूलतर्करूपस्य जागरूकत्वात् । इत्थञ्चानुबन्धसहितस्य बोध्यत्वेन वक्ष्यमाणपरिभाषात्रयावतरणानि स्वरसतः सङ्गच्छन्ते । अस्मिन् कल्पे तु बोध्य एवेत्संज्ञालोपौ, न सूत्रे । 'गुप्तिजि'त्यादिविधेयेऽनुवादे च सन्पदस्य सन्शब्द इत्येवार्थः, तेन णाणोर्न व्यभिचारः । तत्रोपलम्भादित्यादिहेतुना बोधकावयवत्वसाधनन्तु न युक्तम्, बोधकत्वस्य सन्यव्याप्यसिद्धेः । अनुबन्धसहिताद्विभक्तिदर्शनेन सनादौ बोधकत्वनिश्चये तु नकारादौ तदवयवत्वस्य श्रवणेन्द्रियेणैव सिद्धतया सन्देहाभावेनानुमानस्यैवाप्रसक्तेः । अत एव भाष्ये तत्रोपलम्भादित्येव हेतुः प्रदर्शितः, नान्यत्रानुपलम्भाच्चेति । एतेन—"यो हि संशायको हेतुः स कथं निश्चायक इत्याशङ्क्य, तत्रोपलम्भादित्यस्य 'तत्रैवोपलम्भादि'त्यर्थं" इति कैयटोक्तमपास्तम् ; संशायकस्यैकस्य हेतोरसाधकत्वनिर्णयेऽपरहेतोर्निर्णयजनकत्वस्य सर्वसम्मतत्वाच्च । अत एव 'स्थाणुर्वा पुरुषो वे'ति संशयस्थले पुरुषत्वसाधकस्य करचरणादिमत्त्वस्य प्रत्यक्षेण बाधे संशायकस्यैव कोटरादिमत्त्वस्य स्थाणुत्वान् मितिजनकत्वं सर्वसम्मतम् । किञ्चानुवादे 'सन्यत' इत्यादौ नकारेत्संज्ञकसशब्दे परत इत्याद्यर्थस्य कथंचित्सम्भवेऽपि, विधेयताप्रयोजके 'गुप्तिजि'त्यादौ सनादिपदे न तत्सम्भवः, 'न विधौ परः शब्दार्थः' इति न्यायात् । किञ्चैवं दाप्शब्दस्यापि 'पकारेत्संज्ञक-दाशब्द' इत्यर्थे 'अवदाततम्'त्यत्र तस्य सत्त्वेन वक्ष्यमाणावतरणासङ्गतिः । तच्च पकारेत्संज्ञकदाप्शब्दबोध्यत्वं दाप्पदशक्यतावच्छेदकम् , एवं सनादिपदेऽपि नकारेत्संज्ञकसन्पदबोध्यत्वं तत् , अत एव न णाणोर्व्यभिचारः ; त्वद्रीत्या दाप्शब्दत्वस्य दाप्पदशक्यतावच्छेदकत्वे तु—प्रणिदापयती'त्यत्रापि तत्सत्त्वाद् घुसंज्ञानिषेधापत्तिरिति वाच्यम्; पकारेत्संज्ञकेत्यादेस्तदर्थतावच्छेदकताया अनुपयोगेन लाघवान्मदुक्तस्यैव तस्योचित-

---

द्रव्यत्वाङ्गीकारादिति । न चैवं जीवात्मनोऽपि ज्ञानेच्छादिसमुदायरूपतया अनित्यत्वा-

दघनचश्चकारस्य वैयर्थ्यापत्तिश्च । इदञ्च 'तस्य लोप' इत्यत्र भाष्ये स्पष्टम् , तत्र ह्युक्तम्—'एकान्ता अनुबन्धा इत्येव न्याय्यमि'ति दिक् ॥ ५ ॥

नन्वेकान्तत्वेऽनेकाल्त्वादेव औशादीनां सर्वादेशत्वसिद्ध्या 'ऽनेकाल्'सूत्रे शिद्ग्रहणं व्यर्थमत आह—

---

त्वान , दैप्साहचर्यादिना पकारेत्संज्ञकस्य दापस्तत्र ग्रहणेऽपि तत्त्वस्य शक्यतावच्छेदकत्वकल्पने मानाभावात् । अत एव 'दाधाध्वपिदि'ति न्यासेन सह न फलभेदः । किञ्च त्वन्मते सूत्र एवेत्संज्ञालोपयोः सत्त्वेन तत्र शित्परत्वयोग्यताया असम्भवेनात्वाऽप्राप्त्या 'नानुबन्धकृतमनेजन्तत्वमि'ति परिभाषया तत्साधनपरभाष्यासङ्गतिः । शित्परत्वयोग्यस्यात्वविधाना'ह्वे' इत्यत्र नाऽत्वम् । तद्योग्यता च प्रकृतेरेव, न प्रत्ययान्तस्य, न चौपदेशिकस्येति बोध्यम् । नन्वेवम्—'इदम् इश्-अण्त्वात्सवर्णग्रहणं प्राप्नोति अप्रत्यय इति निषेधात्' इति भाष्यासङ्गतिः, वोध्यस्याण्रूपत्वाभावात् ; मम त्विकारस्य बोध्यत्वेन तस्याण्त्वा'दणुदित्सू'त्रप्रवृत्तेर्निराबाधत्वाञ्च दोष इति चेन्न । अस्य भाष्यस्यानेकान्तपक्षाभिप्रायकत्वकल्पनेनादोषात् । एकान्तपक्षेऽपि ह्रस्वादीनामणत्वेन तद्बोधकन्ह्रस्वादिपदे'ष्वणुदि'त्सूत्रप्रवृत्तौ अष्टादशादीनां ग्रहणापत्तिभियाऽण्मात्रघटितं यदण्बोधकं पदं तेन स्वबोध्याण्सवर्णानां ग्रहणं भवति, मात्रपदेन चेत्संज्ञकेतरस्यैव व्यावृत्तिः, अत एवेगादिपदैः स्वबोध्यसवर्णग्रहणसिद्धिः । एवञ्चेशादिपदस्याप्यण्त्वेन प्राप्तसवर्णग्रहणस्य अप्रत्यय इति निषेधे बाधकाभावात् । 'उञि च पद' इति सूत्रे उञ्पदस्य ञान्तबोध्य उशब्दे लक्षणा बोध्या, तेन 'पदे किं तन्त्रयुतमि'ति भाष्यं सङ्गच्छते । इत्थं 'चार्धजरतीय'स्यानौचित्यादेकान्तपक्षेऽनुबन्धा बोधकबोध्ययोरुभयोरप्येकान्ता इति सिद्धान्तयन्ति ॥ ५ ॥

शिद्ग्रहणं व्यर्थमिति । ननु 'घ्वसोरेद्धावि'ति विहितलोपस्य सर्वादेशत्वार्थं शिद्ग्रहणं चरितार्थमिति चेन्न । लोपो यी'त्यतो लोपपदानुवृत्त्यैव सिद्धे सूत्रे लोपपदोपादानादेव सर्वादेशत्वसिद्धेः शिद्ग्रहणवैयर्थ्यस्य सूपपादत्वात् । तत्सूत्रस्थशकारप्रश्लेषपरभाष्यन्तु अनेकान्तपक्षाभिप्रायकमिति न तद्विरोधः ।

नन्वनेकाल्'सूत्रे बोधकवृत्त्यनेकाल्त्वस्य सर्वादेशताप्रयोजकत्वे 'पादस्य लोप' इत्यत्रापि सर्वादेशत्वापत्तिरतो बोध्यवृत्त्यनेकाल्त्वस्य तत्त्वं वाच्यम् ; तथा चानुबन्धविनिर्मुक्तादार्थोपस्थितेः सत्त्वात् बोध्यस्यौशब्दस्यानेकाल्त्वाभावात्सर्वादेशार्थं

---

पत्तिरिति वाच्यम् ; साङ्ख्यमते—ज्ञानेच्छादेरन्तःकरणधर्मतयाऽऽत्मनो निर्गुणत्वेनादोषात् ॥५॥

तत्त्वं वाच्यमिति । 'आदिश्यत इत्यादेश' इति व्युत्पत्त्या बोध्यस्यैव तत्त्वात् ; अनेकाल्पदस्य 'अनेकालबोधकबोध्यः' इत्यर्थकरणे तु-लक्षणापत्तिरिति भावः । अनुबन्धविनिर्मुक्तेति । अनुबन्धानां बोध्यावयवत्वाभावादिति भावः । अत एव "इदम इश् अणत्वात् सवर्णग्रहणं प्राप्नोति"

# नानुबन्धकृतमनेकाल्त्वम् ॥ ६ ॥

## शिद्ग्रहणमेवैतज्ज्ञापकम्, तेनावगस्तृ इत्यादेर्न सर्वादेशत्वम् ।

शित्त्वस्य चारितार्थ्यमिति चेन्न । शकारस्य 'तस्य लोप' इति लोपादेशे आनुमानिकस्थान्यादेशभावेन 'स्थानिवत्स'त्रेणवानेकाल्त्वातिदेशात्सर्वादेशत्वसिद्धेः शित्त्ववैयर्थ्यस्य सूपपादत्वात् । न चानल्विधाविति तन्निषेधः; 'नल्यपी'ति सूत्रारम्भसामर्थ्येनानुबन्धवृत्तितथाविधधर्मानयनेऽनल्विधावित्यस्याप्रवृत्तिज्ञापनात् । न च 'हल्ङ्यादि'सूत्रे ङ्याब्ग्रहणवैयर्थ्यापत्तिङ्याबादिरूपबोधकगतहलन्तत्वस्य स्थानिवद्भावेनैव लाभादिति वाच्यम्; आकाररूपाऽऽबन्तादेवेति नियमार्थं तदाऽऽवश्यकत्वात् । 'रमे' त्यादावाकारे हलन्तत्वातिदेशेऽपि 'रमे'त्यस्य हलन्ततदादित्वाभावेन तत्र सुलोपार्थं तदाऽऽवश्यकत्वाच्च ।

शिद्ग्रहणमेवैतदिति । शिद्ग्रहणमपीत्यर्थः; तथा च 'नल्यपी'ति सूत्रसहकृतेनैतच्छिद्ग्रहणेनानुबन्धत्वव्याप्यालमात्रवृत्तिधर्मघटितधर्मातिदेशेऽनल्विधावि'ति निषेधो न प्रवर्तत इति विशेषरूपेण ज्ञापनादुभयोश्चारितार्थ्यम् ।

परिभाषार्थस्तु—अनुबन्धकृतमनेकाल्त्वं यथा न भवेत्तथा कल्पनीयमिति । तथा च अशब्दादाचारक्विबन्ताद् घञि अतो लोपे, 'अ' इत्यत्र घञ्वृत्तिहलन्तत्वातिदेशेन 'हल्ङ्याबि'ति सुलोपो न । एतेन—'रुङ् तृङ्' इति ङिदादेशविधानात्सर्वादेशाप्राप्त्या फलाभावेन परिभाषा शिद्ग्रहणं च व्यर्थे एवेत्यपास्तमिति ग्रन्थाशय इति केचित् ।

यत्तु—अनेकाल्वृत्तिधर्मावच्छिन्नविधेयताश्रयः सर्वस्येत्यनेकाल्सूत्रार्थाद्बोध्यौशब्दस्यानेकाल्त्वाभावेऽपि तत्त्वान्न क्षतिः । लोपस्तु न सर्वादेशस्तत्र विधेयतावच्छेदकस्याभावत्वस्यानेकाल्वृत्तित्वाभावात् । अनेकाल्वृत्तीत्यस्यालसमुदायवृत्तीत्यर्थस्तेन ह्रस्वत्वादेरनेकेष्वल्षु विद्यमानत्वेऽपि न क्षतिरिति । तन्न, 'पथिमथी'त्या-

---

इति 'अणुदित्सू'त्रस्थं भाष्यं सङ्गच्छते । आनुमानिकस्थान्यादेशभावेनेति । 'स्वं रूपमि'ति शास्त्रेण सानुबन्धस्य बोध्यत्वे प्राप्ते 'तस्य लोपः' इत्यनेनानुबन्धरहितं तद्बोध्यते इत्येतन्मूलकेनेत्यर्थः । अनुबन्धवृत्तीति । अनुबन्धवृत्तिर्योऽलत्वव्याप्यो धर्मस्तद्घटितेत्यादिरर्थः । अनल्विधावित्यस्याप्रवृत्तिज्ञापनादिति । न च 'नल्यपि'इत्यनेनानुबन्धत्वव्याप्यालमात्रवृत्तिधर्मघटितधर्मातिदेशे 'अनल्विधा'इति निषेधो न प्रवर्तत इत्येव पूर्वं ज्ञाप्यताम्, तथा सति अल्त्वादेरनुबन्धत्वव्याप्यत्वाभावेन 'अनल्विधावि'ति निषेधप्रवृत्तौ बाधकाभावेन स्थानिवद्भावाभावेन शिद्ग्रहणस्य चारितार्थ्यं सम्भवत्येवेति वाच्यम्, अनुबन्धवृत्तित्वापेक्षयाऽनुबन्धत्वव्याप्यत्वस्य गुरुभूततया तस्य ज्ञाप्यशरीरे प्रवेशे मानाभाव इत्याशयेन तथा कल्पयितुं पूर्वमशक्यत्वात् ।

अनुबन्धत्वव्याप्येति । इत्संज्ञकत्वम्, अनुबन्धत्वम्, तद्व्याप्य इत्संज्ञक-ककारादिरूपः । हल्ङ्याबिति सुलोपो नेति । एवम्- धूञ्-प्रीञाद' धातुभ्यः 'गुरोश्च हल' इति सूत्रेणाप्रत्ययः, 'अप्रत्यय' इत्यत्र 'क्त्वा'प्रत्ययघटककारानुबन्धगतवल्त्वमादाय वलादिलक्षणेडागमश्च नेत्यपि बोध्यम् ।

डादिविषये तु सर्वादेशत्वं विनाऽनुबन्धत्वस्यैवाभावेनानुपूर्व्यात्सिद्धम्॥६॥

---

कारादेशस्य 'दिव औदि'त्यौकारादेशस्य च तथात्वाभावेन सूत्राप्राप्त्या 'नानुबन्धकृतम'ति परिभाषया सर्वादेशवारणपरभाष्यासङ्गतेः । एतेन—'आनुपूर्वीप्रकारेण बोधकं यदनेकाल्पदं तद्बोध्यः सर्वस्यादेश' इति सूत्रार्थाल्लोपस्यानुपूर्वीप्रकारेण बोधकत्वाभावादौशादेस्तथात्वाच्च न दोष इति परास्तम्; पूर्वोक्तयुक्त्या बोध्यस्यानेकाल्त्वे तु न काऽप्यनुपपत्तिरिति ध्येयम्। न चाल्घटितस्य बोधको योऽनेकाल तद्बोध्यः सर्वस्य भवती'त्यनेकाल्सूत्रार्थेन लोपपदस्याल्घटितबोधकत्वाभावेन न सर्वादेशताप्रयोजकत्वं विसर्जनीयादिपदानामल्घटितबोधकत्वेऽपि 'निर्दिश्यमान'परिभाषयैव तत्र तत्र वारणसम्भवादिति वाच्यम्; 'अत्रानुनासिकः पूर्वस्य तु वा' 'उदस्थास्तम्भो रि'त्येतद्विषये सर्वादेशापत्तेर्दुर्वारत्वात्। न च ज्ञापितेऽपि स्वांशे चारितार्थ्यं दुरुपपादमौशादौ शकारोच्चारणसामर्थ्याद् भूतपूर्वानेकाल्त्वमादायापि सर्वादेशसिद्धेरिति वाच्यम्; 'जसः शी' 'जश्शसोः शिरि'त्यादेः शित्त्वस्य 'विभाषाङिश्योः' 'शिसर्वनामस्थानमि'त्यत्र विशेषणार्थतया चारितार्थ्येन शकारोच्चारणवैयर्थ्याभावेन भूतपूर्वगत्याश्रयणे मानाभावात्स्वांशे चारितार्थ्यस्य सौष्ठवात्।

डादिविषये त्विति। डादिविषये सर्वादेशात्प्राक् प्रत्ययत्वाभावेन इत्त्वाऽप्राप्त्या न परिभाषाप्रवृत्त्यवसर इति भावः। न चैतद्ग्रन्थकृन्मते इत्संज्ञायोग्यत्वरूपस्यानुबन्धत्वस्य सत्त्वात्परिभाषाप्रवृत्तेः सुलभतयैतद्ग्रन्थासङ्गतिः, 'जसः शी'ति पूर्वग्रन्थविरोधश्चेति वाच्यम्; अनुबन्धत्वस्याभावेन विनापि, अनुबन्धत्वसत्त्वेऽपि डादिविषये सर्वादेशत्वमानुपूर्व्यात्, 'डा + आ' इत्यादिप्रश्लेषात् सिद्धमिति योजनाया ग्रन्थसङ्गतेरिति केचित्।

---

तथात्वाभावेनेति। तत्र तकारस्याऽऽकारौकारोच्चारणमात्रे सहायतासम्पादनेन चरितार्थतया आत्वौत्वावच्छिन्नविधेयताकल्पेन मानाभावादिति भावः।

स्वांशे चारितार्थ्यस्य सौष्ठवादिति। ननु शकारोच्चारणस्य विशेषणार्थतया चारितार्थ्यसम्भवेऽपि सर्वादेशात् प्राक् इत्संज्ञाया एवाभावेन इत्संज्ञकत्वरूपानुबन्धत्वाभावेन परिभाषाऽप्राप्त्या अनेकाल्त्वादेव सर्वादेशो भविष्यतीति स्वांशे चारितार्थ्यं दुरुपपादमिति चेन्न। ग्रन्थकर्त्रा इत्संज्ञायोग्यत्वरूपानुबन्धत्वस्य स्वीकृतत्वेनादोषात्। एवम्—'अनेकाल्शिदि'ति सूत्रेऽपि शित्पदं शित्त्वयोग्यपरमेवेति बोध्यम् ध्वनितञ्चेदम् 'अनेकालशित् सर्वस्ये'ति सूत्रे भाष्ये। तत्र हि—शित उदाहरणं 'जशः शि'इत्यादिप्रतिपाद्यानेकाल्त्वादेव तत्संसाध्य, व्यर्थं शिद्ग्रहणं परिभाषाज्ञापनार्थमित्युक्तम्। इत्संज्ञायोग्यत्वरूपस्य अनुबन्धत्वस्यानङ्गीकारे तत्र परिभाषाया अप्राप्त्या शित उदाहरणत्वस्यासम्भवेन भाष्यासङ्गतिरेव स्यात्। किञ्च। काणोविषये 'नानुबन्धकृतमसारूप्य मि'ति परिभाषया विकल्पाभावो न प्रकल्पेत, तत्प्रवृत्तिकाले इत्संज्ञकत्वरूपानुबन्धत्वाज्ञानेन परिभाषाऽप्राप्तेः इत्येतत्सर्वं शेखरे स्पष्टम्।

अत्र प्राचीनाः—इत्संज्ञायोग्यत्वापेक्षया इत्संज्ञावत्त्वस्य अनुबन्धपदशक्यतावच्छेदकत्वकल्पने लाघवेन तदवच्छिन्नेऽनुबन्धपदशक्तिरिति। क्वचित् बाधेन लक्षणया इत्संज्ञायोग्यत्वस्यापि

वस्तुतस्तु—परिभाषाप्रवृत्त्यावनुबन्धत्वस्योपजीव्यतया डाद्विषये परिभाष प्रवृत्तिस्वीकारे 'ऽनेकाल्' इत्यस्याप्रवृत्त्या डादीनामन्त्यादेशत्वे डकारादेरित्संज्ञाया अप्रवृत्त्या स्वोपजीव्यानुबन्धत्वविघातस्य स्पष्टतया 'सन्निपात'परिभाषाया निरुक्तपरि भाषाया अप्रवृत्तेरुक्तग्रन्थस्य यथाश्रुतार्थकरणेऽपि न क्षतिः। 'जसः शी'त्यत्र त्वेतत्प रिभाषाप्रवृत्तावपि शित्वात्सर्वादेशस्य सत्त्वेन स्वोपजीव्यानुबन्धत्वस्य विघाताभावे 'सन्निपात' परिभाषाया विषयाभावान्न पूर्वापरस्वग्रन्थविरोधोऽपीति बोध्यम् ॥ ६॥

---

भानम्; यथा—'नानुबन्धकृतमसारूप्यमि'त्यत्र तेन काणोर्विषये विकल्पाभावः सिद्ध्यति। 'नानुबन्ध कृतमनेकाल्त्वम्' इत्यत्रानुबन्धपदस्य इत्संज्ञायोग्यत्वरूपानुबन्धत्वपरस्यास्वीकारेऽपि फलाभावाद्दोषा भावाच्च तद्भाष्यस्य एकदेशयुक्तित्वमेव। किञ्च—परिभाषा शिद्ग्रहणञ्च व्यर्थे एव, 'इश् इदमः' शकारोच्चारणसामर्थ्येन अनेकाल्त्वारोपेणैव सर्वादेशस्य सिद्धेः। अत एव च शकारश्रवणं न भवति अनेकाल्त्वात् सर्वादेशत्वाय तस्य चारितार्थ्येन इत्संज्ञालोपाभ्यां विनिवृत्तेः। 'जशः शि' इत्यादिविषये शकारस्य विशेषणार्थतया चारितार्थ्यसम्भवेन आरोपे मानाभावेऽपि, आनुपूर्व्येणानेकाल्त्वादेव सर्वादेशत्वसिद्धिस्तदवस्थायामित्संज्ञालोपाप्राप्तेः। तकारोच्चारणस्य वैयर्थ्याभावेन अनेकाल्त्वारोपे मानाभावाच्च न सर्वादेशत्वम्। एवम् 'अर्वणस्त्रसावनञः' 'स सजुषोरुः' इत्यादावपि बोध्यमित्याहुः। तदेतदसङ्गतम्; टीकाकृता—परिभाषाया शिद्ग्रहणस्य च आवश्यकत्वस्योपपादनादित्यवधेयम्।

अथैवं—'जशः शि' इत्यादेरनेकाल्त्वात्सर्वादेशत्वमित्यस्योदाहरणत्वम्, न तु शित इत्यस्य, सर्वादेशप्रवृत्तिकाले इत्संज्ञालोपयोरभावेन अनेकाल्त्वस्य स्वत एव सिद्धेः स्थानिवद्भावाप्रसक्तेः, तथा च सति 'शितः' इत्येतदुदाहरणत्वपरस्य शेखरग्रन्थस्य का गतिरिति चेच्छृणु—शिद्ग्रहणम्-अनुबन्धानामल्त्वव्यवहाराभावज्ञापनपरम्। 'नानुबन्धकृतमनेकाल्त्वं ज्ञापयति' इति भाष्यम्—'अल्त्वव्यवहाराभावज्ञापनद्वारा' इति शेषपूरणेन व्याख्येयम् इति तन्मतस्य शेखरे प्रतिपादितत्वात्। "अनुबन्धकार्ये 'अनल्विधावि'ति निषेधो न प्रवर्तते" इत्येतदपि एतल्लभ्यमेव। 'जशः शि' इत्यादेः शकारस्याल्पदेनाग्रहणादनेकाल्त्वाभावेन शित्त्वादेव सर्वादेशत्वम्। एवं 'नानुबन्धकृतमनेजन्तत्वमि'त्यपि नापूर्वम्; एजन्तत्वं हि—एज्विशिष्टत्वम्; वैशिष्ट्यं च—स्वघटितत्व-स्वध्वंसाधिकरणक्षणवृत्त्यल्घटितत्वोभयसम्बन्धेन, पकाररूपानुबन्धस्यालत्वाभावेन 'दैपि'त्यस्यानुबन्ध-विशिष्टस्यैजन्तत्वमुपपन्नम्। एवम्—'अनुबन्धकृतमसारूप्यमि'त्यपि नापूर्वम्, समानाल्त्वमेव हि सारूप्यम्, अनुबन्धस्याल्त्वाभावेन काणोः समानाल्त्वं सिद्धमिति बहुतरं लाघवमस्मिन् कल्पे बोध्यम्।

अत्रेदं वक्तव्यम्—अनुबन्धेषु अल्त्वव्यवहाराभावबोधनेन किम्—अल्त्वनिमित्तककार्याभाव एव बोध्यते? आहोस्वित् अल्वृत्तिर्यो यो धर्मस्तत्तन्निमित्तककार्याभावः। नाद्यः—घसन्त-रामशब्दात्, पचादिगणपठिताभ्यां 'नदड् चोरड्' इत्येताभ्यां च क्विप्प्रत्यये अनुबन्धगतहल्त्व-मादाय सुलोपापत्तेः। न च तत्र सूत्रे ङ्याब्ग्रहणेन आतिदेशिकहलन्तत्वमादाय तेन लोपाप्रवृत्ति-रिति वाच्यम्; पूर्वमुक्तेषु धूञ्—प्रीञादिषु 'गुरोश्च हलः' इत्यापत्तेस्तादवस्थ्यात्। एवम्—'ओव्रश्चू-छेदने' इत्यस्माल्ल्युटि कुशब्देन समासे 'कुव्रश्चन' इत्यत्र कोः कदादेशापत्तिः। नापि द्वितीयः—अच्त्वहल्त्वयोरपि अल्वृत्तित्वाविशेषेण 'हलन्त्यम्', 'उपदेशेऽजनुनासिक इत्' इतीत्संज्ञानापत्तेः। 'मिदेर्गुणः' इत्यत्र 'यस्मिन्विधिस्तदादौ' इत्येतदप्रवृत्त्या इत्संज्ञकशकारादावि-त्यर्थानापत्तेश्च। एतेन—अल्त्वव्यवहाराभाव इत्यस्य 'अल्पदवाच्यत्वं नेत्यर्थः' इति परास्तम्।

**नन्वेवम'प्यवदातं मुखमि'त्यत्र पलोपोत्तरमात्त्वे कृतेऽदाविति घुसंज्ञाप्रतिषेधो**

---

पलोपोत्तरमात्त्वे इति । न च पलोपोत्तरमुपदिश्यमानत्वाभावः; स्थानिवद्भावेन तद्भावात् । न चव'मट'धातौ अस्येत्संज्ञात्तरं टस्येत्त्वापत्तिरिति वाच्यम्;

---

अत्र केचित्—अल्ग्रहणाभाव इत्यस्य—इत्पदविशिष्टभिन्नं यदल्बोधकं पदं तद्बोध्यत्वाभावः इत्यर्थः; वैशिष्ट्यञ्च—स्वप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्व-स्वनिष्ठविषयतानिरूपितविषयताप्रयोजकत्वैतदन्यतरसम्बन्धेन । आद्यसम्बन्धेन हलन्त्यघटक-हल्पदेन किदादिपदेन च अनुबन्धानां ग्रहणं भवति; द्वितीयसम्बन्धेन च 'यस्मिन्विधिरि'ति परिभाषाघटकेन अल्ग्रहणेत्यनेन शिवीति कर्मधारयस्य ग्रहणम् । एवञ्च पूर्वोक्तेषु लक्ष्येषु न क्वापि दोष इति वदन्ति । तदसत्; 'इदम इश्' 'प्राग्दीव्यतोऽण्' 'अत इञ्' इत्यादौ शकारादेः हल्पदबोध्यत्वाभावेन सुलोपानापत्त्या सूत्रनिर्देशानुपपत्तेः । एवम्—'आङजादीनाम्' 'बह्वचो मनुष्यनाम्नष्ठज् वा' इत्यादौ सूत्रघटकनिर्देशेषु 'झलां जशोऽन्ते' इति जश्त्वानापत्तेः । तस्माट्टीकाकृतोक्तः पन्था एव शरणीकरणीय इत्यलं विस्तरेण ॥ ६ ॥

अत्र मूले-पलोपोत्तरमात्त्वे कृते 'अवदातं मुखम्' इति सिद्ध्यति, तत्र अदाविति घुसंज्ञाप्रतिषेधो न स्यादिति योजना । 'दैप् शोधने' इत्यस्यैव 'अवदातं मुखम्' इति रूपम्, न तु "दाप् लवने" इत्यस्य इति बोधयितुमेतत् । 'कृते' इत्यन्तं पक्षनिर्देशः, तेन पलोपोत्तरमित्यस्य न पौनरुक्त्यमिति ।

ननु पलोपोत्तरं कथमात्त्वम्? उपदेशे एजन्तत्वाभावादिति चेन्न । सूत्रे 'उपदेशे' इति षष्ठ्यर्थे सप्तमी, कर्मणि च घञ्, उपदिश्यमानस्य एजन्तस्याऽऽत्त्वमिति तदर्थः, उपदिश्यमानत्वञ्च स्थानिवद्भावेनेत्याशयेनाह—स्थानिवद्भावेनेति । इदमुपलक्षणम्—एकदेशविकृतन्यायस्य; स्थानिवद्भावेन तु नैतल्लभ्यम्, उपदिश्यमानत्वस्याशास्त्रीयत्वात् । न च 'दो दद् घोः' इति सूत्रे दोग्रहणादशास्त्रीयस्यापि तस्यातिदेशः; अन्यथा टलोपोत्तरमुपदिश्यमानत्वाभावेन आत्त्वाप्राप्त्या मेटो व्यावृत्त्यर्थं क्रियमाणं दोग्रहणं व्यर्थमेव स्यात्, एतेन—अस्याशास्त्रीयत्वात् स्थानिवद्भावेन कथमतिदेश इत्यपास्तमिति वाच्यम्; चिञ् वृत्त्युपदिश्यमानत्वं 'चि' इत्येतस्मिन्नतिदिश्य पुनरानुमानिकस्थानिवद्भावेन 'चे' इत्येतस्मिन्नानीय "चेता, स्तोता" इत्यत्राप्यात्त्वापत्तेः ।

यत्तु—'उपदिश्यते बोध्यते' इति व्युत्पत्त्या बोध्यत्वमेव उपदिश्यमानत्वम् 'तच्च स्वत एवेति । तत्तुच्छम्; उपरागविषयेऽपि बोध्यत्वरूपोपदिश्यमानत्वाभावेन स्वीकृतायामपि परिभाषायामात्त्वाप्राप्तेः, 'माङ्' इति निर्देशानुपपत्तेश्च ।

यदपि—उपदेशे य एच् तदन्तस्य आत्त्वमित्यर्थकरणेनात्त्वं सुलभमिति । तदपि न; विशेष्यासन्निधानेन तदन्तविधेरसम्भवात् ।

नन्वेवमप्यवतरणमसङ्गतम्, तथा हि—आत्त्वं बोधके करणीयम्, आहोस्वित् बोध्ये? । नाद्यः,—आत्त्वविधायके 'अशिती'त्यस्य शित्परत्वसम्भावनायामित्यर्थेन बोधके तत्त्वाभावात् । तत्त्वं च बोध्ये एवेति द्वितीयः पक्षश्चेत्, तदपि न; बोध्यश्च दै इति, तत्र चैजन्तत्वस्यैव सत्त्वेन एजन्तत्वाभावादित्यस्याप्यसङ्गतेरिति चेत्—श्रूयताम् । सूत्रस्य शित्परत्वसम्भावनायामित्यर्थे 'माङ्' इति निर्देशानुपपत्तिरतः 'अशिति' इत्यस्य साक्षात् स्वबोध्यद्वारा वा शित्परत्वसम्भावनाया-

**न स्याद्, दैपः पकारसत्त्वेऽनेजन्तत्वाद्दात्वाप्राप्त्या पलोपोत्तरं पकाराभावेनाऽऽदाप्त्वाभावादत आह—**

---

इत्संज्ञाविधावनतिदिष्टोपदिश्यमानत्वस्यैव प्रयोजकत्वात्। अत एव मकारपरित्राणाय स्यमोऽकारश्चरितार्थः। आत्वविधावतिदिष्टोपदिश्यमानत्वस्यापि प्रयोजकत्वे—'दद्धा'रिति सूत्रे दा-ग्रहणमेव मानम्; अन्यथा धारूपयो 'र्दधातेर्हि'रित्यनेनैव बाधे ढ्वेट्पकारस्य लोपोत्तरमात्वाऽप्राप्त्या घुत्वाभावादेव तदप्राप्तेर्दारूपस्यैव तत्सम्भवे तद्ग्रहणं व्यर्थमेव स्यात्। न चैवं 'पच्'धातौ षस्येत्संज्ञालोपोत्तरमकारस्य सा स्यादुपदेशत्वस्य स्थानिवत्त्वेनालाभादिति वाच्यम्; संज्ञयोविरोधाभावेन युगपदकारषकारयोस्तत्सत्त्वेनातिदेशानुपयोगात्। दाप्त्वाभावादिति। न च दाप्त्वस्य पकारेत्संज्ञकदात्वरूपतया तत्र दात्वस्य सिद्धत्वेनान्यस्य स्थानिवद्भावेन लाभसम्भव इति वाच्यम्; पकारेत्संज्ञक'दाप्'शब्दबोधस्यैव दाब्रूपत्वाङ्गीकारेणादोषात्। अत एव णाणोर्न तत्तत्कार्यसङ्करप्रसङ्ग इति दिक्।

केचित्तु—दाप्त्वं दाप्शब्दत्वमेव, 'गुप्तिजि'त्यादावपि सन्त्वावच्छिन्न इत्येवार्थो, न तु नकारेत्संज्ञकः सो भवतीति, 'न विधौ परः शब्दार्थ' इति न्यायात् एवमनुवादे 'सन्यत' इत्यादावपि 'सन्त्वावच्छिन्ने परे' इत्यादिरर्थः। नकारेत्संज्ञकत्वादिकन्तु परिचायको धर्मस्तेन 'देवरुही'त्यत्र रुशब्दत्वेऽप्युकारेत्संज्ञकत्वाभावा-

---

मित्यर्थो वाच्यः। एवञ्च 'दैप्' इत्यत्र 'दै'रूपबोधवृत्तिशिलरत्वसम्भावनायाः सत्त्वेन सूत्राप्रवृत्तावेजन्तत्वाभाव एव कारणमिति अनेजन्तत्वादित्युक्तिः सङ्गतैवेति बोध्यम्।

इत्संज्ञाविधायकशास्त्रस्य 'उपदेशेऽन्त्यमि'त्युच्यमाने 'कस्यान्त्यम्' इत्यपेक्षायां 'प्रत्यासत्त्योपदिश्यमानस्यान्त्यं हल् इत्' इत्यर्थः प्राचां मते; अत एव मनिनः आद्यनकारस्य नेत्त्वम्। एवमपि 'एकदेशविकृत'न्यायेनोपदिश्यमानत्वमादाय उपदिश्यमानघटकान्त्यस्यापि तदापत्तिरित्याशङ्कां समाधत्ते—इत्संज्ञाविधाविति। प्रयोजकत्वादिति। नन्वेवं स्वीकृतायां परिभाषायां दैपि आत्त्वे कृते पकारस्येत्संज्ञा न स्यात्, अनतिदिष्टोपदिश्यमानत्वाभावादिति चेत्-सत्यम्। उपदिश्यमानान्त्यत्वस्य तत्रोपलक्षणत्वेनादोषात्।

वस्तुतः—दाप्त्वादीनामखण्डत्वमेव। अत एव 'प्रणिदापयति' इत्यादौ 'अदाप्' इति निषेधात् कथं घुत्वमित्याशङ्क्य, 'दाबयम्, न तु दाबिति समाहितम् सूत्रे चत्वंमविवक्षितम्। दाब् दैपौ नेति तदर्थतया न निषेधप्रवृत्तिरि'ति भाष्यं सङ्गतम्, पकारेत्संज्ञकदात्वस्यैव दाप्त्वे—'प्रणिदापयति' इत्यादौ पकारेत्संज्ञकदात्वाभावेन दाप्त्वाभावात् निषेधाप्राप्त्या 'दाबयं न दाबि'त्याद्युक्तिरसङ्गतैव स्यादिति बोध्यम्।

न च दाप्त्वादेरखण्डत्वे उञ्त्वादिकमप्यखण्डमेवेति 'पदे किं तन्त्रयुतम्' इति भाष्यासङ्गतिः; तथा हि—पदे ग्रहणाभावेऽपि उञ् शब्दे परे इत्यर्थः, एवञ्च उतशब्दे उञ्त्वाभावात् दोषाभावे सिद्धे किमर्थं पदग्रहणम्?। न चारोपादिति वक्तुं शक्यम्, बोधकेऽप्युञ्त्वाभावादिति वाच्यम्; तद्भाष्यस्याप्यनेकान्तपक्षाभिप्रायकत्वात्, तत्पक्षे हि ञकारेत्संज्ञके उ-शब्दे परे' इत्यर्थस्यैव सत्त्वादित्याशयेनाह—केचित्त्विति।

## नानुबन्धकृतमनेजन्तत्वम् ॥ ७ ॥

'उदीचां माङ' इति निर्देशोऽस्या ज्ञापकः।'आदेच उपदेश' इति सूत्रेणोपदिश्यमानस्यैजन्तस्यात्वं क्रियते, ङकारसत्त्वे त्वेजन्तत्वाभावादात्वाप्राप्तेस्तस्यासङ्गतिः ।

न चास्यामवस्थायां तस्य धातुत्वाभावात्कथमात्वम्, तत्र 'धातोरि'त्यस्य निवृत्तेरित्यन्यत्र विस्तरः । स्पष्टञ्चेदं 'दा धा घ्वदाबि'ति सूत्रे भाष्ये ॥ ७ ॥

---

ओत्वम् । विधेयता तु सन्त्वेन रूपेण सशब्दे एव, न तु सन्शब्दे । अत एव 'इदम इशि'ति भाष्यं स्वरसत उपपद्यते । तेनाण्त्वाभावाण्णोऽण्कार्यं, न दापो, दाब्रूपत्वस्य कस्यामपि स्थितावसम्भवेनास्य दाप्त्वाभावादवतरणसङ्गतिश्चेति वदन्ति ।

नानुबन्धेति । इदन्तु तत्त्वम्—अन्तत्वलक्षणे 'यस्मात्परो नास्ती'त्येवं रूपे परपदे'नानुबन्धेतरो ग्राह्य' इति बोध्यम् ।

अत्र केचित् । नानुबन्धकृतमनुपदिश्यमानत्वमिति वचनं कार्यम्, देपः पकारसत्त्वेऽपि 'दै'शब्दे एजन्तत्वस्य सिद्धत्वेनोपदिश्यमानत्वस्य परिभाषया लाभादिति न काऽप्यनुपपत्तिरिति वदन्ति । त एवं प्रष्टव्याः; अपूर्ववचनकल्पने किं ते बुद्धिवैशारद्यम् ? दैप्युपदिश्यमानत्वस्य स्वतः सिद्धतयैजन्तत्वमात्रस्य परिभाषयैव लाभसम्भवात् । किञ्च —बहुपदार्थघटितस्योपदिश्यमानत्वस्यातिदेशेन कल्पनापेक्षयाऽन्तत्वलक्षणे'ऽनुबन्धेतरे'ति विशेषणदान एव लाघवसम्भवः । किञ्च—'अट'धातौ भवदुक्तरीत्या टान्ते उपदिश्यमानत्वारोपेण टस्येत्संज्ञापत्तिरिति दिक् ।

माङ इति निर्देश इति । 'माङ्-मान' इत्यस्य तु नायं निर्देशः, ज्ञापकपरभाष्यप्रामाण्येन व्यतिहारे माङोऽनभिधानादिति भावः । धातुत्वाभावादिति । 'लिटि धातोरि'त्यतस्तदनुवृत्तिसम्भवा'न्न धातुलोप' सूत्रे उपदेश एवानुबन्धलोपे कृते ततो धातुसंज्ञेत्यभियुक्तोक्तदिशा ङकारसत्त्वे तस्य धातुत्वाभावादात्वाप्राप्त्या ज्ञापकासम्भव इति भावः । अन्यत्रेति । 'आदेच' इति सूत्रे शेखर इत्यर्थः; तत्र हि—'धातोरि'त्यस्याभावे 'गोभ्यामि'त्यत्रात्वमाशङ्क्य, 'उणादीनामव्युत्पन्नत्वेनोपदिश्यमानत्वाभावान्ने'ति समाहितम् । न 'चेरयो रे' इत्यादीनामुपदेशे एजन्तत्वात्तद्व्यावृत्तये 'धातोरि'ति चरितार्थमिति वाच्यम्; 'र' इत्यादिषु एकाराद्युच्चारणसामर्थ्या'द्शिती'ति निषेधाच्छित्परत्वयोग्यानामेवात्वविधानाच्च तद्व्यावृत्तेः सुलभत्वादित्यन्यत्र विस्तरः । भाष्य इति । तत्र हि—'गोद्व्यच' इत्यत्रात्वमाशङ्क्य, 'गोतो णिदि'ति ज्ञापकात्तदभावः साधितः; गोशब्दस्यात्वे तु णित्वं व्यर्थमेव स्यादिति तदाशय इति दिक् ॥ ७ ॥

---

नानुबन्धकृतमनुपदिश्यमानत्वमिति वचनं कार्यमिति । अन्यथा—'अलोऽन्त्य' परिभाषया पकारस्यात्वापत्तिरिति भावः । परिभाषयैव लाभसम्भवादिति । न च एजन्तत्वस्य पान्ते समारोपेऽपि 'रजतभ्रमप्रयुक्ता प्रवृत्तिः शुक्तिं न गोचरयति' इति न्यायेनाकारो भवन् 'अलोऽन्त्य' परिभाषया पकारस्यैव स्यादिति वाच्यम्; 'निर्दिश्यमान'परिभाषया एच एव प्राप्तेरदोषात् ॥७॥

नन्वेवमपि 'वाऽसरूप'सूत्रेण कविषयेऽणोऽप्यापत्तिरित्यत आह—

## नानुबन्धकृतमसारूप्यम् ॥ ८ ॥



अणोऽप्यापत्तिरिति। ननु 'वाऽसरूप'सूत्रे असरूपपदेन औपदेशिकसारूप्यवद्भिन्नस्य ग्रहणे तादृशसारूप्यवतोर्वैकल्पिकबाध्यबाधकभावस्वीकारेऽपि फले विशेषाभावे'नासरूप'ग्रहणवैयर्थ्यापत्त्या प्रायोगिकस्यैव तस्य ग्रहणावश्यकतयाऽनुबन्धविनिर्मुक्तपदार्थोपस्थितिरिति सिद्धान्तरीत्या काणोरपि बोध्ययोरकारयोः सरूपत्वेन सूत्राप्राप्त्या कथं कविषयेऽणोऽप्यापत्तिरिति चेन्न। 'हनश्च वधः' 'मूर्तौ घन' इत्येतद्विहितयोरप्प्रत्यययोर्विकल्पेन बाधाभावाय सूत्रेऽसरूपग्रहणस्य चारितार्थ्येन प्रायोगिकग्रहणे मानाभावादुपदेशे काणोरसरूपत्वेनोक्तापत्तेः सुवचत्वात्। निरुक्तयोरप्प्रत्यययोर्विकल्पेन बाधस्वीकारे तु—मूर्तावपि 'हनश्च वध' इत्यस्य प्रवृत्त्या 'ऽभ्रवध' इत्यापत्तिः। न 'चासरूप'ग्रहणस्यैतत्प्रयोजनत्वे 'हनश्च वधोऽमूर्तौ मूर्तौ घन' इति न्यासेन तद्वारणात्सूत्रेऽसरूपग्रहणं व्यर्थमिति वाच्यम्; 'ब्रह्मज्ञ' इत्य'त्रेगुपधे'ति कप्रत्यय'स्यातोऽनुपसर्गे' इति विकल्पेन बाधकं स्यात्। तथा च कदाचि'दिगुपधे'ति कप्रत्यये 'उपपदमतिङि'ति नित्यसमासाप्राप्त्या विकल्पेन 'षष्ठी'ति समासे 'ब्रह्मणो ज्ञ' इत्यस्यापत्तेः। मम तु—उपदेशे द्वयोः कप्रत्यययोः सरूपत्वेन वाऽसरूपाप्राप्त्या'ऽऽतोनुपसर्गे क' इति कप्रत्यये 'उपपदमि'ति नित्यसमासे 'ब्रह्मज्ञ' इत्येकमेव रूपमित्यौपदेशिकसारूप्यग्रहणेऽप्यसरूपग्रहणसार्थक्येन प्रायोगिकग्रहणे प्रमाणाभावादित्याशयात्। एवं 'तुन्दपरिमृजः, मूलविभुज' इत्यादौ 'इगुपधे'ति कप्रत्ययस्य 'तुन्दशोकयोरि'ति 'मूलविभुजादिभ्य' इत्यादीनां नित्यबाधकत्वेन नित्यसमाससिद्धिः। एवमेव 'उद्घनोऽत्याधानं' 'अन्तर्घणो देश' इत्येतद्विषयेऽपि 'हनश्च वध' इत्यस्य प्रवृत्तेर्दुवारत्वं बोध्यम्।

नानुबन्धकृतमसारूप्यम्। केचित्तु—परिभाषाज्ञापकेन 'वाऽसरूप'सूत्रे प्रयो-

---

मूले—असारूप्यम्=सारूप्यभिन्नत्वम्; सारूप्यञ्च—स्वघटकयावद्वर्णघटितत्वम्, यथा—काणोः; स्वम्=कप्रत्ययः, तद्घटकः ककारोऽकारश्च, तद्घटितत्वम् अण्प्रत्ययस्य नास्तीति न सारूप्यं तयोरिति बोध्यम्।

ननु घटसारूप्यं घटपटसमुदायेऽपि स्यात्, स्वघटकयावद्वर्णघटितत्वादिति चेन्न। स्वघटकवर्णघटितत्व-स्वाघटकवर्णाघटितत्वोभयसम्बन्धेन स्वविशिष्टस्यैव तत्त्वाङ्गीकारात्; प्रकृते च स्वाघटक-पकारघटितत्वेनैवातिव्याप्त्यभावात्। न चैवं घटसारूप्यं 'ट घ' इत्यत्रापि स्यादिति वाच्यम्; स्वघटकवर्णघटितत्व—स्वघटकावृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविषयतापर्याप्त्यधिकरणाघटितत्वोभयसम्बन्धेन स्वविशिष्टस्य सारूप्यात्; प्रकृते स्वघटकावृत्तिश्रावणप्रत्यक्षविषयतावच्छेदको धर्मः 'टघ'स्वरूपः, तदवच्छिन्नविषयतापर्याप्त्यधिकरण'ट-घ'समुदायघटितत्वेन 'ट घ'समुदायस्य न घटसारूप्यमिति। तच्च-औपदेशिकम्, प्रायोगिकं वा? आद्ये-असरूपग्रहणस्य वैयर्थ्यापत्तिः, सरूपयोस्तयोर्बाध्यबाधकभावस्वीकारे फलाभावात्। द्वितीये-बोध्ययोस्तयोः सरूपत्वेनावतरणासङ्गतेरित्याशयेन आशङ्कते—नन्विति। सुगममन्यत्।

'ददातिदधात्योर्विभाषा' इति णबाधकशस्य विकल्पविधायकमस्यां ज्ञापकम्; तेन 'गोद' इत्यादौ नाणिति 'वाऽसरूप' सूत्रे भाष्ये स्पष्टम् ॥ ८ ॥

ननु संख्याग्रहणे बह्वादीनामेव ग्रहणं स्यात्, प्रकरणस्याभिधानियामकत्वसिद्धात् 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्यय' इति न्यायात्। अस्ति च प्रकृते बह्वादीनां संख्यासंज्ञा कृतेति ज्ञानरूपं प्रकरणम्, न तु लोकप्रसिद्धैक द्व्यादीनामित्यत आह—

## उभयगतिरिह भवति ॥ ९ ॥

इह = शास्त्रे। 'संख्याया अतिशदन्ताया' इति निषेधोऽस्या ज्ञापकः। न हि

---

गिकमेव सारूप्यं गृह्यत इति वदन्ति। तत्तुच्छम्; प्रायोगिकग्रहणे प्रयोगमात्रावच्छेदेन सारूप्यम्, यत्किञ्चित्प्रयोगावच्छेदेन वा तद्गृह्यते?। नाद्यः; 'इगुपधज्ञा' 'तुन्दशोकयो' रित्यनयोरपि 'वाऽसरूप' सूत्रप्रवृत्त्या विकल्पेन बाध्यबाधकभावप्रसङ्गात, 'तुन्दपरिमृजः 'तुन्दपरिमृजाये त्यत्र प्रथमाचतुर्थ्येकवचनयोर्वैरूप्यात्। नान्त्यः; प्रयोगसामानाधिकरण्येन सारूप्यग्रहणे 'कर्मण्यणि'त्येतद्विहितस्याणुप्रत्ययस्य 'स्तम्बशकृतोरि'ति विकल्पेन बाधकं न स्यात्, 'स्तम्बकरि' शब्दादाचारक्विबन्तादच्प्रत्ययनिष्पन्न'स्तम्बकरय'शब्दादाचारक्विबन्तात्कर्तरि क्विपि यकाराकारयोर्लोपे 'स्तम्बकर' इत्यत्राकाररूप इन्प्रत्ययः, अणुप्रत्ययस्तु, तद्रूप एवेति द्वयोरपि सारूप्यसम्भवात। तस्मात्प्रायोगिकसारूप्यस्य ग्रहीतुमशक्यतयाऽगत्यौपदेशिकस्य ग्रहणे उक्तापत्तिवारणार्थं परिभाषाऽङ्गीकरणीयैवेति दिक ॥ ८ ॥

अभिधानियामकत्वेति। अभिधानियामकत्वम् = तात्पर्यसङ्कोचकत्वमर्थविशेषे तात्पर्यग्राहकत्वमित्यर्थः।

उभयगतिरिह भवतीति। उभयोः = कृत्रिमाकृत्रिमयोर्यस्तयोः समस्तयोश्चावगतिरित्यर्थः, तेन व्याख्यानात् क्वचित् कृत्रिमस्यैव, क्वचिदकृत्रिमस्यैव, क्वचिदुभयोर्ग्रहणं सिद्धम्। तदेवाऽऽह—शास्त्र इति। शास्त्रत्वावच्छेदे-

---

स्वीकृतायाञ्च परिभाषायां स्वघटकानुबन्धाघटितवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविषयतापर्याप्त्यधिकरणघटितत्वसम्बन्धेन स्वविशिष्टत्वमिति सारूप्यलक्षणं फलितमिति काणोः परस्परसारूप्यान्न बाध्यबाधकविषय इति भावः। नचैवमपि कप्रत्ययसारूप्यमकप्रत्यये स्यादिति वाच्यम्; स्वघटितत्व स्वेतरानुबन्धाघटितत्वोभयसम्बन्धेन स्वघटकानुबन्धाघटितवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविषयतापर्याप्त्यधिकरणविशिष्टस्यैव सारूप्यात्; प्रकृते निरुक्ताकारघटितत्वेऽपि स्वेतरानुबन्धेतर-ककारघटितत्वेनासारूप्यात् ॥ ८ ॥

कृत्रिमा संख्या त्यन्ता शदन्ता वाऽस्ति, तेन 'कर्तरि कर्मव्यतिहारे' 'कण्व-मेघेभ्यः करणे' 'विप्रतिषिद्धं चानधिकरणे' त्यादौ लौकिकक्रियाद्रव्याद्यवगतिः। तत्र क्वोभयगतिः, क्वाकृत्रिमस्यैव, क्व कृत्रिमस्यैवेत्यत्र लक्ष्यानुसारिव्याख्यानमेव शरणम्। अत एवाम्रेडितशब्देन कृत्रिमस्यैव ग्रहणं, न तु द्विस्त्रिर्घुष्टमात्रस्य। स्पष्टञ्चेदं संख्यासंज्ञासूत्रे भाष्ये।

यत्तु—संज्ञाशास्त्राणां मच्छास्त्रेऽनेन शब्देनैत एवेति नियमार्थत्वं 'कृत्रिमाकृत्रिम'न्यायबीजमिति। तन्न; तेषामगृहीतशक्तिग्राहकत्वेन विधित्वे सम्भवति, नियमत्वायोगात्। 'सर्वे सर्वार्थवाचका' इत्यभ्युपगमोऽपि योगिदृष्ट्या, न त्वस्मद्दृष्ट्या, विशिष्य सर्वशब्दार्थज्ञानस्याशक्यत्वात्; सामान्यज्ञानन्तु न बोधोपयोगीत्यन्यत्र निरूपितम्॥ ९॥

न'न्वध्येता शयिते'त्यादाविङ्शीङोर्ङित्वाद् गुणनिषेधः स्यादत आह—

---

नोभयगतिर्न तु प्रत्येकमित्यर्थः। त्यन्तेति। अर्थवत्त्यन्तेत्यर्थः, तेन 'कती'त्यत्र', तत्सम्भवेऽप्यर्थवत्त्वाभावान्न दोषः।

यत्त्विति। अयम्भावः—'सिद्धे शब्दार्थसम्बन्ध' इति वार्तिकेन शब्दार्थयोर्वाच्यवाचकभावरूपशक्तिसम्बन्धस्यापि सिद्धत्वबोधनेन 'वृद्धिरादैजि'त्यादिसंज्ञाशास्त्राणां वैयर्थ्यापत्त्या शास्त्रे वृद्ध्यादिपदैरादैजादय एव बोद्धव्या इति नियमार्थत्वमूलकाऽयं कृत्रिमे'ति न्याय इति। अगृहीतशक्तीति। शक्तेः सिद्धत्वेऽपि तद्ग्रहस्यासिद्धत्वेन तदर्थं सूत्रस्यावश्यकतया नियमत्वासम्भवादिति भावः। सर्वे सर्वार्थवाचका इति। 'पदम् अर्थवाचकम्, पदत्वात्, घटपदवदि'त्यनुमानेनार्थवत्त्वेन रूपेण वृद्ध्यादिपदानामादैजादिवाचकत्वग्रहस्यापि सिद्धत्वादिति भावः। विशिष्य सर्वशब्दार्थज्ञानस्येति। वृद्ध्यादिपदानामर्थवत्त्वेन तत्तदर्थवाचकत्वस्य ज्ञानेऽप्यादैच्त्वादिना तद्वाचकत्वज्ञानाय सूत्राणामावश्यकतेति भावः। न बोधोपयोगीति। विशेषरूपेण बोधोपयोगी नेत्यर्थः।

केचित्तु—'यत्तु' ग्रन्थे 'नियमार्थत्वमि'त्यस्य तात्पर्यसङ्कोचकत्वमर्थविशेषे तात्पर्यग्राहकत्वमित्येवार्थः। 'अभिधानियामकत्वे'ति पूर्वोक्तनियमशब्दवत्, न तु परिसंख्यार्थकत्वम्। तथा च 'वृद्धिरादैजि'त्यादिसूत्राणां तात्पर्यग्राहकत्वस्योभयवादिसिद्धतया तत्सूत्रमूलकत्वस्यापि 'कृत्रिमे'ति न्यायेऽर्थत एव सिद्धेरयं विचारः काकदन्तपरीक्षावन्नार्थसाधक इति वदन्ति॥ ९॥

( क्ङिति चेति ) गुणनिषेधः स्यादिति। सूत्रे निमित्तपदं कारणमात्रपरम्, न तु

---

इत्संज्ञायाः पूर्वमुपस्थितत्वात् तद्विशेषविषयिणी परिभाषामवतारयति— मूले-नन्वध्येत्यादिः।

निमित्तकारणमात्रपरं, प्रमाणाभावादित्यर्थः । ननु 'क्ङिति चे'ति सूत्रे परसप्तम्याश्रयणेऽपि 'रोरवीती'त्यत्रान्तरङ्गप्रतिषेधदृष्ट्या बहिरङ्गगुणस्यासिद्धत्वेन बाधायोगात्तन्निमित्तग्रहणं न कार्यम्; एवं 'कवयती'त्यत्राप्याचारक्विबन्निमित्तकगुणनिषेधो ने'त्यध्येते'त्यादौ 'क्ङिति चे'त्यस्याप्राप्तिः । न च परसप्तम्याश्रयणे 'भिन्नमि'त्यत्र दकारेण व्यवधानाद् गुणनिषेधो न स्यादिति वाच्यम्; क्नोः कित्त्वसामर्थ्येनैकवर्णव्यवधानेऽपि निषेधप्रवृत्तिस्वीकारात् । न च 'भवत' इत्यादावकारव्यवधानेऽपि गुणनिषेधः स्यात, निषेधस्य बहिरङ्गतयाऽसिद्धत्वन्तु न, 'निषेधाश्च बलीयांस' इत्यनेन तद्बाधादिति वाच्यम्; वर्णपदेन हल्वर्णस्य ग्रहणेनादोषात । न 'चाक्षैष्टामि'त्यत्र सकारेण व्यवधानाद् वृद्धिनिषेध' स्यादिति वाच्यम्; धात्ववयवहल्वर्णस्य ज्ञापकसाजात्यात्तत्र ग्रहणादिति चेन्न । 'गुते'त्यत्र ङानिमित्तकगुणनिषेधानापत्त्या धात्ववयवेत्यादिसङ्कोचासम्भवेन 'भवत' इत्यादौ गुणनिषेधापत्तेः परसप्तम्याश्रयणस्याशक्यत्वात् ।

केचित्तु—'क्ङिती'ति परसप्तम्येव, क्नोः कित्त्वसामर्थ्येन गुणवृद्धिनिमित्तप्रत्ययभिन्नहल्व्यवधानं सह्यते, तेन 'अक्षैष्टामि'त्यत्र वृद्धिनिमित्तहल्व्यवधानान्न वृद्धिनिषेधः। अत एव निमित्तसप्तमीवादिनस्तव मतेऽपि वृद्धिनिषेधो न; अन्यथा 'तां' रूपङिन्निमित्तकत्वेन वृद्धेर्निषेधो दुर्वार एव स्यात् । 'गुते'त्यत्र गुणनिमित्तभिन्नतकाररूपहल्व्यवधानाद् गुणनिषेधश्च सिद्धः । एव'ञ्चाध्येते'त्यादौ परिभाषा-

---

प्रमाणाभावादित्यर्थ इति । परिभाषाभावे निमित्तपदेन षष्ठ्यन्त-सप्तम्यन्त-पञ्चम्यन्तपदप्रयोज्यविषयताश्रयमात्रस्य ग्रहणेन प्रकृतिरूपङित्पर्याप्तषष्ठ्यन्तपदप्रयोज्याङ्गत्वावच्छिन्ननिमित्ततामादायापि गुणनिषेधः स्यादिति भावः ।

अन्तरङ्गप्रतिषेधदृष्ट्येति । न च 'निषेधाश्च बलीयांस:' इति परिभाषया निषेध एव स्यादिति वाच्यम्; तस्या निषेधशास्त्रस्य दुर्बलत्वे एव प्रवृत्तेः, प्रकृते च निषेधस्यान्तरङ्गत्वेन सबलत्वात् । अत एव 'प्रेद्धा' इति भाष्यं सङ्गच्छते; तत्र हि 'न धातुलोपः' इति सूत्रे 'इक'परिभाषाया अनुपस्थितौ 'आद्गुणः' इति गुणस्य निषेधः स्यादित्याशंक्य, अन्तरङ्गे निषेधे कर्तव्ये वर्णद्वयापेक्षस्य बहिरङ्गस्य गुणस्यासिद्धत्वान्न निषेधः' इति समाहितम् । सबलत्वेऽपि परिभाषाप्रवृत्तौ तद्भाष्यासङ्गतेः । कवयतीति । ननु गिरसाहचर्यात् क्विलोऽपि धातुत्वावच्छिन्नोद्देश्यताकप्रत्ययस्य ग्रहणेन प्रकृते क्विपः प्रातिपदिकत्वावच्छिन्नोद्देश्यताकत्वेन निषेधाप्राप्तेरिति चेन्न । 'ग्रामणयति' इत्यस्य उपलक्षकत्वात् ग्रामणीरिति कर्तृक्विबन्तादाचारक्विपि धातुसंज्ञायां लडादिषु प्रत्ययलक्षणेन कर्तृक्विपो विद्यमानतया तस्य धातुत्वावच्छिन्नोद्देश्यताकत्वेन निषेधप्राप्तेः ।

हल्वर्णस्य ग्रहणेनादोषादिति । ननु हल्वर्णव्यवधाने निषेधप्रवृत्तिस्वीकारे— 'भी'धातोर्घञर्थे कप्रत्यये इयङि 'भिय' इति जाते, तस्मादाचारक्विबन्तात् क्वनिपि अल्लोपयलोपयो'र्भिवे'ति जाते अल्लोपस्य स्थानिवत्त्वेन अकारबुद्धौ हल्वर्णव्यवधानाभावेन निषेधाप्राप्तौ 'पुगन्ते'ति गुणः स्यात् । न च तत्र पुगन्तसाहचर्याल्लघूपधमपि हल्निरूपितोपधात्ववद् गृह्यते; एवञ्च प्रकृते अज्निरूपितोपधायाः सत्त्वेन गुणप्राप्तेरिति वाच्यम्; एतादृशसाहचर्या-

# कार्यमनुभवन् हि कार्यी निमित्ततया नाऽऽश्रीयते ॥१०॥

'स्थण्डिलाच्छयितरी'ति निर्देशश्चास्यां ज्ञापकः। 'ऊर्णुनविषती'त्यादि-

---

भावेऽपि दोषाभावे'नारिरिषती'त्यत्र 'द्विर्वचनेऽची'ति सूत्रप्रवृत्तौ दोषः स्यादित्यर्थकमवतरणं दातुमुचितमिति वदन्ति।

कार्यमनुभवन् हि कार्यी निमित्ततया नाऽऽश्रीयते। 'शयिते'त्यत्र साक्षाद् गुणस्येकारनिमित्तकत्वेऽप्यानुमानिकादेशकल्पनया 'ऽरिरिषती'त्यत्र कार्यित्वतदवयवद्वारा वाऽत्र समुदायस्य निमित्तत्वं बोध्यम्। निर्देशश्चास्यां ज्ञापक इति। तेन 'निष्ठा शीङ्'ति कित्त्वप्रतिषेधसङ्ग्रहः; अन्यथा प्रकृतिनिष्ठङित्त्वेन गुणप्रतिषेधस्य दुर्वार-

---

श्रयणे 'भिय' इत्यस्मादाचारक्विबन्ताद्वनिपि अल्लोपयलोपयो'र्भिवे'ति जाते अल्लोपस्य स्थानिवत्त्वेनाकारबुद्धौ हल्निरूपितोपधाया अभावेन गुणाभावापत्तेः। यदि च—'न धातुलोपः' इति सूत्रसत्त्वे तत्र गुणो न भवति, सूत्राभावे च गुणः स्यात्' इत्यारम्भप्रत्याख्यानयोः फलभेदः स्यादत आरम्भप्रत्याख्यानयोः फलैक्याय एतादृशलक्ष्याणामनभिधानमिति 'क्वौ लुप्तं न स्थानिवदि'त्यनेन स्थानिवद्भावनिषेधश्चेति साहचर्याश्रयणे न कोऽपि दोष इत्युच्यते; तदाऽपि—'भयती'त्यत्र दोषापत्तेः सत्त्वात्। तत्र हि 'भी'धातोर्घञर्थे के, आचारक्विबन्तात्कर्तरि क्विपि पुनराचारक्विपि, धातुसंज्ञाया लट्तिप्शप्सु अल्लोपस्य स्थानिवत्त्वेनाकारबुद्धौ हल्निरूपितोपधाया अभावेन गुणो न स्यात्। तस्मादेतादृशसाहचर्यं न शक्यते स्वीकर्तुम्। किञ्च—एतादृशसाहचर्यग्रहणे—लघूपधगुणादन्तरङ्गत्वादियङ् 'रियति, पियति' इति भाष्यविरोधः। तत्र हि—हलन्तनिरूपितोपधावतोऽभावेन गुणाप्राप्त्या 'गुणादन्तरङ्गत्वादियङि'ति कथनमसङ्गतं स्यात्।

केचित्तु—साहचर्यस्य लक्ष्यानुसारिव्याख्यानसमधिगम्यतया, उपायस्योपायान्तरादूषकत्वेन च 'अन्तरङ्ग'परिभाषया भाष्यकृता 'रियति, पियति'इत्यादौ समाधानं कृतमिति न साहचर्यग्रहणे दोषः। 'भयति' इत्यत्र तु 'क्वौ लुप्तं न स्थानिवत्' इति स्थानिवत्त्वाभावेनाकारस्य व्यवधानाभावेन 'सार्वधातुके'त्यनेन गुणः। किञ्च—तत्र विचि पूर्वमेव गुणः। तस्मात् परसप्तमीस्वीकारे हल्वर्णव्यवधान सह्यत इत्युक्तौ दोषाभाव इति वदन्ति।

वदन्तीति। केचिदित्युक्त्याऽत्र अस्वरसः सूचितः। तथा हि—गुणवृद्धिनिमित्तकप्रत्ययेतरहल्वर्णव्यवधानं सह्यते' इति कल्पना न युक्ता; यतो हि—निमित्तता नाम कारणता, सा च द्विविधा फलोपधायकतारूपा, स्वरूपयोग्यतारूपा च। तत्राद्यायाम्—'अक्षैष्टाम्' इत्यत्र निषेधप्रवृत्तिकाले निमित्ततायाः सिचि अभावेन वृद्धिनिमित्तकप्रत्ययेतरस्य सिचो व्यवधानेऽपि निषेधप्रवृत्त्या दोषतादवस्थ्यात्। द्वितीयायाम्—'गुता'इत्यत्र दोषः स्यात्, तत्र स्वरूपयोग्यतारूपकारणतायाः सत्त्वादतो नैतादृशी कल्पना कर्तुं शक्यते इति।

यद्यपि—ज्ञापकसाजात्येन यन्निमित्तं कित्त्वं ङित्त्वं वा आश्रित्य गुणनिषेधश्चिकीर्षितः, तदनधिकरणीभूतप्रत्ययेतरवर्णव्यवधानं सह्यत इति कल्पनान्तरे प्रकृते न दोषः; तथापि एतादृशकल्पना-

सिद्धये कार्यमनुभवन्निति । अत्र हि 'द्विर्वचनेऽची'ति नुशब्दस्य द्वित्वम् ; अन्यथा 'सन्यङोरि'त्यस्य षष्ठ्यन्तत्वात्सन्नन्तस्य कार्यित्वेनेसो द्वित्वनिमित्तत्वाभावात्तत्प्रवृत्तिर्न स्यात् ।

वस्तुतः-समवायिकारणनिमित्तकारणयोर्भेदस्य सकललोकतन्त्रप्रसिद्धतया तस्य तत्वेनाश्रयणाभावेन नैषा ज्ञापकसाध्या । अत एव हिः प्रयुक्तः । स हि तत्त्वेनानाश्रयणे हेतोः प्रसिद्धत्वं द्योतयतीति तत्त्वम् । द्विर्वचनेऽची'त्यत्र भाष्ये ध्वनितैषा ॥ १० ॥

---

तया तद्वैयर्थ्यं स्पष्टमेव । नुशब्दस्य द्वित्वमिति । 'द्वित्वनिमित्तघटकेऽचि परे द्वित्वनिमित्तघटकनिमित्तोऽजादेशो न स्याद् द्वित्वे कर्त्तव्य' इति सूत्रार्थात् प्रकृते द्वित्वनिमित्तघटकस्येसशब्दस्य कार्यित्वेऽपि कार्यानुभवकर्तृत्वाभावेन निषेधविषयत्वं सुवचमिति भावः । एतेन—अत्रेड्रूपाचो द्वित्वनिमित्तत्वाभावेन गुणस्य तन्निमित्तत्वाभावेन च सूत्राप्राप्तेरिदमयुक्तमित्यपास्तम् ।

सकललोकतन्त्रेति । सकललोकेषु, कतिपयतन्त्रेषु च प्रसिद्धेत्यर्थः, तेन वेदान्तिनये तत्त्वयोरेकत्र सत्त्वेपि न क्षतिः । तस्य = समवायिकारणस्य । तत्वेन = निमित्तत्वेन । अत एव = लोकादिप्रसिद्धत्वादेव । स हि = हिशब्दस्तु । तत्वेन = निमित्तत्वेन । तत्त्वम् = सिद्धान्तः ।

ननु 'कार्यी निमित्ततया नाऽश्रीयत' इत्यंशस्य लोकादिसिद्धत्वेऽपि 'कार्यमनुभवन्नि'त्यंशे किं बीजमित्यत आह—ध्वनितैषेति । एषा = कार्यमनुभवन्नित्यंशविशिष्टेत्यर्थः । तत्र हि—'अची'त्यस्य 'जेघ्रीयते' 'देध्मीयत' इति प्रत्यु-

---

स्वीकारापेक्षया वक्ष्यमाणरीत्या साहचर्यादिकल्पनापेक्षया वा "उपपदविभक्तेः' इति परिभाषाबाधं स्वीकृत्य 'यस्य च भावेन' इति वचनान्निमित्तसप्तमीस्वीकारेण 'शयिता' इत्यादेः परिभाषाफलत्वेन कल्पने एव लाघवम् । न च तत्रापि परिभाषास्वीकारे गौरवमिति वाच्यम् ; परिभाषाया न्यायसिद्धतया अपूर्ववचनाभावेन गौरवाभावात् । तस्मात 'अरिरिषति' इतिवत् 'अध्येता' इत्यादेरपि परिभाषाफलत्वं वक्तुं शक्यत इति । 'अरिरषती'ति—उपलक्षणम् 'दूद्यूषति, 'बिभवनीयिषति' इत्यादेरपि ।

ननु 'क्ङिति च' इत्यत्र निमित्तसप्तमीवादिनां मते अश्लिष्टाम्' इत्यस्य का गतिरिति चेच्छृणु । वक्ष्यमाणरीत्या 'अध्यजीगपत्' इत्यत्रेव निमित्ततापदस्याव्यवहितपूर्वत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नायामेव विषयतायां व्यवहारेणादोषात् । अत एव च 'न लुमताङ्गस्य' इति सूत्रस्थं भाष्यं सङ्गच्छते । तत्र हि—"न लुमता तस्मिन्नित्युच्यमाने किं सिद्धमेतद् भवति ? क्रमेर्दीर्घत्वमिति बाढं सिद्धम् , न खलु क्रमेर्दीर्घत्वं परस्मैपदेष्वित्युच्यते; कथं तर्हि शितीति तद्विशेषणं परस्मैपदग्रहणम्" । अन्यथा लुप्तप्रत्ययपरस्मैपदनिष्ठताद्दशनिमित्तताकस्य क्रमेर्दीर्घत्वस्य 'न लुमते'त्यनेन निषेधे तदसङ्गतिरेव स्यात् । तथा चोक्त कैयटेऽपि—'विशेषण एवोपक्षीणत्वात् कार्यं प्रति विशेषणभावो नास्तीत्यर्थः' इति ।

वेदान्तिनय इति । लूतातन्तुवदिति शेषः ।

दाहरणमुक्तम्। परिभाषायां कार्यमनुभवन्नि'त्यंशासत्त्वे त्वत्र यङोऽपि द्वित्वकार्यित्वेन निमित्तत्वभावादुक्तनिषेधाप्राप्त्या तदसङ्गतिः स्पष्टैव। उक्तार्थज्ञापने तु—यङः कार्यित्वेऽपि कार्यानुभवकर्तृत्वाभावेन परिभाषाया अप्रवृत्त्या निषेधापत्तिरतस्तद्ग्रहणं सार्थकमिति भावः।

यत्तु—अत्र 'वृक्षप्रचलन'न्यायेन 'घ्राय्' इत्यस्य द्वित्वादवयवद्वारा यङोऽपि कार्यानुभवकर्तृत्वेन निमित्तत्वाभावादुक्तनिषेधाप्राप्त्या भाष्यविरुद्धेयमित्याहुः। तन्न; स्वरान्तरे व्यञ्जनान्युत्तरस्ये'त्यनेनात्र घ्रामात्रस्यैव द्वित्वेनोक्तदोषानवकाशात्।

परे तु—'द्विर्वचनेऽची'त्यत्र 'तस्मिन्नि'ति परिभाषाबलेन पूर्वोक्तार्थस्वीकारे 'जग्मतुरि'त्यत्र 'गम्'धातोरचो निरुक्ताऽव्यवहितपूर्वत्वाभावान्निषेधानापत्तिः, येन नाव्यवधानमित्यस्य तु नायं विषयः, 'चक्र' इत्यत्राव्यवहिते सूत्रस्य चारितार्थ्यात्। तथा च 'अची'तिनिमित्तसप्तम्याश्रयणेन 'द्वित्वनिमित्तघटकाच्पर्याप्तनिमित्तताकाजादेशो न भवती' त्यर्थस्यावश्याश्रयणीयतया 'द्विर्वचननेऽची'त्यत्राज्ग्रहणस्य सत्त्वेऽसत्त्वे वा घ्राशब्दाकारमादाय निषेधप्रवृत्तेर्दुष्परिहरतया ऋते विशिष्टपरिभाषास्वीकाराद्भाष्यासङ्गत्यापत्तिः। परिभाषास्वीकारे तु–घ्राशब्दाकारस्य कार्यानुभवकर्तृत्वात् कार्यित्वाच्च निमित्तत्वाभावेन तन्निमित्तकनिषेधाप्राप्त्या केवलयङ्निमित्तकनिषेधवारणायाज्ग्रहणं सार्थकमित्यंशद्वयविशिष्टा परिभाषा भाष्ये ध्वनिता। भाष्यप्रामाण्याच्च 'नटभार्यावद्व्यञ्जनानी' ति नात्र स्वीक्रियते, किन्तु 'स्वरान्तर' इत्येव, तेन न पूर्वोक्तदोषावकाशः। न च 'द्विर्वचन' इत्यस्य निरुक्तार्थस्वीकारे 'ऊर्णुनविषती' त्यत्र गुणस्याच्पर्याप्तनिमित्तत्वान्निषेधाप्राप्त्या पूर्वं गुणेऽभ्यास इकारश्रवणापत्तिरिति वाच्यम्; गुणस्यातथात्वेऽपि अवादेशस्य तत्त्वेन तदप्रवृत्त्या नोशब्दस्य द्वित्वेऽप्यभ्यासह्रस्वेनेष्टसिद्धेः। 'जग्मतुरि' त्यत्रातुसकारेऽच्पदप्रयोज्यनिमित्ततायाः सत्त्वेन न क्षतिः।

अत्र कार्यानुभवकर्तृत्वञ्च—सम्भावनिकं ग्राह्यम्, तेन 'दुद्युषती' त्यस्य सिद्धिः। अन्यथा 'दिव्' धातोः सन्यूठि 'दि+ऊ+से' ति स्थिते, द्वित्वनिमित्तघटका-

---

निषेधानापत्तिरिति। अचीति परसप्तमीं स्वीकृत्य 'अच' इत्यत्रान्वये 'जग्मतुः' इत्यत्र दोषः स्यादतो निमित्तसप्तमीं स्वीकृत्यादेशेऽन्वयः स्वीक्रियते इति भावः।

ननु 'द्वित्वनिमित्तेऽचि पूर्वस्य द्वित्वे कर्तव्ये अजादेशो ने'त्यर्थाङ्गीकारे नात्र दोष इति चेन्न। 'अधिजगे' इत्यत्र रूपातिदेशपक्षेऽभ्यासे इकारश्रवणापत्तेः, तत्र लावस्थायामेव गाङादेशः, एशादेशोत्तरं द्वित्वे कर्तव्ये स्थानिरूपातिदेशप्राप्तेः। निमित्तसप्तम्यान्तु–गाङादेशस्याज्निमित्तत्वाभावान्न दोष इति बोध्यम्।

ऋते विशिष्टपरिभाषास्वीकारादिति। "कार्यी निमित्ततया न स्वीक्रियते" इत्येतन्मात्रस्वीकारे—घ्राशब्दाकारे ईत्वनिमित्ततया द्वित्वनिमित्ततायाश्च निषेधवत्, यङि द्वित्वनिमित्ततया निषेधेनाज्ग्रहणाभावेऽपि दोषाभावेन 'अचि किम्?' इति भाष्यासङ्गतिरेव स्यादतो विशिष्टपरिभाषा मन्तव्येति भावः।

संभावनिकं ग्राह्यमिति। तथा च परिभाषायां 'कार्यमनुभवन्नि'त्यस्य कार्यानुभवकर्तृत्वेन सम्भावित इत्यर्थः; अन्यथा सर्वत्रैव 'अध्येता, शयिता' इत्यादौ गुणप्रवृत्तिप्रतिबन्धाय

चमूठमादाय 'द्विर्वचन' इति यणो निषेधेऽभ्यासे उकारश्रवणानापत्तिः । मम तु— यद्यत्राजादेशो यण् स्यात्तर्हि 'द्यू'शब्दस्य द्वित्वे ऊठः कार्यानुभवकर्तृत्वेन न निषेधः । अत एवाजादेशनिषेधस्थानिरूपातिदेशपक्षयोः फलैक्यसिद्धिः । न चैवमपि द्वित्वनिमित्ताचं चङमादाय द्वित्वात्पूर्वं गाङादेशनिषेधा 'दध्यजीगपदि'ति रूपासिद्धिरिति वाच्यम्; निमित्ततायाः अव्यवहितपूर्वत्वसम्बन्धावच्छिन्नप्रकारतानिरूपिताव्यवहितपूर्वत्वसम्बन्धावच्छिन्नावच्छेदकताभिन्नाया विवक्षितत्वेन चङ्निष्ठनिमित्ततायाः अतथात्वेन दोषाभावात् । न च कशब्दादाचारक्विबन्तादतुसि 'चकतुरि' त्यत्रातो लोपस्याच्पर्याप्तनिमित्तकत्वाभावेनोक्तनिषेधाप्रवृत्त्या पूर्वमतो लोपे, एकाचोऽभावेन द्वित्वानापत्त्योक्तरूपासिद्धिरिति वाच्यम्, एकाजभ्य आचारक्विपोऽभावात्, प्रत्ययान्तत्वेन नव्यमत आमुत्पत्तेश्चोक्तरूपस्यैवासिद्धयेष्टापत्तेः, द्वित्वनिमित्तघटको योऽच् तदादिपर्याप्तनिमित्तताक आदेशो नेत्यर्थस्वीकारेणादोषाच्च । न च भवनीयतेः सनि द्वित्वात्पूर्वमननिमित्तकगुणादेर्निषेधे 'बिभवनीयिषती' त्यत्राभ्यास उकारश्रवणापत्तिः, न च 'ओः पुयणि'तीत्वं स्यादिति वाच्यम्, येन 'नाव्यवधानमि'ति न्यायेनाभ्यासोत्तरखण्डव्यवधान एव तत्प्रवृत्तेरिति वाच्यम्; 'प्रत्यय इति वक्ष्यामी' ति प्रकृतसूत्रस्थभाष्येण द्वित्वनिमित्ततापर्याप्त्यधिकरणप्रत्ययघटकाच एव तत्र ग्रहणादनघटकस्यातथात्वेनादोषात् । न चैवं निरुक्तप्रकारेण भाष्यध्वननिरूपणासङ्गतिरिति वाच्यम्;

---

'क्ङिति च' इति निषेधशास्त्रप्रवृत्तिकाले कार्यानुभवकर्तृत्वाभावेन अनया परिभाषया निषेधस्यानुपपत्तिरेव स्यादिति भावः । एतेन—'दुद्यूषति' इत्यत्र 'दिव्'धातोः सनि ऊठि 'दि+ऊ+स' इति स्थिते, द्वित्वनिमित्ततायाः सन्नन्तत्वावच्छिन्नविषयतायाः पर्याप्त्यधिकरणं 'दि–ऊ–स' इति, तद्घटकोऽच् उकारः, तत्पर्याप्तनिमित्तताकस्य यणो 'द्विर्वचनेऽचि' इत्यनेन निषेधः प्राप्नोति । परिभाषाश्रयणे तु–'शयिता इतिवत् समुदायस्यावयवद्वारा कार्यानुभवकर्तृत्वविशिष्टस्य कार्यित्वस्य सत्त्वेन निमित्ततायाः बाधेन दोषाभावात् साम्भावनिकस्य तस्य ग्रहणे नोपयोग इति केषाञ्चिदुक्तिः परास्ता; अत्र अचीति परसप्तम्यामपि निषेधः प्राप्नोत्येव ।

**फलैक्यसिद्धिरिति** । अन्यथा स्थानिरूपातिदेशपक्षे—'द्यू+स' इति दशायामूकारस्यैकाच्पदप्रयोज्यायाः अच्त्वावच्छिन्नविषयतारूपकार्यित्वेन द्वित्वरूपकार्यानुभवकर्तृत्वेन च द्वित्वनिमित्ततायाः अनया निषेधे यणादेशस्य द्वित्वनिमित्ताजनिमित्तताकत्वाभावेन 'द्विर्वचनेऽचि' इत्यस्याप्राप्त्या द्यूशब्दस्य द्वित्वं भवति । आदेशनिषेधपक्षे--'दि+ऊ+स' इति दशायामूकारस्य द्वित्वरूपकार्यानुभवकर्तृत्वाभावेन द्वित्वनिमित्ततायाः निषेधाप्राप्त्या 'द्विर्वचनेऽचि' इत्यस्य प्रवृत्त्या दिशब्दस्य द्वित्वे 'दिद्यूषति' इति रूपं स्यादिति फलभेदः स्पष्ट एवेति बोध्यम् ।

**अतथात्वेन दोषाभावादिति** । नन्वेवमपि —'णिच्यच आदेशो न स्यादि'ति निषेधः प्राप्नोत्येवेति चेन्न । निषेधोत्तरमिकारस्यैव द्वित्वेऽभ्यासोत्तरखण्डेऽवर्णपरत्वाभावात्तदप्राप्तेः ।

**योऽच् तदादिपर्याप्तनिमित्ततकेति** । अच्-तदाद्येतदन्यतरपर्याप्तनिमित्तताक इति तदर्थः, तेन 'चक्तु' रित्यत्र यणस्तदादिनिमित्तताकत्वाभावेऽपि न दोषः ।

**बिभवनीयिषतीति** । अत्रापि 'दुद्यूषति' इतिवत् अचीति परसप्तमीपक्षेऽपि 'द्विर्वचनेऽचि' इति निषेधप्राप्तिः ।

'अचि किम्? जेघ्रीयत' इति प्रत्युदाहरणदानोत्तरं 'प्रत्यय इति वक्ष्यामी' त्यस्य भाष्ये निरूपणेन प्रत्युदाहरणदानकाले च प्रत्यय इत्यास्याज्ञानेन तादृशप्रत्युदाहरणस्य परिभाषासत्त्व एव सङ्गत्या तत्कल्पनाया उचितत्वेन दोषाभावादिति प्राहुः।

वस्तुतस्तु—'द्विर्वचनेऽची'ति सूत्रे 'गाङः प्रतिषेध' इति वार्त्तिकप्रत्याख्यानपरभाष्येण ध्वनितैषा। तत्र हि–'गाङ् लिटी' ति सूत्रस्य 'लकारादौ लिटि इङो गाङ् स्यादि'त्यर्थं प्रकल्प्य, वार्तिकं भगवता प्रत्याख्यातम्। तत्राचीति निमित्तसप्तमी, न तु परसप्तमी; अन्यथैशादेशोत्तरं द्वित्वे कर्तव्ये स्थानिरूपातिदेशापत्तिर्दुर्वारैव स्यात्। तथा चेङवयवमाश्रित्य सूत्रप्रवृत्तेः सुवचतया प्रत्याख्यानासङ्गतिः। मम तु-उक्तपरिभाषया इङः कार्यित्वेन निमित्तत्वाभावात्तमादाय सूत्रप्रवृत्तिः कर्तुमशक्यैवेति दिक्।

उच्छृङ्खलास्तु—'क्ङिति चे'ति सूत्रे क्ङितः प्रत्ययस्यैव ग्रहणेन तेन तदादेरुपस्थित्या क्ङिन्निरूपिततदादिघटकस्यैव गुणादिनिषेधा'द्ध्येते'त्यादौ तदभावेन 'क्ङिति चे'त्यस्याप्रवृत्त्या नैतत्परिभाषायाः फलम्। न च 'श्रृणोती'त्यत्र श्नुप्रत्ययविशिष्टस्यापि तदादित्वेन तद्घटकस्य विकरणस्य ङित्वेन च गुणनिषेधापत्तिरत-

---

प्राहुरिति। नन्वेवं 'द्विर्वचनेऽचि' इत्यस्यानुपदोक्तार्थस्वीकारे—परिभाषाफलत्वेन प्रागुपन्यस्तस्य 'अरिरिषति' इत्यस्य असङ्गत्यापत्तिः, द्वित्वनिमित्ततापर्याप्त्यधिकरणः प्रत्ययः 'इस' इति, तद्घटकोऽच् इकारः, तत्पर्याप्तनिमित्तताकत्वस्य गुणेऽभावेन 'द्विर्वचनेऽचि' इत्यस्याप्राप्त्या परिभाषाप्रवृत्तेरनुपयोगात्। प्रत्यये इत्यस्यानिवेशे तु—'द्विर्वचनेऽची'त्यस्य 'यथाकथञ्चित् पर्याप्त्याऽपर्याप्त्या वा द्वित्वनिमित्तताश्रयो योऽच् तत्पर्याप्तनिमित्तताकाजादेशो न द्वित्वे कर्तव्ये' इति तदर्थः। तथा सति द्वित्वनिमित्ततापर्याप्त्यधिकरणं यथा—'ऋ इस' इति 'इस' इति च, तद्वदाद्यच्त्वावच्छिन्नविषयताश्रयत्वेन ऋ इत्यपि, तत्पर्याप्तिकत्वावच्छिन्नविषयतारूपनिमित्तताकगुणस्य तेन निषेधः प्राप्नोति। परिभाषाश्रयणे तु–गुणरूपकार्यानुभवकर्तृतया निमित्तताया बाधेन न दोषः। ये तु—प्रत्ययपदमनिवेश्यैव 'अरिरिषति' इत्यस्य परिभाषाफलत्वं खण्डयन्ति, ते मान्या एव। किञ्चैवं 'दुद्यूषति' 'बिभवनीयिषति' इत्यादेरपि परिभाषाफलत्वं न सम्भवति। अपि च "अचि किम्? जेघ्रीयते, देध्मीयते" इति भाष्यध्वननिरूपणासङ्गतिः। प्रत्यये इत्येतस्याज्ञानकल्पनया ज्ञापने तु—सुतरां तदसङ्गतिरिति चेन्न। प्रत्यये इत्यंशस्यैतत्परिभाषामूलकत्वेनादोषात्। एतत्परिभाषासत्त्वे तादृशः प्रत्यय एव सम्भवतीति तन्मूलकमेव 'प्रत्यय इति वक्ष्यामि' इति भाष्यकृतोक्तमिति सुधियो विभावयन्तु।

'वृक्षप्रचलन'न्यायेन 'घ्राय्'इत्यस्यैव द्वित्वमिति न पूर्वोक्तभाष्येण परिभाषाध्वननं सम्भवतीति वादिनां मतेऽप्याह—वस्तुत इति। इदमुपलक्षणम्—'णिच्यच आदेशो न' इति ज्ञापकपरभाष्यस्यापि, तेनाप्यस्या ध्वनितत्वात्। एतस्याः परिभाषाया अभावे द्वित्वनिमित्ततापर्याप्त्यधिकरणीभूतः समुदायः 'भु–इ' इति, तद्घटकोऽच् 'णिः', तत्पर्याप्तनिमित्तताकस्य वृद्धिशास्त्रस्य 'द्विर्वचनेऽची'ति निषेधेनैवाप्राप्त्या 'अबीभवत्' इत्यादौ 'ओः पुयण्जि'ति सूत्रस्य चारितार्थ्येन ज्ञापकपरभाष्यासङ्गतिः स्पष्टैव। मम तु—'भू–इ' इति समुदायस्यावयवद्वारा कार्यानुभवकर्तृत्वेन द्वित्वनिमित्ततापर्याप्त्यधिकरणत्वाभावेन निषेधाप्राप्त्या ज्ञापकत्वं सङ्गच्छत एवेति दिक्।

सम्प्रति परिभाषा-खण्डनप्रकारमाह—उच्छृङ्खलास्त्विति। प्रत्ययस्यैव ग्रहणेनेति। गित्साहचर्यादिति भावः। ङित्वेन च गुणनिषेधापत्तिरिति। इदं चिन्त्यम्– अप्रत्ययरूपङि-

स्तद्वारणाय परिभाषाऽऽवश्यकीति वाच्यम्; 'क्ङिति चे'त्यत्र निर्दिष्टपरिभाषोपस्थित्या क्ङिद्व्यवहितपूर्वस्य तदादेरिको गुणवृद्धिनिषेधविधानेनादोषात् । गित्साहचर्येण क्ङित्यपि पूर्वस्यैवेकस्तन्निषेध इति तु न सम्यक्; 'जिष्णवयती' त्यत्र तदादिघटकस्यापि गितः सम्भवेन तथा साहचर्यग्रहणे मानाभावात् । 'क्ङिति चे' त्यस्य परिभाषात्वेन तत्तद्गुणवृद्ध्यादिविधौ 'क्ङिति चे' त्यस्योपस्थित्या सामर्थ्येन नाप्राप्तवर्णव्यवधाने तत्प्रवृत्तेः स्वीकारात्, वनोः कित्त्वसामर्थ्येन गुणवृद्धिनिमित्तप्रत्ययभिन्नहल्व्यवधानेऽप्येतत्प्रवृत्तेः, पूर्वमुक्तत्वाच्च "गुता, भिन्नमि"त्यादिलक्ष्येषु न दोषावकाश इति तत्रैव सूत्रे भाष्ये स्पष्टम् । एव 'मरिरिषती'त्यत्रापि 'द्विर्वचनेऽची' ति सूत्रे 'अचःपरस्मिन्नि'त्यतः 'पूर्वविधावि'त्यनुवर्त्य द्विर्वचनावधिकपूर्वस्यैव विधौ तत्प्रवृत्तेरादेशनिषेधकल्पेऽजादेर्द्वितीयस्ये तीसूशब्दस्य द्वित्वप्राप्त्या पूर्वविधित्वाभावेन, रूपातिदेशकल्पे च रिसूशब्दस्य द्वित्वप्राप्त्या पूर्वपरोभयविधिसत्त्वेन पूर्वस्यैव विधानाभावेन सूत्राप्राप्त्या परिभाषाविषयाभावान्निष्फलैषा । अत एव भाष्ये नैषा कण्ठरवेण क्वचिदुक्ता । नाऽप्युक्तार्थे निर्देशरूपज्ञापकसम्भवः । 'द्विर्वचनेऽची' त्यस्याजादिद्विर्वचनप्रत्यये परे तद्घटकनिमित्तकाजादेशः पूर्वविधौ स्थानिवदित्यर्थः । अजादिद्वित्वनिमित्तभूतश्चार्थवद्घटित इत्यवध्यवधिमतोः साजात्यात्तद्व्यवहितपूर्वोऽप्यर्थवद्घटित एव गृह्यते, तेन 'अध्यजीगपदि'त्यत्रेङ् धातुरव्यवहितपूर्वो न,

---

त्पर्याप्ताया गुणशास्त्रीयायाः कस्या अपि निमित्तताया अभावेन निषेधशास्त्राप्राप्तेः । 'अस्य स्त्री—ई- सा इवाचरती'त्यर्थे आचारक्विबन्ताल्लटि तिपि 'अयती'त्यादेस्तु अनभिधानमेव स्त्रीप्रत्ययान्तादाचारक्विपोऽनभिधानात्, गित्साहचर्येण प्रत्ययत्वव्याप्यधर्मावच्छिन्नाया एव निमित्तताया ग्रहणेनादोषाच्च । निमित्तपक्षे दोषानुद्धृत्य परसप्तमीपक्षेऽप्याह—**निर्दिष्टेति** ।

**गुणवृद्धिनिमित्तप्रत्ययेति** । चिन्त्यमिदमिति उक्तपूर्वम् । **द्विर्वचनावधिक इति** । द्विर्वचनपदं द्वित्वनिमित्तपरम् । **विधाविति** । कर्मणि किः, द्वित्वरूपे विधेये इति तदर्थः ।

**ज्ञापकसम्भव इति** । शीङः साक्षात् कार्यानुभवकर्तृत्वाभावादिति भावः । **द्विर्वचन इति** । परसप्तमी । **तद्घटकनिमित्तकेति** । प्रत्यासत्त्यैतल्लभ्यते । अच्—अजाद्येतदन्यतरनिमित्तताक इत्यर्थः ।

अयम्भावः—'द्विर्वचने' इति परसप्तमी पूर्वविधाविति वर्तते; अजादिरूपो यो द्वित्वनिमित्ततापर्याप्त्यधिकरणस्तदव्यवहितपूर्वस्यैव द्वित्वे कर्तव्ये प्रत्यासत्त्या अच्—अजाद्येतदन्यतरनिमित्तताकोऽजादेशो न स्यादिति द्विर्वचनेऽची'त्यस्यार्थः । 'बिभवनीयिषति'इत्यत्र न अनप्रत्यये द्वित्वनिमित्ततापर्याप्तिः; 'इस्' इत्यस्मिन् तत्पर्याप्तिसत्त्वेऽपि न तदव्यवहितपूर्वस्य द्वित्वं कर्तव्यमिति न दोषः । एवं 'दुद्यूषति' इत्यत्रापि यश्चाजादिभूतं 'ऊस्' इति, न तद्द्वित्वनिमित्ततापर्याप्त्यधिकरणम्; यश्च 'स' इति न तदजादिरूपमिति न दोषः । प्रत्यासत्त्यङ्गीकारे च न 'गाङः प्रतिषेध' इति वार्तिकप्रत्याख्यानपरभाष्यासङ्गतिः; न वा 'णिच्यच्च आदेशो न' इति ज्ञापकपरभाष्यासङ्गतिरिति सर्वमनवद्यम् । एतेन—परिभाषाभावे 'णिच्यच' इत्यस्य नोपयोग इति परास्तम् । **पूर्वविधौ स्थानिवदित्यर्थ इति** । अत्र 'प्रत्यये' इत्यस्य नोपयोगः । किञ्च—तदंशस्तु परिभाषालभ्य एव, नापूर्व इति प्रागुक्तम् ।

ननु 'प्रणिदापयती'त्यादौ दारूपस्य विधीयमाना घुसंज्ञा दापेर्न स्यादत आह—

---

ययन्तश्चार्थवद्घटितो नेति न दोषः। 'अध्येते'त्यादाविकारादेर्गुणं प्रति समवायिकारणत्वकथनमप्ययुक्तमेव, घटादिकार्यसत्तादशायां कपालादेः समवायिकारणस्येव गुणादिकार्यसत्तादशायामिकारादेर्वर्तमानत्वस्याभावेन तत्त्वासम्भवात्। समवायिकारणनाशस्य कार्यनाशव्याप्यतयेकारादिस्थानिनाशे गुणाद्यादेशानां नाशप्रसङ्गाच्चेति वदन्ति ॥ १० ॥

दापेर्न स्यादिति। घुसंज्ञासूत्रे विशिष्टरूपोपादाने 'नार्थवद्ग्रहण'परिभाषया ऽर्थवद्दाशब्दस्य ग्रहणेन आगमसमभिव्याहारे तद्विशिष्टस्यैवार्थवत्त्वाद् पुग्रहितस्य 'दा' इत्यस्यानर्थकत्वाद्दापश्चोक्तदात्वाभावादिति भावः। अत एव 'स्यसिच्सीयुड्' त्यत्र 'भावकर्मवाचिनि परतो ये स्यादय' इत्यर्थस्वीकारे 'सीयुड्विशेषितः स्यादि'ति भाष्योक्तं सङ्गच्छते; अन्यथा सीयुट्समभिव्याहारेऽपि तद्रहितस्य भावकर्मवाचकत्वात्तेः 'सीयुड्विशेषित' इत्युक्तिरसङ्गतैव स्यात्। अत एव च निपातेन उशब्देन नञ्समासे 'अनु+अत्रे'ति स्थिते नुड्रहितस्य'उ'इत्यस्यानर्थकत्वेन 'निपात एकाजि' ति प्रगृह्यत्वाप्राप्त्या 'अन्वत्रे'त्यत्र यण्, 'रामाणामि'त्यत्र नुट्समभिव्याहारे आमोऽनर्थकतया पूर्वनान्तस्य भत्वाभावे'नाल्लोपोऽन' इति लोपाभावश्च सिध्यति। न चैवं 'भिन्द्यु-

---

तत्त्वासम्भवादिति। शब्दानां नित्यत्वात् विभुत्वाच्चेत्यपि बोध्यम्। मूलन्तु शब्दाना कार्यकारणभावारोपाभिप्रायेण बोध्यम् ॥ १० ॥

'शयिता' इत्यादौ इड्विशिष्टस्यार्धधातुकत्वाभावात् कथं गुणप्रवृत्तिरित्यवसरसङ्गत्याऽऽह—

मूले—नन्विति। भाष्ये प्रकृतपरिभाषाया इदमेव प्रयोजनमुक्तमतस्तदेवोच्यते, न तु शयितेत्यादिरिति।

असङ्गतैव स्यादिति। न चोक्तभाष्येण अवयविनिरूपितमवयवे पौर्वापर्यं नेत्येतावत एव बोधनेन नासङ्गतिरिति वाच्यम्; मुख्यावयव एव अवयविनिरूपितपौर्वापर्यव्यवहाराभावस्य लोके दृष्टत्वेन आरोपिततदवयवत्ववति तथा वक्तुमशक्यत्वात्। अन्यथा 'ऐत्, नद्यै' इत्यादौ वृद्धेरनुपपत्तेः।

अन्वत्रेत्यत्र यणिति। न चोभयोर्द्योतकयोः परस्परमसामर्थ्यात् समासानापत्तिरिति वाच्यम्; निपातानां यथाकार्यं द्योतकत्वं वाचकत्वं वा उभयमप्यस्तीति अभियुक्तैरङ्गीकारेणात्र समासानुरोधेन वाचकत्वस्वीकारात्। न च निपातयोः समासः क्वापि दृष्ट इति तु न; 'ऐतिह्यम्' इत्यत्र 'इति—ह' इत्यनयोः समासस्य दृष्टत्वात्। लोपाभावश्च सिद्ध्यतीति। न च 'सन्निपात' परिभाषया ह्रस्वत्वमुपजीव्य जायमानो नुट् ह्रस्वत्वविघातको न भविष्यतीति वाच्यम्; 'नामि' इति दीर्घारम्भसामर्थ्यात् नुड्विधायके माधवमते 'सन्निपात'परिभाषाप्रयुक्तसङ्कोचाभावस्य कल्पनेनादोषादिति भावः। माधवमतञ्च 'सन्निपात'परिभाषायां स्फुटीभविष्यति।

वस्तुतस्तु—'बहुकुमारीकः' इत्यत्र ह्रस्वाभाव एव तत्फलं बोध्यम्; 'न कपि' इति निषेधस्तु 'अनन्तरस्ये'ति न्यायेन 'केऽण' इत्यस्यैव। अत एव 'प्रियं ग्राममणिकुलमस्य इति प्रियग्राम

रि'त्यत्र यासुट्समभिव्याहारे ङसोऽनर्थकत'येत्यपदान्तादि'ति पररूपानापत्ति 'रर्थवद्ग्रहण' परिभाषयाऽर्थवत ङसस्तत्र ग्रहणादिति वाच्यम्; उक्तरूपसिद्ध्यर्थमेव भाष्ये एतत्परिभाषाया अप्रवृत्तेरुक्तत्वेनादोषात्। एवञ्चैतदपि भाष्यमुक्तेऽर्थे गमकं बोध्यमिति दिक्।

यत्तु—आगमसमभिव्याहारे तद्रहितस्यार्थवत्त्वस्वीकारे 'भूयादि'त्यत्र हल्ङ्यादिलोपापत्तिरिति। तन्न; ङयाप्साहचर्येण हलन्ततदादेरपि लुप्यमानावयवाघटितस्यैव ग्रहणेन 'भूयासि'त्यस्य तिशब्दावयवयास्घटितत्वेनादोषात्।

केचित्तु - आद्यन्तौ टकिताबि' त्यादिशास्त्रसहकृतेन 'अतिह्री' त्यादिशास्त्रेणार्थबोधनाय 'दा' इत्यस्योच्चारणप्रसङ्गे दाबित्युच्चारणीयमित्यस्य बोधनेनार्थाद्दाबित्यस्यैवार्थवत्त्वं, न दाशब्दस्येति सिद्ध्यति; तथा च तत्तच्छास्त्रमेवागमसमभिव्याहार इत्याद्यर्थे मानमिति। तदपि न; 'प्रणिदापयती' त्यत्रैव तिबादिरहितस्यार्थबोधनायोच्चारणप्रसङ्गे तिबादिसहितमुच्चारणीयमित्यस्य सम्भवेन तिबादिरहितस्य दाबित्यस्यानर्थकतया परिभाषाया एव वैयर्थ्यप्रसङ्गादिति दिक्।

---

णिकः' इत्यत्र नपुंसकह्रस्वत्वसिद्धिः। किञ्च—'भूयास्ताम्' इत्यत्र तामित्यस्यार्धधातुकत्वाभावेन इडभावोऽपि फलं बोध्यम्। न च तत्रापि 'धातोः परस्य वलादेरार्धधातुकस्येडागमः' इत्यर्थेन दोषाभाव इति वाच्यम्; धातोरित्यस्याप्रकृतत्वात्, फलाभावाच्च तादृशार्थे प्रमाणाभावात्। न चैवमार्धधातुकस्य प्रत्ययमात्रबोधकत्वेन 'प्रत्ययग्रहण' परिभाषाप्रवृत्तौ 'आर्धधातुकान्तस्य तदादेः' इत्यर्थेन प्रकृतेरेवेडापत्तिः, धातोः परस्येत्युक्तौ तु—'प्रत्ययग्रहणे चापञ्चम्याः' इति निषेधः स्यादिति वाच्यम्; 'अङ्गस्ये'त्यधिकारा'दङ्गसंज्ञानिमित्तस्यार्धधातुकस्ये'त्यर्थकरणेनादोषात्। किञ्च—धातोर्विहितत्वस्यार्धधातुकत्वसंज्ञायां निमित्ततया धातोर्विहितत्वस्यैवाक्षेपः। किञ्च—धातोराक्षेपेण तदन्तविधिनिषेधे 'हल्ङ्याभ्य०' इत्यादावपि प्रकृतेराक्षेपेण तदन्तविधिनिषेधः स्यादिति भावः। अत एव 'नेटि' 'णेरनिटि' इत्यादेः सङ्गतिः। 'भविष्यति गम्यादयः' इति निर्देशा अप्यत्रैवानुकूला इति बोध्यम्।

एतदपि भाष्यमिति। तत्र भाष्ये—"अपदान्तादिति किम्? 'का + उस्रा, कोस्रा' अपदान्तादिति शक्यमकर्तुम्। इह कस्मान्न भवति 'का + उस्रा, कोस्रा' अर्थवद्ग्रहणे नानर्थकस्येति। नैषा परिभाषेह शक्या विज्ञातुम्। इह दोषः स्यात् 'भिन्द्युः छिन्द्युरिति; एवं तर्हि लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्येत्येवं न भविष्यति; एवं तर्हि उत्तरार्थमपदान्तग्रहणं कर्तव्यम्" इत्युक्तम्। अन्यथा—'भिन्द्युः' इत्यत्र उसोऽर्थवत्त्वस्य सत्त्वेन तदर्थं तस्या अत्राप्रवृत्तिर्भाष्योक्ता न सङ्गच्छेत इति दिक्।

वैयर्थ्यप्रसङ्गादिति दिगिति। अयम्भावः—'अतिह्री' इत्यादिना किं बोध्यते? यदि तु—अर्थबोधनाय णिजव्यवहितपूर्वत्वविशिष्टो दाबेव उच्चरणीय इति; तच्च शास्त्रसहस्रेणापि न सम्भवति, न वार्थविषयकबोधजनकत्वस्य नियमः शास्त्रेण सम्भवति; लोकेऽसाधुशब्दादप्यर्थस्य प्रतीतेः। न वा—णिजव्यवहितपूर्वत्वविशिष्टो दाशब्दोऽसाधु, दाप्शब्दश्च साधुरित्यपि युक्तम्; पूर्वपूर्वशास्त्रबोधितसाधुत्वके एव सकलशास्त्रप्रवृत्तेः; अन्यथा अपभ्रंशशब्दादावपि यणादि-

केचित्त—आगमसमभिव्याहारे इत्याद्यंशोऽपि 'यदागम' परिभाषासाध एवेति मत्वाऽवतरणदानकाले तदज्ञानेन पुग्रहितस्य 'दा' इत्यस्याप्यर्थवत्त्वेन घुत्व स्यादित्यवतरणासङ्गतौ 'यदागम' परिभाषाया अंशद्वयं प्रकल्प्य, आगमसमभिव्याहा इत्येकमंशं बुद्ध्वा वक्ष्यमाणार्थस्य द्वितीयांशस्येदमवतरणमिति वदन्ति। तन्मुधैः उक्तपरिभाषाया स्वरसतस्तादृशार्थाप्रतीतेरंशद्वयकल्पने मानाभावात, फलाभावाच्च।

यत्तु—समुदायस्य प्रत्येकानतिरिक्ततया दाब्वृत्त्यर्थवत्त्वस्य दाशब्देऽपि सत्त्वा तस्य घुसंज्ञायामिष्टसिद्धाववतरणासङ्गतिः। न चार्थविषयकबोधजनकत्वप्रकार तात्पर्यविशेष्यत्वरूपार्थवत्त्वस्य दाब्वतिनो दाशब्दे कल्पनेऽपि प्रकृते तादृशविशेष्यत्व प्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकधर्मवत्त्वरूपस्यार्थवत्त्वस्य विवक्षितत्वेन (तादृ धर्मश्च दाब्वृत्ति-त्रित्वं, न तु दावृत्ति-द्वित्वं तस्य निरुक्तानुयोगितान्यूनवृत्तित्वात, तः च तस्य धर्मस्य दाशब्देऽभावात) न दोष इति वाच्यम्; उक्तरीत्यैव दाब्वृत्तितादृ त्रित्वस्य दाशब्दे सत्त्वेनोक्तदोषतादवस्थ्यादिति। तदपि न; वैयाकरणनये अवयवस् समुदायभिन्नत्ववद् समुदायस्याप्यवयवभिन्नत्वस्वीकारेण दाब्वृत्त्यर्थवत्त्वस्य दाश

---

प्रसङ्गः। न च 'दध्यत्र' इत्यादौ दधिशब्दस्य साधुत्वं केन बोधितमिति वाच्यम्; व्युत्पत्तिप धातुप्रत्ययादिना तस्य साधुत्वबोधनात्। अव्युत्पत्तिपक्षे तु—'अइउण्' सूत्र-भाष्योक्ते 'अग्रहणप्रातिपादिकानामुपदेशः कर्तव्य.' इत्यनेनोपायेन साधुत्वबोधनात्। यदि तु पूर्वबोधि साधुत्वं विनश्येत; तदा उत्तरशास्त्रस्य प्रवृत्तिरेव न स्यात, 'गदति' इत्यादौ तिबादिविधायकैः पू त्रासाधुत्वे बोधिते धातोर्यत्कार्यं तन्न स्यात्, तस्यासाधुत्वबोधनात्। तस्मात् साधुत्वं द्विविधम्— एकं शास्त्रप्रयोजकम्, अपरं लोके प्रयोगत्वसम्पादकम्। तत्रोत्तरोत्तरप्रवृत्तैः शास्त्रैः पूर्वपू प्रवृत्तशास्त्रबोधितस्य लोके प्रयोगाभावरूपमेवासाधुत्वं बोध्यते, न तु शास्त्रप्रवृत्त्युपयोगिसाधुत्व वार्यते। तथा च अर्थबोधजनकत्वं पूर्वपूर्वशास्त्रबोधितसाधुत्वकस्यास्त्येवेति कथमागमसमवधा आगमिनोऽनर्थकत्वं सम्भवति। तथा सति पुग्रहिते दाशब्देऽर्थवत्त्वमादाय घुसंज्ञायां णत्वसिद्धे परिभाषाया वैयर्थ्यप्रसङ्ग इति।

अथ—शब्दनित्यत्वान्यथानुपपत्त्या 'अर्तिह्री०' इत्यस्य दाशब्दस्योच्चारणप्रसङ्गे दाबित्युच्च रणीयमित्यर्थः सम्भवति। तत्पक्षे च दाशब्दोऽप्यर्थवान्, दापशब्दोऽप्यर्थवानस्ति परं णिजव्यव हितपूर्वे दाबित्यनेनार्थबोधः कार्यः, स एव प्रयोक्तव्यः, स एव च साधुरित्येतावत्पर्यन्तं शास्त्र व्यापारः; तथा सति अर्थवद्दाशब्दादन्य एवायं दापशब्दस्तद्घटको दाशब्दोऽनर्थक एव राम शब्दघटकरेफादिवत्, इत्यागमविशिष्टस्यैवार्थवत्त्वमित्यर्थो रेव लाभेऽपूर्ववचनकल्पनमयुक्तमिति चेन्मैवम्। आदेशस्थले—आनुमानिकस्थान्यादेशभावाङ्गीकारेऽपि श्रौतस्थान्यादेशभावाङ्गीकार वत्, आगमस्थलेऽपि आनुमानिकस्थान्यादेशभावाङ्गीकारेऽपि स्वीकारात्। अत एव च 'अना गमकानाम्' इत्यादिभाष्ये आगमोक्तिः सङ्गच्छते। तथाचैतत्पक्षे आगमिनोऽपि प्राप्तार्थवत्त्ववार णाय 'आगमसमभिव्याहारे' इत्यपूर्ववचनकल्पनादित्यास्तां तावत्।

समुदायभिन्नत्ववदिति। प्रत्येकं ग्रावणि पिठरधारणस्यादृष्टत्वादिति भावः। अवयव भिन्नत्वेति। अत एव समासग्रहणस्य नियमार्थत्वोपवर्णनं भाष्यकृतां सङ्गच्छते; 'समुदायस सखिरूपत्वाभावादि'ति कौमुदीग्रन्थश्च सङ्गच्छते।

ऽभावेनावतरणसङ्गतेः सुवचत्वात् । तन्मतेऽपि अवयवस्य समुदायभिन्नत्व-स्वीकारेणावयववृत्तिधर्मस्यापर्याप्त्याऽपि समुदायेऽसत्त्वात् तादृशतात्पर्यविशेष्यत्व-प्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूतदात्ववतो घुसंज्ञाविधानेन दात्वस्य तत्प्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकद्वित्वस्य वा दाप्शब्दे विना परिभाषां कथमप्यसम्भवेन घुसंज्ञार्थं परिभाषाया आवश्यकत्वाच्चेत्यन्यत्र विस्तरः ।

ननु कार्यकालपक्षे—'पूर्वं धातुरुपसर्गेण युज्यत' इति भाष्यबलेन णिजुत्पत्तेः पूर्वमेव घुसंज्ञायां णत्वे चोक्तरूपसिद्धिः; 'पूर्वं धातुः साधनेन युज्यत' इति मतेऽपि पुको बहिरङ्गतयाऽसिद्धत्वेन दाशब्दस्यैवार्थवत्त्वेनान्तरङ्गत्वाद् घुसंज्ञा स्यात् । एवं यथोद्देशपक्षेऽपि—जातघुसंज्ञामादाय णत्वं स्यादित्येतदवतरणं न केष्वपि पक्षेषु सम्भवतीति चेन्न । 'पूर्वं धातुरुपसर्गेण युज्यत' इति मतेऽपि प्राचीनमते 'ऽकृतव्यूह' परिभाषया घुसंज्ञाया अप्राप्तेः, यद्यत्र घुसंज्ञा न स्यात्तर्हि पुकि कृते तन्निमित्तनाशः स्यादिति सम्भावनायाः सत्त्वात् । नवीनमतेऽपि णत्वाद्यसिद्धशास्त्रप्रतिबन्धकपुगादि-सिद्धशास्त्रप्रवृत्तिसम्भावनायां पूर्वं णत्वाद्यसिद्धशास्त्रप्रवृत्तेः सुवचत्वात् , संज्ञाशास्त्राणां विधिनिमित्तनिमित्तकत्वेन घुसंज्ञाया अन्तरङ्गत्वस्य वक्तुमशक्यत्वाच्च; यथोद्देशपक्षे दाशब्दस्य घुसंज्ञायाः सत्त्वेऽपि निशब्दादौ तन्निरूपितोपसर्गत्वाभावाण्णत्वाप्राप्तेः, 'यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गा' इति सिद्धान्तात् । यत्क्रियायुक्तत्वञ्च—यज्जन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वम् । प्रकृते दाशब्दस्य पुक्-समभिव्याहारे अर्थबोधकत्वाभावेन तदुपसर्गत्वासम्भवात् ।

यत्तु—कश्चित् 'अर्तिह्री'ति सूत्रेण णेः पुडागमः पश् विकरणो वा विधेयः; तथा च दामात्रस्यैवार्थवत्त्वेन घुसंज्ञायामेतदवतरणं न युक्तमिति । तन्न विचारसहम् ; निरुक्तन्यासस्य स्वकपोलकल्पितत्वेन ग्रन्थकर्तुस्तदज्ञानात् । यथाश्रुतन्यासानुसारेण तत्प्रवृत्त्या ग्रन्थेऽयुक्तत्वोपपादनस्यैवायुक्तत्वात् । णेः पुडागमे पशि वाऽ'तिष्ठिपदि'त्यत्राकारस्योपधात्वाभावेनेत्वानापत्तेः । एवं 'चिस्फुरोर्णावि' त्यादौ दोषविशेषाः स्वयमेवोहनीया इत्यलं काकदन्तपरीक्षयेति दिक् ।

---

असिद्धशास्त्रप्रवृत्तेरिति । अत्र मानम्—'स्थादिष्वभ्यासेन चाभ्यासस्य' इत्यादिनिर्देशा एव, अन्यथा 'ष्ठा' धातौ 'धात्वादेः षः सः' इत्यस्य धातुसंज्ञोत्तरभावित्वेनान्तरङ्गत्वात् पूर्वमेव ष्टुत्वे पश्चात्सत्वेऽपि पुनः षत्वे षकारठकारश्रवणापत्तेः । संज्ञाशास्त्राणां विधिनिमित्तनिमित्त-कत्वेनेति । अत्र मानम्—'तस्मै प्रभवति' इति सूत्रघटक-तस्मै इति निर्देश एव; अन्यथा अन्तरङ्गायां गुणसंज्ञायां कर्तव्यायां त्यदाद्यत्वस्य बहिर्भूतविभक्तिनिमित्तकत्वेन बहिरङ्गत्वेनासिद्धत्वात् 'अतो गुणे' इति पररूपाप्राप्त्या तदसिद्धिः स्पष्टैव; तदङ्गीकारे 'अतो गुणे' इत्यस्याज-निष्ठान्यानन्तर्यनिमित्तकतया गुणसंज्ञाशास्त्रस्याजानन्तर्यनिमित्तकतया तत्र कर्तव्यायां 'नाजा-नन्तर्ये०' इति निषेधान्न त्यदाद्यत्वस्यासिद्धत्वमित्यदोषः ।

इत्वानापत्तेरिति । ननु 'तिष्ठतेरित्' इत्यस्य 'चङ्परे णौ यदङ्गं तदुपधाभूतस्य तिष्ठतेरवय-

# यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ॥ ११ ॥

**यमुद्दिश्यागमो विहितः स तद्गुणीभूतः शास्त्रेण तदवयवत्वेन बोधितो-**

---

यमुद्दिश्यागम इति। यस्य आगमा इति विग्रहः, उद्देश्यत्वं षष्ठ्यर्थः, तस्यावयवत्वावच्छिन्नविधेयताश्रयरूपे आगमपदार्थे विधेयतायामन्वयः; तदेकदेशेऽवयवत्वेऽन्वये तु निरूपितत्वं षष्ठ्यर्थः। नव्यनैयायिकनये तु-विधेयावयवत्वयोर्मध्ये कुत्राप्यन्वयेऽयमेव षष्ठ्यर्थ इति बोध्यम्। विहित इति तु व्यर्थमेव, विधानस्य आगमपदेनैव लाभात्, न हि केवलोऽवयव आगमपदेन लोके व्यवह्रियते। तद्गुणीभूत इति।

---

वस्येत्वं भवती'त्यर्थंकरणेन 'अतिष्ठिपत्' इत्यत्र दोषाभावेन मूलोक्तमयुक्तमिति चेन्न। तथा सति 'स्थां तनोतीति स्थातत्, तमाख्यत् इति अतस्थातत्' इत्यत्रापीत्वापत्तेः।

इदमुपलक्षणम्—पुङ्विधाने 'क्नोपयती' इत्यत्रेडागमापत्तेः, गुणस्तु 'सार्वधातुकार्धधातुकपुङ्षु' इति न्यासेन साधनीयः। 'पश' विकरणविधाने 'ज्ञापयति' इत्यत्र संप्रसारणापत्तेः। 'अर्पयति' इत्यत्र गुणस्तु 'पुगन्ते' त्यत्र 'पशान्ते'ति विशेषविधानात् सिद्धः।

एतेन—'प' प्रत्यय एव विधीयताम्, सार्वधातुकत्वमार्धधातुकत्वं वा नास्तु, पुगन्तेत्यत्र लघूपधस्येत्येको योगः पिचेति। द्वितीयस्तस्य च पप्रत्यये परे इको गुण इत्यर्थे सर्वेष्टसिद्धिरिति परास्तम्। यत्तु—'क इवाचर क, अ इवाचर अ, क अ इति सततं यस्यां क्रियायामभिधीयते साका क्रिया' तस्मादाचारक्विबन्ताद्धेतुमण्ण्यन्ताच्च क्विपि णिलोपे 'काप् गच्छती'त्यत्र यदागमन्यायेन काप्शब्दस्य तिङन्तत्वेन ततः परस्य निघातो न भवति, इदानीं स्यादिति। तन्न युक्तम्; समासग्रहणकृतनियमपरभाष्येण तादृशलक्ष्याणामनभिधानात्। एवं 'चपयति' इत्यत्रोपधाह्रस्वत्वानापत्तिरपि दोषो बोध्यः। तदुक्तम्—'चिस्फुरोर्णावित्यादौ दोषाः स्वयमूहनीयाः' इति।

यत्तु—आर्धधातुकत्वादेव गुणः सेत्स्यति, 'पुगन्ते'ति सूत्रे पुगन्तेति ग्रहणञ्च न कर्तव्यं भवति। तन्न; 'क्नोपयति' इत्यत्र गुणं बाधित्वा वृद्ध्यापत्तेः। 'दापकः' इत्यत्र पुङ्विशिष्टस्य योर्लोपस्तु 'निर्दिश्यमान' परिभाषया वारणीयः। 'श्नप्' विधाने तिष्ठादेशापत्तिः; 'पशप्' विधाने इत्संज्ञानापत्तिः।

यत्तु—'एकदेशविकृत'न्यायेन पुग्विशिष्टे घुसंज्ञया निर्वाहेणावतरणासङ्गतिः। तन्न; लोपागमवर्णविकारज्ञो हि सम्यग् वेदान् परिपालयिष्यति' इति भाष्ये विकारात् पृथगागमग्रहणेन विकारपदेन स्थाने जायमानयोरेव ह्रासवृद्ध्योर्ग्रहणेनागमानामग्रहणात्। अदाबिति प्रतिषेधस्तु न शङ्क्यः; पित्प्रतिषेधाद्वा' इति वार्तिकफलैक्याय सूत्रमतेऽपि इत्संज्ञकपकारविशिष्टस्य ग्रहणात्' 'दाप्-लवने' 'दैप्-शोधने' इत्युभयोर्बकारानुबन्धकत्वकल्पनया सूत्रेऽदाबिति बस्य चर्त्वेन पकारनिर्देशान्निषेधाप्राप्तेश्च।

ऽतस्तद्ग्रहणेन तद्ग्राहकेण तद्बोधकेन शब्देन गृह्यते—बोध्यत इत्यर्थः । तत्र तद्गुणीभूता इत्यंशो बीजकथनम् । लोकेऽपि देवदत्तस्याङ्गाधिक्ये तद्विशिष्टस्यैव देवदत्तग्रहणेन ग्रहणं दृश्यते ।

---

आरोपितत्वं चार्थः; तेनारोपितावयवत्वविशिष्ट इत्यर्थः । मूलोक्तार्थस्तु न युक्तः, यदागमपदार्थात्तदर्थस्य विशेषाभावेन पौनरुक्त्यापत्तेः । परिभाषायामागमा इति बहुवचनसत्त्वे 'आगमो विहित' इत्येकवचनान्तेन व्याख्यानन्तु प्रत्येकमेव लक्ष्यसंस्कारो लक्षणेन भवतीत्यर्थाभिप्रायेणेति मिश्राः ।

केचित्तु—सहेतुकार्थनिरूपकपरिभाषायां बहुवचनसत्त्वेऽपि तद्व्यवस्थापकवाक्ये एकवचनान्तेन प्रयोगो ग्रन्थकृच्छैलीपरिशीलितः । अत 'एवानेकान्ता अनुबन्धा' इत्यत्र 'ह्यवयव' इत्येकवचनान्तेन प्रयोग उपपद्यते । एव 'मेकान्ता अनुबन्धा' इत्यादावपीति बोध्यमिति प्राहुः ।

बीजकथनमिति । तद्ग्रहणेन ग्रहणे बीजं तद्गुणीभूतेति; तद्गुणीभूतेत्यत्र बीजं यदागमा इति विवेकः । तद्विशिष्टस्यैवेति । अधिकावयवविशिष्टस्यैवेत्यर्थः । तथा च

---

यदपि—"गामादाग्रहणेष्वविशेषः" इति परिभाषयाऽनर्थकस्यापि दाशब्दस्य घुसंज्ञया इष्टसिद्धिरिति । तदपि न; "समानशब्दाप्रतिषेधोऽर्थवद्ग्रहणात्" इति घुसंज्ञासूत्रवार्तिकप्रामाण्यात् तया "लक्षणप्रतिपदोक्त" "लुग्विकरण" इति परिभाषयोरेव बाधात् ।

अथ—शास्त्रप्रयोज्ययन्निष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताप्रयोज्यारोपितावयवताप्रयोज्यतद्विषयकज्ञानप्रयोजकीभूतशब्दप्रयोज्यज्ञानविषयताश्रयो भवतीति परिभाषार्थः । अत्रायं विवेकः—तद्विषयकज्ञानप्रयोजकीभूतशब्दप्रयोज्यज्ञानविषयताश्रया आरोपेणैव भवन्ति । तत्रारोपः—उद्देश्यतावच्छेदकस्य, उद्देश्यतावच्छेदकधर्मसमानाधिकरणधर्मस्य वा ? नाद्यः—उद्देश्यतावच्छेदकस्य आदन्तत्वस्यातिदेशे 'प्रणिदापयती'त्यादौ दात्वस्यानारोपेण दोषतादवस्थ्यात् । द्वितीयः पक्षश्चेत्—तदा प्रकृते दात्वस्यैव स्थात्वस्यारोपयितुं शक्यत्वेन लुङि 'तिष्ठतेरित्' इत्यनेन इदादेशापत्तिः, 'प्रनिस्थापयति' इत्यादौ दात्वमतिदिश्य घुसंज्ञायामुपसर्गनकारस्य णत्वापत्तिश्च । तस्मात् कीदृशधर्मस्यारोपः ?

अत्र केचित्—स्वतादात्म्य-स्वपर्याप्तोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयत्वैतदन्यतरसम्बन्धेन स्वविशिष्टेतराघटितत्वसम्बन्धेन स्वविशिष्टे स्ववृत्तिधर्मस्यारोपः । तथा च स्वम्—दा इति, तद्वैशिष्ट्यम्—दाप् इत्यस्मिन्नेवेति नानुपपत्तिगन्धोऽपीति । तदसत्; प्रदर्शितान्यतरसम्बन्धेन स्वविशिष्टेतरो दाघटकदकारोऽपीति दापस्तद्घटितत्वेन दाप्यपि दात्वस्यारोपासम्भवात् । न चैतदर्थं स्वावयवत्व-स्वपर्याप्तोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयावयवत्वैतदन्यतरसम्बन्धेन स्वविशिष्टेतराघटितत्वसम्बन्धेन स्वविशिष्टे स्ववृत्तिधर्मं आरोप्यत इति वाच्यम्; तादृशनिरुक्तोभयसम्बन्धाभ्यां स्वविशिष्टेतरत्वं दाप्घटकाक्षित्यस्यापीति दापस्तद्घटितत्वेन दोषतादवस्थ्यात् । न चैवं स्वघटितत्व स्वोद्देश्यकागमघटितत्वैतदुभयसम्बन्धेन स्वविशिष्टे स्ववृत्तिधर्मारोप इति

**यमुद्दिश्य विहित इत्युक्तेः 'प्रनिदारयती'त्यादौ न दारित्यस्य घुत्वम्**

---

लोकन्यायेनैवागमविशिष्टस्यागमिग्रहणेन ग्रहणम् , न तु केवलागमस्य तेन ग्रहणमि सूचितम् । आगमवैशिष्ट्यञ्च—स्वघटितत्व–स्वोद्देश्यघटितत्व–स्वविशिष्टाघटितत्व त्रितयसम्बन्धेन । अत्र वैशिष्ट्यञ्च—स्वाघटकत्व-स्वोद्देश्याघटकत्वोभयसम्बन्ध बोध्यम् । स्वविशिष्टाघटितेति तृतीयसम्बन्धदानाद्दाग्रहणेन दापीति ण्यन्तस्य ग्र न । वैशिष्ट्यघटकसम्बन्धद्वयदानादागममागमिनं वा स्वविशिष्टमादाय तद टितत्वेऽपि न दोष उद्भावनीयः। न च प्रकृते स्वविशिष्ट आप्शब्दस्तद्घटितत्व दाप्शब्दस्य दाशब्देन ग्रहणं न स्यात् , स्वविशिष्टाघटितत्वाभावादिति वाच्यम् अत्र तृतीयसम्बन्धे स्वविशिष्टपदेन वर्णस्य ग्रहणेनादोषात् ।

यद्वा—स्वघटकाघटितत्व-स्वोद्देश्यघटकाघटितत्वोभयसम्बन्धेन स्वविशिष्टाघटि तत्वमित्यस्य विवक्षितत्वेन आप्शब्दस्य पुक्घटकपकारघटितत्वेन पुगुद्देश्यदाघटक कारघटितत्वेन च तद्भिन्नस्यैव पुग्विशिष्टत्वेन तदघटितत्वस्य दाप्शब्दे सत्त्वे दोषाभावादिति दिक् ।

न दारित्यस्य घुत्वमिति । न'न्ववयवावयवः समुदायावयवो भवती'ति लोकन्याये रेफस्य दावयवत्वमक्षतम् , अत एवाङ्गुल्यादीनां देवदत्तावयवहस्ताद्यवयवा देवदत्तावयवत्वम् । तथा च दाग्रहणेन दार्शब्दस्य लोकन्यायेन ग्रहणे घुत्वं दुव रम् । अत एव 'शेरत' इत्यत्र रतेशब्दस्य सार्वधातुकत्वेन 'शीङः सार्वधातुके गुण' इति गुणसिद्धिः । 'यदागम'परिभाषया तु न निर्वाहः, रुटोऽतेशब्दमुद्दिश्य विहित त्वाभावात् । सार्वधातुक इति विषयसप्तम्याश्रयणेन 'शेरत' इत्यत्र वारणे तु–'दधि च्छादयती'त्यत्र तुको दधिशब्दावयवह्रस्वावयत्वेऽपि दधिग्रहणेन ग्रहणात तुग्वि शिष्टस्य पदत्वेन ततः परस्य 'तिङ्ङतिङ' इति निघातसिद्धिः । न च 'तस्मिन्नि'ति परिभाषोपस्थित'पूर्वस्ये'ति विशेष्यमादाय तदन्तविधिना 'दधी'त्यस्य तुग्विधानेन 'यदागम'परिभाषयैव निघातसिद्धेर्न्यायस्य शास्त्रे प्रवृत्तौ फलाभाव इति वाच्यम् ह्रस्वस्येत्यस्य षष्ठ्यन्तत्वेन षष्ठ्यर्थंशविकलस्यैव पूर्वमात्रस्योपस्थितौ तदन्तविधेरस म्भवात् 'परमं दधिच्छादयती'त्यत्र 'वृक्षप्रचलन' न्यायेन 'परमं दधी'त्यस्यैव तुग्वि

---

न पूर्वोक्तदोष इति वाच्यम् ; एवं सति दापेरपि स्ववैशिष्ट्यस्य सत्त्वेन यत्र ण्यन्तार्थनिरूपितोप सर्गत्वं तत्र दापौ दात्वातिदेशेन घुत्वाण्णत्वापत्तेः । यदि च स्वानवयवत्व–स्वोद्देश्यकागमानवयव त्वैतदुभयसम्बन्धेन स्वविशिष्टवर्णाघटितत्वसम्बन्धेन स्ववृत्तिधर्मारोपः इत्युच्यते; तदा निरुक्तोभय सम्बन्धेन स्वविशिष्टोदासीनवर्णाघटितत्वस्य पकारमात्रेऽपि सत्त्वेन तत्रापि दात्वस्यारोपः प्रसज्येत । न चेष्टापत्तिः; 'रामाणाम्' इत्यत्रापि नकारमात्रे आगमिवृत्तिसुप्त्वातिदेशे 'पदान्तस्य' इति णत्वनिषेधापत्तेरतो निष्कर्षमाह—आगमवैशिष्ट्यञ्चेत्यादिः ।

यत्पदोत्तरषष्ठ्यर्थे निरूपितत्वमभ्युपेत्य तस्य प्रथमोपस्थिते आगमपदार्थघटकेऽवयवत्वे अन्वयं परित्यज्य उद्देश्यत्वस्य षष्ठ्यर्थत्वं स्वीकृत्य तस्य पश्चादुपस्थितविधेयतापदार्थेऽन्वयस्य फलमाह—मूले-यमुद्दिश्येत्यादिः ।

'आने मुक्' इति मुग्विधानसामर्थ्यादेषाऽनित्या; अन्यथा 'पचमान' इत्या-

---

धानापत्त्या स्वरानापत्तेस्तादवस्थ्याच्च। बहिरङ्गपरिभाषया तु न निस्तारः; लुग्विषये तदप्रवृत्तेरिति चेन्न। द्युटयुलोष्टित्वेन तस्यैव स्वावयवस्यावयवः स्वग्रहणेन गृह्यते, यत्रावयवत्वमारोपणीयं तदवयवित्वज्ञानप्राक्कालिको यत्र स्वावयवे स्वनिरूपितावयवत्वग्रहः इत्यर्थस्य ज्ञापनेन दारशब्दघटकाकारे रेफनिरूपितावयवित्वग्रहात् प्राक् दानिरूपितावयवत्वग्रहाभावात् 'उरण् रपर' इति शास्त्रेण रेफपरावयवस्यैवाकारस्य ऋकारस्थाने आदेशबोधनात्।

केचित्तु—'यमुद्दिश्ये'त्यत्रोद्देश्यता चापर्याप्ताऽपि गृह्यते, तेन 'शेरत' इत्यत्राच्छब्दपर्याप्ताया अपि रुडुद्देश्यताया अतेशब्दे अपर्याप्त्या सत्त्वात् 'यदागम' परिभाषयैव 'रत' इत्यस्यातेग्रहणेन ग्रहणात् गुणसिद्धिः। 'दधिच्छादयती'त्यत्रापि तुगुद्देश्यताया अपर्याप्त्या दधिशब्दे सत्त्वेन स्वरसिद्धिश्चेति फलाभावादत्र शास्त्रे 'अवयवावयव' न्यायस्य न प्रवृत्तिः। अपर्याप्ताऽप्युद्देश्यता विधानकाले विद्यमानेषूद्देश्यघटितेषु तद्घटकेष्वेव, नोदासीनेषु विधानोत्तरं सङ्घटितेषु वेति 'प्रनिदारयती'त्यत्र रेफविधानकाले दारूपाभावाद्दाशब्दे रेफनिरूपितोद्देश्यताया अपर्याप्ताया अप्यभावेन न दारित्यस्य दापदेन ग्रहणम्। एतल्लोकप्रसिद्धार्थे द्युटयुलोष्टित्वमप्युपोद्बलकं बोध्यमिति वदन्ति।

अन्ये तु—'यदागमा' इत्यस्य 'यदवयवा आगमा' इत्येवार्थो, न तु यमुद्दिश्येत्यादिः। 'अवयवे'ति न्यायश्चागमात्पूर्वं दृष्टो यस्समुदायावयवस्तदवयवस्यैव समुदायावयवत्वमित्युक्तार्थविषयकोऽन्नैव, द्युटयुलोष्टित्वमपि गमकम्। प्रकृते रेफस्याकारावयवत्वप्रतिपत्तिकाले त्वाकारस्य दाशब्दावयवत्वप्रतिपत्तिरिति वदन्ति।

ननु दात्वस्य दकारोत्तराकारत्वरूपतया दारित्यत्रारशब्दे आत्वस्य यदागमन्यायेन दकारोत्तरत्वस्य तत्र स्वतःसिद्धत्वेनोक्तदात्वस्य सत्त्वाद् घुत्वापत्तिरित्यत आह—मुग्विधानसामर्थ्यादिति। अस्या अनित्यत्वेनारशब्दे आत्वाभावेनोक्तदात्वाभा-

आदेशबोधनादिति। नन्वेवमपि 'यमुद्दिश्ये' त्यादिग्रन्थासङ्गतिरेव, अवयवत्वेऽन्वयेऽपि प्रकृते'ऽवयवावयव'न्यायस्य अप्रवृत्त्या दोषाभावादित्यत आह—केचित्त्विति। वदन्तीति। एवञ्चावयवत्वेऽन्वयं विहाय विधेयतायामन्वये लाघवं सूचितम्, अवयवावयवन्यायफलानामनेनैव सङ्ग्रहादिति भावः।

वस्तुतस्तु—अवयवत्वेऽप्यन्वये न दोष इत्याशयेनाह—अन्ये त्विति।

अकारस्य मुगिति। अकारस्येत्यस्य अदन्तस्य शब्दस्वरूपस्येत्यर्थः, तेन 'पचमान' इत्यत्र 'दीव्यमान' इत्यत्र च 'तास्यनुदात्ते'ति स्वरः सिद्ध्यति।

**दावकारस्य मुकि अनया परिभाषया विशिष्टस्य सवर्णदीर्घे तद्वैयर्थ्यं**

---

**वाऽऽपत्तिरिति भावः।** विशिष्टस्य सवर्णदीर्घ इति। **न चामूशब्दे आकारसवर्णत्वाभावात्तदप्राप्तिः; अनया परिभाषयाऽमूशब्दे कण्ठस्थानमात्रजन्यत्वस्य आकारसवर्णत्वस्य वातिदेशेष्टसिद्धेः। 'निर्दिश्यमान' परिभाषायास्तु नात्र विषयः 'अक' इत्यस्य पञ्चम्यन्तत्वात्, एकादेशविषये तदप्रवृत्तेश्च। अन्यथा अस्या 'निर्दिश्यमानावयवेतरस्यादेशा न भवन्ती'ति वक्ष्यमाणपर्यवसितार्थे पूर्वस्य निर्दिश्यमानस्य पररूपनिर्दिश्यमानावयवेतरत्वम्, परस्य तस्य पूर्वरूपनिर्दिश्यमानावयवेतरत्वमिति कस्याप्यादेशाप्राप्तौ तत्तत्सूत्रवैयर्थ्यापत्तेः।** तद्वैयर्थ्यमिति। **न 'चातो ङित' इत्येतद्बाधनार्थं तच्चरितार्थम्, अन्यथा दीर्घं बाधित्वाऽपवादत्वादियादेशापत्तेरिति वाच्यम्; 'अकः सवर्ण' इत्यत्र 'आने' इति इयादेशबाधकदीर्घविधानेन 'आतो ङित' इत्यत्र 'नानस्ये'ति निषेधेन वा तद्बाधसिद्धेर्मुग्विधानवैयर्थ्यस्य सूपपादत्वात्। न च मुकि अमूशब्दस्य कण्ठ्यौष्ठ्यतया आकारौकारयोर्विधानार्थं तच्चरितार्थमिति वाच्यम्; तावन्मात्रफलकत्वे 'ओदानस्ये'ति न्यासेन निर्वाहात्। न 'चातो गुण' इति पररूपेण ओकार एव स्यात्, मुग्विधाने तु कदाचिदौकारोऽपि भवतीति तच्चरितार्थमिति वाच्यम्; 'उदानस्ये' त्युकारविधानेनाप्योकारसिद्धेरोकारविधानसामर्थ्ये'नातो गुण' इत्यस्य विकल्पेन बाधात् पर्यायेणोभयसिद्धेः। न च मुकि ओकारे वा मात्राद्वयस्यैव सत्त्वेन लाघवाभावः; 'आद्यन्तावि'त्यस्याप्रवृत्त्या ज्ञानलाघवसत्त्वात्।**

---

**पञ्चम्यन्तत्वादिति।** न च षष्ठ्यन्तविशेषणपञ्चम्यन्तसप्तम्यन्तपदेऽपि निर्दिश्यमानपरिभाषाप्रवृत्तिरावश्यकी, अत एव 'पचेयुः' इत्यत्र 'या+उसित्यत्रोस्त्वबुद्धावपि' 'पच+इयुस्' इत्यवस्थायां परत्वात् 'उस्यपदान्तादि'ति पररूपं न। एवञ्च प्रकृतेऽप्यक्पदे परिभाषोपस्थितौ कथं प्राप्तिरिति वाच्यम्; 'ओमाङोश्च' इत्यस्य 'उस्यपदान्तादि'ति संहितापाठे प्रश्लिष्टलुप्तसप्तम्यन्तेन **उकारपदेन** तदादिविधौ 'अपदान्तादकारादुकारादावुसि परे' इत्यर्थे नोकारादित्वस्य वर्णमात्रवृत्तिधर्मघटितत्वेन 'यदागम'परिभाषया तादृशधर्मस्याऽऽनेतुमशक्यत्वात्। 'पचेयुरि'त्याद्यर्थं षष्ठ्यन्तविशेषणसप्तम्यन्तपदे 'निर्दिश्यमान' परिभाषाप्रवृत्तावपि षष्ठ्यन्तविशेषणपञ्चम्यन्तपदे तत्प्रवृत्तौ मानाभावाच्च। ननु—पूर्वपरयोरित्यस्य षष्ठ्यन्तत्वेन तत्प्राप्तिरस्तीत्यत आह—**एकादेशविषये तदप्रवृत्तेश्चेति। निर्दिश्यमानावयवेतरस्यादेशा न भवन्तीतीति।** अत एव अङ्गपदीयनिर्दिश्यमानत्वमादाय समुदायस्य न जरसादेशः तच्छास्त्रघटकयत्किञ्चित्पदीयनिर्दिश्यमानस्य तच्छास्त्रघटकपदीयनिर्दिश्यमानावयवेतरस्य आदेशा न भवन्तीत्यर्थः। एवं 'ज्वरत्वरे'ति सूत्रेऽपि वैयर्थ्यापत्त्या 'निर्दिश्यमाने'ति परिभाषाया अप्रवृत्तिः। एतेन—तत्र उपधारूपनिर्दिश्यमानस्य तच्छास्त्रीयवकारपदीयनिर्दिश्यमानावयवेतरत्वं वकाररूपनिर्दिश्यमानस्य तदितररूपनिर्दिश्यमानावयवेतरत्वमिति आदेशानापत्तिरिति परास्तम्।

यत्तु—पूर्वपरयोरिति षष्ठ्यन्तपदीयनिर्दिश्यमानत्वं समुदाय एवेति। तन्न विचारसहम्; तथा हि—स्वजन्योपस्थितीयविषयताश्रयत्व-स्वजन्योपस्थितीयविषयताश्रयविशिष्टवर्णाघटितत्वैतदुभयसम्बन्धेन षष्ठीप्रकृतिविशिष्टत्वं तत्; वर्णे विषयताश्रयवैशिष्ट्यञ्च—स्वावधिकपूर्वत्व-स्वनिष्ठो-

**स्पष्टमेव, तेन 'दिदीय' इत्यादौ यणादि न,**

---

वस्तुतस्तु—औकारस्य विवृततमत्वेन विवृततरत्वरूपप्रयत्नसाम्यान्मुक्यपि ओकारस्यैव दीर्घेण सिद्धेस्तस्य च 'उदानस्ये'ति न्यासेन सिद्ध्या मुग्विधानं व्यर्थमिति मूलाशयः। न चानुनासिकदीर्घविधानार्थं मुग्विधानमिति वाच्यम्; तस्यानुनासिकौकारमात्रफलकत्वे पादमात्रिकमुग्विधानेन तत्सिद्धेरर्धमात्रिकमुग्विधानस्य तज्ज्ञापकत्वमित्याशयात् ।

केचित्— अम्शब्दे ऽशब्दवृत्तिनिरनुनासिकत्व-कण्ठस्थानमात्रजन्यत्वयो 'र्यदागम'न्यायेनातिदेशेन दीर्घेऽपि अतिदिश्यमानेति सिद्धान्तेनात्रौकारस्यानुनासिकस्य वा अप्राप्तेर्मूलोक्तज्ञापकं निर्दुष्टमेवेति वदन्ति ।

न 'चातोर्मि'त्यत्रेवात्रापि सर्वथा निरवकाशत्वेन मुका सवर्णदीर्घबाधे मुगुत्तरं लुक इव दीर्घस्याप्राप्त्या ज्ञापकासम्भव इति वाच्यम्; मुग्विधानवैयर्थ्यस्य निर्विवादतया तेन सामर्थ्याच्छास्त्रबाधस्यानैयायिकस्य कल्पनापेक्षया न्यायसिद्धैतदनित्यत्वज्ञापनस्यैव युक्तत्वात् ।

अनित्यत्वफलमाह—दिदीय इति । न च युड्विधानसामर्थ्यादेवात्र यणभावसिद्ध्या नैतदनित्यत्वफलमिति वाच्यम्; यद्वयसम्पादनेन युटश्चारितार्थ्यात्; यद्यपि

---

द्देश्यताश्रयावयवत्वावच्छिन्नविषयताश्रयत्वैतदन्यतरसम्बन्धेन । एवञ्च 'दैत्यारि:' इत्यत्र षष्ठीप्रकृतिजन्योपस्थितीयविषयताश्रयत्वं यथा—पूर्वपरोभयात्मके समुदाये तथाऽरिघटकेऽकारेऽपि, तस्य परत्वेनोपस्थितीयविषयताश्रयत्वात्; तदवधिकपूर्वत्वञ्च दैत्यघटकेऽकारे इति उपस्थितीयविषयताश्रयविशिष्टवर्णघटितत्वमेव 'अ अ' इत्येतत्समुदाये, न तु तदघटितत्वमिति समुदायस्य निर्दिश्यमानत्वं दुरुपपादम्; प्रत्येकं तच्चास्तीति सुधीभिर्विवेचनीयम् ।

विवृततरत्वरूपप्रयत्नसाम्यादिति । नारदशिक्षाया दीर्घाकारस्य विवृततरत्वोक्तेरिति भावः । पादमात्रिकमुग्विधानेनेति । केचित्तु —'ॐ दानस्ये'ति न्यासेन अनुनासिकोकारविधानेन अनुनासिकौकारस्य सिद्धेर्नुग्विधानं परिभाषाऽनित्यत्वे ज्ञापकमिति वदन्ति । तदसत्; इत्संज्ञालोपाभ्यां तदपहारात् । न च फलाभावः; अस्त्रियामुगित्वेन नुमः, स्त्रियामुगितश्चेति ङीपश्च फलसम्भवात् । न च 'त्यागिनौ' इत्यादौ नुमो वारणाय झलन्तस्यैव नुमो विधानात् नुम आतिदेशिकटित्वमादाय शेखरकृन्मतेन प्राप्तस्य ङीपो वारणायाऽऽवश्यकत्वेनाजादिगणपाठेन च ङीपश्च न प्राप्तिरिति वाच्यम्; 'शानन् प्रत्ययान्ते ङीपः प्राप्तेस्तथा न्यासस्य वक्तुमशक्यत्वात्, प्राचां मते 'पचमान' इत्यत्र ङीपः प्रसङ्गाच्च ।

पादमात्रिकमकारसत्त्वे मानाभावादाह—केचित्त्विति ।

**दिदीय इतीति ।** अत्र हि युडुत्तरं परिभाषया अजादित्वमादाय यणः प्रवृत्त्या लक्ष्यासिद्धिः स्पष्टैव । न च 'तक्र' न्यायेन सकललक्ष्यप्राप्ते यणि इयङि च युटा बाधिते युडुत्तरं न तयोः प्रवृत्तिः स्यादिति वाच्यम्; इयङः सकललक्ष्यप्राप्तत्वेऽपि यणो दीयतेर्घञर्थक-कप्रत्यये 'दीय' इत्यादावेकाचि अप्राप्त्या सकललक्ष्यप्राप्तत्वायोगात् । धातोरेव युग्विधानं तु न सम्यक्; प्रागुक्तघञर्थककप्रत्ययान्तात्टापि तदन्तात् कप्रत्यये 'दीयिके'त्यत्र 'धात्वन्तयकोस्तु नित्यमि'ति नित्यमित्त्वापत्तेः ।

'जहारे'त्यादा 'वातऔ णल' इति च न।

न चाकारादेर्वर्णस्य वर्णान्तरमवयवः कथमिति वाच्यम्, वचनेनावयवत्वबोधनात्। तस्य चावयवत्वसादृश्ये पर्यवसानं बोध्यम्।

---

'यणो मय' इति द्वित्वेनापि यद्वयं सिद्ध्यति, 'हलो यमामि'ति लोपस्य वैकल्पिकत्वात्; तथापि यकारत्रयघटितरूपसम्पादनाय युड्विधानस्य चारितार्थ्यमित्याशयात्।

ननु—'वुग्युटावि'ति वार्तिकारम्भसामर्थ्यादेवात्र यणोऽप्रवृत्तेर्नैतदनित्यत्वस्य फलमित्यरुचेराह—जहारेति। 'अङ्गसंज्ञानिमित्तस्याऽऽतः परस्य णल औकार' इत्यर्थस्य सिद्धान्तसिद्धतया 'यदागम'न्यायेन आरित्यस्याऽऽत्वेन ततः परस्य णल औत्वापत्तिरिति भावः। न च 'सन्निपात' परिभाषया णल्निमित्तकार्शब्दस्यौत्वं प्रति निमित्तता न स्यादिति वाच्यम्, 'आत औ णल' इत्येतद्विषये 'सन्निपात' परिभाषाया अप्रवृत्तेः। अत एव 'ममावि'त्यत्र णल्रूपाशित्येज्विषयं निमित्तीकृत्य जाताऽऽत्वस्याप्यौकारादेशं प्रति निमित्ततयोक्तरूपसिद्धिः। आदिना भवेयुरित्यादिसङ्ग्रहः। अत्र 'अतो येय' इतीयादेशे तद्विशिष्टस्य 'इयुसि'त्यस्य उसग्रहणेनोक्तपरिभाषया ग्रहणे, 'भव+इयुसि'त्यत्र 'उस्यपदान्तादि'ति पररूपापत्तिरतोऽनित्यत्वमावश्यकमिति भावः। वचनेनेति। 'आद्यन्तौ टकितौ, उरण् रपर' इत्यादिवचनेनेत्यर्थः। तस्य=आगमस्य। सादृश्यं चावयवत्वग्रहणग्राह्यत्वरूपम्। तथा चेयं परिभाषा नापूर्वा, किन्त्वर्थतः सिद्धेति भावः।

---

वुग्युटाविति वार्तिकारम्भसामर्थ्यादिति। इदं चिन्त्यम्; तत्सामर्थ्यात् 'एरनेकाच' इति यणो बाधेपि 'दिदीये'त्यत्र 'इको यणचि' इति यणापत्तेर्दुर्वारत्वात्। न च तत्सामर्थ्यात् 'इको यणचि' इत्यस्यापि बाधोऽस्त्विति वाच्यम्; 'दिदीयाते' इत्यत्र युड्विशिष्टेऽजादित्वारोपेऽपि अच्त्वारोपाभावात्, आकारमुद्दिश्य युटोऽविधानात्। एवञ्च तत्र 'इको यणचि' इत्यस्याप्राप्त्या 'एरनेकाच' इत्यस्य बाधेन तच्चारितार्थ्यात्।

वस्तुतस्तु—दीङमुपजीव्य जायमानो युट् तद्विघातकयण्विधाननिमित्तं स्यादिति 'सन्निपात'परिभाषाया यणप्राप्त्या नेदं फलम्। न च कृतेऽपि यणि स्थानिवत्त्वेन दीङ्त्वान्न सन्निपातविरोधः, आतिदेशिकसन्निपातविघाताभावमादाय परिभाषाया अप्रवृत्तेरसिद्धान्तात्। अत एव हे गौरि' इत्यादौ सम्बुद्धित्वमुपजीव्य जायमानो ह्रस्वः सम्बुद्धित्वविघातको न स्यादित्याशङ्क्य, परिभाषाऽनित्यत्वेन समाधानपरं 'कृन्मेजन्त' इति सूत्रस्थं भाष्यं सङ्गच्छते; अन्यथा—प्रत्ययलक्षणेन सम्बुद्धित्वात् संनिपातविघाताभावादनित्यत्वपर्यन्तमनुधावनं विफलमेव स्यात्।

अत एव ममावित्यत्रेति। वस्तुतस्तु—'मि+अ' इत्यवस्थायां 'द्विर्वचनेऽचि' इत्यनेन पूर्वमात्त्वं बाधित्वा द्वित्वे कृते पश्चादात्वे 'मिमौ' इत्यनिष्टरूपवारणाय, 'णिज्निमित्ते' इति विषयसप्तमीत्वस्वीकारस्यावश्यकत्वेन तेन च सन्निपातस्यैवाभावेन परिभाषायाः प्राप्त्यभावेन तत्सामर्थ्यात् पूर्वोक्तकल्पनाया अप्रसक्तिरेवेति बोध्यम्।

भवेयुरित्यादिसङ्ग्रह इति। आदिना 'जहार' इत्यत्र सन्धिकार्ये सन्निपातपरिभाषाया अप्रवृत्त्या आर्विशिष्टे आत्वारोपात् 'अकः सवर्णे०' इति दीर्घस्य, भूयास्ताम्' इत्यत्र यास्तामिति विशिष्टे वलादित्वस्यातिदेशेनेडापत्तेश्चानित्यत्वेन वारणफलं बोध्यम्।

**न चोक्तज्ञापकाद्वर्णग्रहणेऽस्या अप्रवृत्तिरिति वाच्यम् ; 'आने मुक्' इति सूत्र-भाष्येऽकारस्याङ्गावयवस्य मुगित्यर्थे 'पचमान' इत्यत्र 'तास्यनुदात्तेत्' इति स्वरो न स्यादित्याशङ्क्याद्रुपदेशभक्तस्तद्ग्रहणेन ग्राहिष्यत इत्युक्तेरसङ्गत्यापत्तेः ।**

**किञ्च—ङमन्तपदावयवस्य ह्रस्वात्परस्य ङमो ङमुडित्यर्थे 'कुर्वन्नास्त' इत्यादौ ङमो ङमुडागमे णत्वप्राप्तिमाशङ्क्य,'यदागमा' इति न्यायेनाऽऽद्य-नस्यापि पदान्तग्रहणेन ग्रहणात् 'पदान्तस्य' इति निषेध इत्यनया परिभाषया 'ऽऽगमानामागमिधर्मवैशिष्ट्यमपि बोध्यत' इत्याशयक 'ङमुट्' सूत्रस्थभाष्यासङ्गतेः ।**

---

ननु ज्ञापकसाजात्याद्वर्णग्रहण एवैषाऽनित्येति प्राचीनमतं कटाक्षयन् शङ्कते—न चेति । वर्णग्रहण इति । वर्णमात्रवृत्तिधर्मातिदेशे तद्घटितधर्मातिदेशे चेत्यर्थः । अकारस्येति । अङ्गावयवस्याकारान्तस्येत्यर्थः । भाष्यप्रामाण्याच्छब्दस्वरूपं विशेष्य मादाय 'आने मुगि'त्यत्र तदन्तविधिः, तेन 'दीव्यमान' इत्यत्रोक्तस्वरसिद्धिः । अदुपदेशेति । 'तास्यनुदात्तेदि'ति सूत्रे'ऽदुपदेशादि'त्यस्यादन्तोपदिश्यमानादित्यर्थः, तेन 'दीव्यमान' इत्यत्र स्वरसिद्धिः । 'पचमान' इत्यत्रादन्तत्वं शपो व्यपदेशिवद्भावेन बोध्यम् । ग्राहिष्यत इति । 'यदागम' परिभाषयेत्यर्थः ।

**नन्वस्माद् भाष्याद्वर्णमात्रवृत्तिधर्मघटितधर्मातिदेशे परिभाषाप्रवृत्तावपि ज्ञापकसाजात्याद्वर्णमात्रवृत्तिधर्मातिदेशे न प्रवर्तत इति प्राचीनैः स्वीक्रियमाणे न दोष इत्यरुचेराह—**किञ्चेति । पदान्तग्रहणेनेति । **पदान्तनग्रहणेनेत्यर्थः; पदान्तनत्वस्य वर्णमात्रवृत्तिधर्मत्वेन त्वन्मते तस्यातिदेष्टुमशक्यतयाऽनया णत्ववारणपरभाष्यासङ्गतिः स्पष्टैवेति भावः ।** आगमानामिति । **परिभाषायामागमा इत्यावर्तते, तेनाऽऽगमा आगमविशिष्टाश्चागमिग्रहणेन गृह्यन्त इत्यर्थः ।**

---

**वर्णमात्रवृत्तिधर्मातिदेशे तद्घटितधर्मातिदेशे चेत्यर्थ इति ।** फलतीति शेषः । वर्णग्रहणे इति ज्ञाप्यस्य वाच्यार्थस्तु—अनुगतरूपेण वर्णत्वव्याप्यविषयताप्रयोजकपदप्रतिपाद्यतावच्छेदकधर्मातिदेशे न प्रवर्तते इति, तेन उभयत्राऽप्यप्रवृत्तिः सिद्ध्यति ।

एतेन—ज्ञापकसाजात्यात् वर्णमात्रवृत्तिधर्मातिदेशे एवाप्रवृत्तिः स्यात् , तेन 'भूयास्ताम्' इत्यत्र ताम्वृत्तिबलादित्वमाश्रित्येडागमः, 'पञ्चानाम्, षण्णाम्' इत्यत्र नलोपजश्त्वे च न स्यातामित्यपास्तम् ।

उक्तभाष्यविरोधं परिहरति—**नन्वस्मादिति ।** अयम्भावः—मुग्विधानसामर्थ्यात् वर्णमात्रवृत्तिधर्मातिदेशे एव परिभाषा न प्रवर्तत इति सार्वत्रिकम्, 'पञ्चानामि'ति निर्देशात् 'अनामी'ति पर्युदासाच्च वर्णमात्रवृत्तिधर्मघटितधर्मातिदेशे च क्वचिन्न प्रवर्तते, प्रवर्तते चेत्यननुगतरूपेणैव परिभाषानित्यत्वं कल्पयन्ति । तथा च नोक्तभाष्यविरोधोऽस्तीति । एवं च 'धर्मघटितधर्मातिदेशे' इति ग्रन्थोत्तरं क्वचिदिति शेषः पूरणीयः ।

किञ्च—गुणादेरपरत्वे रेफविशिष्टे गुणत्वाद्येष्टव्यम् ; अन्यथा ऋकारस्य गुणवृद्धी अरारावेवेति नियमो न स्यात् ; तच्च 'वर्णग्रहण' एतदप्रवृत्तौ न सङ्ग-

---

वस्तुतस्त्विदं चिन्त्यम्—आगमानामागमिवृत्तिधर्मबोधने मानाभावात्, फलाभावा'द्ग्रामाणामि'त्यत्र नुटि आमवृत्तिपदान्तत्वस्यातिदेशापत्तौ णत्वानापत्तेः, 'सर्वेषामि'त्यत्र षत्वानापत्तेश्च। किञ्च—त्वद्रीत्याऽप्याऽऽद्यनकारे नत्वस्य सिद्धतया पदान्तत्वधर्मस्य वर्णमात्रवृत्तित्वाभावेन तदतिदेशेऽपि नोक्तभाष्यविरोधः। किञ्च—'पदान्तस्ये' त्यस्य 'पदान्तनकारावयवस्य रषाभ्यां परस्य णत्वं ने'त्यर्थेनाद्यनकारस्याञ्जस्येन णत्ववारणसम्भवे, क्लिष्टकल्पनया तद्वारणमयुक्तम्। किञ्च—भाष्ये 'पदान्तभक्तस्तद्ग्रहणेन ग्राहिष्यत' इति लेखनमात्रेण 'यदागम' परिभाषया वारणं भाष्यकृता कृतमित्येवं कल्पने मानाभावः। भाष्ये 'तद्ग्रहणेने'त्यस्य पदान्तावयवग्रहणेनेत्यर्थः, 'सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वात्त'च्छब्देन भक्तस्यैव ग्रहणमुचितं, न पदान्तस्येति 'पदान्तग्रहणेन ग्रहणादि'त्यर्थोऽप्ययुक्त एव। किं 'श्चादुपदेशभक्तस्तद्ग्रहणेन ग्राहिष्यत' इति पूर्वोक्तभाष्येणापि न 'यदागम'परिभाषया वारणं कृतं, किन्तूपदेशपदस्वारस्येन 'अधोगि'त्यत्र सम्प्रति दादित्वाभावेऽप्यौपदेशिकदादित्वं 'यदागम'परिभाषां विनैव त्वन्मते 'सुलभम्; तथा 'पचमान' इत्यत्र मुकि शपो मान्तत्वेऽप्यौपदेशिकाकारान्तग्रहणेन ग्रहणे बाधकाभावः। भाष्ये 'ऽदुपदेशात्त' इत्य'स्योपदेशेऽकारान्तभक्तस्तद्ग्रहणेनौपदेशिकाकारान्तग्रहणेन ग्राहिष्यते' भौत्स्यन इति स्वारसिकार्थेनैवोपपत्ते 'र्यदागम'परिभाषासञ्चारं प्रकल्प्य, प्राचीनमते भाष्यविरोधकल्पनमप्ययुक्तमेव; इत एव वाऽरुचेराह— किञ्चेति। गुणत्वाद्येष्टव्यमिति। तच्च वर्णमात्रवृत्तीति भावः।

नियमो न स्यादिति। वस्तुतः—अयं नियमो न भाष्योक्त इति न प्राचीना..।

---

बाधकाभाव इति। अयम्भावः—यथा 'अदोह्' इत्यस्मिन् 'दुह्'धातुः उपदेशे दादिरिति कृत्वा घत्वं सिद्ध्यति। एवं 'पचमान' इत्यत्र मुग्विशिष्टेऽमीत्यस्मिन् 'अयमुपदेशे अकारान्त' इति ज्ञानेनाकारान्तोपदिश्यमानत्वस्य सिद्धत्वात् स्वरः सिद्ध्यति।

ननु उपदेशेऽदन्तोऽकार एव न मुग्विशिष्टः, वर्णग्रहणे परिभाषाऽप्रवृत्त्या अदन्तत्वानतिदेशेन 'अकार एवायम्–अम्' इति बुद्धेरभावादिति चेत्—सत्यम्। माऽस्तु परिभाषयाऽदन्तत्वबुद्धिः, परं योऽयमुपदेशेऽकारः स एवायं मकारावयवकः सम्पन्न इति 'आद्यन्तौ टकितौ' इति शास्त्रबलेन धर्मितादात्म्यारोपे बाधकाभावात्; न हि धर्मितादात्म्यारोपे धर्मारोपः कारणं भवति। यद्वा—अन्येन केनचित् शप्त्वादिना धर्मेणाऽऽरोपे प्रतिबन्धकाभावेन तदभेदबुद्धेर्निराबाधात्। किञ्च—उपदिश्यमानत्वस्य अनतिदिष्टस्यैव ग्रहणेन प्रकृते तदतिदेशेन स्वरसिद्धिकथनानुपपत्तिरेव। अन्यथा—'हत' इत्यादौ स्वरवारणाय कृतस्य उपदेशग्रहणस्य नलोपे कृते केवले हशब्दे अदन्तत्वस्य सद्भावेनैकदेशविकृतन्यायेन उपदिश्यमानत्वस्यापि सत्त्वेन कृतेऽप्युपदेशग्रहणे स्वरप्राप्त्या तद्वैयर्थ्यापत्तिः। अपि च 'पचाव.' इत्यत्र दीर्घे कृते अदन्तोपदिश्यमानत्वाभावेन स्वरो न

च्छते । अत एव 'रदाभ्यामि'ति सूत्रे भाष्यं—"गुणो भवति, वृद्धिर्भवति, रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्तत" इति । अत एव 'नेटि' 'पोरनिटि' इत्यादि चरितार्थम् ।

'अनागमकानां सागमका आदेशा' इत्यस्य त्वयमर्थः—आर्धधातुकस्ये-

---

भाष्यविरोधः । मूर्धस्थानिकवर्णघटितत्वेन सादृश्याभावेऽपि रेफावयवकत्व-धर्मेण सादृश्यमादाय 'ऋकारस्य गुणवृद्धी अरारावेवे'त्यस्योपपत्तेर्न लव्यदोष-लेशोऽपीति तत्त्वम् । 'रदाभ्यामि'त्यत्र भाष्ये 'रेफशिरा गुणवृद्धिसंज्ञक' इत्यत्र नाभेदान्वयः, किन्तु गुणवृद्धिसंज्ञकोऽभिनिर्वर्तते; स च 'रेफशिरा, उरण्रपर' इति शास्त्राद्भवतीत्यर्थः । लोकसिद्धाया अस्याः परिभाषायाः ज्ञापकसिद्धत्वमप्याह—अत एवेति । उक्तपरिभाषाया अभावे तु—इड्विशिष्टे आर्धधातुकत्वाद्यभावे-'नानिटी'ति व्यर्थमेव स्यादिति भावः ।

ननु—शास्त्रेणाऽऽगमिनामागमाद्यवयवोत्पादने शब्दनित्यताहानिः; तद्वारणा-'याऽनागमकानां सागमका आदेशा' इत्यर्थकल्पने स्थानिवद्भावेनेडादौ सिच्त्वस्या-क्षततया प्राप्तवृद्धिवारणाय 'नेटी' त्यादेश्चारितार्थ्ये उक्तपरिभाषाज्ञापकत्वासम्भव इति शङ्कां निराचष्टे—अनागमकानामिति । 'आर्धधातुकस्ये'ति सूत्रे इडित्यत्र 'इः टः आद्य-

---

सिद्ध्येत, अल्विधौ स्थानिवत्त्वाभावात् । मन्मते तु—'अकारोऽयं दीर्घीभूतः' इति तत्त्वप्रत्यभि-ज्ञयाऽभेदबुद्धौ तस्य उपदेशेऽदन्तत्वसत्त्वेन अस्याप्युपदेशेऽदन्तत्वमुपपद्यते ।

ननु शबादीनामुपदेशे हलन्तत्वेन अदन्तत्वं तेषामुपदेशे कथमिति चेन्न । उदीचां माङ' इति निर्देशात् ज्ञापकादनुबन्धानां कार्येष्वप्रतिबन्धकत्वज्ञापनात् । अनेजन्तत्वमुपलक्षणम्—अदन्त-त्वस्यापीति यावत् । स्पष्टं चेदम्—'तास्यनुदात्तादि'ति सूत्रे कैयटे । किञ्च—उपदेशेऽदन्तादित्येवार्थो-भाष्यसम्मतः; अत एव च तत्रैव सूत्रशेषे भाष्यकृतोक्तम्—'सर्वस्योपदेशविशेषणत्वात् सर्वमुपदेश-ग्रहणेन विशेषयिष्यामः, उपदेशेऽनुदात्तेतः उपदेशे ङितः उपदेशेऽकारान्तादि' त्येतत् सर्वमवदा-तम् । एतेन—'उपदेशेऽदन्आदित्याद्यर्थलापनम् —अविचारितरमणीयम्' इति केषाञ्चिदुक्तिरेव अविचारितरमणीया वेदितव्या ।

ननु रेफविशिष्टे गुणत्वाभावे प्राप्यमाणगुणानां मध्ये सर्वेषामेव ऋकारस्याऽऽन्तर्याभावेन विनिगमनाविरहेण कदाचिदेकारोऽपि स्यात् ; विशिष्टस्य गणत्वे तु 'अ-ऋ' इत्यस्य मूर्धस्थानजन्य-घटितत्वेनारारोरपि मूर्धस्थानजन्यघटितत्वात् ऋकारस्य गुणवृद्धी अरारावेवेति नियमोपपत्त्यर्थं गुणत्वातिदेश एष्टव्य इत्यत आह—मूर्धस्थानिकवर्णघटितत्वेनेत्यादिः । 'उरण् रपरः' इति शास्त्रसहकारेण रेफावयवकत्वमकारे गुणेऽस्त्येवेति रेफविशिष्टे'ऽरि' गुणत्वातिदेशो नोपयुज्यत इति भावः ।

लोकसिद्धाया इति । लोके 'देवदत्तस्य' इत्यादिना तत्प्रतिपादनादिति भावः । ज्ञापकसिद्धत्वमपीति । अपिना वचनेनावयवत्वबोधनादित्यनेन 'आद्यन्तावि'ति सूत्रसिद्ध-त्वञ्च गृह्यते ।

डागम इत्यर्थे ज्ञाते, नित्येषु शब्देष्वागमविधानानुपपत्त्याऽर्थापत्तिमूलकवाक्यान्तरकल्पनेनेड्रहितबुद्धिप्रसङ्गे सेड्बुद्धिः कर्तव्येति । एवञ्चादेशेष्विवात्रापि बुद्धिविपरिणाम इति न नित्यत्वहानिः ।

---

वयवो यस्ये'ति बहुव्रीहिणाऽऽर्धधातुकपदस्य स्थानषष्ठ्यन्तताभाश्रित्य, 'वलादेरार्धधातुकस्य स्थाने इकारादिरादेश' इति 'आद्यन्तौ टकिता'विति सूत्रस्थभाष्यमेकदेश्युक्तिरेव; किन्तु नित्येषु शब्देष्वागमविधानान्यथानुपपत्त्याऽर्थापत्तिमूलकवाक्यान्तरकल्पनयैवेड्रहितबुद्धिप्रसङ्गे सेड्बुद्धिः कर्तव्येत्यर्थो, न तु पूर्वोक्तरीत्या स्थानषष्ठीं प्रकल्प्येकाराद्यवयवादेशो विधेय इत्यर्थः । इत्संज्ञकटकयोराद्यन्तसंज्ञायामाट उदात्तत्वानुपपत्तिरूपं दूषणं तु तत्रैव भाष्ये स्पष्टमुक्तमिह विस्तरभयान्नोक्तमिति दिक् ।

केचित्तु—तद्विषयकबुद्धेरेवानित्यत्वमिति प्रदर्शनायार्थापत्तिकल्पितवाक्यस्वरूपमाह—अनागमकानामिति । 'अयमर्थ' इत्यस्येदं प्रयोजनमित्यर्थः; अस्यान्वयश्च 'न शब्दनित्यताहानिरि'त्यत्र बोध्य इति वदन्ति ।

आदेशेष्विवात्रापि बुद्धीति । तथा च कल्पितवाक्येन स्थान्यादेशभावेऽपि बुद्धेरेवानित्यत्वं, न शब्दानामिति भावः ।

---

एकदेश्युक्तिरेवेति । 'आद्यन्तौ टकितौ' इत्यत्र पक्षद्वयं प्रतिपादितं भगवता, एकः परिभाषारूपोऽपरः संज्ञारूपश्च । एवं 'मिदचोऽन्त्यात् परः' इत्यत्रापि, तुल्यन्यायात् । तत्र संज्ञापक्षे—'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यत्र 'अः, टः' आद्यवयवो यस्ये'ति बहुव्रीहौ 'अङ्गस्य स्थाने अडाद्यवयवतानिरूपकोऽन्तरतमादेशो भवती'त्यर्थेन 'अभवत्' इत्यत्र 'भव' इत्यस्य स्थाने 'अभव' इत्यादेशविशिष्टे एव उदात्तता स्यात् इत्यापाद्य, 'अः टः उदात्तो यस्ये'ति त्रिपदबहुव्रीहिं कृत्वा उदात्ताभिन्नाकारादेरेव विधानेन परिहृतम् । अग्रे च त्रिपदसमासाविषये 'आडजादीनाम्' इत्यत्र समुदायस्योदात्ततापत्तिमाशङ्क्य, तत्र 'अटासिद्धमि'ति तत्प्रत्याख्यानेन उत्तरितम् । एवं मिदागमविषये त्रिपदसमासाविषये 'अम्सम्बुद्धौ'' इत्यत्रापि शङ्कासमाधाने कर्तव्ये; तदकरणेन तस्य एकदेश्युक्तित्वं स्पष्टमिति भावः ।

न च 'अनड्वन्' इत्यत्र विशिष्टे उदात्तत्ववारणाय 'चतुरनडुहोरामुदात्तः' इत्यत्र 'अम् सम्बुद्धौ' इत्यत्र 'चतुरनडुहोर्वोदात्त' इति 'वः सम्बुद्धावि'ति च न्यासाभ्यां चतुरनडुह्सम्बुद्ध्युकारस्य वाऽऽदेशविधानेन सम्बुद्धौ च वाऽऽदेशविधानेन नानुपपत्तिरिति वाच्यम् ; अनडुह्शब्दात् णिचि क्विपि टिलोपे अनड्शब्दस्य सौ, एकदेशविकृतन्यायेनेष्ट आम् न स्यात्, चतुरनडुह्सम्बन्ध्युकाराभावात् । किञ्च—'आद्यन्तावि'त्यस्य संज्ञासूत्रत्वं प्रकल्प्य, इडादिविधौ संज्ञाप्रदेशे पदद्वयं प्रकल्प्य, बहुव्रीहिणा साधनेनातिगौरवम् । 'आद्यन्तावि'त्यस्य परिभाषात्वे 'आर्धधातुकस्य' इत्यनेन विहितेटः आगमत्वे क्लृप्ते ''तिप्तसझि०' इत्यनेन विहितेटः पूर्वोत्तरसाहचर्येणादेशत्वं सिद्ध्यति, नत्वागमत्वम् । संज्ञासूत्रत्वे तु—आर्धधातुकस्येत्यत्राप्यादेशस्यैव सत्त्वेन तिबादिविधायके संज्ञात्वापत्तावनिष्टापत्तिः स्यात् । मूलोक्तापिवदिति भाष्यासङ्गतिश्चेति परिभाषापक्ष एव वरीयानिति दिक् ।

स्थानिवत्सूत्रे च नेदृशादेशग्रहणं साक्षादष्टाध्यायीबोधितस्थान्यादेशभावे चारितार्थ्यात् । किञ्चैवं सति स्थानिबुद्ध्यैव कार्यप्रवृत्त्या 'निर्दिश्यमानस्ये'ति परिभाषाया अप्राप्त्याऽडागमसहितस्य पिबाद्यादेशापत्त्या 'लावस्थायामडि'ति भाष्योक्तसिद्धान्तासङ्गतिः । स्थानिवद्भावविषये 'निर्दिश्यमानस्ये'ति परिभाषायाः प्रवृत्तौ 'तिसृणामि'त्यत्र परत्वात्तिस्रादेशे स्थानिवद्भावेन त्रयादेशमाशङ्क्य, 'सकृद्गति'न्यायेन समाधानपरभाष्यासङ्गतिः ।

'एरुरि'त्यादौ स्थानषष्ठीनिर्देशात्तदन्तपरतया पठितवाक्यस्यैव समुदायादेशपरत्वेनाऽऽदेशग्रहणसामर्थ्यात्तस्य स्थानिवत्सूत्रे ग्रहणेन न दोषः । आनुमानिकस्थान्यादेशभावकल्पनेऽपि श्रौतस्थान्यादेशभावस्य न त्याग इ'त्यचः परस्मिन्' इत्यादेर्नासङ्गतिः ।

---

ननु—'एरुरि' त्यादाविव कल्पितस्थान्यादेशभावेऽपि स्थानिवत्सूत्रप्रवृत्ते दुर्वारतया 'नेटी' त्यादेर्ज्ञापकत्वासम्भव इत्यत आह—स्थानिवत्सूत्रे चेति । साक्षादष्टाध्यायीति । पाणिन्युच्चरितपदप्रयोज्यस्थान्यादेशभाव इत्यर्थः । 'एरुरि'त्यादौ तु लक्षणया एरित्यादिपदानामेव तदन्तपरत्वमिति वक्ष्यते । ननु 'घटायोन्मीलितं चक्षुर्न हि पटं न पश्यती'ति न्यायेन तत्र चारितार्थ्येऽपि कल्पितस्याग्रहणे किं मानमत आह—किञ्चेति । एतद्भाष्यबलादेव तस्य न स्थानिवत्सूत्रे ग्रहणमिति भावः ।

नन्वेवमानुमानिकादेशकल्पने 'पटयती' त्यत्राजादेशाभावेन 'अचः परस्मिन्नि'त्यस्याप्राप्त्यापत्तिरत आह—न त्याग इति । सूत्रारम्भसामर्थ्येनाजादेशविधायकसूत्राणामर्थद्वयेऽपि पाणिनितात्पर्यावधारणादिति भावः ।

---

मूले—पिबाद्यादेशापत्त्येति । वस्तुतः—एतावत्पर्यन्तानुधावनं व्यर्थमेव, 'उदस्थादि'त्यादावेव पूर्वसवर्णापत्तेर्जागरूकत्वात् ।

मूले—सिद्धान्तासङ्गतिरिति । तत्र हि 'आसन्' इत्यत्र 'श्नसोरल्लोपः' इत्यल्लोपोत्तरमनजादित्वादाण् न प्राप्नोति, एवं 'आयन्' इत्यत्रापि अन्तरङ्गत्वादिणो यणि अनजादित्वात् स न प्राप्नोति, अतः सूत्रकृता सूत्रमारब्धम्—'असिद्धवदत्राभात्' इति । भाष्यकृता तु—'लुङ्लङ्लृङ्' इति द्विलकारको निर्देश इति लावस्थायामेवाटमङ्गीकृत्य 'असिद्धवदि'ति सूत्रं प्रत्याख्यातमिति सिद्धान्तानुपपत्तिरिति भावः । वस्तुतस्तु—प्रत्याख्यानपक्ष एकदेशिन एव, 'सुमनिष्ठ.' इत्यादौ टेरिति लोपोत्तरं 'नस्तद्धिते' इति लोपप्रसङ्गात् । एवञ्च परत्वात् पिबादेशोत्तरमटि 'अपिबत्' इत्यत्र न दोषः ।

न स्थानिवत्सूत्रे ग्रहणमिति । यथा च तस्य स्थानिवत्सूत्रे ग्रहणेऽपि न दोषस्तथा- 'निर्दिश्यमान' परिभाषानिरूपणावसरे स्फुटीभविष्यति ॥ ११ ॥

एतेन—'यदागमा' इति परिभाषा स्थानिवत्सूत्रेण गतार्थेत्यपास्तम्। एतत्सर्वं 'दा धा घ्वदाबि'ति सूत्रे भाष्ये स्पष्टम्॥ ११॥

नन्वेव'मुदस्थादि'त्यादा'वुदः स्थास्तम्भोः पूर्वस्य' इति पूर्वसवर्णापत्तिरत आह—

## निर्दिश्यमानस्यादेशा भवन्ति॥ १२॥

'षष्ठी स्थानेयोगे'ति सूत्रमावर्तते। तत्र द्वितीयस्यायमर्थः—षष्ठ्यन्तं निर्दिश्यमानमुच्चार्यमाणमुच्चार्यमाणसजातीयमेव निर्दिश्यमानावयवरूपमेव वा

---

एतेन=अनागमकानामिति पूर्वोक्तग्रन्थेन। एतत्सर्वमिति। परिभाषा तद्व्याख्यानमनागमकानामित्यादि सर्वं चेत्यर्थः॥ ११॥

उदस्थादिति। लावस्थायामडिति पक्ष एतत्; अन्यथा सिजन्ताङ्गस्याडागमेन तद्विशिष्टे स्थात्वातिदेशासम्भव एवेति भावः।

आवर्तत इति। वस्तुतस्तु—पदस्य पदान्तरेण सह स्थानपदार्थानुयोगिकसम्बन्धेनान्वयस्य सूत्रं विनाऽप्युत्सर्गत एव लाभात्; सूत्रन्तु निर्दिश्यमानस्यादेशार्थमित्यावृत्तिर्निष्फलैवेति बोध्यम्।

अयमर्थ इति। यतः सेत्यध्याहारः, यतः षष्ठी सा षष्ठीप्रकृतिः, स्थानेन=स्थानपदार्थानुयोगिकसम्बन्धेन, युज्यत इत्यर्थः। तदेतदाह—षष्ठ्यन्तमिति। अतद्गुणसंविज्ञानबहुव्रीहिणा षष्ठीप्रकृतिरित्यर्थः। निर्दिश्यमानपदार्थमाह—उच्चार्यमाणमिति। ननु सूत्रे उच्चार्यमाणस्याऽऽदेशासम्भवादाह—उच्चार्यमाणसजातीयेति। स्वजन्यप्राथमिकोपस्थितिविषय इत्यर्थः, न तु स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नस्तेन गृह्यते। 'अत एव 'हयवरडि'ति सूत्रे 'वृक्षस्तत्रे'त्यत्र 'निर्दिश्यमान' परिभाषया वारणपरं भाष्यं सङ्गच्छते; अन्यथा विसर्गस्य विसर्जनीयपदवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नत्वरूपनिर्दिश्यमानत्वाभावेन परिभाषाऽप्रवृत्त्या तदसङ्गतिः स्पष्टैव। ननु 'तदोः सः सावि'ति सूत्रे 'त्यदादीनाम' इत्यस्यानुवृत्त्या 'त्यदाद्यन्ताङ्गावयवस्य तदोः स' इत्यर्थे 'अतिस्य' इत्यत्रोपसर्गतकारस्यापि सत्वापत्तिः, त्यदादीनामित्यस्य स्थानपदार्थेऽन्वयासम्भवेन तद्व्यावृत्तेरसम्भवादित्यत आह—निर्दिश्यमानावयवरूप-

---

'यदागम'परिभाषापवादसङ्गति सूचयन्नाह मूले—नन्वेवमिति। निर्दिश्यमानस्यादेशा भवन्तीति। निरर्थो नैरन्तर्यम्, दिशिरुच्चारणक्रियः; तथा च स्वकर्मकोच्चारणाव्यवहितप्रतीतिविषयस्य स्थाने आदेशाः स्युरिति फलितोऽर्थः। अव्यवहितत्वञ्च-शास्त्राप्रयोज्यत्वरूपम्।

यतः षष्ठीति। 'उच्चार्यते' इति शेषः।

अन्वयासम्भवेनेति। 'तदोरि'त्यस्यानन्वितापत्त्या इति भावः।

**स्थानेन स्थाननिरूपितसम्बन्धेन युज्यते,न तु प्रतीयमानमित्यर्थस्तेनेदं सिद्धम्।**

**न चास्य 'च्वावि'त्यादौ दीर्घाणामादेशानापत्तिः, तेषां निर्दिश्यमानत्वाभावादिति वाच्यम् ; जातिपक्षे दोषाभावात् । किञ्च—'न भूसुधियोरि'ति**

---

मेवेति । अयम्भावः—'सर्वा अपि' सूत्रघटकषष्ठीप्रकृतयः साक्षात् स्वावयवमात्रघटितपरम्परया स्थानपदार्थेन युज्यन्त इति सूत्रार्थात् 'त्यदानीनाम' इत्यस्यापि स्थानपदार्थे स्वावयवमात्रघटितपरम्परयाऽन्वयेनोपसर्गतकारस्य सत्वे तद्बाधान्न दोषः। निर्दिश्यमानपदार्थे प्राथमिकत्वनिवेशं सूचयति —न तु प्रतीयमानमिति । न तु कथञ्चिदुपस्थितिविषय इत्यर्थः। तेनेदं सिद्धमिति। सूत्रस्येदृशार्थकरणेनार्थतो निर्दिश्यमानस्यादेशा भवन्तीति वचनं सिद्धमित्यर्थः। षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयस्यादेशा भवन्तीति परिभाषार्थः। उपस्थितौ प्राथमिकत्वञ्च—शास्त्रान्तरासहकृतत्वम् , तेनास्थाशब्दस्य यदागमशास्त्रसहकारेणोपस्थितिविषयत्वान्निर्दिश्यमानत्वाभावेन स्थाशब्दस्य निर्दिश्यमानत्वेऽप्युदः परत्वाभावेन न पूर्वसवर्णः। न च 'उदः स्थास्तम्भोरि' त्यस्य 'उदः परो योऽर्थवान् स्थाशब्दस्तदवयवनिर्दिश्यमानावयवस्यादेरल' इत्यर्था'दुदस्थादि' त्यत्रोदः परोऽर्थवान् स्थाशब्दः—अस्था इति, तदवयवनिर्दिश्यमानः—स्थाशब्दः, तदवयवाद्यल्—अकारः, तस्य पूर्वसवर्णापत्तिरिति वाच्यम् ; 'सप्तम्यन्तपञ्चम्यन्तानां निर्दिश्यमान एव साक्षादन्वय' इति सिद्धान्तादर्थवत्स्थाशब्देऽन्वयाभावेनादोषात् ।

उपस्थितौ प्राथमिकत्वनिवेशे दूषणमाह—न चेति । न भूसुधियोरिति । भू-सुधीघटकदीर्घयोरणुदित्शास्त्रसहकारेणैवोपस्थितिविषयत्वेन निर्दिश्यमानत्वाभावाद्गुणोऽप्राप्तेर्निषेधवैयर्थ्यं स्पष्टमेव। न च भू सुधीशब्दयोर्नपुंसकह्रस्वत्वे तच्चारितार्थ्यमिति

---

नपुंसकह्रस्वत्वे तच्चारितार्थ्येति। इदं चिन्त्यम्—परत्वेन नुमा बाधनात् , पुंवद्भावे दीर्घान्तबुद्ध्या चारितार्थ्याभावात् ।

ननु—'आसमन्ताद्भवति तत् कुलमाभु, अः आभु ययोस्तौ आभुवौ' एवमेव 'आसुधियौ' इत्यत्र तच्चारितार्थ्यसम्भवः। एवं सुष्ठु ध्यायति तत्कुलं सुधि, तदिवाचरति सुधर्यति; ततो घञर्थे के चारितार्थ्यम्। न च सुप्परत्वाभावः; तदनुवृत्तेरभावात्। न चानुवृत्तिरभियुक्तैः स्वीक्रियत इति वाच्यम् ; मण्डूकप्लुतौ प्रमाणाभावात्। न च पूर्वसूत्रेऽपि तदनुवृत्तिरस्त्विति वाच्यम् ; 'वर्षाभ्वी कमठी डुलिः' इति प्रयोगविरोधापत्तेः; 'सुद्ध्युपास्यः' इत्यत्र नानेन निषेधः, अनन्तरस्येति न्यायात्। न च 'निर्दिश्यमान' परिभाषया ह्रस्व एव कथम् ? अजपदीयानिर्दिश्यमानत्वाभावादिति वाच्यम्; तत्र 'निर्दिश्यमान' परिभाषयाभावेन तस्या अप्राप्तेः; तस्याश्च शास्त्रासहकारेण उपस्थितिविषय एव स्थानपदार्थेन युज्यत इत्यर्थः। प्रकृते चाऽजपदात् शास्त्रासहकारेणोपस्थितिविषयस्य कस्याप्यर्थस्यासम्भव एव, अणुदित्शास्त्रेण दीर्घादीनामिव ह्रस्वाकारादीनामपि आदिरन्त्येनेति शास्त्रसहकारेणैव उपस्थितिविषयत्वात्। एतेन—अच्पदीयनिर्दिश्यमानस्यैव ह्रस्वत्वेन दीर्घस्य अच्पदीयनिर्दिश्यमानत्वाभावेन ह्रस्वत्वाप्राप्तिरिति केषाञ्चिदुक्तिर्निरस्ता ।

निषेधेन ग्रहणकशास्त्रगृहीतानां निर्दिश्यमानकार्यबोधनान्न दोषः। इयङुवङो-ङित्त्वं त्विवर्णोवर्णान्तश्नुधातुभ्रुवामित्यर्थेन धात्वादीनामपि निर्दिष्टत्वादन्त्यादेशत्वाय। रीङ्ङिङोर्ङित्त्वं तु स्पष्टार्थमेव।

एतेनेदं ङित्त्वं वर्णग्रहणे 'निर्दिश्यमान'परिभाषाया अप्रवृत्तिज्ञापक-

---

वाच्यम्; सूत्रघटकदीर्घान्तभूशब्दसाहचर्येण दीर्घान्तस्यैव सुधीशब्दस्य ग्रहणेन निर्देशासङ्गतेरिति तत्तात्पर्यात्। अत्र कल्पे—निषेधेने' त्यस्य--निर्देशेनेत्यर्थः। ग्रहणकशास्त्रेति। शास्त्रान्तर इत्यत्राणुदित्छास्त्रेतरेति निवेश इति भावः। एवमेव शास्त्रान्तरपदेन स्थानिवत्सूत्र-लिङ्गविशिष्टपरिभाषा-स्वं रूपं-तिङ्स्त्रीणी'त्यादिशास्त्रातिरिक्तं गृह्यते। आद्ये—'तिसृणामि'त्यत्र 'सकृद्गति'न्यायेन त्रयादेशवारणपरं भाष्यं मानम्; द्वितीये—महदात्वे लिङ्गविशिष्टपरिभाषानित्यत्वपरं भाष्यम्; तृतीये—तत्तच्छास्त्रवैयर्थ्यम्; चतुर्थे--'रिचे'ति शास्त्रं मानमित्याद्यूह्यम्। धात्वादीनामिति।

---

न चैवं भू इति ह्रस्व एव पठितव्य इति वाच्यम्; 'विप्रसंभ्योड्वसंज्ञायाम्' इत्येतन्निष्पन्नविभ्वादीनामपि निषेधापत्तेः। न च सुधीसाहचर्यात् भूशब्दोऽपि धात्ववयवोवर्णान्त एव ग्रहीष्यते, 'विभुः'इत्यादौ च प्रत्ययान्ततया धात्ववयवोवर्णान्तत्वाभावान्न दोष इति वाच्यम्; विभुशब्दात् आचारक्विबन्ताद् विचि गुणे नपुंसकह्रस्वत्वे च 'आविभु यस्येति आविभु' इत्यत्र धात्ववयवोवर्णान्तत्वान्निषेधप्रवृत्त्या यणोऽप्राप्तेः; तथा च भू इति दीर्घनिर्देशस्य न वैयर्थ्यम्। न च 'ओः सुपि' इत्यस्य ह्रस्वांशे चारितार्थ्याभावेन निर्दिश्यमानपरिभाषाबाध एवाऽऽस्ताम्, क्विपि तुका विचि गुणेन यणप्राप्तेरिति वाच्यम्; 'कुङ्गतौ' इत्यस्मात् कुटादेर्विचो ङित्त्वेन गुणाभावे 'चरणेन कुवेते, चरणक्वौ' इत्यादौ चारितार्थ्यसम्भवात्।

यत्तु—गदाकारैः पटुमन्तमाचष्टे णिच् मतुपो लोपः, ततः क्विप्, 'पटवावि'त्यत्र चारितार्थ्यमुक्तम्। तन्न सम्यक्; णिच्निमित्तकवृद्धौ तुकि वा तादृशरूपस्य दुर्लभत्वात्। एतदाशयेनाह—सूत्रघटकदीर्घान्तभूशब्दसाहचर्येणेत्यादिः। दीर्घान्तस्य सुधीशब्दस्य यणोऽप्राप्त्या दीर्घान्तस्य निषेधविधानं ज्ञापकमिति भावः।

ननु दीर्घान्तभूशब्दसाहचर्याश्रयणे किं फलम्? न तावत् ह्रस्वान्तसुधिशब्दव्यावृत्तिरेवेति, नपुंसकह्रस्वान्तसुधीशब्दस्यानुकरणे परत्वान्नुमि सति इयङ्घटितनिर्देशानुपपत्तेः। नापि—'ध्यायति यत्कुलं धि इति, सुष्ठु धि यस्येति सुधिः=पुमान्' इत्येतस्य व्यावृत्तिः फलम्; तत्र 'गतिकारकेतरपूर्वपदस्य यण् नेष्यते' इत्यनेनैव यण्निषेधसिद्धेः। तस्माद्दीर्घान्तसुधीशब्दस्य ग्रहणं स्वरसत एवोपपन्नमिति साहचर्याश्रयणं विफलमिति चेत्—सत्यम्; तत्रेष्टापत्तेरेवाभ्युपगमात्।

निषेधेनेत्यस्य निर्देशेनेत्यर्थं इति। वस्तुतस्तु—यथाश्रुतमपि साधु; इयङ्निर्देशज्ञापितदीर्घान्तस्य सुधीशब्दस्य निषेधेनेत्यर्थस्य सुवचत्वात्।

यत्तु—इयङ्घटितनिर्देश एवोक्तार्थे ज्ञापकः; अन्यथा दीर्घस्य इयङोऽप्राप्त्या तन्निर्देशासङ्गतिरेव स्यादिति। तन्न; दीर्घयोरेवेकारोकारयोः य्वोरिति निर्देशोऽस्तीत्यस्यापि कल्पयितुं शक्यत्वात्।

मित्यपास्तम्; 'हयवरट्' सूत्रस्थेन "अयोगवाहानामुपदेशेऽलोऽन्त्यविधिः प्रयोजनम्। वृक्षस्तत्र, नैतदस्ति प्रयोजनम्, निर्दिश्यमानस्येत्येव सिद्धमि"ति भाष्येण विरोधात्।

अनया परिभाषया 'येन विधिरि'ति सूत्रबोधिततदन्तस्य स्थानित्वाभावबोधनं, यदागमा इति लब्धस्य च, तेन 'सुपद, उदस्थादि'त्यादिसिद्धिः।

---

एषामपि 'षष्ठीप्रकृती'त्यादिनिरुक्तनिर्दिश्यमानत्वादित्यर्थः।

वस्तुतस्तु—रीङादेरियेयङुवङोर्ङित्त्वमपि स्पष्टार्थमेव, य्वोरित्यस्यापि निर्दिश्यमानत्वात्। 'निर्दिश्यमानावयवेतरस्यादेशा न भवन्ती'त्यर्थस्यैव परिभाषया बोधना 'ह्वातोश्च य्वोरि'ति निर्दिश्यमानावयवेतरत्वेनादेशनिषेधप्रवृत्तेः सुलभतया न तद्व्यावृत्तये ङित्त्वम्। अत एव मूले निर्दिश्यमानावयवरूपमेवेत्येवकार उपन्यस्तः; निर्दिश्यमानावयवरूपमेव स्थानेन युज्यते, न तु निर्दिश्यमानावयवेतरदिति तदर्थः।

भाष्येण विरोधादिति। केचित्तु—विसर्गस्यालूत्वेऽपि वर्णत्वाभावान्न भाष्यविरोध इति वदन्ति।

ननु—पूर्वोक्तनिर्दिश्यमानत्वलक्षणे तत्तच्छास्त्रभिन्नत्वनिवेशे गौरवमत आह—अनयेति। 'यदागमपरिभाषासहकारेणोपस्थितिविषयत्वाभावे सति 'येनविधिरि'ति शास्त्रासहकारेणोपस्थितिविषयत्वं—निर्दिश्यमानत्वमि'ति भावः।

---

निरुक्तनिर्दिश्यमानत्वादित्यर्थ इति। यद्यपि य्वोरपि निर्दिश्यमानत्वम्; तथापि वृक्षप्रचलनन्यायेन धातुपदीयनिर्दिश्यमानस्यैवादेशः स्यादिति ङित्त्वं सावकाशम्।

ननु धातुपदवद् वृक्षप्रचलनन्यायेन अङ्गपदीयनिर्दिश्यमानस्यैवादेशवारणाय ङित्त्वं सार्थकमिति कुतो नोक्तम्। किञ्च रीङावयवेऽङ्गस्यापि निर्दिष्टत्वादन्त्यादेशाय ङित्त्वस्य चरितार्थतया 'रीङ्रिङोर्ङित्त्वं स्पष्टार्थमि'ति मूलोक्तिरसङ्गतैवेति चेत्—सत्यम्; व्यावर्त्याभावेन परिभाषाप्रवृत्त्यभावात्। निर्दिश्यमानस्यैवादेशो भवति, न तु तेन प्रतीयमानस्य द्वितीयोपस्थितिविषयस्येति तदर्थः। यथा धातुपदांशे प्रवृत्तौ धात्वन्तस्य व्यावृत्तिस्तथाऽङ्गांशे प्रवृत्तावङ्गान्तस्येत्यादेर्व्यावर्त्यासम्भवेन तदप्राप्तेः। एतन्मूलकमेव निर्दिश्यमानत्वलक्षणे षष्ठीप्रकृतिपदेन अङ्गरूपपदरूपप्रकृतिभिन्नैव प्रकृतिर्गृह्यत इत्यभियुक्ता वदन्तीति दिक्।

मतान्तरमाह—वस्तुतस्त्विति। एतन्मते 'निर्दिश्यमानस्येति' परिभाषा यत्र सञ्चारणीया तत्सूत्रघटकनिर्दिश्यमानावयवस्यैवादेशो भवति, तत्सूत्रघटकनिर्दिश्यमानावयवेतरस्य तत्सूत्रघटकस्य निर्दिश्यमानस्य आदेशा न भवन्ति, सूत्रघटकयावन्निर्दिश्यमानावयवस्यादेशा भवन्तीति यावत्। तथा च धातोरपि निषेधेनेदं ङित्त्वं स्पष्टार्थमेवेति भावः।

इति तदर्थ इति। निर्दिश्यमानावयवेतरस्य साक्षादेव स्थानेन सम्बन्धो निषिध्यते, परम्परया तु भवत्येवेति न 'तदोरि'ति सूत्रे त्यदादीनामिति निर्दिश्यमानावयवेतरस्य परम्पराऽन्वये बाधकाभाव इति बोध्यम्।

केचित्तु—इतोऽपि लाघवानुरोधात् यत्पदघटितशास्त्रासहकारेण षष्ठीप्रकृति जन्योपस्थितिविषयत्वं—निर्दिश्यमानत्वम्; 'यन्मध्यपतित'इत्यत्र 'तन्मध्यपतित' इत्येव पाठः; तथा चैतच्छास्त्रद्वयबोधितस्य न निर्दिश्यमानत्वमिति वदन्ति।

अन्ये तु—भाष्ये 'यदागमा' इत्यस्य स्थाने 'ऽर्थवतामागमास्तद्ग्रहणेन गृह्यन्ते' इत्ति तदेकदेशभूतस्तद्ग्रहणेन गृह्यत' इत्येवं पठितम्; तथा च तदसङ्ग्रहापत्ति रतः षष्ठीप्रकृतिशक्यत्वं—निर्दिश्यमानत्वम्। 'येनविधिः, यदागमा' इति शास्त्रद्वय लक्षणाग्राहकमिति न तद्बोधितस्य निर्दिश्यमानत्वमिति वदन्ति।

परे तु—लिङ्गविशिष्टपरिभाषयाऽपि तदन्ते प्रकृतिवृत्तिधर्मारोपस्यैव बोधने 'यदागम'परिभाषातोऽविशेषात्तस्या अपि लक्षणाग्राहकत्वे तद्बोधितस्य स्त्रीप्रत्ययान्तस्य निर्दिश्यमानत्वानापत्तौ देवीमञ्चतीति 'देवद्र्यङि'त्यादौ 'विष्वग्देवयोरित्यद्र्यादेशो न स्यादिति षष्ठीप्रकृतिविशिष्टत्वं—निर्दिश्यमानत्वम्; वैशिष्ट्यञ्च—स्वजन्योपस्थितिविषयत्व-स्वजन्योपस्थितिविषयपूर्ववर्णाघटितत्वैतदुभयसम्बन्धेन। 'निर्जर' इत्यस्य जरेति षष्ठीप्रकृतिजन्योपस्थितिविषयत्वेऽपि तादृशोपस्थितिविषयपूर्वरेफघटितत्वेन निर्दिश्यमानत्वाभावान्न जरसादेशापत्तिः। 'उदस्थादि'त्यादावपि स्थाशब्दस्य 'स्वं रूप'मिति शास्त्रसहकारेणोपस्थितिविषयत्वेन तादृशोपस्थितिविषयपूर्वाडागमाघटित्वेन च निर्दिश्यमानत्वेऽप्युदःपरत्वाभावात्सप्तम्यन्तपञ्चम्यन्तयोर्निर्दिश्यमान एवान्वयात्, 'अस्थे' त्यस्योदः परत्वेऽपि निरुक्तनिर्दिश्यमानत्वाभावाच्च न पूर्वसवर्णापत्तिः। एवं 'जराया जरा जराजरा, तयो—र्जराजरसोरि'त्यत्र परस्यैव तत्त्वं, न पूर्वस्य, नापि समुदायस्येति वदन्ति।

अपरे तु—एवं निर्दिश्यमानत्वस्वीकारे 'सजूःसजूभ्र्यामि'त्यत्र 'जरसोजरसावि' त्यादावलुकि च पूर्वस्य निर्दिश्यमानत्वाभावेन रुत्व-जरसादेशाद्यनापत्तिरिति षष्ठी-प्रकृतिविशिष्टत्वं—निर्दिश्यमानत्वम्; वैशिष्ट्यञ्च—स्वजन्यशाब्दबोधीयविषताश्रयत्व—स्वजन्यशाब्दबोधीयविषयताश्रयाघटितत्वोभयसम्बन्धेन। तथा च न पूर्वोक्तलक्ष्येषु दोषलेशः।

नन्वेवं 'स्नात्वा कालक' इत्यत्र क्त्वापदप्रयोज्यशाब्दविषयताया अत्र सत्त्वेन ल्यबापत्तिः; निपातनात्तदभावकल्पने तु—'स्नात्वा कालकीकृत्ये'त्यत्र पूर्वक्त्वाशब्दस्य तदापत्तिर्दुर्वारैव। न चात्रापि निपातनादेव तदभाव इति वाच्यम्; 'प्रावाहणेयिरि'

---

उभयसम्बन्धेनेति। अत्र आद्यः सम्बन्धः—जरापदीयनिर्दिश्यमानत्वस्य रामशब्दादौ वारणाय। उपस्थितीयविषयता परित्यज्य शाब्दबोधीयविषयतानिवेशे—'व्याघ्रपात्पद' इत्यत्र पूर्वपाच्छब्दस्य न निर्दिश्यमानत्वम्। शाब्दबोधीया हि विषयता विशेषणविशेष्यपदार्थाभ्यां सङ्कुचिते तिष्ठति यथा हि—'नीलो घटः' इत्यादौ घटेन सङ्कोचात् नीलत्वावच्छिन्ना विषयता नीलपटादौ न तिष्ठति, यथा वा विशेषणेन सङ्कोचात् घटत्वावच्छिन्नविषयताऽनीलघटे न तिष्ठति तथा 'पाच्छब्दान्तं पदङ्गं भमि'त्यर्थे पाच्छब्दत्वावच्छिन्ना शाब्दबोधीया विषयता चरमपाच्छब्दे एव तिष्ठति, न पूर्वपाच्छब्दे इति न दोषः। द्वितीयसम्बन्धोपादानं 'निर्जर, जराजरा' इत्यादौ समुदायस्य च वारणायेति। तदेतदाह—न पूर्वोक्तलक्ष्येषु दोषलेश इति।

त्यत्रोक्तदिशा विशिष्टसमासनिमित्तक-ल्यपः 'स्नात्वा कालक' इत्येतत्समासनिबन्धन-ल्यबभावनियामकनिपातनेन वारणासम्भवात् । न चोक्तरूपस्यैवासम्भवः, 'मयूर-व्यंसकादयश्चे'ति चकारेणैषां समासान्तरेऽप्रवेशात्, अत एव 'परमो मयूरव्यंसक' इति वाक्यमेवेति वाच्यम्; चकारबोधितस्याऽस्यार्थस्यानित्यत्वेनोक्तसमासे बाधका-भावात् । अत एव 'प्रत्ययमात्रग्रहणे' 'चक्षुर्मात्रग्राह्य' इत्यादिप्रयोगोपपत्तिरिति चेन्न । समासेऽनञ्पूर्वे' इत्यस्य 'क्त्वान्तसमासावयवनिर्दिश्यमानस्ये'त्यर्थेन पूर्व-क्त्वाशब्दस्य शाब्दबोधीयविषयताश्रयत्वाभावेन निर्दिश्यमानत्वाभावात्तदप्राप्तेः सुवचत्वात् । 'समास' इति सूत्रजन्यबोधे पूर्वक्त्वाशब्दस्य कथमप्यभानेन तत्र शाब्दी-यविषयतायाः कल्पयितुमशक्यत्वात 'अनञ्समास' इति पर्युदासबलेनाव्ययपूर्वपदके एव तत्प्रवृत्तेर्निपातनेन कल्पनाच्च । न 'चापिबदि' त्यत्राऽऽगमविशिष्टस्यैव वार्थवत्त्वेन तेन सङ्कुचितायाः पात्वावच्छिन्नविषयताया आगमरहिते पाशब्दे अभावेन तस्य पिबादेशानापत्तिः, अपाशब्दस्य तदापत्तिश्चेति वाच्यम्; 'स्वावयवमात्रघटितत्व-सम्बन्धेन स्वविशिष्टे तत्तच्छब्दानां लक्षणे' त्यर्थस्य यदागमन्यायेन बोधनादर्थवत्पा-शब्दत्वावच्छिन्नविषयताया अपाशब्दे सत्त्वेऽपि निरुक्तसम्बन्धावच्छिन्नपात्वाव च्छिन्नविषयतायाः केवलपाशब्दे सत्त्वेन तस्य निर्दिश्यमानत्वे बाधकाभावात्, अपाशब्दस्य तादृशविषयताश्रयपाशब्दघटितत्वेन निर्दिश्यमानत्वाभावेन दोषा-भावाच्च । न चैवं सम्बन्धघटकावयवपदप्रयोज्यविषयतायाः पाऽवयवपकारादौ सत्त्वेन तदाश्रयघटितत्वात्पाशब्दस्य निर्दिश्यमानत्वानापत्तिरिति वाच्यम्; विषयता-पदेनात्र सांसर्गिकविषयताभिन्नाया ग्रहणादुक्तपकारादिनिष्ठविषयताया अतथात्वा-त्पाशब्दे उक्तनिर्दिश्यमानत्वस्य सुवचत्वात् ।

केचित्तु—'निर्दिश्यमान'परिभाषायां शाब्दीयविषयताऽर्थवत्त्वेनासङ्कुचिता गृह्यते; अत एव लावस्थायामडिति पक्षेऽपि न फलभेदः । तथा चात्र न दोष इत्याहुः ।

---

उक्तदिशेति । प्रवाहणस्यापत्यं—प्रावाहणेयः 'शुभ्रादिभ्यश्च' इति ढक्, 'प्रवाहणस्य ढे' इति पूर्वपदस्य वा वृद्धिः, तदन्तादपत्यमित्यर्थे अत इञ्—'प्रावाहणेयिः' । अयम्भावः—यथा-तत्र 'प्रवाहणस्य ढे' इत्यस्य 'येन नाप्राप्त०' इति न्यायेन ढप्रत्ययनिमित्तकवृद्धेरेव बाधकत्वं तथा-ऽत्रापि 'स्नात्वा कालक' पर्यन्तसमासप्रयुक्तल्यप एव निपातनेन बाधकत्वं कल्पनीयमिति ।

समास इति । विभिन्नविभक्तिकत्वेन तदन्तविध्यभावेऽपि पक्षान्तरेण परिहारोपाय-माह—अनञ्पूर्व इति ।

अर्थवत्त्वेनासङ्कुचिता गृह्यत इति । अर्थवत्त्वेनानवच्छिन्नेति तदर्थः । अयम्भावः—यदागमपरिभाषा हि शक्तिग्राहिका लक्षणाग्राहिका चेत्यस्ति मतद्वयम् । आद्ये अर्थवत्त्वानवच्छि-न्नायाः पात्वावच्छिन्नशाब्दबोधीयविषयताया अप्रसिद्धत्वेऽपि, अन्त्ये स्वावयवमात्रघटितत्वसम्ब-न्धावच्छिन्नाया पात्वावच्छिन्नविषयताया शाब्दबोधीयाया अर्थवत्त्वानवच्छिन्नतया प्रसिद्धत्वात, तेन सम्बन्धेन पाशब्दविशिष्टे एवार्थवतोऽन्वयात् । एवञ्च 'अपा' इति समुदाये अर्थवत्त्वानवच्छि न्नशाब्दबोधीयविषयताया अभावेन निर्दिश्यमानत्वाभावस्योपपत्तौ 'शाब्दबोधीयविषयताश्रया-घटितत्वमि'ति लक्षणे न निवेशनीयमिति ।

एवं 'जराया जरे'ति विग्रहे 'जराजरसे' इत्यत्र पूर्वत्र शाब्दीयविषयताया अभावेन न जरसादेशः। पूर्वस्य निर्दिश्यमानत्वाभावे च 'पादः पदि'ति सूत्रस्थभाष्यमेव मानम्। तत्र हि 'सुपादि'ति समुदायस्यादेशवारणाय 'पाद उपधाया ह्रस्वत्वं वक्तव्यमि'ति वार्तिककृतोक्ते, 'न वक्तव्यं निर्दिश्यमानस्यादेशा भवन्तीत्येव सिद्धमि'त्युक्तम्। 'सुपात्पद' इत्यत्र 'पाच्छब्दान्तं यदङ्गं तदवयवोपधाया ह्रस्व' इत्यर्थकवचनेन वार्तिकमते 'सुपात्पद' इति रूपम्, भाष्यमते तु—पूर्वस्य निर्दिश्यमानत्वेन 'सुपत्पद' इति रूपमिति फलभेदात्प्रत्याख्यानासम्भवेन तत्कल्पनात्।

नन्वेवमपि जराशब्दस्य 'नित्यवीप्सयोरि'ति द्वित्वे 'ऽतिजराजरसे'त्यत्राष्टमिकद्वित्वस्यानस्तमितावयवभेदस्य सर्वसम्मतत्वेनोत्तरस्यापि शाब्दीयविषयताश्रयत्वात् समुदायस्य तद्घटितत्वेनोक्तनिर्दिश्यमानत्वानापत्तिरिति चेन्न। इष्टापत्तेः; 'अतिजराजरसे'ति रूपस्यैव तत्रेष्टत्वात्। अत एव 'पादः पदि'ति सूत्रस्थोक्तभाष्यं सङ्गच्छते। त्वन्मते'ऽतिपात्पद' इत्यत्र पदद्वित्वे भाष्यवार्तिकयोः फलभेदेन तत्प्रत्याख्यानमसङ्गतं स्यात्। किञ्च—'इ म अ' इत्येव सिद्धे ककारोच्चारणमकच्सहितस्याप्ययमादेश इत्यर्थज्ञापनार्थम्। 'अश्वचनं साकच्कार्थमि'त्यादिभाष्यमप्यत एव सङ्गच्छते; अन्यथा स्थाने द्विर्वचनस्थले समुदायस्यादेशार्थं तदावश्यकत्वेन ज्ञापकपरभाष्यासङ्गत्यापत्तिः। अत एव मूलकृता स्थाने द्वित्वेऽपि समुदायस्य निर्दिश्यमानत्वाभावेन तत्र विशेषाभावात् 'त्रेरयङ् न कृतः, न कृतः, जराया असुङ् न कृत' इत्याद्युक्तम्। देवीमञ्चतीति 'देवद्र्यङि'त्यत्र निरुक्तशाब्दबोधीयविषयताया देवीशब्दे एव सत्त्वेन तादृशविषयताश्रयाघटितत्वेन च निर्दिश्यमानत्वाद्द्र्यादेशसिद्धिः।

ननु यदागमन्यायस्य निरुक्तार्थे लक्षणाग्राहकत्वस्वीकारे साक्षादानुपूर्व्यवच्छिन्नमुख्यविशेष्यताप्रयोजकत्वरूपवक्ष्यमाणविशिष्टरूपोपादानत्वस्य जराशब्दा-

---

**न जरसादेश इति।** प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षतया अङ्गे एवान्वयेन तत्प्राप्तेरिति भावः। सप्तम्यन्तपञ्चम्यन्तपदयोर्निर्दिश्यमाने एवान्वये तु—पूर्वस्य प्राप्तिरेव नास्तीति बोध्यम्।

**अत्रेदं बोध्यम्**—पदद्वित्वस्थले समुदायस्यैव निर्दिश्यमानत्वमित्येकं मतम्; उत्तरपदस्यैव निर्दिश्यमानत्वमित्यपरम्, इदमेवादृतं शेखरकृता। अत एव 'प्रतिपत्तिलाघवाय जराया असुङ न कृतः, त्रेरयङ् न कृत.' इति शेखरग्रन्थे प्रतिपत्तलाघवाये'ति कथनं सङ्गच्छते; अन्यथा—पदद्वित्वस्थले समुदायस्य निर्दिश्यमानत्वे जरसादेशपक्षे समुदायस्यादेशः, असुङ्पक्षे चान्त्यस्य स्यादिति प्रयोगे विशेषसत्त्वेन प्रतिपत्तिलाघवायेत्येतन्मात्रोक्तिः कथं सङ्गच्छेत? ङित्त्वसामर्थ्यमूलक'ङिच्चे'ति प्रवृत्तौ ज्ञानगौरवं स्यादिति तदर्थः। तत्राऽऽद्यमतानुसारेणाऽऽशङ्कते—**नन्वेवमिति।** शेखरकृन्मतानुसारेण समाधत्ते—इष्टापत्तेरिति। अनेन टीकाकृतामपीदमेव सम्मतमिति प्रतिभाति। अत एव चाग्रिमाण्यपि लक्षणानि तदनुसारेणैव प्रदर्शितानि। तन्मतोपष्टम्भकानि प्रमाणान्याह—अत एवेत्यादिः।

**यदागमपरिभाषाया** लक्षणाग्राहकत्वाङ्गीकारे पा-पदप्रयोज्या स्वावयवमात्रघटितत्वसम्बन्धावच्छिन्ना पात्वेन साक्षादवच्छिन्ना प्रकारता जाता, न तु तेनावच्छिन्ना मुख्यविशेष्यतेति विशिष्टरूपोपादानाभावेन 'अर्थवद्ग्रहण'परिभाषा न प्रवर्तेतेत्याशयेन आशङ्कते—**नन्विति।**

दावभावेनार्थवद्ग्रहण' परिभाषाया अप्रवृत्त्याऽजं रातीत्यर्थक 'अजरा' शब्दादौ जरसाद्यापत्तिः । न च गौणमुख्यन्याये तादृशविशिष्टरूपोपादानत्वस्वीकारेऽप्यर्थवद्ग्रहण'-परिभाषायां तस्मिन् साक्षान्मुख्येति निवेशे मानाभाव इति वाच्यम्; प्रातिपदिकसंज्ञासूत्रेऽधातुपदस्य धातुपदवद्भिन्नार्थकतया परम्परयाऽऽनुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वे 'नार्थवद्ग्रहण' परिभाषयैवार्थवत्त्वलाभेऽर्थवद्ग्रहणस्यैव मानत्वात् । अत एव 'गच्छती'त्यत्र तुक्सिद्धिः; अन्यथा ह्रस्वपदस्यापि परम्परया ह्रस्वपदत्वरूपानुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वेन विशिष्टरूपोपादानत्वात् 'छे चे'ति सूत्रेऽर्थवद्ग्रहणपरिभाषोपस्थितावस्यानर्थकतया तुग् न स्यादिति चेन्न । आनुपूर्व्या साक्षादवच्छिन्ना या प्राथमिकोपस्थितीया मुख्यविशेष्यता तत्प्रयोजकत्वस्य विशिष्टरूपोपादानपदेन ग्रहणे ह्रस्वादिपदे दोषाभावात्; जरादिशब्दानां 'यदागम'परिभाषया लक्षणाग्रहात् प्राक् जराशब्दत्वाद्यवच्छिन्नोपस्थापकत्वेन निरुक्तविशिष्टरूपोपादानत्वस्य सुवचत्वादिति प्राहुः ।

परे तु—निर्दिश्यमानत्वम्—षष्ठीप्रकृतिविशिष्टत्वम्; वैशिष्ट्यञ्च—स्वप्रयोज्योपस्थितिविषयत्व-स्वविशिष्टवर्णाघटितत्वमिति सम्बन्धद्वयेन । अत्र वैशिष्ट्यञ्च—स्वप्रयोज्योपस्थितिविषयाव्यवहितपूर्वत्व-स्वप्रयोज्यशाब्दबोधीयविषयतापर्याप्त्यधिकरणान्येतरत्वोभयसम्बन्धेन । 'निर्जरसावि'त्यत्र निरुक्तोभयसम्बन्धेन षष्ठीप्रकृतिविशिष्टो वर्णो निर्शब्दावयवरेफः, 'अपिबदि'त्यत्राडागमस्तद्घटितत्वेन समुदायस्य न निर्दिश्यमानत्वम्, तदघटितत्वेन च जराशब्दपाशब्दयोस्तत्त्वम् । 'सजूस्सजूभ्यामि'त्यत्र पूर्वसजुष्शब्दे तदवयवषस्य स्वप्रयोज्योपस्थितिविषयपूर्वत्वेऽपि द्वितीसम्बन्धाभावेन तद्विशिष्टोदासीनवर्णाघटितत्वात्तत्त्वसिद्धिः । 'जरसावि' त्यत्र जकारे द्वितीयसम्बन्धसत्त्वेऽप्याद्यसम्बन्धाभावान्नाव्याप्तिः । 'जरसोजरसावि' त्यत्र पूर्वजरसः आकारस्य द्वितीयसम्बन्धस्याप्यभावात् जकारस्याद्यसम्बन्धाभावात्तादृशोदासीनवर्णाघटितत्वेन तत्त्वसिद्धिः । न च पूर्वजरसो जकारे जराशब्दान्तत्वेनोपस्थितिविषयो यः 'अरसोजरेति' तदवधिकपूर्वत्वस्य द्वितीयसम्बन्धस्य च सत्त्वेनोक्तसम्बन्धद्वयेन स्वविशिष्टतादृशजकारविशिष्टत्वात्पूर्वस्य निर्दिश्यमानत्वाभावेन जरसादेशानापत्तिः, एवं 'सजूस्सजूभ्यामि' त्यत्रापि पूर्वषस्य रुत्वानापत्तिरिति वाच्यम्; 'अरसो जरे'ति समुदायस्य स्वप्रयोज्योपस्थितीयविषयतापर्याप्त्यधिकरणत्वाभावात्, जराशब्द एव तत्कल्पनात् । 'अपिबदि' त्यत्र पाशब्दस्य निरर्थकत्वेऽपि पापदशक्यत्वस्य पाशब्द एव सत्त्वेन तत्र तत्कल्पनात् ।

---

'यदागम' परिभाषाऽपि 'प्रातिपदिकग्रहणे' इत्यादिवच्छक्यतावच्छेदकाऽऽरोपबोधनद्वारा सङ्केतग्राहिका एव, न लक्षणाग्राहिका । किञ्च—लक्षणाग्राहकत्वाङ्गीकारे गौरवम् । एवञ्च शक्तिग्राहकत्वपक्षे 'शाब्दबोधीयविषयताघटिते'त्यादिपूर्वोक्तलक्षणम् 'अपिबत्' इत्यत्रातिव्याप्तमित्यतो लक्षणान्तरमाह—**परे त्विति** । **पूर्वजरस इति** । पूर्वजराशब्दस्येति तदर्थः । **द्वितीयसम्बन्धस्यापीति** । वर्णे स्ववैशिष्ट्यनियामको द्वितीयः सम्बन्ध इत्यर्थः; अपिना च तत्रैव स्ववैशिष्ट्यनियामकः प्रथमसम्बन्धो ग्राह्यः । **तत्कल्पनादिति** । फलाभावादिति भावः ।

यद्वा—स्वप्रयोज्योपस्थितिविषयस्य तादृशोपस्थितिविषयाघटितस्य ग्रहणेनादोषात्, अरसो जरेति समुदायस्य तादृशजराशब्दघटितत्वेन तस्य ग्रहीतुमशक्यत्वात्। न च त्रिशब्दादाचारक्विबन्तात्कर्तरि क्विपि तुकि 'त्रितामि' त्यादौ निरुक्तनिर्दिश्यमानत्वापत्तिरिति वाच्यम्; 'नामी'ति सूत्रस्थभाष्यप्रामाण्येन तादृशरूपाणामनभिधानेनादोषात्। निर्दिश्यमानत्वलक्षणे स्वोपस्थाप्योद्देश्यकागमाघटितत्वरूपषष्ठीप्रकृतिवैशिष्ट्यनियामकतृतीयसम्बन्धनिवेशात्, त्रिच्छब्दस्य तादृशतुग्घटितत्वे'नाजराणी' त्यत्र नुम्घटितत्वेनादोषाच्च। एवं 'चापिबदि' त्यत्र दोषवारणाय यदागमन्यायस्य लक्षणाग्राहकत्वं स्वीकृत्य, सांसर्गिकविषयताघटकनिवेशादिक्लेशो न करणीय इति महालाघवम्। 'स्नात्वा कालकीकृत्ये' त्यादौ तु पूर्वोक्तरीत्यैव वारणं बोध्यम्। न चैवं 'मपिबदि' त्यत्र दोषवारणे यदागमपरिभाषा व्यर्था, कल्पितस्थान्यादेशभावस्य स्थानिवत्सूत्रे ग्रहणेनापि 'प्रणिदापयती' त्यादिसिद्धेरिति वाच्यम्; इष्टापत्तेरित्याहुः।

---

अनभिधानेनेति। तत्र हि भाष्ये-"अमीति न्यासे ह्रस्वनद्यापे'ति सूत्रस्थं ह्रस्वग्रहणं भूतपूर्वह्रस्वान्तग्रहणे ज्ञापकम्, तेन 'रामाणा'मित्यत्र नित्यत्वात् पूर्वं दीर्घेऽपि नुट् सिद्ध्यति, 'तिसृणा'मित्यत्र नुट् तु 'षट्चतुर्भ्यश्च' इति सूत्रे त्रेरित्यनुवृत्त्या सिद्धः" इत्युक्तम्। 'त्रितामि'त्यस्याभिधाने तु–सम्प्रति नुट् स्यात्, ह्रस्वग्रहणे तु–न स्यादिति फलभेदापत्त्या तदनभिधानमावश्यकमिति भावः।

वस्तुतस्तु—'षट्चतुर्भ्यश्च' इति सूत्रे चतुर्शब्दसाहचर्यात् रकारान्तस्यैव त्रिशब्दस्य ग्रहणेन न तत्र फलभेदः। किञ्च—सखिशब्दात् आचक्षाणणिजन्तात्क्विपि तुकि 'सखित्'इत्यत्र 'सख्युरसम्बुद्धौ' इति अनङादेशापत्तिरित्याशयेनाह—निर्दिश्यमानत्वलक्षण इत्यादिः। स्वोपस्थाप्योद्देश्यकागमाघटितेति। नन्वेवमपि 'परिषिञ्चति' इत्यत्र नुमागमघटितत्वेन निर्दिश्यमानत्वाभावात् षिचः सस्य षत्वं न स्यादिति चेन्न। तत्स्थाने स्वविशिष्टागमाघटितत्वनिवेशात्। वैशिष्ट्यं च—स्वोपस्थाप्योद्देश्यकत्व—स्वविशिष्टभिन्नत्वैतदुभयसम्बन्धेन; अत्र स्ववै०—स्वोपस्थाप्यघटकावधिकपूर्वत्व-स्वोपस्थाप्यघटकावधिकोत्तरत्वैतदुभयसम्बन्धेन।

नन्वेवमपि 'स्नात्वा कालकीकृत्य' इत्यत्र पूर्वक्त्वाशब्दस्यापि निर्दिश्यमानत्वापत्तिः, स्वजन्योपस्थितीयविषयताश्रयाव्यवहितपूर्वत्वस्य स्वप्रयोज्यशाब्दबोधीयविषयताश्रयान्तेतरत्वस्य च उदासीनवर्णे एव सत्त्वेन पूर्वक्त्वाघटकवर्णेऽसत्त्वात्तदघटितत्वरूपस्य द्वितीयसम्बन्धस्य आद्यसम्बन्धस्य च सत्त्वादत आह—स्नात्वा कालकीकृत्येत्यादाविति। पूर्वोक्तरीत्येति। "पर्युदासन्यायेन अव्ययपूर्वपदपूर्वकस्यैव क्त्वाशब्दस्य 'समासेऽनञ्पूर्वे' इत्यनेन ल्यपो विधानात्" इत्येवं पूर्वोक्तरीत्येत्यर्थः। इष्टापत्तेरिति। लक्षणे आगमाघटितत्वनिवेशाद्विशिष्टे 'निर्दिश्यमानत्वाभावेन 'लावस्थायामडि'ति भाष्याविरोधादिति भावः। न चादन्तोपदिश्यमानत्वस्यालक्ष्यव्याप्यधर्मघटितत्वेन स्थानिवद्भावाप्रवृत्त्या 'पचमानः' इत्यत्र स्वरानापत्तिरिति वाच्यम्; तत्र पूर्वोक्तरीत्या उपदेशेऽदन्तादित्यर्थकरणेनादोषात्। यद्वा-पञ्चमीसमासेन स्थानिवद्भावमाश्रित्य स्वरः सम्पादनीयः। अथवा—अदन्तोपदिश्यमानात् परत्वस्योपलक्षणविधया भानमङ्गीकृत्य समाधेयम्, तेन 'दीव्यमान' इत्यत्रापि न दोष इति भावः।

वस्तुतस्तु—स्वशक्यत्व—स्वविशिष्टवर्णाघटितत्त्वोभयसम्बन्धेन षष्ठीप्रकृतिविशिष्टत्वं निर्दिश्यमानत्वम्; वैशिष्ट्यञ्च—स्वोपस्थाप्याघटितो यः स्वबोध्यस्तद्घटकत्वं स्वोपस्थाप्यावधिकपूर्वत्वं चेति सम्बन्धद्वयेन। अत्र पूर्वत्वं व्यवहितादिसाधारणम्, तेन 'स्नात्वा कालकीकृत्य'त्यत्र पूर्वक्त्वावयववर्णस्योक्तसम्बन्धद्वयेन षष्ठीप्रकृतिविशि-

---

नन्वत्र कल्पे 'समासेऽनञ्पूर्वे' इति सूत्रस्थभाष्यविरोधः; तत्र हि 'स्नात्वा कालकः' इत्यत्र ल्यपमाशङ्क्य 'स्नात्वा कालकादीनां प्रतिषेधो वक्तव्यः न वक्तव्यः क्त्वान्तनिर्देशात् सिद्धम्, समासनिपातनाद्वे'त्युक्तम्। क्त्वान्तनिर्देशपक्षे 'स्नात्वा कालकः' इत्यत्र दोषाभावेऽपि 'स्नात्वा कालकीकृत्य' इत्यत्र पूर्वक्त्वो ल्यप्वारणं न सम्भवति, प्रकृतनिर्दिश्यमानत्वलक्षणस्य तत्र सत्त्वात्; फलभेदापत्त्या इष्टापत्तेः कर्तुमशक्यत्वात्। किञ्च—प्रकृतनिर्दिश्यमानलक्षणेनैव यदागमपरिभाषाया गतार्थत्वात् 'लावस्थायामडि'ति भाष्यविरोधेन स्थानिवत्सूत्रेण गतार्थेत्यपास्तमिति मूलग्रन्थविरुद्धं चैतल्लक्षणमत आह—वस्तुतस्त्विति। एतेनात्र कल्पे 'यदागमा' 'येन विधिरि'त्यनयोर्लक्षणाग्राहकत्वाङ्गीकारेऽपि इतरलक्षणापेक्षयाऽत्र लाघवम्, भाष्याविरोधश्च सूचितः।

अत्र लक्षणे स्वशक्यमात्रोपादाने—'निर्जर' इति समुदायस्यादेशवारणेऽपि व्याघ्रपात्पदः, स्नात्वा कालकीकृत्य' इत्यत्र पूर्वपाच्छब्द क्त्वाशब्दयोरपि निर्दिश्यमानत्वं स्यात्, पदद्वित्वे समुदायस्यापि स्यात्। द्वितीयसम्बन्धमात्रोपादाने—जरापदीयनिर्दिश्यमानत्वं रामशब्दादेरपि स्यात्। द्वितीयसम्बन्धघटकप्रथमसम्बन्धानुपादाने—पूर्वसजुषो निर्दिश्यमानत्वं न स्यात्। स्वबोध्ये स्वोपस्थाप्याघटित इति विशेषणानुपादाने—'निर्जर' इत्यत्र निरो रेफस्य समुदायरूपबोध्यघटकत्वमेव स्यात्। द्वितीयसम्बन्धघटकद्वितीयसम्बन्धानुपादाने—स्वोपस्थाप्याघटितो यः स्वबोध्यः—'जरा' इति, तद्घटकजकारघटितत्वेन तदघटकत्वाभावात् 'जरा' इत्यस्यापि निर्दिश्यमानत्वं न स्यात्। न च व्यपदेशिवद्भावेन घटित एव, तर्हि तदघटितबोध्यस्याप्रसिद्धिरेव स्यात्। अत्रापि कल्पे पदद्वित्वे समुदायस्य न निर्दिश्यमानत्वम्। यद्वा—लाघवात् स्वविशिष्टवर्णाघटितत्वमित्यस्य स्थाने स्वप्रयोज्यशाब्दबोधीयविषयताश्रयत्वमिति देयम्, तेन 'व्याघ्रपात्पदः' इत्यत्र, 'स्नात्वा कालकीकृत्य' इत्यत्र च पूर्वपाच्छब्दस्य पूर्वक्त्वाशब्दस्य च न निर्दिश्यमानत्वम्।

न चैवं पदद्वित्वस्थले समुदायस्योत्तरपदस्य च निर्दिश्यमानत्वापत्तिरिति वाच्यम्; निर्दिश्यमानावयवेतरस्यादेशा न भवन्तीत्यर्थपर्यन्तं परिभाषायाः तात्पर्यसत्त्वेन समुदायस्य निषेधेनादोषात्। यद्वा—शाब्दबोधीयविषयताश्रयाघटितत्वमिति तृतीयोऽपि सम्बन्धो देयः। 'पदद्वित्वस्थले समुदायस्यादेश इष्टः' इति मते तु तृतीयसम्बन्धो न देयः। 'इयङुवङोर्ङित्त्वं धात्वादीनामपि निर्दिष्टत्वादन्त्यदेशत्वाय' इति मूलानुसारेण 'वृक्षप्रचलन'न्यायेन समुदायस्यैवादेशस्य सुलभत्वादित्येतन्निर्दुष्टं निर्दिश्यमानत्वलक्षणं बोध्यम्। 'पूतक्रतुदि' त्यत्र पूर्वस्य निर्दिश्यमानत्वमिष्टमेव। उपसर्जनत्वाच्च ङीबभावे तत्सन्नियोगशिष्टैकारादेशोऽपि न। 'वृषलपतिदि'त्यत्र पूर्वस्यादेश इष्ट एव। 'नाभिदि' त्यत्र च समुदायस्यैवादेशः; तत्र नाभिशब्दः नभरूपतामाप्नोति। तस्मात् प्रत्यासत्त्या यत्प्रत्ययश्चेत्यर्थकरणेन षष्ठ्युच्चारणाभावेन परिभाषाया अप्राप्तेः।

अत्र केचित्—प्रातिपदिकग्रहणे 'तन्मध्यपतित' इत्यादीनामिव 'येन विधिर्यदागमा' इत्यनयोरपि विनिगमनाविरहात् सङ्केतग्राहकत्वमेव। लाघवाच्च पदद्वित्वस्थले समुदायस्यैव निर्दिश्यमानत्वमस्ति, स्थानिवद्भावस्थले सर्वत्र स्थानिबुद्ध्यैव कार्यजननेऽत्र तत्त्यागे मानाभावात्। अत

ष्टत्वेन तस्य स्वविशिष्टवर्णाघटितत्वाभावेन निर्दिश्यमानत्वं न, यदागमपरिभाषाया लक्षणाग्राहकत्वेन 'त्रितामि' त्यत्र षष्ठीप्रकृतिशक्यत्वाभावान्न तत्त्वम्। एवमन्यत्र समन्वयः स्वयमूहनीयः। न चैवं 'लिङ्गविशिष्ट' परिभाषा 'तन्मध्यपतित' न्याययोरपि

---

एव पाणिनिना जराया असुङ्, त्रेरयङ् च न कृतः।

यत्तु—'पादः पद्' ति सूत्रस्था "पादोपधाया ह्रस्वत्वं वक्तव्यमि"ति वार्तिकविरोधः। तन्न; निर्दिश्यमानपरिभाषामबुद्ध्वा प्रवृत्तस्य वार्तिकस्य एकदेश्युक्तित्वात्। अत एवाग्रे भाष्यकृता 'निर्दिश्यमानस्येत्येव सिद्धम्' इति समाहितम्। एतदनुसृत्य निर्दिश्यमानत्वमेवं परिष्कुर्वन्ति—षष्ठीप्रकृतिविशिष्टत्वम्; वै०—स्वजन्योपस्थितीयविषयताश्रयत्व—स्वप्रयोज्यशाब्दबोधीयविषयता-विशिष्टवर्णाघटितत्व—स्वजन्योपस्थितीयविषयताश्रयोद्देश्यकागमाघटितत्वैतत्त्रितयसम्बन्धेन, विषयता वै० वर्णे—स्वानाश्रयत्व—स्वाश्रयसमभिव्याहृतत्वोभयसम्बन्धेन; लक्षणसमन्वयः स्वयमूहनीय इति।

अत्रेदं चिन्तनीयम्। अत्र विषयताऽनाश्रयत्वं पर्याप्त्याऽपर्याप्त्या वा? आद्ये—सजुष्शब्द-त्वावच्छिन्नविषयताया पर्याप्त्याऽनाश्रयः—पूर्वसजुषः षकारः, तत्र स्वाश्रयोत्तरसजुःसमभिव्याहृ-तत्वमपीति तद्घटितत्वेन पूर्वस्य निर्दिश्यमानत्वानापत्तिः। द्वितीये—तत्रैव 'परमः सजूः सजूरि'त्यत्र 'सजूः सजूरि'ति समुदायस्यापि निर्दिश्यमानत्वं स्यात्, तद्घटकवर्णस्यापर्याप्त्या शाब्दबोधीय-विषयताश्रयत्वात्, अनाश्रयः—उदासीनः परमशब्दघटको वर्णस्तस्य शाब्दबोधीयविषयताश्रय-समभिव्याहृतत्वमपि, तदघटितत्वात् समुदायस्य सजूश्शब्दान्तत्वावच्छिन्नोपस्थितीयविषयताश्रय-त्वाच्च। न चेष्टापत्तिः; 'वृक्षप्रचलन'न्यायेन तस्यैव स्थानपदार्थेन साकं सम्बन्धापत्तेः। तस्माद्य त्किञ्चिदेतदिति बोध्यम्।

अन्येतु—विषयतानाश्रयत्वमित्यत्र आश्रयताऽपर्याप्त्यैव ग्राह्या; 'सजूः सजूरि'ति समुदा-यस्य निर्दिश्यमानत्ववारणाय 'स्वविशिष्टाघटितत्वमि'ति चतुर्थोऽपि सम्बन्धो देयः। अत्र वै०—स्वजन्यशाब्दबोधीयविषयताश्रयावधिकपूर्वत्व — स्वजन्यशाब्दबोधीयविषयताश्रयाघटितत्वैतदुभय-सम्बन्धेन; लक्षणसमन्वयः स्वयमूहनीयः।

अथ मूलानुसारिनिर्दिश्यमानत्वलक्षणं त्वित्थं वाच्यम्; तथा हि—षष्ठीप्रकृतिप्रयोज्यप्राथ-मिकोपस्थितिविषयताविशिष्टत्वम्; वै०—स्वाश्रयत्व—स्वावच्छेदकरूपावच्छिन्नशाब्दबोधीयविषयताश्र-यत्वोभयसम्बन्धेन। प्राथमिकत्वञ्च—'यदागमा, येन विधिरि'ति शास्त्रासहकृतत्वम्; निर्जरे'त्यत्र तादृशविषयतावैशिष्ट्यस्य जराशब्दे सत्त्वाल्लक्षणसमन्वयः। 'जरा जरे'त्यादौ पूर्वस्य शाब्द-बोधीयविषयताश्रयत्वाभावान्नातिव्याप्तिः। यद्यपि 'अपा' इत्यस्य शाब्दबोधीयविषयताश्रयत्व-मस्ति; तथापि तदुपस्थितेर्यदागमशास्त्रसहकृतत्वाभावेन प्राथमिकत्वाभावान्नातिव्याप्तिः, तद्घटक-पाशब्दे पात्वावच्छिन्नोपस्थितिविषयतायाः प्राथमिकत्वेन तदाश्रयत्वान्निर्दिश्यमानत्वं तस्य। 'क किम्' इत्यत्रापि किम्त्वावच्छिन्नोपस्थितिविषताश्रयत्वस्योक्तोभयशास्त्रासहकृतत्वेन प्राथमिकत्वात्-तादृशशाब्दबोधीयविषयताश्रयत्वाच्च तस्यापि निर्दिश्यमानत्वम्। 'स्नात्वा कालकीकृत्य' इत्यत्र पूर्वस्य शाब्दबोधीयविषयताश्रयत्वाभावान्नातिव्याप्तिः। समुदायस्य चोपस्थितीयविषयताश्रयत्वेऽपि तदुपस्थितेः 'येन विधिरि'ति शास्त्रासहकृतत्वाभावेन प्राथमिकत्वाभावान्नातिव्याप्तिः 'सजूः सजूरि' त्यत्रापि सजुष्ट्वावच्छिन्नोपस्थितिविषयतायाः तादृशशाब्दबोधीयविषयतायाश्चाश्रयत्वान्नाव्याप्तिः। एवं 'व्याघ्रपात्पद'' इत्यत्र च पदद्वित्वस्थले बोध्यम्। परन्त्विदं 'यदागमा' इत्यस्य लक्षणाग्राहकत्व-

अनया च स्वस्वनिमित्तसन्निधापिताना 'मलोऽन्त्यस्ये' त्यादीनां समावेश

तत्तद्धर्मारोपप्रयोजकत्वेन यदागमपरिभाषावल्लक्षणाग्राहकत्वात् तद्बोधितस्यापि निर्दिश्यमानत्वानापत्तिरिति वाच्यम्; स्थानिवत्सूत्रस्येव तयोर्धर्मारोपप्रयोजकत्वेऽपि लक्षणाग्राहकत्वाभावेन तद्बोध्यस्य षष्ठीप्रकृतिशक्यत्वेन निर्दिश्यमानत्वे बाधकाभावात्। अत्रै 'वानाप्यक' इत्यादिमानमित्यन्यत्र विस्तरः ।

नन्वनया निर्दिश्यमानस्यादेशविधानात 'पादस्य लोप' इत्यत्रान्त्यस्यादेशानापत्तिरनया बाधादत आह—अनयेति । 'अलोऽन्त्यस्ये' त्यादौ षष्ठीपदानुवृत्त्या

पक्षे; अन्यथा 'पा' इत्यत्र शाब्दबोधीयविषयताश्रयत्वाभावेनानिर्दिश्यमानत्वापत्तिरिति बोध्यम् ।

अथ—यदा 'यदागम'परिभाषा शक्तिग्राहिका, तदा 'यदागमा इति परिभाषा स्थानिवत्सूत्रेणागतार्थे'ति मूलग्रन्थाविरोधेन निर्दिश्यमानत्वलक्षणे पूर्वोक्ते द्वितीयसम्बन्धस्थाने स्वावच्छेदकरूपावच्छिन्नशाब्दबोधीयविषयताश्रयघटकत्वं देयम्; निर्जरघटकजराशब्दस्य तादृशोपस्थितिविषयताविशिष्टत्व लक्षणसमन्वयः । शाब्दबोधीयविषयताश्रयघटकत्वं व्यपदेशिवद्भावेन बोध्यम्; 'अपा' इत्यत्र प्राथमिकोपस्थितिविषयताश्रयः—पा इति, शाब्दबोधीयविषयताश्रयः—अपा इति, तद्घटकश्च—पाशब्द इति लक्षणसमन्वयः ।

स्यादेतत्— यदि प्राथमिकत्वमुपस्थितौ विशेषणं तदा पात्वावच्छिन्नोपस्थितिः प्राथमिकैव, यदागमपरिभाषया च तदीयविषयताश्रयता विशिष्टे बोध्यते; उपस्थितिश्च स्वत एव सिद्धा । तथा च 'यदागमा, येन विधिरि'त्येतदन्यतरशास्त्राप्रयोज्योपस्थितिः पात्वावच्छिन्ना, तदीयविषयताश्रयः—अपा इति, तस्य निर्दिश्यमानत्वेन पिबादेशापत्तिः । एतदर्थं यदा प्राथमिकत्वमाश्रयताविशेषणं, तदा उक्तोभयशास्त्राप्रयोज्योपस्थितिविषयताश्रयता इत्यर्थः स्यात्; एवञ्च 'अपा' इत्यत्र पात्वावच्छिन्नविषयताश्रयता यदागमशास्त्रसहकारेणैवेति न तस्य निर्दिश्यमानत्वम्; परन्तु षष्ठीप्रकृतिप्रयोज्या या जरान्तत्वावच्छिन्ना विषयता तादृशविषयताविशिष्टत्वं निर्जरशब्दे न येन विधिरिति शास्त्रसहकृतम्, किन्तु स्वभावादेव, जरान्तत्वावच्छिन्नोपस्थितिस्तु तच्छास्त्रसहकारेणैव । प्राथमिकत्वञ्च नोपस्थितौ विशेषणमिति 'निर्जरे'ति विशिष्टस्य निर्दिश्यमानत्वापत्तिरिति चेदत्राहुः—

षष्ठीप्रकृतिप्रयोज्या 'येन विधिरि'ति शास्त्रासहकृता या उपस्थितिस्तदुपस्थितीयविषयताविशिष्टत्वं तत्त्वम्; वै०—स्वनिष्ठाधेयतानिरूपितयदागमशास्त्राऽप्रयोज्याऽधिकरणतावत्त्व-स्वावच्छेदकरूपावच्छिन्नशाब्दबोधीयविषयताश्रयत्वोभयसम्बन्धेन; पूर्वत्र अधिकरणता पर्याप्त्या, उत्तरत्राऽऽश्रयता साधारण्येन । एवञ्च 'निर्जर' इत्यत्र जरान्तत्वविषयिण्युपस्थिति'र्येन विधिरि'ति शास्त्रप्रयोज्येति न तस्य निर्दिश्यमानत्वम्, जरात्वावच्छिन्नविषयिण्युपस्थितिस्तु—येन विधिरिति शास्त्रप्रयोज्यैव, तादृशोपस्थितिविषयताश्रयताऽपि यदागमशास्त्राप्रयोज्यैवेति तस्य निर्दिश्यमानत्वम्. 'अपा' इत्यत्र पात्वावच्छिन्नोपस्थितिविषयता यदागमशास्त्रप्रयोज्यैवेति न तस्य निर्दिश्यमानत्वम् । पाशब्दे तादृशोपस्थितेः तदाश्रयतायाश्च उक्तोभयशास्त्रासहकृतत्वेन शाब्दबोधीयविषयताया अप्यपर्याप्त्याऽधिकरणत्वात् तस्य निर्दिश्यमानत्वम्, पाशब्दे तादृशोपस्थितेः तदीयविषयताश्रयतायाश्च उक्तोभयशास्त्रासहकृतत्वेन शाब्दबोधीयविषयताया अप्यपर्याप्त्याऽधिकरणत्वात् तस्य निर्दिश्यमानत्वमक्षतमेव । एवमव्याप्त्यतिव्याप्तिनिरासपूर्वकमन्यत्राप्यूहनीयमित्यलम् । तदुक्तम्—अन्यत्र विस्तर इति ।

एव न बाध्यबाधकभावो, विरोधाभावात् । नाप्येतयोरङ्गाङ्गिभावः; उभयोरपि परार्थत्वेन तदयोगात् । 'अनेकाल्‌ शित्‌ सर्वस्ये'ति सूत्रे सर्वश्चैतत्परिभाषाबोधित एव गृह्यते ।

यत्तु—'आदेः परस्य' 'अलोऽन्त्यस्ये'त्येतावेव तद्बाधकाविति । तन्न, 'उदस्थादि'ति सूत्रविषयेऽस्याः 'पादः पदि'ति सूत्रे भाष्ये सञ्चारितत्वात् । नाप्येतयोरियं बाधिका; एतयोर्निर्विषयत्वप्रसङ्गादिति 'त्रिविंशतेरि'ति सूत्रे कैयटः ।

अकज्विषये नायं न्यायः; स्थानिवद्भावेनेव तन्मध्यपतितन्यायेन तद्बुद्ध्यैव कार्यजननात् ।

---

'निर्दिश्यमानान्त्यस्याल आदेश' इत्याद्यर्थबोधनादस्याश्च'निर्दिश्यमानावयवस्यादेशा भवन्ती'त्यर्थादुभयोर्विरोधाभावः स्पष्ट एवेति भावः । नन्वनयोरङ्गाङ्गिभावेन यत्रालोन्त्यसूत्रप्रवृत्तिस्तत्रैवैतत्परिभाषाप्रवृत्त्यापत्तिरत आह—नाप्येतयोरिति । परार्थत्वेनेति । 'गुणानाञ्च परार्थत्वादसम्बन्धः समत्वादि'ति न्यायादिति भाव । अविरोधमेव विशदयति—अनेकालिति ।

तन्नेति । अनयोरर्थे एव निर्दिश्यमानत्वस्य प्रवेशेनाविरोधादिति भावः । उदस्थादिति सूत्रविषय इति । 'उदस्थादि'ति लक्ष्ये 'उदस्थास्तम्भो'रिति सूत्रविषय इत्यर्थः ।

नायं न्याय इति । व्यावर्तक इति शेष;तथा च शास्त्रान्तरपदेन तन्मध्यपतितन्यायातिरिक्तं शास्त्रं गृह्यते । यद्वा-तन्मध्यपतितन्यायेनाकज्विशिष्टे एव शाब्दविषयतायाः पर्याप्तत्वबोधनेन तत्र निर्दिश्यमानत्वसत्त्वादिति भावः । अत एवा'ऽनाप्यक' इति सूत्रे'ऽक' इति चरितार्थम् ।

त्रिपथगाकारास्तु—साकच्कानपहारकादेशविषय एवायं न्यायो न प्रवर्तते, साकच्कापहारकादेशविषये तु प्रवर्तत एवेत्यर्थः । अत एव 'भिन्धकीत्यत्राकचि कृते धित्वं न प्राप्नोति निर्दिश्यमानत्वाभावादि'ति भाष्यं सङ्गच्छते; सामान्यत एवाकज्विषये एतदप्रवृत्तावनया वारणासम्भवाद्भाष्यासङ्गतिः स्पष्टैव । अत एव 'सर्वकदे' त्यत्र सर्वस्य सोऽन्यतरस्यां दीत्यनेन साकच्कापहारकसादेशो नेत्याहुः । तदपरे न सहन्ते; तन्निष्ठोद्देश्यतानिरूपितविधेयताश्रयतन्मध्यपतितस्यैव तद्ग्रहणेन ग्रहणं, न तु तन्मध्यपतितत्वमात्रेण; अन्यथा जनं रातीति 'जनरे' त्यत्र नशब्दस्य 'जरा' इत्येतदक्षरद्वयमध्यपातित्वेन जराशब्दग्रहणेन ग्रहणापत्तौ जरसादेशापत्तेः । अत एव 'अन्तात्यन्ते'ति सूत्रेऽत्यन्तग्रहणं चरितार्थम् ; अन्यथाऽन्तग्रहणेन तन्मध्यपतितन्यायेन

---

तदपरे न सहन्त इति । 'असति बाधके प्रमाणानां सामान्ये पक्षपातः' इति न्यायेन साकच्कापहारके तदनपहारके च सामान्यत एव निर्दिश्यमानत्वमस्तीति वादिन इत्यर्थः ।

**इयं चावयवषष्ठीविषयेऽपि । अत एव 'तदोः सः सावि'ति सत्व'मतिस्य' इत्यत्रोपसर्गतकारस्य न । निर्दिश्यमानयुष्मदाद्यवयवमपर्यन्तस्यैव यूयादयो, न 'त्वतियूयमि'त्यादौ सोपसर्गावयवमपर्यन्तस्येति बोध्यम् ।**

---

अत्यन्तग्रहणे सिद्धे तद्वैयर्थ्यापत्तिः । इत्थञ्च 'तिङश्चे'ति सूत्रेण तिङन्तस्याकज्विधानात्तद्ग्रहणेनाकज्विशिष्टस्य ग्रहणेऽपि हिग्रहणेन हकिग्रहणे मानाभावान्निर्दिश्यमानपरिभाषया धित्वाप्राप्तिरिति भाष्याभिप्रायसत्त्वेन त्वदुक्तार्थे भाष्यसम्मतेवक्तुमशक्यत्वात् ।

केचित्तु—'तन्मध्यपतित'न्याये तन्निष्ठोद्देश्यताया अपर्याप्ताया उद्देश्यतावच्छेदकसाधारणविषयताया वा ग्रहणेनोक्तसूत्रस्य चारितार्थ्यात् 'भिन्धकी'त्यत्र हिशब्दे तिङ्पदप्रयोज्योद्देश्यतावच्छेदकतारूपविषयतापर्याप्तेरपर्याप्त्या तिङन्तत्वावच्छिन्नोद्देश्यताया वा सत्त्वेनोक्तन्यायेन हकिशब्दस्य धित्वप्राप्तेर्भाष्यासङ्गत्यापत्त्योक्तकल्पनायां बाधकाभावः । अत एव 'किमः कः' इति सूत्रशेखरस्थ आवृत्त्या 'साकच्कस्य कादेश' इत्यर्थकः कैयटग्रन्थः सङ्गच्छते । किञ्च—तन्मध्यपतितन्यायस्य लोकसिद्धत्वप्रतिपादकेन, गर्भिणीस्थो गर्भो गर्भिणीग्रहणेन गृह्यते, गङ्गास्थो घटो गङ्गाग्रहणेन गृह्यत इत्यादिलौकिकव्यवहारप्रदर्शनपरेण भाष्यग्रन्थेन, पतितपदस्वारस्येन

---

केचित्त्विति । राघवेन्द्राचार्यमतानुयायिन इत्यर्थः । अपर्याप्ताया इति । अत एव 'मादुपधायाश्च, मतोर्वो यवादिभ्य' इति सूत्रस्थो 'वृक्षवन्तौ' इति भाष्यप्रयोगः सङ्गच्छते; अन्यथा—तत्र नुमः मतुबन्तपर्याप्तोद्देश्यकतया मतुबन्तग्रहणेन ग्रहणेऽपि मतुब्ग्रहणेन नुम्विशिष्टस्याग्रहणात् वत्वानापत्त्या तदसङ्गतिरेव स्यात् ।

**कैयटग्रन्थः सङ्गच्छत इति ।** कैयटेन 'इम अ' इति न्यासे साकच्कानपहारकत्वेन विशिष्टस्याप्यादेशे 'कक' इति रूपं स्यात्, 'किमः कः' इति न्यासे साकच्कापहारकत्वेनाऽऽदेशाभावे 'ककिम्' इति रूपमिति फलभेदात् आवृत्त्या विशिष्टस्यादेशः साधितः । अकज्विषये सामान्यतो निर्दिश्यमानत्वे तु—अत्रापि न काऽप्यनुपपत्तिरित्यावृत्त्या तत्प्रयासो विफल एव स्यादिति भावः ।

वस्तुतस्तु—सामान्यतः कल्पयतामपि मते कैयटो न विरुद्धः, तस्य 'परमककिम्'शब्दविषयत्वात्, 'परमकिम्' शब्दादकचि 'ककिम्' शब्दस्य मध्यपतितत्वाभावेन उक्तन्यायाप्रवृत्तौ आवृत्तेरावश्यकत्वात्, तन्मतेऽपर्याप्त्योद्देश्यताया अग्रहणात् । न चैतन्मते 'धनवन्तौ' इत्यत्र मध्यपतितत्वाभावेन वत्वानापत्तिः, नुमः उगिदन्तनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वात् मतुबो निर्दिश्यमानत्वाभावादिति वाच्यम्; 'वृक्षवन्तौ' इति भाष्यप्रयोगेण वत्वविधौ निर्दिश्यमानावयवत्वमुपलक्षणम् । एवञ्च मतुपो मकारस्य पूर्वं निर्दिश्यमानावयवत्वेन सम्प्रति वकारः स्यादेव । एवं स्थिते तदर्थमुद्देश्यताऽपर्याप्त्या न ग्राह्येति तत्त्वम् । दीक्षितग्रन्थस्य न्यासभेदेन फलभेदरूपासङ्गतिरपि नास्मन्मते । अत एव 'साकच्कार्थमि'त्यादिग्रन्था अपि सामान्यत एव तन्मध्यपतितन्यायबोधिते निर्दिश्यमानत्वबोधनद्वारा एतत्पक्षसाधका एव ।

दावभावेनार्थवद्ग्रहण' परिभाषाया अप्रवृत्त्याऽजं रातीत्यर्थक 'अजरा' शब्दादौ जरसाद्यापत्तिः। न च गौणमुख्यन्याये तादृशविशिष्टरूपोपादानत्वस्वीकारे'ऽन्यर्थवद्ग्रहण'-परिभाषायां तस्मिन् साक्षान्मुख्येति निवेशे मानाभाव इति वाच्यम्; प्रातिपदिकसंज्ञासूत्रेऽधातुपदस्य धातुपदवद्भिन्नार्थकतया परम्परयाऽऽनुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वे 'नार्थवद्ग्रहण' परिभाषयैवार्थवत्त्वलाभेऽर्थवद्ग्रहणस्यैव मानत्वात्। अत एव 'गच्छती'त्यत्र तुक्सिद्धिः; अन्यथा ह्रस्वपदस्यापि परम्परया ह्रस्वपदत्वरूपानुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वेन विशिष्टरूपोपादानत्वात् 'छे चे'ति सूत्रेऽर्थवद्ग्रहणपरिभाषोपस्थितावस्यानर्थकतया तुग् न स्यादिति चेन्न। आनुपूर्व्या साक्षादवच्छिन्ना या प्राथमिकोपस्थितीया मुख्यविशेष्यता तत्प्रयोजकत्वस्य विशिष्टरूपोपादानपदेन ग्रहणे ह्रस्वादिपदे दोषाभावात्; जरादिशब्दानां 'यदागम'परिभाषया लक्षणाग्रहात् प्राक् जराशब्दत्वाद्यवच्छिन्नोपस्थापकत्वेन निरुक्तविशिष्टरूपोपादानत्वस्य सुवचत्वादिति प्राहुः।

परे तु—निर्दिश्यमानत्वम्—षष्ठीप्रकृतिविशिष्टत्वम्; वैशिष्ट्यञ्च—स्वप्रयोज्योपस्थितिविषयत्व–स्वविशिष्टवर्णाघटितत्वमिति सम्बन्धद्वयेन। अत्र वैशिष्ट्यञ्च—स्वप्रयोज्योपस्थितिविषयाव्यवहितपूर्वत्व–स्वप्रयोज्यशाब्दबोधीयविषयतापर्याप्त्यधिकरणान्येतरत्वोभयसम्बन्धेन। 'निर्जरसावि'त्यत्र निरुक्तोभयसम्बन्धेन षष्ठीप्रकृतिविशिष्टो वर्णो निर्शब्दावयवरेफः, 'अपिबदि'त्यत्राडागमस्तद्घटितत्वेन समुदायस्य न निर्दिश्यमानत्वम्, तद्घटितत्वेन च जराशब्दपाशब्दयोस्तत्त्वम्। 'सजूस्सजूभ्या्मि'त्यत्र पूर्वसजुष्शब्दे तदवयवषस्य स्वप्रयोज्योपस्थितिविषयपूर्वत्वेऽपि द्वितीसम्बन्धाभावेन तद्विशिष्टोदासीनवर्णाघटितत्वात्तत्त्वसिद्धिः। 'जरसावि' त्यत्र जकारे द्वितीयसम्बन्धसत्त्वेऽप्याद्यसम्बन्धाभावान्नाव्याप्तिः। 'जरसोजरसावि' त्यत्र पूर्वजरसः आकारस्य द्वितीयसम्बन्धस्याप्यभावात् जकारस्याद्यसम्बन्धाभावात्तादृशोदासीनवर्णाघटितत्वेन तत्त्वसिद्धिः। न च पूर्वजरसो जकारे जराशब्दान्तत्वेनोपस्थितिविषयो यः 'अरसोजरेति' तदवधिकपूर्वत्वस्य द्वितीयसम्बन्धस्य च सत्त्वेनोक्तसम्बन्धद्वयेन स्वविशिष्टतादृशजकारविशिष्टत्वात्पूर्वस्य निर्दिश्यमानत्वाभावेन जरसादेशानापत्तिः, एवं 'सजूस्सजूभ्या्मि' त्यत्रापि पूर्वषस्य रुत्वानापत्तिरिति वाच्यम्; 'अरसो जरे'ति समुदायस्य स्वप्रयोज्योपस्थितीयविषयतापर्याप्त्यधिकरणत्वाभावात्, जराशब्द एव तत्कल्पनात्। 'अपिबदि' त्यत्र पाशब्दस्य निरर्थकत्वेऽपि पापदशक्यत्वस्य पाशब्द एव सत्त्वेन तत्र तत्कल्पनात्।

---

'यदागम' परिभाषाऽपि 'प्रातिपदिकग्रहणे' इत्यादिवच्छक्यतावच्छेदकाऽऽरोपबोधनद्वारा सङ्केतग्राहिका एव, न लक्षणाग्राहिका। किञ्च—लक्षणाग्राहकत्वाङ्गीकारे गौरवम्। एवञ्च शक्तिग्राहकत्वपक्षे 'शाब्दबोधीयविषयताघटिते'त्यादिपूर्वोक्तलक्षणम् 'अपिबत्' इत्यत्रातिव्याप्तमित्यतो लक्षणान्तरमाह—**परे त्विति**। **पूर्वजरस इति**। पूर्वजराशब्दस्येति तदर्थः। द्वितीयसम्बन्धस्यापीति। वर्णे स्ववैशिष्ट्यनियामको द्वितीयः सम्बन्ध इत्यर्थः; अपिना च तत्रैव स्ववैशिष्ट्यनियामकः प्रथमसम्बन्धो ग्राह्यः। **तत्कल्पनादिति**। फलाभावादिति भावः।

यद्वा—स्वप्रयोज्योपस्थितिविषयस्य तादृशोपस्थितिविषयाघटितस्य ग्रहणेनादोषात्, अरसो जरेति समुदायस्य तादृशजराशब्दघटितत्वेन तस्य अनीतुमागमस्यन्वान। न च त्रिशब्दादाचारक्विबन्तात्कर्तरि क्विपि तुकि 'त्रितामि' त्यादौ निरुक्तनिर्दिश्यमानत्वापत्तिरिति वाच्यम्; 'नामी'ति सूत्रस्थभाष्यप्रामाण्येन तादृशरूपाणामनभिधानेनादोषात। निर्दिश्यमानत्वलक्षणे स्वोपस्थाप्योद्देश्यकागमाघटितत्वरूपषष्ठीप्रकृतिवैशिष्ट्यनियामकतृतीयसम्बन्धनिवेशान, त्रिच्छब्दस्य तादृशतुग्घटितत्वे'नाजराणी' त्यत्र नुमघटितत्वेनादोषाच्च। एवं 'चापिबदि' त्यत्र दोषवारणाय यदागमन्यायस्य लक्षणाग्राहकत्वं स्वीकृत्य, सांसर्गिकविषयतानिवेशादिगौरवं न करणीय इति महालाघवम्। 'स्नात्वा कालकीकृत्ये' त्यादौ तु पूर्वोक्तरीत्यैव वारणं बोध्यम्। न चैवं 'मपिबदि' त्यत्र दोषवारणे यदागमपरिभाषा व्यर्था, कल्पितस्थान्यादेशभावस्य स्थानिवत्सूत्रे ग्रहणेनापि 'प्रणिदापयती' त्यादिसिद्धेरिति वाच्यम्; इष्टापत्तेरित्याहुः।

---

**अनभिधानेनेति।** तत्र हि भाष्ये-"अमीति न्यासे ह्रस्वनद्यापे'ति सूत्रस्थं ह्रस्वग्रहणं भूतपूर्वह्रस्वान्तग्रहणे ज्ञापकम्, तेन 'रामाणा'मित्यत्र नित्यत्वात् पूर्वं दीर्घेऽपि नुट् सिद्ध्यति, 'तिसृणा'मित्यत्र नुट् तु 'षट्चतुर्भ्यश्च' इति सूत्रे त्रेरित्यनुवृत्त्या सिद्धः" इत्युक्तम्। 'त्रितामि'त्य-स्याभिधाने तु-सम्प्रति नुट् स्यात्, ह्रस्वग्रहणे तु-न स्यादिति फलभेदापत्त्या तदनभिधानमावश्यक-मिति भावः।

वस्तुतस्तु—'षट्चतुर्भ्यश्च' इति सूत्रे चतुर्शब्दसाहचर्येणात कारान्तस्यैव त्रिशब्दस्य ग्रहणेन न तत्र फलभेदः। किञ्च—सखिशब्दात् आचक्षाणणिजन्तात्क्विपि तुकि 'सखित्' इत्यत्र 'सख्युरसम्बुद्धौ' इति अनङादेशापत्तिरित्याशयेनाह—**निर्दिश्यमानत्वलक्षण इत्यादिः।** **स्वोपस्थाप्योद्देश्यकागमाघटितेति।** नन्वेवमपि 'परिषिञ्चति' इत्यत्र नुमागमघटितत्वेन निर्दिश्यमानत्वाभावात् सिचः सस्य षत्वं न स्यादिति चेन्न। तत्स्थाने स्वविशिष्टागमाघटितत्वनिवेशात्। वैशिष्ट्यं च—स्वोपस्थाप्योद्देश्यकत्व—स्वविशिष्टभिन्नत्वैतदुभयसम्बन्धेन; अत्र स्ववै०—स्वोपस्थाप्यघटकावधिकपूर्वत्व-स्वोपस्थाप्यघटकावधिकोत्तरत्वैतदुभयसम्बन्धेन।

नन्वेवमपि 'स्नात्वा कालकीकृत्य' इत्यत्र पूर्वक्त्वाशब्दस्यापि निर्दिश्यमानत्वापत्तिः, स्वजन्योपस्थितीयविषयताश्रयाव्यवहितपूर्वत्वस्य स्वप्रयोज्यशाब्दबोधीयविषयताश्रयान्तेतरत्वस्य च उदासीनवर्णे एव सत्त्वेन पूर्वक्त्वाघटकवर्णेऽसत्त्वात्तदघटितत्वरूपस्य द्वितीयसम्बन्धस्य आद्यसम्बन्धस्य च सत्त्वादत आह—**स्नात्वा कालकीकृत्येत्यादाविति।** **पूर्वोक्तरीत्येति।** "पर्युदासन्यायेन अव्ययपूर्वपदपूर्वकस्यैव क्त्वाशब्दस्य 'समासेऽनञ्पूर्वे' इत्यनेन ल्यपो विधानात्" इत्येवं पूर्वोक्तरीत्येत्यर्थः। **इष्टापत्तेरिति।** लक्षणे आगमाघटितत्वनिवेशेनाड्विशिष्टे 'निर्दिश्यमानत्वाभावेन 'लावस्थायामडि'ति भाष्याविरोधादिति भावः। न चादन्तोपदिश्यमानत्वस्यालत्वव्याप्यधर्मघटितत्वेन स्थानिवद्भावाप्रवृत्त्या 'पचमानः' इत्यत्र स्वरानापत्तिरिति वाच्यम्; तत्र पूर्वोक्तरीत्या उपदेशेऽदन्तादित्यर्थकरणेनादोषात्। यद्वा--पञ्चमीसमासेन स्थानिवद्भावमाश्रित्य स्वरः सम्पादनीयः। अथवा—अदन्तोपदिश्यमानात् परत्वस्योपलक्षणविधया भानमङ्गीकृत्य समाधेयम्, तेन 'दीव्यमान' इत्यत्रापि न दोष इति भावः।

वस्तुतस्तु—स्वशक्यत्व—स्वविशिष्टवर्णाघटितत्वोभयसम्बन्धेन षष्ठीप्रकृतिविशिष्टत्वं निर्दिश्यमानत्वम्; वैशिष्ट्यञ्च—स्वोपस्थाप्याघटितो यः स्वबोध्यस्तद्घटकत्वं स्वोपस्थाप्यावधिकपूर्वत्वं चेति सम्बन्धद्वयेन। अत्र पूर्वत्वं व्यवहितादिसाधारणम्, तेन 'स्नात्वा कालकीकृत्ये'त्यत्र पूर्वक्त्वावयववर्णस्योक्तसम्बन्धद्वयेन षष्ठीप्रकृतिविशि-

---

नन्वत्र कल्पे 'समासेऽनञ्पूर्वे' इति सूत्रस्थभाष्यविरोधः; तत्र हि 'स्नात्वा कालकः' इत्यत्र ल्यपमाशङ्क्य 'स्नात्वा कालकादीनां प्रतिषेधो वक्तव्यः न वक्तव्यः क्त्वान्तनिर्देशात् सिद्धम्, समासनिपातनाद्वे'त्युक्तम्। क्त्वान्तनिर्देशपक्षे 'स्नात्वा कालकः' इत्यत्र दोषाभावेऽपि 'स्नात्वा कालकीकृत्य' इत्यत्र पूर्वक्त्वो ल्यप्वारणं न सम्भवति, प्रकृतनिर्दिश्यमानत्वलक्षणस्य तत्र सत्त्वात्; फलभेदापत्त्या इष्टापत्तेः वक्तुमशक्यत्वात्। किञ्च—प्रकृतनिर्दिश्यमानलक्षणेनैव यदागमपरिभाषाया गतार्थत्वात् 'लावस्थायामडि'ति भाष्यविरोधेन स्थानिवत्सूत्रेण गतार्थेत्यपास्तमिति मूलग्रन्थविरुद्धं चैतल्लक्षणमत आह—वस्तुतस्त्विति। एतेनात्र कल्पे 'यदागमा' 'येन विधिरि' त्यनयोर्लक्षणाग्राहकत्वाङ्गीकारेऽपि इतरलक्षणापेक्षयाऽत्र लाघवम्, भाष्याविरोधश्च सूचितः।

अत्र लक्षणे स्वशक्यमात्रोपादाने—'निर्जर' इति समुदायस्यादेशवारणेऽपि व्याघ्रपात्पदः, स्नात्वा कालकीकृत्य' इत्यत्र पूर्वपाच्छब्द क्त्वाशब्दयोरपि निर्दिश्यमानत्वं स्यात्, पदद्वित्वे समुदायस्यापि स्यात्। द्वितीयसम्बन्धमात्रोपादाने—जरापदीयनिर्दिश्यमानत्वं रामशब्दादेरपि स्यात्। द्वितीयसम्बन्धघटकप्रथमसम्बन्धानुपादाने—पूर्वसज्जुषो निर्दिश्यमानत्वं न स्यात्। स्वबोध्ये स्वोपस्थाप्याघटित इति विशेषणानुपादाने—'निर्जर' इत्यत्र निरो रेफस्य समुदायरूपबोध्यघटकत्वमेव स्यात्। द्वितीयसम्बन्धघटकद्वितीयसम्बन्धानुपादाने—स्वोपस्थाप्याघटितो यः स्वबोध्यः—'जरा' इति, तद्घटकजकारघटितत्वेन तदघटकत्वाभावात् 'जरा' इत्यस्यापि निर्दिश्यमानत्वं न स्यात्। न च व्यपदेशिवद्भावेन घटित एव, तर्हि तदघटितबोध्यस्याप्रसिद्धिरेव स्यात्। अत्रापि कल्पे पदद्वित्वे समुदायस्य न निर्दिश्यमानत्वम्। यद्वा—लाघवात् स्वविशिष्टवर्णाघटितत्वमित्यस्य स्थाने स्वप्रयोज्यशाब्दबोधीयविषयताश्रयत्वमिति देयम्, तेन 'व्याघ्रपात्पदः' इत्यत्र, 'स्नात्वा कालकीकृत्य' इत्यत्र च पूर्वपाच्छब्दस्य पूर्वक्त्वाशब्दस्य च न निर्दिश्यमानत्वम्।

न चैव पदद्वित्वस्थले समुदायस्योत्तरपदस्य च निर्दिश्यमानत्वापत्तिरिति वाच्यम्; निर्दिश्यमानावयवेतरस्यादेशा न भवन्तीत्यर्थपर्यन्तं परिभाषायाः तात्पर्यसत्त्वेन समुदायस्य निषेधेनादोषात्। यद्वा—शाब्दबोधीयविषयताश्रयाघटितत्वमिति तृतीयोऽपि सम्बन्धो देयः। 'पदद्वित्वस्थले समुदायस्यादेश इष्टः' इति मते तु तृतीयसम्बन्धो न देयः। 'इयङ्वङोर्ङित्त्वं धात्वादीनामपि निर्दिष्टत्वादन्त्यदेशत्वाय' इति मूलानुसारेण 'वृक्षप्रचलन'न्यायेन समुदायस्यैवादेशस्य सुलभत्वादित्येतन्निर्दुष्टं निर्दिश्यमानत्वलक्षणं बोध्यम्। 'पूतक्रतुदि' त्यत्र पूर्वस्य निर्दिश्यमानत्वमिष्टमेव। उपसर्जनत्वाच्च ङीबभावे तत्सन्नियोगशिष्टैकारादेशोऽपि न। 'वृषलपतिदि'त्यत्र पूर्वस्यादेश इष्ट एव। 'नाभिदि' त्यत्र च समुदायस्यैवादेशः; तत्र नाभिशब्दः नभरूपतामाप्नोति। तस्मात् प्रत्यासत्त्या यत्प्रत्ययस्येत्यर्थकरणेन षष्ठ्युच्चारणाभावेन परिभाषाया अप्राप्तेः।

अत्र केचित्—प्रातिपदिकग्रहणे 'तन्मध्यपतित' इत्यादीनामिव 'येन विधिर्यदागमा' इत्यनयोरपि विनिगमनाविरहात् सङ्केतग्राहकत्वमेव। लाघवाच्च पदद्वित्वस्थले समुदायस्यैव निर्दिश्यमानत्वमस्ति, स्थानिवद्भावस्थले सर्वत्र स्थानिबुद्ध्यैव कार्यजननेऽत्र तत्त्यागे मानाभावात्। अत

ष्टत्वेन तस्य स्वविशिष्टवर्णाघटितत्वाभावेन निर्दिश्यमानत्वं न, यदागमपरिभाषाया लक्षणाग्राहकत्वेन 'त्रितामि' त्यत्र षष्ठीप्रकृतिशक्यत्वाभावान्न तत्त्वम्। एवमन्यत्र समन्वयः स्वयमूहनीयः। न चैवं 'लिङ्गविशिष्ट' परिभाषा 'तन्मध्यपतित' न्याययोरपि

---

एव पाणिनिना जराया असुङ्, त्रेरयङ् च न कृतः।

यत्त—'पादः पद्' ति सूत्रस्था "पादोपधाया ह्रस्वत्वं वक्तव्यमि"ति वार्तिकविरोधः। तन्न; निर्दिश्यमानपरिभाषामबुद्ध्वा प्रवृत्तस्य वार्तिकस्य एकदेशयुक्तित्वात्। अत एवाग्रे भाष्यकृता 'निर्दिश्यमानस्येत्येव सिद्धम्' इति समाहितम्। एतदनुसृत्य निर्दिश्यमानत्वमेवं परिष्कुर्वन्ति—षष्ठीप्रकृतिविशिष्टत्वम्; वै०—स्वजन्योपस्थितीयविषयताश्रयत्व—स्वप्रयोज्यशाब्दबोधीयविषयता-विशिष्टवर्णाघटितत्व—स्वजन्योपस्थितीयविषयताश्रयोद्देश्यकागमाघटितत्वैतत्त्रितयसम्बन्धेन, विषयता वै० वर्णे—स्वानाश्रयत्व—स्वाश्रयसमभिव्याहृतत्वोभयसम्बन्धेन; लक्षणसमन्वयः स्वयमूहनीय इति।

अत्रेदं चिन्तनीयम्। अत्र विषयताऽनाश्रयत्वं पर्याप्त्याऽपर्याप्त्या वा? आद्ये -सजुष्शब्द-त्वावच्छिन्नविषयताया पर्याप्त्याऽनाश्रयः—पूर्वसजुषः षकारः, तत्र स्वाश्रयोत्तरसजुःसमभिव्याहृ-तत्वमपीति तद्घटितत्वेन पूर्वस्य निर्दिश्यमानत्वानापत्तिः। द्वितीये—तत्रैव 'परमः सजूः सजूरि'त्यत्र 'सजूः सजूरि'ति समुदायस्यापि निर्दिश्यमानत्वं स्यात्, तद्घटकवर्णस्यापर्याप्त्या शाब्दबोधीय-विषयताश्रयत्वात्, अनाश्रयः—उदासीनः परमशब्दघटको वर्णस्तस्य शाब्दबोधीयविषयताश्रय-समभिव्याहृतत्वमपि, तदघटितत्वात् समुदायस्य सजूश्शब्दान्तत्वावच्छिन्नोपस्थितीयविषयताश्रय-त्वाच्च। न चेष्टापत्तिः; 'वृक्षप्रचलन'न्यायेन तस्यैव स्थानपदार्थेन साकं सम्बन्धापत्तेः। तस्माद्य त्किञ्चिदेतदिति बोध्यम्।

अन्येतु—विषयतानाश्रयत्वमित्यत्र आश्रयताऽपर्याप्त्यैव ग्राह्या; 'सजूः सजूरि'ति समुदा-यस्य निर्दिश्यमानत्ववारणाय 'स्वविशिष्टाघटितत्वमि'ति चतुर्थोऽपि सम्बन्धो देयः। अत्र वै०—स्वजन्यशाब्दबोधीयविषयताश्रयावधिकपूर्वत्व — स्वजन्यशाब्दबोधीयविषयताश्रयाघटितत्वैतदुभय-सम्बन्धेन; लक्षणसमन्वयः स्वयमूहनीयः।

अथ मूलानुसारिनिर्दिश्यमानत्वलक्षणं त्वित्थं वाच्यम्; तथा हि—षष्ठीप्रकृतिप्रयोज्यप्राथ-मिकोपस्थितिविषयताविशिष्टत्वम्; वै०—स्वाश्रयत्व-स्वावच्छेदकरूपावच्छिन्नशाब्दबोधीयविषयताश्र-यत्वोभयसम्बन्धेन। प्राथमिकत्वञ्च—'यदागमा, येन विधिरि'ति शास्त्रासहकृतत्वम्; निर्जरे'त्यत्र तादृशविषयतावैशिष्ट्यस्य जराशब्दे सत्त्वाल्लक्षणसमन्वयः। 'जरा जरे'त्यादौ पूर्वस्य शाब्द-बोधीयविषयताश्रयत्वाभावान्नातिव्याप्तिः। यद्यपि 'अपा' इत्यस्य शाब्दबोधीयविषयताश्रयत्व-मस्ति; तथापि तदुपस्थितेर्यदागमशास्त्रसहकृतत्वाभावेन प्राथमिकत्वाभावान्नातिव्याप्तिः, तद्घटक-पाशब्दे पात्वावच्छिन्नोपस्थितिविषयतायाः प्राथमिकत्वेन तदाश्रयत्वान्निर्दिश्यमानत्वं तस्य। 'क किम्' इत्यत्रापि किम्त्वावच्छिन्नोपस्थितिविषयताश्रयत्वस्योक्तोभयशास्त्रासहकृतत्वेन प्राथमिकत्वात् तादृशशाब्दबोधीयविषयताश्रयत्वाच्च तस्यापि निर्दिश्यमानत्वम्। 'स्नात्वा कालकीकृत्य' इत्यत्र पूर्वस्य शाब्दबोधीयविषयताश्रयत्वाभावान्नातिव्याप्तिः। समुदायस्य चोपस्थितीयविषयताश्रयत्वेऽपि तदुपस्थितेः 'येन विधिरि'ति शास्त्रासहकृतत्वाभावेन प्राथमिकत्वाभावान्नातिव्याप्तिः 'सजूः सजूरि' इत्यत्रापि सजुष्ट्वावच्छिन्नोपस्थितिविषयतायाः तादृशशाब्दबोधीयविषयतायाश्चाश्रयत्वान्नाव्याप्तिः। एवं 'व्याघ्रपात्पद'' इत्यत्र च पदद्वित्वस्थले बोध्यम्। परन्त्विदं 'यदागमा' इत्यस्य लक्षणाग्राहकत्व-

तत्तद्धर्मारोपप्रयोजकत्वेन यदागमपरिभाषावल्लक्षणाग्राहकत्वात् तद्बोधितस्यापि निर्दिश्यमानत्वानापत्तिरिति वाच्यम्; स्थानिवत्सूत्रस्येव तयोर्धर्मारोपप्रयोजकत्वेऽपि लक्षणाग्राहकत्वाभावेन तद्बोध्यस्य षष्ठीप्रकृतिशक्यत्वेन निर्दिश्यमानत्वे बाधकाभावात्। अत्र 'वानाप्यक' इत्यादिमानमित्यन्यत्र विस्तरः।

नन्वनया निर्दिश्यमानस्यादेशविधानात 'पादस्य लोप' इत्यत्रान्त्यस्यादेशानापत्तिरनया बाधादत आह—अनयेति। 'अलोऽन्त्यस्ये' त्यादौ षष्ठीपदानुवृत्त्या

---

पक्षे; अन्यथा 'पा' इत्यत्र शाब्दबोधीयविषयताश्रयत्वाभावेनानिर्दिश्यमानत्वापत्तिरिति बोध्यम्।

अथ—यदा 'यदागम'परिभाषा शक्तिग्राहिका, तदा 'यदागमा इति परिभाषा स्थानिवत्सूत्रेणागतार्थे'ति मूलग्रन्थाविरोधेन निर्दिश्यमानत्वलक्षणे पूर्वोक्ते द्वितीयसम्बन्धस्थाने स्वावच्छेदकरूपावच्छिन्नशाब्दबोधीयविषयताश्रयघटकत्वं देयम्; निर्जरघटकजराशब्दस्य तादृशोपस्थितिविषयताविशिष्टत्व लक्षणसमन्वयः। शाब्दबोधीयविषयताश्रयघटकत्वं व्यपदेशिवद्भावेन बोध्यम्; 'अपा' इत्यत्र प्राथमिकोपस्थितिविषयताश्रयः—पा इति, शाब्दबोधीयविषयताश्रयः—अपा इति, तद्घटकश्च—पाशब्द इति लक्षणसमन्वयः।

स्यादेतत्— यदि प्राथमिकत्वमुपस्थितौ विशेषण तदा पात्वावच्छिन्नोपस्थितिः प्राथमिकैव, यदागमपरिभाषया च तदीयविषयताश्रयता विशिष्टे बोध्यते; उपस्थितिश्च स्वत एव सिद्धा। तथा च 'यदागमा, येन विधिरि'त्येतदन्यतरशास्त्राप्रयोज्योपस्थितिः पात्वावच्छिन्ना, तदीयविषयताश्रयः—अपा इति, तस्य निर्दिश्यमानत्वेन पिबादेशापत्तिः। एतदर्थं यदा प्राथमिकत्वमाश्रयताविशेषणं, तदा उक्तोभयशास्त्राप्रयोज्योपस्थितिविषयताश्रयता इत्यर्थः स्यात्; एवञ्च 'अपा' इत्यत्र पात्वावच्छिन्नविषयताश्रयता यदागमशास्त्रसहकारेणैवेति न तस्य निर्दिश्यमानत्वम्; परन्तु षष्ठीप्रकृतिप्रयोज्या या जरान्तत्वावच्छिन्ना विषयता तादृशविषयताविशिष्टत्वं निर्जरशब्दे न येन विधिरिति शास्त्रसहकृतम्, किन्तु स्वभावादेव, जरान्तत्वावच्छिन्नोपस्थितिस्तु तच्छास्त्रसहकारेणैव। प्राथमिकत्वञ्च नोपस्थितौ विशेषणमिति 'निर्जरे'ति विशिष्टस्य निर्दिश्यमानत्वापत्तिरिति चेदत्राहुः—

षष्ठीप्रकृतिप्रयोज्या 'येन विधिरि'ति शास्त्रासहकृता या उपस्थितिस्तदुपस्थितीयविषयताविशिष्टत्वं तत्त्वम्; वै०—स्वनिष्ठाधेयतानिरूपितयदागमशास्त्राऽप्रयोज्याऽधिकरणतावत्त्व-स्वावच्छेदकरूपावच्छिन्नशाब्दबोधीयविषयताश्रयत्वोभयसम्बन्धेन; पूर्वत्र अधिकरणता पर्याप्त्या, उत्तरत्राऽऽश्रयता साधारण्येन। एवञ्च 'निर्जर' इत्यत्र जरान्तत्वविषयिण्युपस्थिति'र्येन विधिरि'ति शास्त्रप्रयोज्येति न तस्य निर्दिश्यमानत्वम्, जरात्वावच्छिन्नविषयिण्युपस्थितिस्तु—येन विधिरिति शास्त्रप्रयोज्यैव, तादृशोपस्थितिविषयताश्रयताऽपि यदागमशास्त्राप्रयोज्यैवेति तस्य निर्दिश्यमानत्वम् 'अपा' इत्यत्र पात्वावच्छिन्नोपस्थितिविषयता यदागमशास्त्रप्रयोज्यैवेति न तस्य निर्दिश्यमानत्वम्। पाशब्दे तादृशोपस्थितेः तदाश्रयतायाश्च उक्तोभयशास्त्रासहकृतत्वेन शाब्दबोधीयविषयताया अप्यपर्याप्त्याऽधिकरणत्वात् तस्य निर्दिश्यमानत्वम्, पाशब्दे तादृशोपस्थितेः तदीयविषयताश्रयतायाश्च उक्तोभयशास्त्रासहकृतत्वेन शाब्दबोधीयविषयताया अप्यपर्याप्त्याऽधिकरणत्वात् तस्य निर्दिश्यमानत्वमक्षतमेव। एवमव्याप्त्यतिव्याप्तिनिरासपूर्वकमन्यत्राप्यूहनीयमित्यलम्। तदुक्तम्—अन्यत्र विस्तर इति।

एव न बाध्यबाधकभावो, विरोधाभावात् । नाप्येतयोरङ्गाङ्गिभावः; उभयोरपि परार्थत्वेन तदयोगात् । 'अनेकाल् शित्'ति सूत्रे सर्वश्चैतत्परिभाषाबोधित एव गृह्यते ।

यत्तु—'आदेः परस्य' 'अलोऽन्त्यस्ये'त्येतावेव तद्बाधकाविति । तन्न, 'उदस्थादि'ति सूत्रविषयेऽस्याः 'पादः पदि'ति सूत्रे भाष्ये सञ्चारितत्वात् । नाप्येतयोरियं बाधिका; एतयोर्निर्विषयत्वप्रसङ्गादिति 'तिविंशतेरि'ति सूत्रे कैयटः ।

अकज्विषये नायं न्यायः; स्थानिवद्भावेनैव तन्मध्यपतितन्यायेन तद्बुद्ध्यैव कार्यजननात् ।

---

'निर्दिश्यमानान्त्यस्याल आदेश' इत्याद्यर्थबोधनादस्याश्च 'निर्दिश्यमानावयवस्यादेशा भवन्ती'त्यर्थादुभयोर्विरोधाभावः स्पष्ट एवेति भावः । नन्वनयोरङ्गाङ्गिभावेन यत्रालोन्त्यसूत्रप्रवृत्तिस्तत्रैवैतत्परिभाषाप्रवृत्त्यापत्तिरत आह—नाप्येतयोरिति । परार्थत्वेनेति । 'गुणानाञ्च परार्थत्वादसम्बन्धः समत्वादि'ति न्यायादिति भाव । अविरोधमेव विशदयति—अनेकालिति ।

तन्नेति । अनयोरर्थे एव निर्दिश्यमानत्वस्य प्रवेशेनाविरोधादिति भावः । उदस्थादिति सूत्रविषय इति । 'उदस्थादि'ति लक्ष्ये 'उदस्थास्तम्भो'रिति सूत्रविषय इत्यर्थः ।

नायं न्याय इति । व्यावर्तक इति शेष;तथा च शास्त्रान्तरपदेन तन्मध्यपतितन्यायातिरिक्तं शास्त्रं गृह्यते । यद्वा-तन्मध्यपतितन्यायेनाकज्विशिष्टे एव शाब्दविषयतायाः पर्याप्तत्वबोधनेन तत्र निर्दिश्यमानत्वसत्त्वादिति भावः । अत एवा'ऽनाप्यक' इति सूत्रे'ऽक' इति चरितार्थम् ।

त्रिपथगाकारास्तु—साकच्कानपहारकादेशविषय एवायं न्यायो न प्रवर्तते, साकच्कापहारकादेशविषये तु प्रवर्तत एवेत्यर्थः । अत एव 'भिन्धकीत्यत्राकचि कृते धित्वं न प्राप्नोति निर्दिश्यमानत्वाभावादि'ति भाष्यं सङ्गच्छते; सामान्यत एवाकज्विषये एतदप्रवृत्तावनया वारणासम्भवाद्भाष्यासङ्गतिः स्पष्टैव । अत एव 'सर्वकदे'त्यत्र सर्वस्य सोऽन्यतरभ्यां दीत्यनेन साकच्कापहारकसादेशो नेत्याहुः । तदपरे न सहन्ते ; तन्निष्ठोद्देश्यतानिरूपितविधेयताश्रयतन्मध्यपतितस्यैव तद्ग्रहणेन ग्रहणं, न तु तन्मध्यपतितत्वमात्रेण; अन्यथा जनं रातीति 'जनरे' त्यत्र नशब्दस्य 'जरा' इत्येतदक्षरद्वयमध्यपातित्वेन जराशब्दग्रहणेन ग्रहणापत्तौ जरसादेशापत्तेः । अत एव 'अन्तात्यन्ते'ति सूत्रेऽत्यन्तग्रहणं चरितार्थम् ; अन्यथाऽन्तग्रहणेन तन्मध्यपतितन्यायेन

---

तदपरे न सहन्त इति । 'असति बाधके प्रमाणानां सामान्ये पक्षपातः' इति न्यायेन साकच्कापहारके तदनपहारके च सामान्यत एव निर्दिश्यमानत्वमस्तीति वादिन इत्यर्थः ।

इयं चावयवषष्ठीविषयेऽपि । अत एव 'तदोः सः सावि'ति सत्व'मतिस्य' इत्यत्रोपसर्गतकारस्य न । निर्दिश्यमानयुष्मदाद्यवयवमपर्यन्तस्यैव यूयादयो, न 'त्वतियूयमि'त्यादौ सोपसर्गावयवमपर्यन्तस्येति बोध्यम् ।

---

अत्यन्तग्रहणे सिद्धे तद्वैयर्थ्यापत्तिः । इत्थञ्च 'तिङश्चे'ति सूत्रेण तिङन्तस्याकज्विधानात्तद्ग्रहणेनाकज्विशिष्टस्य ग्रहणेऽपि हिग्रहणेन हकिग्रहणे मानाभावान्निर्दिश्यमानपरिभाषया धित्वाप्राप्तिरिति भाष्याभिप्रायसत्त्वेन त्वदुक्तार्थे भाष्यसम्मतेर्वक्तुमशक्यत्वात् ।

केचित्तु—'तन्मध्यपतित'न्याये तन्निष्ठोद्देश्यताया अपर्याप्ताया उद्देश्यतावच्छेदकसाधारणविषयताया वा ग्रहणेनोक्तसूत्रस्य चारितार्थ्यात् 'भिन्धकी'त्यत्र हिशब्दे तिङ्पदप्रयोज्योद्देश्यतावच्छेदकतारूपविषयतापर्याप्तेरपर्याप्त्या तिङन्तत्वावच्छिन्नोद्देश्यताया वा सत्त्वेनोक्तन्यायेन हकिशब्दस्य धित्वप्राप्तेर्भाष्यासङ्गत्यापत्त्योक्तकल्पनायां बाधकाभावः । अत एव 'किमः कः' इति सूत्रशेखरस्थ आवृत्त्या 'साकच्कस्य कादेश' इत्यर्थकः कैयटग्रन्थः सङ्गच्छते । किञ्च—तन्मध्यपतितन्यायस्य लोकसिद्धत्वप्रतिपादकेन, गर्भिणीस्थो गर्भो गर्भिणीग्रहणेन गृह्यते, गङ्गास्थो घटो गङ्गाग्रहणेन गृह्यत इत्यादिलौकिकव्यवहारप्रदर्शनपरेण भाष्यग्रन्थेन, पतितपदस्वारस्येन

---

केचित्त्विति । राघवेन्द्राचार्यमतानुयायिन इत्यर्थः । अपर्याप्ताया इति । अत एव 'मादुपधायाश्च, मतोर्वो यवादिभ्य' इति सूत्रस्थो 'वृक्षवन्तौ' इति भाष्यप्रयोगः सङ्गच्छते; अन्यथा—तत्र नुमः मतुबन्तपर्याप्तोद्देश्यकतया मतुबन्तग्रहणेन ग्रहणेऽपि मतुब्ग्रहणेन नुम्विशिष्टस्याग्रहणात् वत्वानापत्त्या तदसङ्गतिरेव स्यात् ।

**कैयटग्रन्थः सङ्गच्छत इति ।** कैयटेन 'इम अ' इति न्यासे साकच्कानपहारकत्वेन विशिष्टस्याप्यादेशे 'कक' इति रूपं स्यात्, 'किमः कः' इति न्यासे साकच्कापहारकत्वेनाऽऽदेशाभावे 'ककिम्' इति रूपमिति फलभेदात् आवृत्त्या विशिष्टस्यादेशः साधितः । अकज्विषये सामान्यतो निर्दिश्यमानत्वे तु—अत्रापि न काऽप्यनुपपत्तिरित्यावृत्त्या तत्प्रयासो विफल एव स्यादिति भावः ।

वस्तुतस्तु—सामान्यतः कल्पयतामपि मते कैयटो न विरुद्धः, तस्य 'परमककिम्'शब्दविषयत्वात्, 'परमकिम्' शब्दादकचि 'ककिम्' शब्दस्य मध्यपतितत्वाभावेन उक्तन्यायाप्रवृत्तौ आवृत्तेरावश्यकत्वात्, तन्मतेऽपर्याप्त्योद्देश्यताया अग्रहणात् । न चैतन्मते 'धनवन्तौ' इत्यत्र मध्यपतितत्वाभावेन वत्वानापत्तिः, नुमः उगिदन्तनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वात् मतुबो निर्दिश्यमानत्वाभावादिति वाच्यम्; 'वृक्षवन्तौ' इति भाष्यप्रयोगेण वत्वविधौ निर्दिश्यमानावयवत्वमुपलक्षणम् । एवञ्च मतुपो मकारस्य पूर्वं निर्दिश्यमानावयवत्वेन सम्प्रति वकारः स्यादेव । एवं स्थिते तदर्थमुद्देश्यताऽपर्याप्त्या न ग्राह्येति तत्त्वम् । दीक्षितग्रन्थस्य न्यासभेदेन फलभेदरूपासङ्गतिरपि नास्मन्मते । अत एव 'साकच्कार्थमि'त्यादिग्रन्था अपि सामान्यत एव तन्मध्यपतितन्यायबोधिते निर्दिश्यमानत्वबोधनद्वारा एतत्पक्षसाधका एव ।

'पादः पदि'ति सूत्रे 'षष्ठी स्थाने' इति सूत्रे च भाष्ये स्पष्टैषा ॥ १२ ॥

---

चोक्तन्यायेन तत्सत्तोत्तरसत्ताकस्तन्मध्यपतित एव तद्ग्रहणेन गृह्यते, न तु तदुद्देश्यतानिरूपकोऽपि, भाष्योक्तलौकिकव्यवहारे उद्देश्यताया अप्रवेशात्। एवं च अकचो 'भिन्धकी'त्यत्र हिशब्दसत्तोत्तरं प्रवर्तमानत्वेन तन्मध्यपतितत्वेन चोक्तन्यायेन हकीत्यस्य हिशब्दग्रहणेन ग्रहणे बाधकाभावादुक्तभाष्यस्य निरुक्तार्थे ज्ञापकत्वं सम्यगेवेति वदन्ति।

न चैवं 'चलीक्लृप्यत' इत्यत्र रीगागमोत्तरं तद्विशिष्टस्य निर्दिश्यमानत्वाभावेन 'कृपो रो ल' इति लत्वं न स्यादिति चेन्न। रीग्विशिष्टस्य निर्दिश्यमानत्वाभावेऽपि तस्य निर्दिश्यमानावयवत्वसत्त्वेनादोषात्। न च 'धनवन्ताविे'त्यत्र पूर्वं नुमि तद्विशिष्टस्य निर्दिश्यमानत्वाभावात् 'मादुपधायाः' इति वत्वानापत्तिरिति वाच्यम्; निर्दिश्यमानावयवत्वस्योपलक्षणत्वस्वीकारेण नुमः प्राक् मकारे तत्सत्त्वेन वत्वस्य सुवचत्वात्। अत्रै'वानाप्यक' इति ज्ञापकं बोध्यम्। उपलक्षणत्वञ्च—पूर्वं पश्चाद्वा तत्सम्बद्धत्वम् 'धनवन्तावि'त्यत्र पूर्वं निर्दिश्यमानावयवत्वम्, 'चलीक्लृप्यत'इत्यत्र त्वनन्तरं तदिति विवेकः।

---

यत्तु—'इच एकाचोऽम्प्रत्ययवच्च' इति सूत्रे 'नरम्मन्यः' इत्यादौ 'सुपो धातुप्रातिपदिकयोः' इति लुक् कस्मान्नेत्याशङ्क्य, 'विधानसामर्थ्यान्न' इति समाहितं भाष्ये। 'तन्मध्यपतित'स्य एतादृशलक्षणस्वीकारे—अमः इजन्तनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वेन प्रातिपदिकनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वाभावात् लुकः प्राप्तिरेव नेति भगवतः प्रयासो विफल एव स्यात्। तस्मात् उक्ततन्मध्यपतितत्वं न सम्यगिति। तदापाततो रमणीयम्; तत्र हि अम्पदस्याऽऽवृत्त्या अम्प्रत्ययवदिति लभ्यते, तस्य च 'निरनुबन्धक'परिभाषया णमुल्व्यावृत्तौ तिङस्तु फलाभावादेवाग्रहणे प्रकृताम्बद्धवतीत्यर्थो वक्तव्यः, प्रकृतश्चाम् विग्रहे नृशब्दोत्तर योऽभूत् स एव, तथा च तस्य प्रातिपदिकावयवत्वात् अतिदेशादस्यापि प्रातिपदिकावयवत्वम्। अन्यथा 'नरमि'त्यत्र गुणः कथमिति स एव प्रष्टव्य इति दिक्।

नचैवं चलीक्लृप्यत इति। अयं शङ्कासमाधानग्रन्थः तन्मध्यपतितन्यायाविषयत्वेन प्रकृतसन्दर्भविरुद्ध इव प्रतिभाति। अपिबत्' इत्यादौ आगमविशिष्टे निर्दिश्यमानत्वाभावोपपादनानन्तरमस्य शङ्काग्रन्थस्य प्रतिपादने सौष्ठवं स्यादिति सुधियो विभावयन्तु।

न च धनवन्ताविति। इदमप्यसङ्गतम्—केचिन्मतोपपादनानन्तरमस्य शङ्काग्रन्थस्यानुत्थानात्। तन्मते 'वृक्षवन्तौ' इव अस्याप्युपपत्तेरिति पूर्वं प्रतिपादनात्। यद्वा-सिंहावलोकनन्यायेन 'तदपरे न सहन्ते' इति मतानुसारेणेयमाशङ्केति बोध्यम्।

अत्रैवानाप्यक इति ज्ञापकमिति। तन्मध्यपतितन्यायबोधिते निर्दिश्यमानत्वमस्तीत्यत्र ज्ञापकन्तु —'किमः कः' इति कादेशविधानमेव। अत एव 'किमः कादेशविधानं साकच्कार्थम्' इति भाष्यं सङ्गच्छते। 'भिन्धकि' इति भाष्यन्तु पूर्वरीत्या तन्मध्यपतितत्वाभावादेव योजनीयमिति सर्वं सुसङ्गतमिति बोध्यम्। एतेन—कैश्चिदत्र 'कस्यचिद्व्याख्यानमविचारितरमणीयमि'त्युक्तं परास्तं वेदितव्यम्।

केचित्तु—'उदःस्थे'ति सूत्रे सकारं प्रश्लिष्य सकाराद्योः स्थास्तम्भोरित्यर्थे 'नोद्-स्थादि' त्यादौ न दोषः। 'जराया' इत्यादिसूत्रेषु अल्पाक्षरबोधकपदस्यैव स्थानषष्ठ्यन्तत्वम्, इतरेषामवयवार्थकषष्ठ्यन्तत्वम्; तथा चाङ्गावयवजराशब्दस्य स्थान इति वैयधिकरण्येनान्वयान्न निर्जरशब्दे दोषः। ना 'त्यतिस्य' इत्यत्र, तत्रातेस्तकारस्य त्यदाद्यवयवत्वाभावात्। 'अपिबदि'त्यत्र यदागमपरिभाषाया अनित्यत्वान्नापाशब्दस्य पाशब्दत्वाभावात्पिबादेशः। अत एव तव मतेऽपि नापाशब्दे निर्दिश्यमानत्वातिदेशः। 'जराजरसोरि' त्यत्र पूर्वजराशब्दे जरसादेशवारणाय सूत्रे विभक्तेर्जराशब्दे विशेषणत्वम्। तव मते सप्तम्यन्तपञ्चम्यन्तयोर्निर्दिश्यमान एव विशेषणत्वमितिवत् ममापि स्थानषष्ठीप्रकृत्यर्थे एव विशेषणत्वमित्यस्य सुवचत्वात्। 'पादः पदि'ति सूत्रस्थभाष्यविरोधस्तु न; परिभाषानिष्फलत्ववादिनोऽस्य दोषस्याकिञ्चित्करत्वात्। 'सुपद्' इत्यत्राङ्गावयवपाच्छब्दस्येत्यर्थान्न समुदायस्यादेशः। 'सुपात्पद्' इत्यस्य त्वनभिधानमेव। यद्वा—यचीत्यस्याऽऽक्षेपेण परस्यैव पदादेशः। न 'पतिपत्नी' त्यत्र वैयधिकरण्यान्वये स्त्रियां वर्तमानप्रातिपदिकावयवस्य पतिशब्दस्येत्यर्थे पूर्वस्य नत्वापत्तिरिति वाच्यम्; अत्र सपूर्वकं यत्पतिशब्दान्तं प्रातिपदिकं स्त्रियां वर्तमानं तदन्त्यस्य नत्वमित्यर्थे पूर्वस्य नत्वाप्राप्त्या दोषाभावान्न निर्दिश्यमानपरिभाषाया असाधारणं फलमस्तीति प्राहुरिति सङ्क्षेपः॥ १२॥

---

परिभाषाखण्डनप्रकारमाह—केचित्त्विति। न निर्जरशब्दे दोष इति। भवताऽपि 'अङ्गस्य' इत्यस्यावयवषष्ठीत्वस्वीकारादिति भावः। त्यदाद्यवयवत्वाभावादिति। सावित्यस्य त्यदादावन्वयः, तेन 'स चासौ रामस्तद्राम' इत्यत्र तच्छब्दघटकतकारस्य न सत्वम्। अनित्यत्वादिति। 'पूर्वं धातुः साधनेन युज्यते' इति पक्षे सूत्रकारमते दोषाभावाच्च। अत एव 'लावस्थायामडि'ति भाष्योक्तपक्षेण सह न फलभेदः। अनभिधानमेवेति। अत एव 'पाद उपधाया' इति वार्तिक तत्प्रत्याख्यानयोर्न फलभेदः।

सङ्क्षेप इति। एवं 'स्नात्वा कालकीकृत्य' इत्यस्यापि अनभिधानमेव। यद्वा-अन्त्यबाध 'अन्त्यसदेशस्य' इति परिभाषया पूर्वस्य क्त्वो ल्यबादेशो वारणीयः। 'अन्त्यबाध'परिभाषायां अन्त्यबाध इत्यत्रानुसन्धीयमानषष्ठ्या पर्याप्त्या स्थानित्वमर्थः; अन्त्यसदेशस्ये'त्यत्र यथा कथञ्चित् स्थानित्वमर्थः। तथा च अन्त्यपर्याप्तस्थानिताकादेशस्य बाधे प्राप्ते क्वचिल्लक्ष्यावच्छेदेन अन्त्यसदेशानन्त्यसदेशयोः प्राप्तौ सत्यामन्त्यसदेशस्य भवतीत्यर्थः। एवं 'व्याघ्रात्पदः' इत्यत्रापि वारणीयम्। 'त्रिताम्' इत्यस्यानभिधानमेव। आचारक्विबन्तात् कर्तृक्विपः अनभिधानमित्येकः पक्षः; एकाजभ्यः आचारक्विपोऽनभिधानमिति द्वितीयः पक्षः; 'आमी'ति न्यासपरभाष्यप्रामाण्यादनभिधानमिति चरमः पक्षः। 'सखिदि'त्यत्र विशिष्टस्याऽऽदेशवारणाय 'सख्युरसम्बुद्धौ' इति सूत्रे इकारं प्रश्लिष्य इकारान्तस्य सखिशब्दस्येत्यर्थः कार्यः। न च सखिशब्दादाचारक्विबन्ताण्णिचि क्विपि णिलोपे 'सख्' इति जाते तत्र च 'अनङ् सौ' इति स्यात्, सम्प्रति न स्यादिति वाच्यम्; णिलोपस्य स्थानिवद्भावेन अनङादीनामभावात्। न च 'रमायाम्' इत्यत्र 'रमा + ङि' इत्यवस्थायाम् आमपि प्राप्तः, याडपि, तत्र याटि कृते यदागमलब्धस्य निर्दिश्यमानत्वाभावात् आपः परस्य ङिद्वचनस्याभावेन तदप्राप्तियोग्येऽचारितार्थ्यम्, कृतेऽप्यचारितार्थ्यमिति निरवकाशमूलकबाधात्

आमुत्तरं याड् भवति । सम्प्रति याटि कृते विशिष्टस्यादेशे कृते आमश्चारितार्थ्यात् तदप्राप्तियोग्ये- ऽचारितार्थ्यम् , कृते चारितार्थ्यमिति 'तक्रकौण्डिन्य' न्यायमूलकबाधात् याडागमो न भविष्यती- त्येषा स्वीकर्तव्येति वाच्यम् ; 'तक्रकौण्डिन्य' न्यायस्यानित्यत्वेन तदप्राप्तियोग्ये अचारितार्थ्यरूप- बाधबीजेन आमा याटो बाधे, तत आमि कृते याडादीनां प्रवृत्तौ प्रतिबन्धकाभावात् । न च 'पस्पर्शिषे, बभूविथ' इत्यादाविट्विशिष्टस्य सेथलादीनामभावाय परिभाषाऽऽवश्यकीति वाच्यम्; इटः पूर्वमेवान्तरङ्गत्वात् प्रतिपदोक्तत्वाच्च सेथलादीनां प्रवृत्तेस्तत्रादोषात् ।

ननु पतिशब्दादाचारक्विबन्तात्तुकि 'पतित्' इति जाते, तेन साकं वृषलस्य समासे 'वृषल- पतित्' 'पतिपतित्' इत्यादौ पतिशब्दे इकारस्य नत्वं स्यादन्त्यस्य तकारस्य मा भूदित्यर्थं परिभाषाऽऽवश्यकी । न च 'पत्युर्नो' इत्यत्र इकारप्रश्लेषेण 'इकारान्तो यः पतिशब्दस्तदन्तं प्रातिपदिकम्' इत्यर्थेन इकारान्तत्वस्य यदागमन्यायालभ्यत्वेन सिद्धान्तेऽपि न नादेशः, इदानीमपि न स्यादिति वाच्यम् ; इकारप्रश्लेषेऽपि पतिशब्दस्य इकारेण षष्ठीतत्पुरुषे- ऽभेदान्वयासम्भवात् 'इकारान्तो यः पतिशब्दः' इत्याद्यर्थासम्भवात् , कर्मधारये विशेषणत्वेन इकारस्य पूर्वनिपातापातात् । सौत्रत्वाद्याश्रयणे तु पतिशब्दस्याशब्देन समासे 'पत्य'शब्दात् आचारक्विबन्तात् कर्तरि क्विपि अल्लोपयलोपयोः 'पत्युर्नो' इत्यनेन नकारे इष्टस्य 'पत्नी' इति रूप- स्य इकारान्तत्वाभावेन असिध्यापत्तेश्च । न च 'अचः परस्मिन्नि'ति स्थानिवत्त्वान्नकारो नेष्टः; पद- चरमावयवकार्यत्वेन 'न पदान्ते'ति निषेधात् । एतेन—पतिशब्दे इकारस्यापि प्रश्लेषेण इकारान्त- पतिशब्दस्यैव ग्रहणात् न नकार इति विजयाकारोक्तिः परास्तेति चेत् ।

अत्र गुरुचरणाः—'पत्युर्नो यज्ञसंयोगे, विभाषा सपूर्वस्य, नित्यं सपत्न्यादिषु' इति त्रिसूत्रीपाठानन्तरमष्टाध्याय्यां 'पूतक्रतोरै च' इत्यस्य पाठः; तत्र त्रिसूत्र्या ङीपमननुवर्त्य 'पूतक्रतो- रि'त्यत्र तदनुवृत्तिस्वीकारे मण्डूकानुवृत्तिः स्यादतः त्रिसूत्र्यां तदनुवृत्तिरावश्यकीति 'ऋन्नेभ्य०' इति विहितस्य ङीपोऽनुवादकत्वात् यत्र नादेशे कृते ङीप्सम्भावना तत्रैव नादेशः । एवञ्च 'वृषल- पतित्' इत्यत्र नादेशे कृते 'पतन्' इत्यस्य स्त्रियामवर्तनात् समुदायस्य च नान्तत्वाभावात् सिद्धान्ते ङीप्नकारौ नेष्टावेवेति । एतेन—सर्वस्मिन्नपि निर्दिश्यमानस्वलक्षणे अत्र दोष एवेति केषाञ्चि- दुक्तिः परास्ता वेदितव्या ।

ननु नकारसंयोगेन ङीब्विधाने 'पञ्च पत्न्यो देवता अस्ये'त्यर्थे 'सास्य देवता' इत्यनेन जातस्याणो 'द्विगोर्लुगनपत्ये' इति लुकि 'लुक् तद्धितलुकि'ति स्त्रीप्रत्ययलुकि 'सन्नियोगशिष्ट' न्यायेन नकारनिवृत्तिरपि स्यादिति 'पञ्चपतन्' इति रूपानुपपत्तिरिति चेन्न । एकयोगनिर्दिष्टस्थले एव तन्न्यायप्रवृत्तेः, स्वातन्त्र्येणोभयोर्विधानेऽनुपपत्तेरभावाच्च ।

नन्वनुवादकत्वं पूर्वमुद्देश्यतावच्छेदकाक्रान्तेः सत्त्वे एव; यथा—'वनोरचे'त्यनेन नान्ते 'ऋन्नेभ्य' इत्यस्योद्देश्यतावच्छेदकाक्रान्तेः सत्त्वात् तदनुवादेन रेफविधानम् , प्रकृते च नान्तत्वा- भावात् पूर्वं ङीपोऽप्राप्त्या कथमनुवादकत्वमिति चेत्—सत्यम् ; प्राक् पश्चाद्वा केनापि सिद्धस्य पुनर्विधा- नस्यैव अनुवादपदार्थत्वात् ।

ननु सम्प्रति निर्दिश्यमानपरिभाषाभावे 'विभाषा सपूर्वस्य' इत्यस्य टीकाकृतोक्तार्थस्वीकारे तकारस्य नकारापत्तिर्दुर्वारैव । तकारस्य नकारे नान्तत्वेन स्त्रियां विद्यमानत्वेन च 'ऋन्नेभ्य' इति ङीप्सम्भावनायाः सत्त्वादिति चेन्न । 'पतिपत्नी' त्यत्र मदुक्तरीत्या दोषवारणसम्भवे फलाभावेन मानाभावेन च तादृशार्थस्यानङ्गीकारात् ।

ननु 'चेते'त्यादौ ह्रस्वस्येकारस्य प्रमाणत आन्तर्यादकारोऽपि स्यादत आह—

## यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः ॥ १३ ॥



अनेकविधम् = स्थानार्थगुणप्रमाणकृतम् । अत्र मानं—'षष्ठी स्थाने' इत्यत एकदेशानुवृत्त्या स्थानेग्रहणेऽनुवर्तमाने पुनः 'स्थानेऽन्तरतम' इति सूत्रे स्थानेग्रहणमेव ; तद्धि तृतीयया विपरिणम्य वाक्यभेदेन स्थानिनः प्रसङ्गे जायमानः सति सम्भवे स्थानत एवान्तरतम इत्यर्थकम् ।

---

प्रमाणत आन्तर्यादिति । मात्राद्वयन्यूनकालिकत्वरूपादित्यर्थः । अकारोऽपीत्यपिशब्दादेकारादिः ; तथा च पाक्षिकापत्तिरियमिति भावः । यत्रानेकेति । आदेशनियामकतया प्रसक्तमिति शेषः । वाक्यभेदेनेति । 'स्थाने, अन्तरतम' इति वाक्यद्वयम् ; 'अन्तरतम' इत्यत्र पूर्वसूत्रात्स्थाने इत्यनुवर्तते, प्रसङ्गे सति सदृशतम आदेशः

---

नन्वत्र अनुवादकत्वमेवेत्यत्र किं मानम् ? वृषलपतिच्छब्दे केवलनकारसम्पत्त्यर्थं मण्डूकानुवृत्तेर्वक्तुं शक्यत्वात् ; एवं तत्रैव ङीपो नकारस्य चोभयांशे अपूर्वविधित्वस्यापि कल्पयितुं शक्यत्वाच्चेति चेत्—अत्रोच्यते । भाष्ये त्रयाणां मध्ये कस्याप्यनुक्तत्वेन लाघवसहकृतस्यैव न्याय्यत्वात् । तत्र मण्डूकानुवृत्तावपूर्वविधाने च गौरवात् पूर्वं 'निषादस्थपति' न्यायेनानुवादकत्वमेव स्यात् । पश्चाच्च वृषलपतिच्छब्दादुभयं न स्यादिति चेदिष्टापत्तिः; भाष्ये कस्याप्यनुक्तत्वेन लाघवसहकृतकल्पनायां फलभेदस्याकिञ्चित्करत्वात् ।

यत्तु—'पतिपत्नी' इत्यत्र दोषवारणाय 'पत्युर्नो० विभाषा स०, नित्यं सपत्न्या०' इति त्रिसूत्र्या अङ्गाधिकारे पाठः कर्तव्यः । एवञ्च 'पादः पदि' तिवत् प्रत्यये इति अध्याहृत्य 'विभाषे' त्यस्य 'अङ्गसंज्ञानिमित्ते प्रत्यये परे नकारः' इत्याद्यर्थस्वीकारेण उक्तलक्ष्ये पूर्वपतिशब्दे तत्प्रत्ययाव्यवहितपूर्वत्वाभावान्न नादेशः, वृषलपतिच्छब्दे तकारस्य तु न, तादृशलक्ष्यानभिधानादित्याहुः । तदसमञ्जसम्; वृषलपत्नीपुत्र' इत्यत्र 'अन्तरङ्गानपी'ति न्यायेन विभक्तिलुकि प्रत्ययपरत्वाभावेन नादेशानापत्तेः । प्रत्ययलक्षणन्तु न; 'न लुमते'ति निषेधात् अनभिधाने मानाभावाच्च ।

वस्तुतस्तु—पूर्वत्र सर्वत्र जघन्यानभिधानादिकल्पनापेक्षया परिभाषाकल्पनमेव वरम् । अतएव च—'पादः पदि'ति सूत्रे भाष्ये भाष्यकृता 'द्विपदः पश्ये' त्यादौ विशिष्टस्यादेशवारणाय पाद उपधाया इति पठित्वा, "निर्दिश्यमानस्येत्येव सिद्धमि" त्युक्तम् । अग्रे च 'किमेषा परिभाषा कर्तव्या, अथवा इदमारब्धव्यमित्युक्त्वा, भूयांस्येतस्याः प्रयोजनानि इत्येषा कर्तव्या' इत्यादिना उपसंहृतम् ; इत्यलं विस्तरेण ॥ १२ ॥

मात्राद्वयन्यूनकालिकत्वरूपादित्यर्थ इति । फलाभावेन प्रमाणत आन्तर्येण मात्रिकत्वस्याग्रहणादिति भावः ।

**तमब्ग्रहणमेवानेकविधान्तर्यसत्तागमकम् । स्थानतः=स्थानेनेत्यर्थः । तत्र स्थानत आन्तर्य 'मिको यणची'त्यादौ प्रसिद्धमेव । अर्थतः 'पद्न्नित्यादौ स्थान्यर्था-**

---

स्यादित्येकस्यार्थः । द्वितीये 'स्थाने' इति 'स्थानेने'त्यर्थकम् । अत्र 'स्थाने, अन्तरतम' इति पदद्वयमनुवर्तते, 'प्रसङ्गे सति स्थानेन अन्तरतमो भवतीत्येतद् व्यर्थं सत् सति सम्भवे स्थानेनान्तरतम एव भवति नार्थाद्यन्तरम' इति नियमार्थकं 'स्थान' इति द्वितीयसूत्रमेवास्यां मानमिति भावः । तमब्ग्रहणमेवेति । न च तमब्ग्रहणमतिशय-लाभार्थम्, आदेशवृत्त्यतिशयश्च—स्ववृत्तित्व-स्वस्थानिवृत्तित्व स्वेतरयावदादेशावृत्ति-त्वैतत्त्रितयसम्बन्धेन स्वविशिष्टधर्मवत्त्वरूपः, अत एव 'लाकृतिरि'त्यादौ वकारो नेति वाच्यम्; स्थानिस्थानक इत्यर्थेन 'तत्स्थान' इति न्यासेनैव सिद्धेऽन्तरग्रहणमेवान्तर-तमार्थकं भविष्यतीति तमब्ग्रहणस्यानेकविधान्तर्यसत्तागमकत्वमित्याशयात् । अनेक-विधान्तर्यस्वीकारे तु—'तत्स्थान' इत्यनेन 'तदर्थकस्तद्गुणक' इत्यादीनामर्थानाम-लाभात् सामान्यार्थबोधकान्तरशब्दस्याऽऽवश्यकतयाऽतिशयलाभार्थं तमब्ग्रहणस्य स्वांशे चारितार्थ्यम् ।

---

एतद्व्यर्थमिति । पूर्ववाक्येनेति भावः । इति भाव इति । तथा च मूले 'इत्यर्थकम्' इत्यस्य 'सम्पद्यत' इति शेषः; तथा सति विपरिणम्येति न ल्यपोऽनुपपत्तिः ।

ननु अनुवृत्तस्य स्थानेपदस्य प्रसङ्गार्थकत्वादत्रत्यं स्थानेपदं ताल्वादिस्थानपरम्, 'प्रसङ्गे जायमानः स्थानेनान्तरतमः' इत्यर्थकमेकमेव विधायकं वाक्यमस्तु; योगविभागेन अनेकविधा-न्तर्यस्य आदेशनियामकमपरं वाक्यमस्तीत्यत्र किं मानम् ? एवञ्च स्थानकृतान्तर्येण 'चेता, स्तोता' इत्यत्रैकारस्य सिद्धेः प्रमाणत आन्तर्यादकारोऽपि स्यादित्यवतरणमप्यसङ्गतमित्याशङ्कायामाह—मूले—तमब्ग्रहणमेवेति । अन्यथा—एकं स्थानकृतमेवान्तर्यमादेशनियामकं स्यात्, तदा 'स्थानेन्तर' इत्यनेनैवेष्टसिद्धौ 'वाग्घरिः' इत्यादौ 'स्थानिवृत्तिसम्भावितयावद्गुणविशिष्टश्चतुर्थ एव यथा स्यात्, यत्किञ्चिद्गुणविशिष्टौ द्वितीयतृतीयौ मा भूतामि'त्यर्थक-तमब्ग्रहणस्य वैयर्थ्यं स्पष्ट-मेवेति भावः ।

नन्वेकयोगे अनेकविधान्तर्याभावेऽपि 'लाकृतिः' इत्यादौ लकार एव यथा स्यात् वकारो मा भूदिति स्थानकृतान्तर्यस्यैवातिशयितत्वलाभार्थतया तमब्ग्रहणस्य चारितार्थ्यसम्भवे कथं योग-विभागेन अनेकविधान्तर्यसत्ताज्ञापकत्वं तस्येति चेदत्राह—न च तमब्ग्रहणमिति । प्रकृत्यर्थे धर्मिणि प्रत्ययार्थान्वयसम्भवे प्रकृत्यर्थैकदेशान्वयोऽनुचित इत्याशयेनाह—आदेशवृत्त्यतिश-यश्चेति । स्वविशिष्टधर्मवत्त्वरूप इति । स्वविशिष्टधर्मश्च प्रकृते दन्तस्थानमात्रजन्यत्वरूपः; तम-बभावे दन्तस्थानजन्यत्वमादाय वकारोऽपि स्यादिति भाव. ।

तमब्ग्रहणस्य स्वांशे चारितार्थ्यमिति । अयम्भावः—अन्तरग्रहणादेव तमबलभ्य-प्रकर्षार्थलाभेन तमब्ग्रहणं व्यर्थं सदनेकविधान्तर्यसत्तागमकम्, अनेकविधान्तर्यस्य आदेशतानि-यामकत्वमित्यर्थः । एवं सति स्वांशे चारितार्थ्यासम्भवात् अत्रत्यं 'स्थाने' इति पदं न स्थानार्थकम्, किन्तु प्रसङ्गार्थकमेव । तथा च पूर्वसूत्रादनुवृत्त्यैव सिद्धे स्थानग्रहणं व्यर्थं सत् योगविभागद्वारा नियमार्थत्वेन परिभाषार्थं बोधयतीति ।

भिधानसमर्थस्यैवाऽऽदेशतेति सिद्धान्ताद्यदर्थाभिधानसमर्थो यः स तस्यादेश इति तत्समानार्थं तत्समानवर्णपादादीनां ते; तृज्वत्क्रोष्टुरिति च । गुणतो वाग्घरिरि'

---

ते=पदादयः। पदशब्दस्य तु नपुंसकत्वेन; तत्समानार्थकत्वाभावान्न पुल्लिङ्गः पदादेशः। इदं च 'स्थानेऽन्तरतमे' इति सप्तम्यन्तपाठाभिप्रायेण; सिद्धान्तभूतप्रथमान्तपाठे आह—तृज्वत्क्रोष्टुरिति। गुणत इति। त्रिविधान्तर्यभिन्नं सर्वमेव गुणपदेन ग्राह्यम्, तेनानान्तर्यमेवैतयोरान्तर्यमित्यस्य सङ्ग्रहः। आन्तर्याभाव एव 'मार्ष्टी'त्यादौ ऋकाराकारयोरान्तर्यमित्यर्थः। न च 'मार्ष्टी'त्यादावविशेषान् ऐकाराद्यादेशापत्तिरिति वाच्यम्; स्ववृत्तित्व—स्वघटितदलभिन्नदलीयवृत्तित्व—स्वघटितदलघटकस्वेतरयावद्वृत्तित्वैतत्त्रितयसम्बन्धेन स्वविशिष्टधर्माभाववत्त्वरूपानान्तर्यरूपं यदान्तर्यं, तेनान्तर्येणान्तरतमस्यैवादेशस्य ग्रहणात्। अत्र धर्मश्च † स्थानघटितो ग्राह्यो न ह्रस्वत्वादिरूपः, तेन 'स्मरती'त्यादौ गुणसिद्धिः। 'मार्ष्टी'त्यादावैकारे तालुस्थानजन्यत्वरूपधर्मस्य स्वविशिष्टत्वेन, एवमौकारे ओष्ठस्थानजन्यत्वरूपधर्मस्य स्वविशिष्टत्वेन स्वविशिष्टधर्माभाववत्त्वरूपस्यानान्तर्यस्यैकारौकारयोरसम्भवादकाराकारयोस्तु सम्बन्धत्रयेण स्वविशिष्टधर्मस्य कस्याप्यभावात्तादृशधर्माभाववत्त्वरूपानान्तर्यस्य आकारवृत्तित्वात्स्वस्थानिभूतऋकारवृत्तित्वात्स्वेतरयावदादेशयोरैकारौकारयोरवृत्तित्वाच्च तादृशानान्तर्यरूपान्तर्येणान्तरतम आकार एव ऋस्थाने भवतीत्याशयात्।

---

एतेन—तमब्ग्रहणमेव वाक्यभेदबोधनद्वारा अनेकविधान्तर्यसत्तागमकमित्युक्तं परास्तम्; 'प्रसङ्गे जायमानः सदृशतमः' इत्येकस्यैव वाक्यस्य बोधनेऽपि तमपश्चारितार्थ्यसम्भवात्। किञ्च—स्थानेग्रहणं 'वाक्यभेदेन स्थानिनः प्रसङ्गे इत्याद्यर्थकमि'ति मूलाक्षरस्वारस्यभङ्गापत्तेः। तस्मात् तमब्ग्रहणसहितं स्थानेग्रहणं वाक्यभेदं बोधयतीति युक्तम्।

सप्तम्यन्तपाठाभिप्रायेणेति। वस्तुतः—भाष्ये 'षष्ठी'ति सूत्रस्य प्रयोगनियमार्थत्वमेव दृश्यते, न स्थान्यादेशभावबोधकत्वम्। एवं 'तृज्वत्क्रोष्टुः' इत्यादित्रिसूत्र्यामपि। तथा चार्थतः आन्तर्यस्योदाहरणं 'सुध्युपास्यः' इत्यादि बोध्यम्। अत एव 'सुष्ठु ध्यायती'त्येतदर्थक 'सुधी' शब्दघटित 'सुधी+उपास्यः' इत्येतत्स्थाने सुष्ठु धीर्यस्येतीत्येतदर्थक सुधीशब्दघटित 'सुध्युपास्यः' इत्यादेशो नेति बोध्यम्।

स्वविशिष्टधर्माभाववत्त्वरूपेति। स्वपदम्—आदेशपरम्; तद्घटितं दलम्-आदेशदलम्, तद्भिन्नदलं—स्थानिदलम्। दलपदञ्च—समूहपरम्, तद्घटकश्च दलीयपदेन गृह्यते।

ननु—'कृष्णर्द्धिः' इत्यत्र अकाररूपगुणो न स्यात्, कण्ठस्थानमात्रजन्यत्वरूपधर्मस्यैवाकारे सत्त्वेन तदभाववत्त्वरूपानान्तर्यस्य अभावात्। तथा हि—तस्य धर्मस्य अकाररूपादेशवृत्तित्वेन प्रथमसम्बन्धस्य, स्वघटितदलभिन्नदलीयस्थानिऋकारवृत्तित्वेन द्वितीयसम्बन्धस्य, स्वमकारस्तद्घटितदलमादेशदलम् 'अ इ-ओ' इति, तद्घटकः स्वमकारस्तदितरः 'ए-ओ' इति, तदवृत्तित्वेन च तृतीयसम्बन्धस्य सत्त्वात् त्रितयसम्बन्धेन स्वविशिष्टत्वस्यैव तस्मिन् सत्त्वेन तादृशधर्मा-

---

† आन्तर्यनियामको ग्राह्यो नेक्त्वादिरूपः इति पाठान्तरम्।

त्यादौ । प्रमाणतो'ऽदसोऽसेरि' त्यादौ । 'स्थानेऽन्तरतम' सूत्रे भाष्ये स्पष्टैषा ॥ १३ ॥

ननु 'प्रौढवानि'त्यत्र 'प्रादूहोढे'ति वृद्धिः स्यादत आह—

## अर्थवद्ग्रहणे नानर्थकस्य ॥ १४ ॥



विशिष्टरूपोपादाने, उपस्थितार्थस्य शब्दं प्रति विशेषणतयाऽन्वयसम्भवे त्यागे मानाभावोऽस्या मूलम् ।

---

स्वघटितदलभिन्नदलीयवृत्तित्वरूपद्वितीयसम्बन्धघटकदलीयश्च—स्ववृत्तिवर्णत्वव्याप्यजात्यभाववान् बोध्यः, तेन 'कृष्णर्द्धिरि'त्यत्र कण्ठस्थानमात्रजन्यत्वरूपधर्मस्य विधेयदलघटकाकारवृत्तित्वात्तद्दलभिन्नोद्देश्यदलघटकाकारवृत्तित्वाद्विधेयदलघटकाकारेतरैकाराद्यवृत्तित्वाच्चाकारविशिष्टत्वेऽपि ( स्वमकारस्तद्वृत्तिवर्णत्वव्याप्यजातिः-अत्वरूपा तदभाववानुद्देश्यदलघटक इजेव न त्वकार इति) उक्तधर्मे तादृशदलीयवृत्तित्वरूपसम्बन्धाभावेन स्वविशिष्टधर्माभाववत्त्वरूपानान्तर्यस्यैवाकारे सत्त्वान्नातिप्रसङ्ग इत्यन्यत्र विस्तरः ॥ १३ ॥

अर्थवद्ग्रहणे नानर्थकस्य । परिभाषाणामनियमे नियमकारित्वात् सम्भवती' त्यस्य पूरणे'नार्थवद्ग्रहणे सम्भवति नानर्थकस्ये'ति तदर्थः । अत एव 'अत्वसन्तस्ये'ति सूत्रेऽर्थवतोऽसम्भवादेवानर्थकस्यातोग्रहणं सिद्धम् । विशिष्टरूपोपादान इति । इयं प्रवर्तत इति शेषः । विशिष्टरूपोपादानत्वञ्चात्र-आनुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वेत्याद्युक्तरूपम् ।

उपस्थितार्थस्येति । अत्र केचित्—शब्दानामर्थविशिष्टे शब्दे शक्तिः 'घटमुच्चारयती'ति प्रयोगात् । 'घटमानये'त्यादौ शब्दे आनयनकर्मताया बाधादर्थस्य लक्षणया बोध इति वदन्ति ।

केचित्तु—अर्थे शक्तिः पदानां, शब्दे च लक्षणा, तेन 'घटमुच्चारयती'त्यत्र लक्षणया बोधः, 'घटमानये'त्यादौ शक्त्येति वदन्ति ।

---

भाववत्त्वरूपानान्तर्याभावादत आह—स्वघटकदलभिन्नदलीयेत्यादि ॥ १३ ॥

सूत्रलभ्यपरिभाषाप्रस्तावात् तादृशीं परिभाषामवतारयितुमुपक्रमते—मूले—ननु प्रौढवानित्यादिना ।

'स्वं रूपम्' इति सूत्रं प्रत्याचक्षाणस्य भाष्यकारस्य मतेन परिभाषाया युक्तिमूलकत्वं प्रतिपादितं ग्रन्थकृता 'उपस्थितस्यार्थस्य शब्दं प्रति' इत्यादिना ग्रन्थेन । तत्र लोकशक्त्या शब्देभ्य अर्थमात्रोपस्थितावपि शब्दानुपस्थितौ तत्र विशेषणतयाऽर्थस्य अन्वयासम्भवेन विशेषणतयाऽन्वयसम्भवे त्यागे मानाभावः' इति ग्रन्थासङ्गतिः; अतस्तत्तात्पर्यं विशदयन्नाह—अत्र केचिदिति ।

शब्दपूर्वको ह्यर्थस्य सम्प्रत्ययः, 'आतश्च शब्दपूर्वक' इति 'स्वं रूप' सूत्रभाष्यात् शब्दार्थयोरुभयोरपि पदानां शक्तिरित्यभिप्रायेणाह—अर्थविशिष्टे शब्दे शक्तिरिति ।

अत्र मतद्वयेऽपि लक्षणाऽनुसरणस्याऽऽवश्यकत्वेन गौरवाच्छब्देऽर्थे च खण्डशः शक्तिः पदानामिति तु वृद्धाः। तत्रार्थस्य विशेष्यत्वमौत्सर्गिकम्, तदसम्भवे तु शब्दस्यैव विशेष्यत्वम्; तथा 'चाग्नेर्ढगि'त्यादौ ढकि अग्निरूपार्थात्परत्वस्य बाधेन तत्राग्निशब्दस्य विशेष्यत्वम्। उपस्थितार्थस्याग्निरूपार्थस्याग्निशब्दं प्रति विशेषणतयाऽन्वयसम्भवेन तत्त्यागे मानाभावः। 'अग्नेर्ढगि' त्यस्याग्निरूपार्थवाचकादग्निशब्दाद् ढगित्यर्थः; तथा च तत्र तत्रार्थविशिष्टस्यैव शब्दस्य ग्रहणमित्येवं युक्तिमूलिका परिभाषेति भावः। 'प्रादूहोढ' इत्यत्राप्येवमेव।

न चैवमप्युपस्थितीयमुख्यविशेष्यताया उभयत्र सत्त्वेन 'घटमानयती'त्यत्र विशेषणीभूते शब्दे पदार्थान्तरान्वयापत्तिः। एवं 'घटमुच्चारयती'त्यत्रार्थे पदार्थान्तरान्वयापत्तिः। तत्पदप्रयोज्यशाब्दबोधीयविशेष्यतानिरूपितप्रकारताऽसमानाधिकरणविशेष्यताया मुख्यविशेष्यताशब्देन ग्रहणे तु—'घटमा..यती'त्यत्र घटपदेन कदाचिच्छब्दस्यापि विशेष्यतया भानात् घटशब्दप्रयोज्यशाब्दबोधीयविशेष्यतानिरूपितप्रकारताया अर्थेऽपि सत्त्वात् घटरूपेऽर्थे पदार्थान्तरान्वयानापत्तिरिति वाच्यम्; इतरपदार्थनिष्ठप्रकारतानिरूपिततद्विशेष्यताकशाब्दबोधं प्रति तत्पदप्रयोज्यशाब्दबोधीयविशेष्यतानिरूपितप्रकारताश्रयत्वप्रकारकतात्पर्यविशेष्यत्वाभावसमानाधिकरणविशेष्यत्वावगाहिज्ञानस्य कारणत्वात्। 'घटमानयती'त्यत्र घटपदार्थे तद्घटशब्दप्रयोज्यशाब्दबोधीयविशेष्यतानिरूपितप्रकारताश्रयत्वप्रकारकतात्पर्यविशेष्यत्वाभावेन तत्समानाधिकरणविशेष्यत्वावगाहिज्ञानस्य सत्त्वेन तत्र पदार्थान्तरान्वये बाधकाभावात्।

ननु—ऊढशब्दे उपस्थितार्थस्य वहनकर्मरूपस्य केन सम्बन्धेनान्वयः? न तादृग्वाचकत्वसम्बन्धेनान्वयः; तस्य बोधजनकतावच्छेदकाऽऽनुपूर्वीमति अवश्यं सत्त्वेनोढवच्छब्दघटकोढशब्देऽपि सत्त्वात्। नापि बोधकजनकतयाऽन्वयेन निस्तारः; तत्र जनकतायाः स्वरूपयोग्यतारूपाया ग्रहणे निरुक्तापत्तेस्तादवस्थ्यात्; फलोपधायकतारूपाया ग्रहणे यत्र श्रोतु· 'प्रौढ' इत्येतद्घटकोढशब्देन न बोधस्तादृशोढशब्दे फलोपधायकतारूपसम्बन्धस्याभावेनाव्याप्तेश्चेति चेन्न। स्वविषयकबोधजनकत्वप्रकारकतात्पर्यविशेष्यत्वरूपसम्बन्धेन पदेऽर्थस्यान्वयस्वीकारे दोषाभावात्। अत्र जनकता च स्वरूपयोग्यतारूपैवेति बोध्यम्।

---

खण्डशः शक्तिरिति। तत्र विशेषणविशेष्यभावव्यत्यासः अन्यतरांशस्य मोषश्च भवति। यत्र विशेष्यविशेषणभावव्यत्यासासम्भवस्तत्रैवान्यतरांशस्य मोषः, नान्यत्र। तदेतन्मनसि कृत्वाऽऽह—उपस्थितार्थस्येत्यादिः। तत्त्यागे मानाभाव इति। विधिवशात् पदभ्रष्टो राजा अप्राधान्येन स्थित्वाऽप्यात्मानं धारयति, न व्यापादयति तद्वदिति भावः।

ननु भाष्यमते विशिष्टशक्त्यनङ्गीकारे शाब्दबोधप्रकारतया भासमानेऽर्थे शब्दे वा पदार्थान्तरस्य अन्वयापत्तिः, उपस्थितौ उभयोः समूहालम्बनवन्मुख्यविशेष्यतया भासमानत्वात्, यत्किचिन्निष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति मुख्यविशेष्यतासम्बन्धेन उपस्थितेः कारणत्वादतः शङ्कासमाधानाभ्यामाह—न चैवमिति।

अत्रार्थः कल्पितान्वयव्यतिरेककल्पितः शास्त्रीयोऽपि गृह्यते इति 'सङ्ख्याया' इति सूत्रे भाष्ये स्पष्टम् ।

इयं वर्णग्रहणेषु नेति लस्येत्यत्र भाष्ये स्पष्टम् । अत एवैषा विशिष्टरूपोपादानविषयेति वृद्धाः । एतन्मूलकमेव येन विधिरित्यत्र भाष्ये पठ्यते 'ऽलैवानर्थकेन तदन्तविधिरि'ति ।

---

ननु परिनिष्ठितस्य 'प्रौढ' इस्येतस्य तादृशबोधतात्पर्यकत्वं; न त्ववयवस्येति 'प्र+ऊढ' इति दशायां निरुक्तार्थविशिष्टत्वस्य ऊढेत्यत्राभावेन सूत्रवैयर्थ्यमत आह—अत्रार्थं इति । कल्पितौ च तौ अन्वयव्यतिरेकौ च, ताभ्यां कल्पित इति विग्रह ; तथा च तादृशतात्पर्यविशेष्यत्वस्य ऊढादिशब्दे कल्पनया सूत्रचारितार्थ्यमिति भावः । यत्र तु तदतिरिक्तार्थस्याभावेनान्वयव्यतिरेककल्पनाया अप्यसम्भवो यथा—'यावक' इत्यादौ, तत्र शास्त्रप्रक्रियानिर्वाहाय कल्पितोऽप्यर्थ एतत्परिभाषायां गृह्यते । तदेतदाह—शास्त्रीयेति ।

वर्णग्रहणेषु नेति । अयम्भावः—अकारादिवर्णानामर्थरहिते शुद्धतत्तद्वर्णादौ शक्तिरेका, वासुदेवादिरूपेऽर्थे अवर्णादौ च खण्डशः शक्तिर्द्वितीया । तथा च 'अत इञि' त्यादौ वासुदेवरूपेऽर्थे उपस्थिते इञ्प्रत्ययपरत्वावधित्वस्य बाधेऽप्यपरशक्त्या शुद्धवर्णरूपार्थ उपस्थिते तदवधित्वस्याबाधेन तत्रौत्सर्गिकस्यार्थविशेष्यत्वस्य त्यागे प्रमाणाभाव इति । लस्येत्यत्र भाष्ये स्पष्टमिति । तत्र हि 'लुनाती'त्यत्र लादेशाशाशङ्क्यार्थवद्ग्रहण'परिभाषया समाधाय, वर्णग्रहणादर्थवत्परिभाषायाः प्रवृत्तिर्न स्यादिति स्पष्टमुक्तम् ।

---

ऊढादिशब्दे कल्पनयेति । अयम्भावः—लोके सुबन्तसत्त्वेऽर्थप्रतीतिः, तदभावे च तदप्रतीतिरित्यन्वयव्यतिरेकौ सुबन्त एव गृहीतौ स्तः । तथा च नैयायिकरीत्या आवापोद्वापाभ्यां प्रातिपदिकेऽपि अन्वयव्यतिरेकौ प्रकल्पेते । तथा हि—'घटमानय' इत्युक्ते 'घटमि'ति पदस्य घटत्वावच्छिन्नघटकर्मत्वरूपोऽर्थः' इति बोधो भवति । तदनन्तरं 'घटेन जलमानय' इत्युक्तौ घटपदं घटत्वावच्छिन्ने शक्तम्, अमिति कर्मत्वरूपेऽर्थे शक्तमिति प्रतीतिर्भवति । एवं रीत्या आवापोद्वापाभ्यां प्रातिपदिके अन्वयव्यतिरेकौ कल्पयित्वा ताभ्यामर्थवत्त्वं प्रकल्प्यते । एतादृशान्वयव्यतिरेककल्पनापूर्वकार्थवत्त्वकल्पने मानमस्माकम् 'अर्थवत्'सूत्रमेव ; तदेतदाह—मूले—कल्पितान्वयव्यतिरेकेत्यादिना ।

त्यागे प्रमाणाभाव इति । वर्णमात्रे शक्तिस्वीकारात् अर्थस्यानुपस्थितेरित्यपि बोध्यम् । 'वर्णग्रहणे न प्रवर्तते' इत्यस्य फलम्—'उपेन्द्रः' इत्यादौ 'आद्गुणः' इत्यादेः, 'हरये' इत्यादौ 'एचोऽयवायावः' इत्यादेश्च प्रवृत्तिसिद्धिः ; अन्यथा—'औपगवे, रामे' इत्यादावेव, 'अयती' त्यादावेव च स्यादिति भावः ।

किञ्च 'स्वं रूपमि'ति शास्त्रे स्वशब्देनात्मीयवाचिनाऽर्थो गृह्यते, रूपशब्देन स्वरूपम्, एवञ्च तदुभयं शब्दस्य संज्ञीति तदर्थः। तत्रार्थो न विशेष्यस्तत्र शास्त्रीयकार्यासम्भवात्, किन्तु शब्दविशेषणम्। एवं चार्थविशिष्टः शब्दः संज्ञीति फलितम्। तेनैषा परिभाषा सिद्धेति भाष्ये स्पष्टम्॥ १४॥

---

आत्मीयवाचिनेति। तथा च स्वजन्यबोधविषयत्वप्रकारकतात्पर्यविशेष्य एवार्थ आत्मीयत्वेनात्र स्वपदेन गृह्यते। भाष्ये स्पष्टमिति। परे तु—अस्याः परिभाषायाः सूत्ररूपत्वमेव युक्तं न तु युक्तिसिद्धत्वं, 'प्रादूहोढे'त्यादावुपस्थितार्थस्य कालिकादिसम्बन्धेनाप्यन्वयसम्भवात 'प्रोढवानि'त्यत्रापि तादृशोढशब्दस्य सत्त्वेन वृद्ध्यापत्तिः। मम तु—'प्रोढवानि'त्यत्रात्मीयार्थविशिष्टोढशब्दाभावेन वृद्ध्यप्राप्तिः सुलभा। किञ्च—'गोतो णिदि'त्यादौ गोशब्देनानेकार्थानामुपस्थितावपि 'सकृदुच्चरित' न्यायेन गोशब्दे एकस्यैवार्थस्यान्वयात्तद्वाचकगोशब्द एव 'गोतो णिदि'त्यस्य प्रवृत्त्याऽपरार्थवाचकगोशब्दे तु प्रवृत्त्यर्थमावृत्तिः कल्पनीया स्यात। मम तु गोशब्दस्य स्वस्वात्मीयार्थविशिष्टगोशब्दत्वावच्छिन्ने एकस्या एव शक्तेः 'स्वं रूपमि' त्यनेन बोधनाज्जातिपक्षे आवृत्तिमन्तरैव सिद्धिः। एवं 'यञि ञोश्चे'त्यत्रापि बोध्यमिति प्राहुः॥ १४॥

---

भाष्यमतप्रतिपादनान्तरं 'किञ्चे'त्यादिना सूत्रकारमतप्रतिपादनेन भाष्यमतापेक्षया सूत्रकृन्मतस्य युक्ततरत्वं ध्वनितम् मूलकृता; तदेव स्फोरयति—परे त्विति। अयम्भावः—भाष्यमते नाऽपूर्वः सङ्केतः, अपि तु खण्डशक्त्योपस्थितस्यार्थस्य कालिकादिसम्बन्धेनाप्यन्वयः सम्भवत्येव। किञ्च—'गोतो णित्' इत्यत्र गोपदस्य नानाशक्तिकतया सकलार्थोपस्थितावपि 'सकृदुच्चरित'न्यायेन एकस्यैवार्थस्यान्वयेन तदर्थतात्पर्योच्चरितस्यैव गोशब्दस्य णित्प्रयुक्तं कार्यं स्यात् नान्यस्य, अतः शास्त्रस्य तन्त्रावृत्त्याश्रयणे भाष्यमते गौरवम्। सूत्रमते तु—आत्मीयत्वेन सामान्यत अर्थोपस्थापकस्वपदोपादानेन यावदर्थस्य संज्ञित्वबोधनात् न 'सकृदुच्चरित' न्यायविरोधः, नापि तन्त्रावृत्त्याश्रयणरूपं गौरवम्। नापि सूत्रमते कालिकादिसम्बन्धेन अर्थविशिष्टे शब्दे शक्तिः, यतो हि—शब्दस्य स एवार्थ आत्मीयत्वेन व्यवह्रियते यदर्थविषयकतात्पर्येण स उच्चार्यते। तस्मात् तेनैव सम्बन्धेन आत्मीयार्थविशिष्टे शब्दे शक्तिरिति।

किञ्च—प्रत्ययानां प्रकृतिसमभिव्याहारे एवार्थोपस्थित्या 'यञिञोश्च' इत्यादौ भाष्यमते अर्थानुपस्थितिरेव स्यात्। सूत्रमते तु—तत्राप्यपूर्वसङ्केतबोधनेन तेनैवार्थोपस्थित्या न दोषस्तदाऽऽह—एवं यञि ञोश्चेत्यत्रापीति। यद्यपि 'गोत्रे कुञ्जादिभ्यः' इत्यतो गोत्रे इत्यनुवृत्त्या गोत्रे यौ यञिञौ' इत्याद्यर्थकरणेन नात्र दोषः; तथापीदमुपलक्षणं 'केऽण' इत्यस्य। तत्रानर्थकस्यापि कशब्दस्य ग्रहणे—'यौष्माकः, रमाकल्पम्, एकः' इत्यादिषु के परतो ह्रस्वापत्तिरिति बोध्यम्। एवं स्थिते उक्तसूत्रप्रत्याख्यानमेकदेशयुक्तिरिति भावः।

वस्तुतस्तु—अत्र भाष्यमपि रमणीयमेव। अर्थस्य शब्दे कालिकादिनाऽन्वयसम्भवेऽपि अत्र शास्त्रे 'सर्वादेः सादेश्च' इत्यत्र सर्वादिग्रहणसामर्थ्यात् भाष्यमतेऽपि स्वविषयकबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वमेव सम्बन्धोऽङ्गीक्रियते। एवञ्च ऊढवद्घटकोढशब्दे

नन्वेवमपि 'महद्भूतश्चन्द्रमा' इत्य'त्रान्महत' इत्यात्त्वापत्तिरत आह—

## गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः ॥ १५ ॥

गुणादागतो गौणः। यथा—गोशब्दस्य जाड्यादिगुणनिमित्तोऽर्थो वाहीकः। अप्रसिद्धश्च संज्ञादिरपि तद्गुणारोपादेव बुध्यते। मुखमिव प्रधानत्वान्मुख्यः = प्रथम इत्यर्थः। गौणे ह्यर्थे शब्दः प्रयुज्यमानो मुख्यार्थारोपेण

---

एवम् = 'अर्थवद्ग्रहण' परिभाषास्वीकारे। महद्भूतः = आरोपितमहत्त्वविशिष्ट इत्यर्थः। गुणादागत इति। तद्वृत्तिगुणसत्ताप्रयोज्यारोपविषयीभूत इत्यर्थः। यथा—गोवृत्तिजाड्यादिगुणसत्ताप्रयोज्यारोपविषयीभूतगोत्वादिरर्थो गौणः। तद्वृत्तिगुणानां सत्ता च—वास्तविकी आरोपिता चेत्युभयविधा ग्राह्या; संज्ञादावारोपिता गुणसत्ता, वाहीके च गोवृत्तिजाड्यादिगुणानां सत्ता वास्तविकीति विवेकः। तदेवाह—तद्गुणारोपादिति। गौणे ह्यर्थे = वाहीकादौ। प्रयुज्यमानः शब्दः = गोशब्दः। मुख्यार्थारोपेण = गोत्वारोपेण, प्रवर्तते। तथा च 'गौर्वाहीक' इत्यस्यारोपितगोत्ववान् वाहीक इत्यर्थः।

---

तादृशतात्पर्याभावेन अर्थवत्त्वाभावान्न काऽप्यनुपपत्तिः। 'प्रत्ययेनार्थबोधे जननीये प्रकृतिसमभिव्याहारस्य कारणते'ति व्युत्पत्तौ 'प्रत्ययेनाऽर्थविशेष्यकबोधे' इति निवेश्यते, तेनार्थविशेष्यकबोधाभावान्नानुपपत्तिः 'केऽण' इत्यादौ। 'गोतो णित्' इत्यादौ तु-पाणिनिमते 'अणुदित्' सूत्रेऽण्ग्रहणात् व्यक्तिपक्षस्यैव सत्त्वात् प्रतिलक्ष्यं लक्षणोपप्लव एव। तद्रीत्यैव च 'स्वं रूपमि'ति सूत्रं प्रत्याख्यायते भगवता इति उभयोरपि गौरवं समानमेव। तस्मादत्रस्थं भाष्यमपि वरमिति दिक् ॥१४॥

तद्वृत्तिगुणसत्तेत्यादिः। अत्र गुणपदं गुणसदृशगुणपरम्, तत्पदेन च गौर्गृह्यते; तथा च गोवृत्तयो ये जाड्यादिगुणाः, तत्सदृशा गुणा वाहीकवृत्तयः—जाडयादयः, तत्सत्ताप्रयोज्य आरोपः—'गोत्ववानयम्' इत्याकारकमाहार्यज्ञानम्, तद्विषयत्वं गोत्ववाहीकयोरित्युभयोरपि गौणत्वं भवतीति भावः। तदाऽऽह—यथेति। अत्रापि जाड्यादिगुणपदं तत्सदृशजाडयादिपरम्। गोत्वादिरिति। आदिना वाहीकस्यापि सङ्ग्रहः। मूलेऽपि 'गुणनिमित्तोऽर्थो वाहीकः' इति ग्रन्थः 'अर्थपदोत्तरं गोत्वेन प्रतीतिविषयः' इत्यध्याहारेण योजनीयः; आरोपविषयत्वाविषयत्वेन च एकमेव गोत्वं गौणं मुख्यमिति च व्यवह्रियत इति न कोऽपि दोषः।

यत्तु—गोपदात् वाहीकमात्रं प्रतीयते। तन्न; तथाऽप्रतीतेः, तत्त्वेन प्रतीतौ 'गौर्वाहीकः' इति सहप्रयोगासम्भवाच्च।

मूले—अप्रसिद्धश्च संज्ञादिरपीति। अत्र कर्मणि 'आतश्चोपसर्गे' इति अङ्, तेन संज्ञीत्यर्थः। आदिनाऽनुकरणपरिग्रहः। अत एव 'युष्मद्युपपदे' इत्यादौ 'त्वमावेकवचने' इत्यादिर्न भवति। यद्वा—संज्ञा आदिः = प्रथमबोधको यस्य स संज्ञीत्यर्थः; अत्र पक्षेऽपिरनुकरणसमुच्चायको बोध्य इति पण्डिताः। वस्तुतः—'संज्ञ्यादिरपी'त्येव पाठः सुगमः।

परिभाषायां मानमुद्घाटयति—मूले—गौणे ह्यर्थे इति। मुख्यार्थारोपाय तदर्थस्य समु-

**प्रवर्तते । एवं चाप्रसिद्धत्वं गौणलाक्षणिकत्वं चात्र गौणत्वम्; तेन 'प्रियत्रयाणामि'त्यादौ त्रयादेशो भवत्येव, तत्र त्रिशब्दार्थस्येतरविशेषणत्वेऽप्युक्तरूपगौणत्वाभावात् ।**

**किञ्चायं न्यायो न प्रातिपदिककार्ये, किन्तु 'उपात्तं विशिष्यार्थोपस्थापकं विशिष्टरूपं यत्र तादृशपदकार्य एव । परिनिष्ठितस्य पदान्तसम्बन्धे हि**

---

केचित्तु—'गोत्ववान् वाहीक' इत्येव बोधो न त्वारोपितत्वं शाब्दविषय इति वदन्ति ।

अप्रसिद्धत्वम्— आरोपितगुणसत्ताप्रयोज्यारोपविषयत्वम्, गौणलाक्षणिकत्वम्— सदृशलाक्षणिकत्वं— सादृश्यमूलकाऽऽरोपविषयत्वमित्यर्थः । अत एव 'अमहाब्राह्मण' इत्यत्राऽऽरोपस्य नञ्द्योत्यत्वेनाऽऽरोपितमहत्त्ववानित्यर्थात् 'महद्भूत' इत्यत्रेवात्राऽऽरोपितमहत्त्वस्य भानेऽपि सदृशलाक्षणिकत्वरूपोक्तगौणत्वाभावान्न परिभाषयाऽऽत्वव्यावृत्तिः ।

एतन्न्यायस्य युक्तिसिद्धमप्रवृत्तिस्थलमाह — न प्रातिपदिककार्य इति । वक्ष्यमाणप्रातिपदिककार्ये नेत्यर्थः । न्यायस्य प्रवृत्तिस्थलमाह—किन्त्विति । किन्त्वेत्यर्थः । अनेन पदकार्य एवायं न्यायः प्रवर्तते, परं पदकार्य एव यत्र वक्ष्यमाणप्रातिपदिककार्यं तत्र न प्रवर्तत इति सूचितम् । निषेधप्रतियोगिविषयं प्रातिपदिककार्यमाह—परिनिष्ठितस्येत्यादि । अस्य यत्रेति शेषः ।

---

पस्थितेरावश्यकतया तदर्थमादाय कृतार्थस्य शास्त्रस्य गौणेऽर्थे प्रवृत्तौ मानाभाव एवास्या मूलमिति तात्पर्यम् ।

अत एव अमहाब्राह्मण इत्यत्रेति । अत एवेत्यस्य आरोपस्य सादृश्यमूलकत्वाभावादित्यर्थः । आरोपस्य नञ्द्योत्यत्वेनेति । न चाऽऽरोपितत्वार्थस्य नञ्वाच्यत्वेन महच्छब्दस्य तादृशार्थत्वाभावेन न गौणार्थकत्वमिति वाच्यम्; तथा सत्यन्वयस्य बाधितत्वापातात्; तद्यथा— आरोपितस्य महत्त्वरूपार्थेऽन्वये एकदेशान्वयात् 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशे' इति न्यायविरोधः । महत्त्वविशिष्टे तु तस्यानारोपात् अन्वयो बाधितः । आरोपो हि गुणस्य न तु महतो द्रव्यस्य, असंभवात्; तथा च वाचकत्वपक्षे अन्वयानुपपत्त्याऽवश्यं द्योतकत्वमभ्युपेयमिति भावः ।

अन्ये तु — नञ्समभिव्याहारे बौद्धाः पदार्था भासन्ते । 'अमहाब्राह्मणः' इत्यस्य च बुद्धिपरिकल्पितमहत्त्ववान् ब्राह्मणः' इत्यर्थः । स्वप्नानुरोधेन च बौद्धपदार्थस्याऽऽवश्यकत्वात्; बौद्धपदार्थभासकसामग्रीं प्रति बाह्यपदार्थभासकसामग्र्याः प्रतिबन्धकत्वात् ब्राह्मणे सत्त्वे 'अब्राह्मण' इति प्रयोगो न । एवञ्च महच्छब्दस्य गौणार्थकत्वाभावादात्वं भवतीति वदन्ति ।

सामान्यतः प्रातिपदिककार्ये प्रवृत्त्यभावे "अग्नीषोमौ, माणवकौ" इत्यत्रापि ईत्वषत्वे स्यातामत आह—वक्ष्यमाणप्रातिपदिककार्य इति । एतदाशयश्च—' 'अयं भावः' इत्यादिनाऽग्रे स्फुटः ।

'गौर्वाहीक' इत्यादौ गौणत्वप्रतीतिर्न तु प्रातिपदिकसंस्कारवेलायामित्यन्तरङ्गत्वाज्जातसंस्कारबाधायोगः प्रातिपदिककार्ये प्रवृत्त्यभावे बीजम् ।

श्वशुरसदृशस्यापत्यमित्यर्थके 'श्वाशुरिरि'त्यादावत इञः सिद्धये—उपात्तमित्यादि । न च प्रातिपदिकपदं तादृशमिति वाच्यम्; तेन हि प्रातिपदिकपद-

---

अन्तरङ्गत्वादिति । अस्य तत्रेति शेषः । अयम्भावः—'गौर्वाहीक' इतिवत् परिनिष्ठितस्य यत्र पदान्तरसम्बन्धे गौणत्वप्रतीतिः 'अग्नीषोमौ, माणवकावि'त्यत्र, न तु प्रातिपदिकसंस्कारवेलायां समासात् प्राक् प्रत्येकमग्नीषोमपदयोः, तत्र पदान्तरसम्बन्धात्प्राक् ईत्वषत्वादिरूपजातसंस्कारबाधायोगः इत्येतत् तत्र प्रातिपदिककार्ये प्रवृत्त्यभावे बीजम् । यत्र तु प्रातिपदिकसंस्कारवेलायां प्रत्येकमग्निसोमादिपदयोः सदृशतात्पर्यकत्वग्रहः, तत्र पूर्वमेव गौणार्थप्रतीत्या 'गौणमुख्य'न्यायेन व्यावृत्तेः प्रातिपदिककार्येऽपि न्यायः प्रवर्तत एव । एतच्च 'न तु प्रातिपदिकसंस्कारवेलायामि'त्यनेन सूचितमिति ।

उपात्तम्=उच्चरितम् । विशिष्टार्थोपस्थापकम्=आनुपूर्वीप्रकारेण बोधजनकम्, आनुपूर्व्यवच्छिन्नविषयताप्रयोजकमिति यावत्; विशिष्टरूपेत्यस्यैवार्थभूतमेतत् । तथा 'चार्थवद्ग्रहण'परिभाषाया इवास्या अपि परिभाषायास्तदङ्गभूतत्वाद् विशिष्टरूपोपादान एव प्रवृत्तिरिति सूचितम् । पदकार्यं इति । तत्त्वं च—सुबनिमित्तकत्वे सति स्त्रीत्वानिमित्तकत्वम् । 'त्रेस्त्रय' इति सुबनिमित्तकत्वात् * गौणेऽपि प्रवर्तते; एवं 'षिद्गौरादिभ्यश्चे'ति सूत्रस्य स्त्रीत्वनिमित्तकत्वेन पदकार्यत्वाभावाद् गौरसदृशार्थक 'गौरी'शब्देऽपि प्रवृत्तिः । अत एव 'बुभावे'त्यत्र पदकार्यत्वादनेन वुग् न ।

---

प्रवृत्त्यभावे बीजमिति । प्रातिपदिककार्येऽयं न्यायः प्रवर्तते न प्रवर्तते च । यत्र तत्कार्यप्रवृत्तिवेलायां गौणार्थत्वप्रतीतिस्तत्र प्रवर्तते; यत्र तत्प्रवृत्तिकाले गौणार्थत्वाग्रहस्तत्र न प्रवर्तत इति फलति; तथा सति न्यायप्रवृत्तौ न वस्तुसत्ता प्रयोजिका, अपि तु गौणार्थकत्वज्ञानं प्रयोजकमिति तत्त्वम् ।

अत्र—पदोद्देश्यकत्वं न पदकार्यत्वम्, तद्धितविधौ न्यायाप्रवृत्तेः; सुबन्तात्प्रवृत्तावपि तदनुद्देश्यकत्वात् । नापि—वस्तुतः पदसम्बन्धित्वम्; 'गोतो णित्' इति विहितणित्वादीनामपि पदकार्यत्वेन न्यायप्रवृत्तौ 'गौर्वाहीकः' इत्यादीनामसिद्धिप्रसङ्गात् । यदपि—प्रत्ययानिमित्तकत्वं पदकार्यत्वम् । तदपि न; 'बुभाव' इत्यादौ दोषतादवस्थ्यादित्याशयेनाह—तत्त्वं च सुबनिमित्तकत्वे सतीत्यादिः । स्त्रीत्वानिमित्तकत्वमिति । अत एव 'जानपदे' इति सूत्रे नागग्रहणस्य गौणार्थकेऽपि विधायकत्वमुपपद्यते । गौणत्वेऽपि पदकार्यत्वाभावेन तन्न्यायाप्रवृत्तेः । गौणेऽर्थे जातिवाचकत्वाभावेन 'जातेरस्त्री' इत्यस्याप्राप्त्या नियामकत्वासम्भवात् । जातिविशिष्टवाचकत्वञ्च—जातिविशिष्टविशेष्यताप्रयोजकत्वम्; वै०—स्वसामानाधिकरण्य-स्वनिष्ठप्रकारतानिरूपितत्वोभयसम्बन्धेन । आरोपितानागत्वबोधनेऽपि प्रथमसम्बन्धाभावान्न तस्य जातिवाचकत्वम् ।

---

* सुबनिमित्तयोगात् इति पाठान्तरम् ।

वत्त्वेनोपस्थितिरिति तस्य विशिष्यार्थोपस्थापकत्वाभावात् । निपातपदं तु चादित्वेनैव चादीनामुपस्थापकमिति तदुद्देश्यककार्यविधायके 'ओदि'त्यादावप्रवृत्त्या 'गोऽभवदि'त्यादौ दोषो न ।

---

केचित्तु—विभक्तिसामान्यानिमित्तकत्वं पदकार्यत्वम्; 'भुवो वुगि'त्यस्य तिङ्विभक्तिनिमित्तकत्वेन पदकार्यत्वाभावात्परिभाषाया अप्रवृत्त्या वुकि 'बभूवे' त्येव रूपमिति वदन्ति ।

अन्येषां पदकार्यत्वलक्षणानि विस्तरभयान्न दूषितानि ।

विशिष्यार्थोपस्थापकत्वाभावादिति । आनुपूर्व्या साक्षादवच्छिन्नमुख्यविशेष्यताप्रयोजकपद एवैतन्न्यायस्य प्रवृत्त्या प्रातिपदिकपदस्य सङ्केतसम्बन्धेन प्रातिपदिकपदवति शक्तेः प्रातिपदिकपदनिष्ठविशेष्यतायाः प्रातिपदिकशब्दत्वरूपानुपूर्व्या साक्षादवच्छिन्नत्वेऽपि तद्भिन्ननिष्ठविशेष्यतानिरूपितप्रकारतासामानाधिकरण्येन तस्या मुख्यत्वाभावात्प्रातिपदिकपदवन्निष्ठविशेष्यताया मुख्यत्वेऽपि प्रातिपदिकशब्दत्वरूपाऽऽनुपूर्व्या साक्षादवच्छिन्नत्वाभावेन प्रातिपदिकपदस्य तथात्वाभावात् । निपातपदस्य तु निपात पदवत्त्वोपलक्षितचाद्यन्यतमत्वावच्छिन्ने शक्तेः तत्प्रयोज्यमुख्यविशेष्यतायाः चादित्वरूपानुपूर्व्या साक्षादवच्छिन्नत्वेन तस्य तत्त्वम् ।

---

केचित्तु—विभक्तिसामान्यानिमित्तकत्वम्—पदकार्यत्वमिति । न चैवं गौरसदृशार्थक-गौरशब्दे ङीष् न स्यादिति वाच्यम् ; 'शूद्रा च' इति वार्तिके जातिग्रहणेन स्त्रीप्रत्यये गौणमुख्यन्यायाप्रवृत्तेः । तत्र जातिग्रहणं हि 'शूद्रस्य स्त्री, शूद्री' इत्यादौ टापोऽप्रवृत्तये; स्त्रीप्रत्ययेषु गौणमुख्यन्यायप्रवृत्त्यङ्गीकारे तु तेनैव वारणे तद्ग्रहणं व्यर्थमेव स्यादिति भावः ।

नन्वेवमपि टीकोक्तं पदकार्यत्वलक्षणमसङ्गतम्; 'त्वद्भवति' इत्यत्र स्त्रीत्वानिमित्तकत्वेन सुबनिमित्तकत्वेन च केषाञ्चिन्मतेऽपि विभक्त्यनिमित्तकत्वेन च पदकार्यतया गौणमुख्यन्यायप्रवृत्त्या 'प्रत्ययोत्तरपदयोश्च' इत्यनेन त्वादेशानापत्तेरिति चेन्न । 'प्रत्ययोत्तरपदयोश्च' इत्येतस्यापि विभक्तिनिमित्तकत्वात् । विवेचयिष्यते चेदम् 'अन्तरङ्गानपि' इति परिभाषाव्याख्यानावसरे ।

हैमवतीकारास्तु—स्त्रीत्वानिमित्तकत्वे सति प्रातिपदिकप्रकृतिकप्रत्ययमात्रानिमित्तकत्वं पद कार्यत्वम् । अत एव 'भूरिवाऽऽचचार, बुभाव' इत्यस्य सिद्धिरिति वदन्ति ।

लघुजटाजूटकारास्तु—पदात्परत्वव्याप्यविषयताप्रयोजकपदघटितशास्त्रविधेयत्वं पदकार्यत्वमित्याहुः ।

चादित्वरूपाऽऽनुपूर्व्या साक्षादवच्छिन्नेति । साक्षादवच्छिन्नत्वम्—स्वावच्छिन्नत्वे सति स्वावच्छिन्नावच्छेदकतानिरूपितावच्छेद्यत्वाभाववत्त्वम् । 'चादित्वे'त्यस्य चत्व-वात्वेत्याद्यर्थः । अन्यतमत्वञ्च—स्वनिष्ठभेदप्रतियोगितावच्छेदकतावच्छेदकीभूतभेदप्रतियोगितावच्छेदकधर्मवत्त्वमेव; तद्धि चत्वादिरूपमेव, तेन च साक्षादवच्छिन्नमुख्यविशेष्यताप्रयोजकत्वं निपातस्य । निपातपदवत्त्वा

'अग्नीषोमौ, माणवकावि'त्यत्र प्रसिद्धदेवताद्वन्द्ववाच्यग्नीषोमपदस्य तत्सदृशपरत्वेऽप्यन्तरङ्गत्वादीत्वषत्वे भवत एव। सदृशलाक्षणिकाग्निसोमपदयोर्द्वन्द्वे तन्नामकावित्यर्थके च नेत्वषत्वे; आद्ये गौणलाक्षणिकत्वादन्त्येऽप्रसिद्धत्वात्। अत ए'वाग्निसोमौ, माणवकावित्यत्र गौणमुख्यन्यायेन षत्ववारणपर 'मग्नेः स्तुत्स्तोमसोमा' इति सूत्रस्थं भाष्यं सङ्गच्छते।

'गां पाठये'त्यादौ मुख्यगोपदार्थस्य पाठनकर्मत्वासम्भवेन विभक्त्युत्पत्तिवेलायां प्रयोक्तृभिर्गौणार्थत्वस्य प्रतीतावप्यपदस्याप्रयोगेण बोद्धृभिः सर्वत्र पदस्यैव गौणार्थकत्वस्य ग्रहेणात्वं 'त्वं सम्पद्यते, अमहान्, महान् भूतस्त्वद्भवती'त्यादिभाष्यप्रयोगे त्वाद्यादेशदीर्घादीनां करणेन चास्य न्यायस्य पदकार्यविषयत्वमेवोचितम्; अन्यथा वाक्यसंस्कारपक्षे तेषु तदनापत्तिः।

किञ्च—'शुक्लामि'त्युक्ते कर्म निर्दिष्टं कर्त्ता क्रिया चानिर्दिष्टे' इत्याद्युक्त्वा 'इहेदानीं गामभ्याज कृष्णां देवदत्तेत्यादौ सर्वं निर्दिष्टं गामेव

---

तत्सदृशपरत्वेऽपीति। अग्निपदस्य सोमपदस्य च तत्सदृशपरत्वाभावेन मुख्यार्थबोधकत्वादीत्वादिप्रवृत्तौ बाधकाभाव इति भावः।

एतन्न्यायस्य पदकार्ये एव प्रवृत्तिरित्यत्र बीजमुपपादयति—गां पाठयेत्यादि। शास्त्रे वास्तविकसत्ताया अनुपयोगेन गौणार्थप्रतिपादकत्वप्रकारकज्ञानस्यैव गौणमुख्यन्यायप्रवृत्तिप्रयोजकतया बोद्धृभिः सर्वत्र पदस्यैव गौणार्थत्वग्रहेणास्य पदकार्यविषयत्वमुचितमिति भावः।

नन्वेव'मग्निसोमौ, माणवकावि'त्यत्रापि बोद्धृणां माणवकसमभिव्याहारे एव गौणार्थत्वस्य ग्रहेण इत्वादिप्रवृत्तिवेलायां गौणार्थप्रतिपादकत्वेन ज्ञानविषयत्वाभावाद् गौणमुख्यन्यायाप्रवृत्त्या पत्तावीत्वाद्यापत्तिर्दुर्वारा, अग्निसोमपदयोः पूर्वमेव बोद्धृणां गौणार्थप्रतिपादकत्वज्ञानविषयत्वकल्पनायां तुल्यन्यायेन 'गौर्वाहीक' इत्यत्रापि गोशब्दस्य पूर्वं गौणार्थत्वग्रहे वृद्ध्याद्यनापत्तिश्चेत्यरुचेराह—अत्वं त्वमित्यादि। तथा चोक्तनिर्देशज्ञाप्योऽयमर्थो न युक्तिमूलक इति भावः। अन्यथा=पदकार्यविषयत्वानङ्गीकारे। तेषु='गां पाठये'त्यादिषु। तदनापत्तिः=वृद्ध्याद्यनापत्तिः।

प्रयोक्तुरपि पद एव गौणार्थत्वप्रतीतिरित्युपपादयति—किञ्च शुक्लामिति। अनिर्दिष्ट इति। पुमान् 'स्त्रिये'त्येकशेषे अनिर्दिष्टावितति सूचितम्। यद्वा—'कर्ता क्रिया चे'ति शब्दः, 'अनिर्दिष्टे' इति शब्दश्चेत्युभौ शब्दौ आदी यस्यैवंभूतं

---

च—सङ्केतीयविशेष्यतावच्छेदकतासम्बन्धेन। एतेन—अन्यतमत्वस्य आनुपूर्वीरूपाभावेन कथमानुपूर्व्यां साक्षादवच्छिन्नत्वं मुख्यविशेष्यताया इति शङ्कोक्तिः परास्ता वेदितव्या; चाद्यन्यतमत्वस्य चत्वाद्यानुपूर्वीरूपत्वात्।

कर्म देवदत्त एव कर्त्ता अभ्याजेव क्रिये' त्यर्थकेनार्थवत्सूत्रस्थभाष्येण कारकादिमात्रप्रयोगे योग्यसर्वक्रियाऽध्याहारे प्रसक्ते नियमार्थः क्रियावाचकादिप्रयोग इत्येतत्तात्पर्यकेण सामान्यतः क्रियाजन्यफलाश्रयत्वमात्रविवक्षायां द्वितीयादीनां साधुत्वान्वाख्यानमित्यर्थलाभेन पाठनक्रियाऽन्वयकाले पदस्यैव गौणार्थत्वप्रतीतिः प्रयोक्तुरपि ।

एवमेतन्मूलको"ऽभिव्यक्तपदार्था ये" इति श्लोकोऽपि पदकार्यविषयकः । ध्वनितं चेदं 'सर्वादीनी'ति सूत्रे संज्ञाभूतानां प्रति-

---

शब्दकदम्बकं भाष्योक्तं कर्ता क्रिया चेत्येवमादिकर्मनिर्दिष्टे इत्येवमादिकं चोक्त्वेत्यर्थः । 'कर्ता क्रिया चे'त्यादिना 'कर्ता क्रिया चानिर्दिष्टौ, देवदत्त इत्युक्ते कर्ता निर्दिष्टः कर्मक्रिये' इत्येतदन्तस्य शब्दकदम्बकस्य सङ्ग्रहः । 'अनिर्दिष्ट' इत्यादिना अनिर्दिष्टे अभ्याजेत्युक्ते 'क्रिया निर्दिष्टा कर्तृकर्मणी अनिर्दिष्टे' इत्यस्य सङ्ग्रहः । प्रयोक्तुरपीति । एतदन्तो ग्रन्थः काकदन्तपरीक्षावत् निष्फल एव । केवलं'मत्वं त्वं संपद्यते अमहान् महान भूत' इत्यादि भाष्यमेव पदकार्ये एतन्न्यायस्य प्रवृत्तौ बीजम् । ध्वनितं चेदमिति । इदं = अस्य न्यायस्य पदकार्यविषयत्वम् । अन्यथा— गौणमुख्यन्यायेनैव सिद्धे सूत्रकारादिप्रयासो व्यर्थ एव स्यात् । सर्वनामसंज्ञाया विभक्तिनिमित्तकत्वं च संज्ञाशास्त्राणां विधिनिमित्तनिमित्तकत्वाद् बोध्यम् ।

केचित्तु—न प्रातिपदिककार्ये इति 'सर्वविधप्रातिपदिककार्येऽयं न्यायो न प्रवर्तते' इत्यर्थः । ननु तर्हि कीदृशप्रातिपदिककार्ये प्रवर्तते ; तत्राऽऽह—किञ्चेति । विशिष्टार्थेति । 'अन्वयानुपपत्तिप्रतिसन्धानाभावे यत्प्रातिपदिकं सदृशलक्ष्यार्थबोधकं

---

अत्रेदं चिन्तनीयम्—"किन्त्वयं न्यायो न प्रातिपदिककार्ये" इत्यादिग्रन्थः पूर्वसन्दर्भविरुद्धः; तथा हि—'आन्महत' इत्यात्वस्यापि प्रातिपदिकसम्बन्धिकार्यत्वेन प्रातिपदिककार्यतया तत्र न्यायाप्रवृत्त्याऽवतरणासङ्गतेः । यदि तु पदकार्यभिन्नं प्रातिपदिककार्यमिति तात्पर्यम् ; तदा 'परिनिष्ठितस्ये' त्यादिना प्रातिपदिककार्ये प्रवृत्त्यभावे बीजकथनासङ्गतिः, पदकार्ये एव प्रवृत्तौ बीजकथनेनैव तद्भिन्ने प्रातिपदिककार्ये प्रवृत्त्यभावस्य सुतरां सिद्धेः । किञ्च—'प्रातिपदिककार्ये न प्रवर्तते' इत्यस्य न किमपि फलम्, पदकार्ये एव प्रवर्तते इत्युक्त्यैव 'गौर्वाहीकः' इत्यस्य सिद्धेः । अपि च— पदकार्ये बीजकथनमप्यसङ्गतम् ; न हि सर्वत्र अन्वयानुपपत्तिरेव लक्षणाया बीजम्, यत्र तात्पर्यानुपपत्त्या पूर्वमेव गोसदृशतात्पर्येण गवादीनां प्रयोगस्तत्र गौणार्थत्वग्रहस्य प्रयोक्तुरपि पूर्वं सम्भवात् । तस्मात् सूत्र-वार्तिक भाष्यप्रामाण्यादेव 'पदकार्ये एवायं न्यायः प्रवर्तते' इत्येवं कल्पनीयमित्याद्याक्षिपन्ति ग्रन्थतत्त्वविदः; तत्समाधातुमुपक्रमते—केचित्त्विति । व्याख्यानं सुगमम् ।

मूले—एतन्मूलकः"अभिव्यक्तपदार्था ये" इति श्लोकोऽपीति । एतन्मूलकः = गौणमुख्यन्यायमूलक इत्यर्थः । समग्रश्लोकश्चेत्थम्:—

**षेधमारभता वार्तिककृता, 'पूर्वपरे'ति सूत्रे'ऽसंज्ञायामि'ति वदता सूत्रकृता, अन्वर्थसंज्ञया तत्प्रत्याख्यानं कुर्वता भाष्यकृता च ।**

---

तत्र, विशिष्टरूपोपादाने, पदकार्ये' चेत्येवं त्रितयसमवहितप्रातिपदिककार्ये प्रवर्तते इति भावः। अत्रार्थे बीजमाह—परिनिष्ठितस्येति। गौर्वाहीक इति। अत्र हि वाहीकेऽन्वयानुपपत्तिप्रतिसन्धानादेव गोशब्दस्य स्वार्थसदृशलक्ष्यार्थबोधकत्वेन न्यायस्य विषयाभावात्पूर्वमेवान्तरङ्गत्वाद् वृद्धिप्रवृत्तिः। एव'मग्नीषोमौ, माणवकावि'त्यत्र बोध्यम्। यत्र त्वग्निसोमपदयोरन्वयानुपपत्तिप्रतिसन्धानात्प्रागेव सदृशलाक्षणिकत्वग्रहस्तत्रैतन्न्यायेनेत्वादिव्यावृत्तिः सिद्धा। नन्वेवं—'गां पाठये'त्यत्रापि सुवचमित्यत आह—गां पाठयेति। प्रथमे बोधकपदेन बोद्धुर्बोधकं गृह्यते, न तु प्रयोक्तुरित्यर्थः। किं चार्थवत्सूत्रभाष्यात्प्रयोक्तुरपि गौणार्थप्रतीतिरन्वयकाले एवेति स्फुटमेव।

वस्तुतस्तु—प्रयोक्तृबोधकं वक्तृबोधकमिति विचारो निस्सार एव। 'गां पाठये'त्यत्र त्वन्वयानुपपत्तिप्रतिसन्धानाभावेऽपि गोसदृशादितात्पर्येण यदा प्रयोगस्तदाऽऽत्वस्य विभक्तिनिमित्तकत्वेन पदकार्यत्वाभावान्नैतत्प्रवृत्तिस्तदाऽऽह—अस्य न्यायस्य पदकार्यविषयत्वमेवोचितमिति। तथा च गां पाठये'त्यत्र निरुक्तविशिष्यार्थोपस्थापकत्वेऽपि पदकार्यत्वरूपतृतीयनिमित्ताभावादेव न 'गौणमुख्य'न्यायेनाऽऽत्वव्यावृत्तिः। एतेन—'महद्भूत' इत्यत्रापि महच्छब्दस्य प्रातिपदिकस्यैवाऽऽत्वरूपं कार्यमस्तीति न्यायाप्रवृत्त्यापत्तिः। किं च—परिनिष्ठितस्येत्यादि प्रातिपदिककार्ये प्रवृत्त्यभावे बीजकथनमप्ययुक्तम्। अग्निसोमशब्दयोरिव गोशब्दस्य गोसदृशतात्पर्येण गोनामतात्पर्येण वा प्रयोगेऽनयाऽऽत्वानापत्तिरिति विविधदोषदूषितस्सन्दर्भविरुद्धश्चायं ग्रन्थ इति कैश्चिदुक्तं परास्तमिति प्राहुः।

आरभतेति। अनुदात्तेत्त्वलक्षणस्याऽऽत्मनेपदस्यानित्यत्वाच्छतृप्रत्ययः। आरभमाणेनेति तूचितम्।

ननु—गौणमुख्यन्यायप्रदर्शनोत्तरं 'गौर्वाहीकः, गां पाठये'त्यत्र 'गौणमुख्यन्यायेन वृद्ध्यात्वे न प्राप्नुत' इति शङ्कायां 'अर्थाश्रय एतदेवं भवती'त्यादिना वारणं कृतं, न तु पदकार्यत्वाभावेन वृद्ध्यात्वविषये गौणमुख्यन्यायाप्रवृत्तिप्रदर्शनेनेत्येषा

---

"अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः।
शास्त्रार्थस्तेषु कर्तव्यः शब्देषु, न तदुक्तिषु॥" इति

अत्र 'अभिव्यक्तपदार्था ये' इत्यनेन गौणलाक्षणिकव्यावृत्तिः; 'लोकविश्रुताः' इत्यनेनाप्रसिद्धस्य व्यावृत्तिः; 'स्वतन्त्राः' इत्यनेनाप्रधानस्य व्यावृत्तिः; शब्देषु न तदुक्तिषु=अनभिव्यक्तपदार्थकेषु शब्देषु शास्त्रं न प्रवर्तत इत्यर्थः।

ननु 'ओत्' सूत्रे भाष्ये "गौर्वाहीकः, गां पाठय' इत्यादौ गौणमुख्यन्यायेन वृद्ध्यात्वे न प्राप्नुतः" इत्याशङ्काया विशिष्टरूपोपादानाभावेन भाष्यकृत्कृतं समाधानमसङ्गतं स्यात्, पदकार्यत्वाभावेन

अर्थाश्रय एतदेवं भवति, शब्दाश्रये च वृद्धचात्त्वे इति 'ओत्' सूत्रस्थभाष्यस्य लौकिकार्थवत्त्वयोग्यपदाश्रय एष न्यायस्तद्रहितशब्दाश्रये च ते इत्यर्थः। 'गोत' इति यथाश्रुतसूत्रे विशिष्टरूपोपादानसत्त्वेनोक्तरीत्यैवैतस्य भाष्यस्य व्याख्येयत्वादित्यलम् ॥ १५ ॥

अर्थवद्ग्रहणे इत्यस्यापवादमाह—

**अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति ॥ १६ ॥**



'येन विधिरि'त्यत्र भाष्ये वचनरूपेण पठितैषा, तेन 'राज्ञा, साम्ने'त्यादावल्लोपो, 'दण्डो, वाग्मी'त्यादा'विन् हन्नि'ति नियमः, सुपयाः, सुस्रोता' इत्यादौ

---

कल्पना भाष्यकारानभिप्रेतेत्यत आह—अर्थाश्रय इति। विशिष्टरूपोपादानसत्त्वेनेति। 'आ गोतोऽम्शसोरि'ति पाठाभिप्रायेणेदं भाष्यमिति भावः ॥ १५ ॥

अर्थवता चानर्थकेन चेति। प्रकृत्यादित्वादभेदे तृतीया; अर्थवदनर्थकाभिन्नं यत्तत्; तन्निष्ठचरमावयवतानिरूपकसमुदायबोधकानि अनिनस्मन्ग्रहणानीति परिभाषार्थः। यद्वा—अर्थवन्ति अनर्थकानि च तदन्तविधिं प्रयुञ्जते—अनिनस्मन्ग्रहणानि अर्थवता चानर्थकेन प्रयोज्यकर्त्रा तदन्तविधिं प्रयोजयन्तीत्यर्थः।

वचनरूपेणेति। 'अवर्मण' इति प्रतिषेधोऽस्यामेकदेशानुमत्या ज्ञापकः; अन्यथा वर्मन्शब्दघटकस्यानोऽनर्थकत्वेन 'नमपूर्व' इति प्रतिषेधाप्राप्त्या तद्वैयर्थ्यं स्पष्टमेव।

---

तदप्राप्तेरत आह—मूले—अर्थाश्रये एतदेवं भवतीत्यादिः। 'अर्थाश्रये' इत्यत्र अर्थपदं लौकिकार्थवत्त्वयोग्यपदपरमिति भावः ॥ १५ ॥

अत्र मूले—'राज्ञा, साम्ने'त्यादीनि उदाहरणानि दत्तानि। अव्युत्पत्तिपक्षे तु 'राज्ञा' इत्यपि अनर्थकस्यैवान उदाहरणमिति चेत्; 'सुजन्मा' इत्यनोऽर्थवत उदाहरणं बोध्यम्।

मूले—दण्डी, वाग्मीति। इदमुपलक्षणम्—'दण्डिनौ, वाग्मिनौ' इत्यस्य; तत्र 'सौचे' त्यनेन दीर्घसिद्धौ नियमानुपयोगात्। एवं 'सुपयाः' इत्यत्रापि। अव्युत्पत्तिपक्षे 'सुमेधा' इत्युदाहर्तव्यम्। 'सुश्रोता' इत्यत्र श्रुधातोरसिप्रत्यये तस्य तुडागमेऽसिरनर्थकः, आगमसमभिव्याहारे आगमविशिष्टस्यैवार्थवत्त्वात्।

ननु—'यदागम'न्यायेन तुड्विशिष्टस्याऽसो ग्रहणेन तस्य चार्थवत्त्वेन अनर्थकोदाहरणमयुक्तमिति चेन्न। श्रुधातोर्विचि गुणे तस्यात्पञ्चम्यन्तात् तसि प्रत्यये तदनुकरणे सुशब्देन समासेऽनर्थकस्यास उदाहरणं बोध्यम्।

'अत्वसन्तस्ये'ति दीर्घः, 'सुशर्म्मा, सुप्रथिमे'त्यादौ 'मन' इति ङीबूनिषेधश्च सिद्धः ।

अन्ये तु—'परिवेविषीध्वमि'त्यत्र ढत्वव्यावृत्तये क्रियमाणा'दिणः षीध्वमित्यत्राङ्गग्रहणादर्थवत्परिभाषाऽनित्या, तन्मूलकमिदमित्याहुः ।

'विभाषेट' इत्यत्रानर्थकस्यैव षीध्वमः सम्भवादत्रापि तस्यैव ग्रहणमिति भ्रमवारणा 'याङ्गादि'ति परे ॥ १६ ॥

---

एवं 'कार्मस्ताच्छील्य' इत्याद्यपि ज्ञापकमूह्यम् । सुप्रथिमेति । सुगता प्रथिमानं सुप्रथिमेति विग्रहः । एतेन सुप्रथिमनशब्दस्य पुंस्त्वाद् बहुव्रीहा 'वनो बहुव्रीहेरि'त्यनेनान्नन्तत्वादेव निषेधसिद्धेर्मन्नन्तस्योदाहरणमिदं चिन्त्यमिति परास्तम् ।

परिवेविषीध्वमिति । विषधातोर्जौहोत्यादिकाद्विधिलिङि सीयुटि सलोपे द्वित्वादौ चेदं रूपमिति बोध्यम् । नन्वसधातोर्विधिलिङि कर्मव्यतिहार आत्मनेपदे 'व्यतिषीध्वमि'त्यत्रार्थवतः षीध्वमः सम्भवादत्र ढत्वव्यावृत्तयेऽङ्गादित्यस्य चारितार्थ्यात्कथं ज्ञापकमिति चेन्न । 'उपसर्गप्रादुर्भ्यामि'ति षत्वस्यासिद्धत्वेन षीध्वमोऽभावात्तदप्राप्त्याऽङ्गादित्यस्य चारितार्थ्याभावात् । सूत्रं 'इणादेशप्रत्यययोरि'ति षत्वे चरितार्थम् ।

भ्रमवारणायेति । उत्तरसूत्रेऽर्थवतः षीध्वमोऽसम्भवात्परिभाषाबाधेऽप्यत्र तद्बाधे मानाभावादिदमयुक्तमिति दिक् ॥ १६ ॥

---

सुप्रथिमेतीति । कर्मधारये इमनिजन्तस्य पुंस्त्वेन स्त्रीत्वाभावात् ङीपोऽप्रसक्तिः, बहुव्रीहौ 'अनो बहुव्रीहेः'इति सिद्धेरत आह—सुगता प्रथिमानमिति । परास्तमिति । यत्तु—मूले—असुप्रथिमेति छेदं कृत्वा स्त्रीत्वबोधनाय बहुव्रीहिं कृत्वा पश्चात् नञ्तत्पुरुषे बहुव्रीहित्वाभावात् 'अनो बहुव्रीहेः' इत्यस्याप्राप्तौ 'मन' इति निषेध इति । तन्न; 'अबहुयज्वरी' इत्यनिष्टरूपवारणाय तदन्तविधिद्वयस्वीकारस्य आवश्यकत्वेन 'असुप्रथिमे'त्यत्रापि तेनैवेष्टसिद्धेः ।

दिगिति । अत्र हैमवतीकाराः—अनया परिभाषया 'अर्थवद्ग्रहण' इत्यस्याप्रवृत्त्या अनिनस्मन्ग्रहणेषु अनर्थकेषु तदन्तविधिस्वीकारेऽपि 'लक्षणप्रतिपदोक्त'परिभाषाप्रवृत्त्या 'वाग्मिनौ' इत्यत्र 'इन् हन्नि'ति नियमो न स्यात्, 'दण्डिनौ' इत्यत्र 'निरनुबन्धक'परिभाषया नियमो न स्यात, 'यशस्वी'त्यादौ 'ग्रहणवते'ति निषेधात् 'अस्मायेति' विनिर्न स्यात् , विन् तु असधातोः क्विबन्तात् 'अस्वी'इत्यत्र चरितार्थः; एवञ्च लक्ष्यासिद्धिस्तदवस्थैवेति चेन्न । अनया परिभाषया अनिनादिषु वर्णत्वमतिदिश्यते । परिभाषार्थस्तु—अनिनस्मन् ग्रहणानि अर्थवता चानर्थकेन च तदन्तविधिं यथा प्रयोजयन्ति तथा कार्यम्, अर्थात् एषु वर्णत्वातिदेशः कर्तव्य इति । एवं सति वर्णग्रहणे सर्वासामप्येतासामप्रवृत्त्या सर्वेष्टसिद्धेः सूपपादत्वात् । अत एव च 'अन्कारा' 'असकारा' इत्यादयो भाष्यप्रयोगाः सङ्गच्छन्ते; अन्यथा कारप्रत्ययानुपपत्तिरेव स्यादिति वदन्ति ।

यत्तु—अनया परिभाषया अल्त्वमेवातिदिश्यते, ततश्च अलैवानर्थकेन तदन्तविधिरित्यनेन सङ्गृहीता भवतीयं परिभाषेति । तन्न; अल्त्वारोपे सति 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति

ननु 'उश्च' इत्यत्र 'लिङ्सिचौ' इत्यत आत्मनेपदेष्वि'त्येव सम्बध्येत, अनन्तरत्वादत आह—

**एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः ॥१७॥**

वा शब्द एवार्थे ; परस्परान्वितार्थकपदानां सहैवानुवृत्तिनिवृत्ती इत्यर्थः । एककार्यनियुक्तानां बहूनां लोके तथैव दर्शनादिति भावः ।

यत्तु—अत्र ज्ञापकं 'नेड्वशो'त्यत इडित्यनुवर्तमाने' आर्द्धधातुकस्येडि'त्यत्र पुनरिड्ग्रहणम् ; तद्धि नेत्यस्यासम्बन्धार्थ मेति । तन्न ; 'दीधीवेवीटामि'ति सूत्रे भाष्ये तत्रत्येड्ग्रहणप्रत्याख्यानायेड्ग्रहणेऽनुवर्तमाने पुनरिड्ग्रहणस्येटो गुणरूपविकाराभावार्थकत्वस्योक्तत्वेन तद्विरोधात् । नञो निवृत्तिस्तु 'क्वचिदेक-देशोऽप्यनुवर्तत' इति न्यायेन सिद्धा ।

वस्तुतस्तु—'दीधीवेवीटामि'ति सूत्रस्य भाष्यमेकदेश्युक्तिः, 'आर्धधातुकस्ये'ति सूत्रस्थेड्ग्रहणस्य 'नेड्वशि' इति सूत्रे भाष्ये प्रत्याख्यानात् तत्करणेन गुरुतरयत्नमाश्रित्यैतत्प्रत्याख्यानस्यायुक्तत्वात् ॥ १७ ॥

---

अनन्तत्वादिति । अतिसन्निहितत्वादित्यर्थः । एकयोगेति । योगपदं कार्यपरं न तु सूत्रपरम् । एकसूत्रघटकानामित्यर्थे तु 'चिण् भावकर्मणोरि'त्यत्र चिण्ग्रहणं व्यर्थं स्यात्, 'चिण् ते पदः' इत्यतस्तदनुवृत्तौ बाधकाभावात् । मन्मते तु 'चिण् ते पद' इत्यतोऽनुवृत्तचिण्पदस्य मध्ये 'नरुध' इत्यत्र नञ्सम्बद्धत्वेन नञ्चिणोरेकसूत्रघटकत्वाभावेऽपि नञ्सम्बद्धस्य केवलस्य चिण'श्चिण् भावकर्मणोरि'त्यत्रानयाऽनुवृत्त्यसम्भवात्तच्चरितार्थम् ; तदेवाऽऽह—परस्परेति । अस्या लोकसिद्धत्वमाह—एककार्येति । अत्र ज्ञापकं च 'लिङ्सिचावि'त्यतः सिच्पदानुवृत्तिसम्भवे 'हनः सिजि'त्यत्र सिज्ग्रहणम् ; एव 'मीदूदि'त्येतन्मात्रानुवृत्त्यैव सिद्धे एकारनिवृत्त्यर्थं क्रियमाण'मदसो मादि'त्यत्र मादग्रहणं च बोध्यम् ।

अत्र ज्ञापकत्वोपपादनं भाष्यविरोधेन तत्खण्डनं चेत्युभयमप्यसङ्गतमित्याह—वस्तुतस्त्विति ॥ १७ ॥

---

सूत्रस्य नियमार्थतामुक्तवता भाष्यकारेण 'इषत्करोति' इत्यत्र स्वविषये 'स्थानिवदि'त्यस्य सङ्कोचात् तदप्राप्तौ प्रत्ययस्य प्राधान्याभावात् प्रत्ययलक्षणाप्रवृत्तौ च 'अत्वसन्तस्य चाधातो.' इति दीर्घो नेत्युक्तम् । सम्प्रति अल्विधित्वे 'स्थानिवद्भावाभावेन नियमेन व्यावर्त्या लाभः' इति भाष्यविरोधापत्तेः । किञ्च—यशस्शब्दात् णिचि' टिलोपे कर्तरि क्विपि 'यट्' इत्यत्र स्थानिवद्भावेनासन्तत्वात्

नन्वलुगधिकारः प्रागनङ उत्तरपदाधिकारः प्रागङ्गाधिकारादित्यनुपपन्नमेकयोगनिर्दिष्टत्वात् ; तथा 'दामहायनान्ताच्च' इत्यादौ 'संख्याऽव्ययादेरि' त्यतः संख्यादेरित्यनुवर्ततेऽव्ययादेरिति निवृत्तमिति चानुपपन्नमत आह—

क्वचिदेकदेशोऽप्यनुवर्तते ॥ १८ ॥

---

एकत्रार्थे योगः=सम्बन्धस्तेन निर्दिष्टयोः समुदायाभिधायिद्वन्द्वनिर्दिष्टयोरित्यर्थ' इति 'पक्षात्तिरि' ति सूत्रे कैयटः ।

तावन्मात्रांशे स्वरितत्वप्रतिज्ञाबलाल्लभ्यमिदम् । स्पष्टा चेयं 'दामहायनान्ताच्चे' ति सूत्रे 'औतोऽम्शसोरि' ति सूत्रे च भाष्ये, पूर्वा च ॥ १८ ॥

ननु 'त्यदादीनाम' इत्यादिना 'इममि'त्यादावनुनासिकः स्यादत आह—

---

पूर्वपरिभाषातोऽनुवर्तमानस्य 'एकयोगे'ति पदस्यात्रार्थविशेषं प्रतिपादयति—एकत्रार्थ इति । कैयट इति । अत्रारुचिबीजन्तु—'अलुगधिकारः प्रागनङ' इत्यादिभाष्यानुपपत्तिर्द्वन्द्वनिर्दिष्टत्वाभावात् । किञ्च 'औतोऽम्शसोरि'त्यत्र 'वा सुपी'त्यतः सुपीत्यनुवर्तते वेति निवृत्तमनया परिभाषये'ति भाष्यासङ्गतिरिति दिक् ॥ १८ ॥

इदमित्यादाविति । नन्वौजसोः फलसम्भवेऽम्पर्यन्तमनुधावनं व्यर्थमिति चेन्न । 'इमावि'त्यत्रौकारस्यानुनासिकत्वाभावेन 'इमे' इत्यत्रैकारस्यानुनासिकत्वेऽपि परस्य ईकारस्याऽऽधिक्यात्तद्गुणकस्य निरनुनासिकस्य एकारस्य 'आद्गुण' इत्यनेन विधानात्तत्र फलासम्भवात्, विभक्तिविधायककार्येषु द्वितीयाया एव प्राथम्याच्च ।

---

विनिर्भवति 'यट्वी' इति रूपं भवति; तन्न स्यात्; एतादृशप्रयोगे चोक्तभाष्यमेव मानम् । किञ्च—अत एव 'अल्लोपोऽन' इत्यत्र अदिति तपरग्रहणं चरितार्थम् । अनितेः क्विपि दीर्घे 'आन्' इत्यत्रानो वर्णत्वातिदेशेऽपि अल्त्वानतिदेशेन 'अनल्विधावि'त्यस्याप्राप्त्या स्थानिवद्भावे वान्त्वातिदेशेन प्राप्ताल्लोपवारणाय तपरकरणस्य साफल्यादित्यवधेयम् ॥ १६ ॥

इति दिगिति । अस्यां ज्ञापकानि 'एचोऽयवायाव' इत्यादीनि । अत्र हि 'इको यणचि' इत्यस्मात् 'अची'त्यनुवर्तते । एकयोगनिर्दिष्टाना सहैवानुवृत्तौ सूत्रं व्यर्थम्, सर्वत्र प्रवृत्तिर्वा । न च 'वान्तो यि प्रत्यये' इति सूत्रं व्यर्थं सत् नियमार्थं भविष्यतीति वाच्यम् ; ज्ञापनोत्तरं विधित्वे सम्भवति नियमत्वायोगात् ॥ १८ ॥

# भाव्यमानेन सवर्णानां ग्रहणं न ॥ १९ ॥

अणुदित्सूत्रे 'ऽप्रत्यय' इत्यनेन सामर्थ्यात्सूत्रप्राप्तं, जातिपक्षेण प्राप्तं, गुणाभेदकत्वेन च प्राप्तं नेत्यर्थः। अत एवाणुदित्सूत्रे प्रत्ययाऽऽदेशाऽऽगमेषु

---

भाव्यमानेन सवर्णानां ग्रहणं नेति। विधेयताप्रयोजकेन पदेन स्वावृत्तिश्रावणप्रत्यक्ष-विषयतावच्छेदकधर्मवतां ग्रहणं नेत्यर्थः। एतेन—'त्यदादीनाम' इत्यकारेण सवर्ण-सामान्यस्यानेन निषेधाद् ग्रहणाभावेन सूत्रं व्यर्थमेव स्यादित्यपास्तम्। स च धर्म-स्तद्व्यक्तित्व-तत्पुरुषीयत्वातिरिक्तः स्वरत्वव्याप्योदात्तत्वादिभिन्नश्च ग्राह्यः, तेन तत्तल्लक्ष्यघटकानां तत्तत्पुरुषोच्चारितानां त्वकारव्यक्तीनां विधायकाद्भेदेऽपि न क्षतिः। एवं 'बहुवचने झल्येदि' त्यादावुदात्तादेकारस्योच्चारणेऽपि तद्भिन्नस्यानुदात्तादेरपि 'सर्वेभ्यो, विश्वेभ्य' इत्यादौ विधानं सिद्ध्यति।

नन्वेवं यण्पदेन स्वावृत्तिधर्मवतां वकारादीनां ग्रहणं न स्यादिति चेन्न। स्वतादा-त्म्य-स्वनिष्ठशक्तिनिरूपकतावच्छेदकसमुदायघटकत्वान्यतरसम्बन्धेन स्वविशिष्टावृत्ति-धर्मवतां ग्रहणं नेति परिभाषार्थस्वीकारेण (स्वम्—यण्पदम्, तन्निष्ठशक्तिनिरूपकता-वच्छेदकसमुदायः—वर्णसमाम्नायस्थ'यवरले'त्येवंरूपः, तद्घटकत्वं तेष्वेव निर-नुनासिक-याऽऽदिष्विति) तदवृत्तिधर्मवतामनुनासिकयाऽऽदीनां ग्रहणाभावेऽपि निरनुनासिकानां तेषां ग्रहणे बाधकाभावात्। तादात्म्यसम्बन्धनिवेशफलं 'त्यदा-दीनाम' इति।

ननु तादात्म्यसम्बन्धेन स्वविशिष्टं यण्पदमेव, तन्निरूपितवृत्तित्वसामान्याभाव-वान् धर्मो वत्वादिस्तद्धर्मवतां वाऽऽदीनां यण्पदेन पुनरपि ग्रहणानापत्तिः, अनेन निषेधादिति चेन्न। अन्यतरसम्बन्धेन स्वविशिष्टनिरूपितवृत्तित्वसामान्याभाववत एव धर्मस्य ग्रहणेन (प्रकृते वत्वादिधर्मस्यापरसम्बन्धेन स्वविशिष्टा ये वर्णसमाम्ना-यस्था वाऽऽदयस्तद्वृत्तित्वेन निरुक्तवृत्तित्वसामान्याभावस्यासत्त्वेन) अदोषात्। प्रत्ययाऽऽदेशाऽऽगमेष्विति। प्रत्ययांशेऽनभिधानेनाऽऽदेशेषु 'ईहल्यघो'रिति दीर्घेकार-

---

परिभाषायां भाव्यमानपदं भाव्यमानसमर्पकपरम्; तदाह—विधेयताप्रयोजकेन पदेनेति।

नेयमपूर्वा, किन्तु सूत्रार्थसिद्धेत्यत आह—मूले—अणुदित्सूत्र इति। सामर्थ्या-दिति। सामर्थ्यञ्चाग्रे मूले एव स्फुटम्। प्राप्तमिति। सवर्णानां ग्रहणमित्यर्थः। नेत्यर्थ इति। बोध्यत इति शेषः। अयम्भावः—अप्रत्यय इति योगो विभज्यते; प्रत्ययपदञ्च प्रत्ययपरमेव। तथा च 'अप्रत्यय' इत्यनेन सामर्थ्यादेकदेशानुमत्या प्रत्ययाऽऽदेशाऽऽगमेषु त्रिधा प्राप्तं सवर्णानां ग्रहणं निषिद्ध्यते; तन्मूलिकेयं परिभाषेति यावत्।

ननु—'अप्रत्यय' इत्यनेन प्रत्ययस्य सवर्णग्राहकत्वमित्यर्थस्यैव लाभादेकदेशानुमत्या परिभाषां ज्ञापयतीत्यत्र किं मानमत आह—मूले—अत एवेति।

सवर्णग्रहणाभावं प्रकारान्तरेणोक्त्वैवं तर्हि सिद्धे यदप्रत्यय इति प्रतिषेधं शास्ति, तज्ज्ञापयति भवत्येषा परिभाषा भाव्यमानेन सवर्णानां ग्रहणं नेति ।

किञ्च 'ज्याद ईयस' इत्येवान्तर्यतो दीर्घे सिद्धे 'ज्यादादि'ति दीर्घोच्चारणमस्य ज्ञापकम् । अणुदित्सूत्रे 'ज्यादादि'ति सूत्रे च भाष्ये स्पष्टैषा ।

'चोः 'कुरि'त्यादौ भाव्यमानेनापि सवर्णग्रहणम्, विधेये 'उदित्'उच्चारणसामर्थ्यात् । एतदेवाभिप्रेत्य 'भाव्यमानोऽण् सवर्णान्न गृह्णाती'ति नव्याः पठन्ति ॥ १९ ॥

---

विधानसामर्थ्येनाऽऽगमेषु 'वृतो वे'ति दीर्घविधानसामर्थ्येन तेषु सवर्णग्रहणाभावे सिद्धेऽपि पुनरप्रत्ययपदेन व्यर्थेनैकदेशानुमत्या सिद्धैव परिभाषा स्पष्टप्रतिपत्तये बोध्यत इति भावः ।

दीर्घोच्चारणमस्या ज्ञापकमिति । ननु ज्ञापितेऽपि स्वांशे चरितार्थ्याभावः, 'बहोर्लोप' इत्यतो लोपपदानुवृत्त्या ईकारलोपे 'ऽङ्गवृत्त' परिभाषया दीर्घाभावेन 'ज्ययानि'त्यस्य सिद्धेरकारविधानसामर्थ्यादेव पररूपबाधेन सवर्णदीर्घे 'ज्यायानि'त्यस्य सिद्धेरिति चेन्न । 'अङ्गवृत्त' परिभाषाया आद्विधानवैयर्थ्यमूलकत्वेनाद्याप्यनिष्पत्तेरकारविधानवैयर्थ्येन पररूपबाधकल्पनाया दुरुपपादत्वात् । न चाऽऽद्विधानसामर्थ्येनैतत्परिभाषाज्ञापनात्पूर्वमेवाङ्गवृत्त परिभाषाया ज्ञापने पूर्वोक्तरीत्या स्वांशे चारितार्थ्याभावो दुरुद्धर इति वाच्यम्; ईकारस्य ह्रस्वाकारविधाने 'भाव्यमान' परिभाषयाऽऽकारो न स्यादित्यभिप्रायेण कृतस्याऽऽकारविधानस्यैतत्परिभाषाज्ञापकत्वमित्याशयात । एतदभिप्रायेण पाणिनिनाऽऽकारविधानं कृतमित्यत्र मानं तु—ज्ञापकपरं भाष्यमेवेति बोध्यम् । किञ्च—'ईहल्यघोरि'त्यत्राकारस्यान्तर्यत एव दीर्घे सिद्धे दीर्घेकारविधानमस्यां ज्ञापकं बोध्यम । एतदेवेति । उदित्करणसामर्थ्यमूलकार्थमभिप्रेत्येत्यर्थः । नव्याः = भट्टोजीदीक्षितादयः । पठन्तीति । एतेन वास्तविको नायं पाठ इति सूचितमित्यन्यत्र विस्तरः ॥ १९ ॥

---

ग्रहणं नेतीति । उक्तमिति शेषः । तथा चैवमुक्त्या 'अप्रत्ययस्य' इत्येकदेशानुमत्या उक्तपरिभाषां बोधयतीत्यर्थः, प्रत्ययपदस्य प्रत्ययसंज्ञकपरत्वञ्च ध्वनितम् । एतेन 'प्रतीयते विधीयते इति प्रत्ययः' इति कौमुदीकारोक्तिः प्रत्युक्ता ।

ज्ञापकसिद्धत्वमप्याह — किञ्चेति ।

इत्याशयादिति । यत्तु—एवमपि अकारविधानमेवास्तु, 'अतो गुणे' इति तु लोपे विधेये अकारविधानसामर्थ्यान्न भविष्यति, लोपोत्तरं दीर्घाभावः प्रागुक्त एव; तस्मादकारविधानसामर्थ्यान् दीर्घे सिद्धे पुनर्व्याकारविधानं व्यर्थमिति स्वांशे चारितार्थ्यं दुर्निरूपमेव । न च लोपे सति 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घाभावे 'ज्ययानि'ति रूपम् । अकारविधाने 'अतो गुणे' इति पररूपे तु 'अकृदि'ति दीर्घे सति 'ज्यायानि'ति रूपमिति वैषम्यादकारविधानसामर्थ्येन

नन्वेव'मदसोऽसेरि'त्यादिना'ऽमू'इत्यादौ दीर्घविधानं न स्यादत आह—

## भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति ॥ २० ॥

'दिव उत्' 'ऋत उत्' इति तपरकरणमस्या ज्ञापकम् ।

---

दीर्घविधानं न स्यादिति । 'अदसोऽसेरि'ति सूत्रे ह्रस्वोकारेण 'भाव्यमान'परिभाषया दीर्घस्याग्रहणादिति भावः । प्राचीनोक्तसमाहारद्वन्द्वस्तु न युक्त इत्यन्तरङ्गपरिभाषायां निरूपयिष्यते । दिव उदिति । न च ज्ञापितेऽपि स्वांशे चारितार्थ्याभावः; प्रमाणत आन्तरतम्याद्वकारस्य स्थाने ह्रस्वोकारस्यैव प्राप्तेः । न 'चाक्षद्यूभ्यामि'त्यत्र ह्रस्वविधानार्थं तदिति वाच्यम् ; 'निरनुबन्धक' परिभाषाया दिव्धातावेतद्प्रवृत्तेरिति वाच्यम् ः दिवशब्दात्क्यजन्तात्क्विपि 'द्युभ्यामि'त्यादौ दीर्घस्य स्थाने ह्रस्वविधानार्थं तपरकरणस्य चारितार्थ्यात् । ऋत उदिति । न च तपरकरणं 'ढ्रलोप' इति दीर्घबाधनार्थमिति वाच्यम् ; 'ढ्रलोप' इति दीर्घस्य बहिरङ्गत्वेनासिद्धतया तद्बाधकत्वे मानाभावात् । अत एव 'पितूराज्य, मूरपर' इत्यादिप्रयोगाः सङ्गच्छन्ते । स्पष्टं चेदं तत्रैव सूत्रे शब्देन्दुशेखरे ।

अत्र केचित्—इयं परिभाषा सूत्र-भाष्यविरुद्धा । तथा हि—'ऊदुपधाया, गोहः' इत्यत्र ह्रस्वोकारविधानेऽपि ओकारस्य स्थाने आन्तरतम्याद् दीर्घ एव स्यादिति सूत्रे दीर्घविधानं व्यर्थम् । एवं 'गोहः' इति विकृतनिर्देशप्रत्याख्यानाय 'उ ऊ' इति प्रश्लिष्य भाष्यकृता गुणे कृते ओकारस्य दीर्घ ऊकारः, ह्रस्वस्य ह्रस्वो विहितः, तत्र ह्रस्वमात्रविधानेनोभयत्रापि यथायथमान्तरतम्यादुभयोः सिद्धया दीर्घविधानं व्यर्थमिति । न च ह्रस्वोकारमात्रविधाने तस्य गुणबाधकत्वापत्तिः, दीर्घविधाने तु

---

पररूपाभावकल्पनमनुचितमिति वाच्यम् ; एकादेशस्य स्थानिवद्भावेन दीर्घाभावे सिद्धे फलेऽविशेषात् , दीर्घविधौ न स्थानिवदिति तु लोपाजादेशविषयकमेवेति । तन्न ; अकारविधानसामर्थ्यात् साक्षाच्छास्त्रबाधे गौरवात् । संहिताया एव बाधे दीर्घानापत्तेः । न चैतस्यां कल्पनायां 'टाङसी'ति सूत्रस्थभाष्यविरोधः ; तत्र हि—अदादेशमुक्त्वा सामर्थ्यात् 'अतो गुणे' इति पररूपाभाव उक्तः, भवद्रीत्या तत्रापि संहिताबाधे तत्रापि रूपासिद्धिरिति वाच्यम् ; उभयोर्भाष्ययोर्मध्ये अन्यतरस्यैकदेशयुक्तित्वकथनस्य आवश्यकत्वे यत्र लघुतरयत्नः तेनैव अपरस्यैकदेशित्वकल्पनस्य न्याय्यत्वे 'टाङसी'ति सूत्रस्थभाष्यस्य एकदेशिकत्वकल्पनेनेष्टसिद्धेः । तथा च संहिताबाधे दीर्घप्राप्तौ अकारविधानं चरितार्थमिति दिक् ।

ज्ञापकान्तरमप्याह—किञ्चेति ॥ १९ ॥

निरूपयिष्यत इति । 'अश्च ऊश्चेति समाहारद्वन्द्वे घित्वात् ह्रस्वस्य च पूर्वनिपाते दीर्घनपुंसकह्रस्वयोः प्राप्तौ अपरनिमित्तकत्वेन पूर्वं ह्रस्वे पश्चात् दीर्घे उ इति निर्देशानुपपत्तेः' इति वक्ष्यमाणत्वादिति भावः ।

तपरकरणस्य चारितार्थ्यादिति । न च अल्लोपस्य ऊठि स्थानिवत्त्वम् , कौ

'तित्स्वरितमि'ति सूत्रे भाष्ये स्पष्टैषा ॥ २० ॥

**ननु 'गवे हितं, गोहितमि'त्यादौ प्रत्ययलक्षणेनावाद्यादेशापत्तिरत आह—**

---

तत्सामर्थ्यात्पूर्वं गुणे दीर्घोकारादेशे 'गूहत' इत्यादिसिद्धिस्तत्फलमिति वाच्यम्; ह्रस्वोकारविधानस्य गुणमात्रबाधकत्वे तु 'नाभ्यस्तस्याची' त्यत्र 'गुह' इत्यस्य पाठेनाजादौ प्रत्यये परे गुहो गुणनिषेधेनैव सिद्धेः ह्रस्वोकारविधानेन गुणाबाधकत्वकल्पनात् उपधाग्रहणस्य 'मितां ह्रस्व' इत्युत्तरत्राऽऽवश्यकत्वेऽपि उच्छब्दाकरणरूपं तक्रन्यायाप्रवृत्तिरूपं च लाघवं बोध्यमिति वदन्ति। तन्न; गुहेर्ण्यन्ताच्चङि उपधाकार्यत्वात्प्राबल्येन गुणे ऊत्वे 'णौ चङी'ति ह्रस्वाभावार्थं दीर्घविधानस्य सूत्रकृता भाष्यकृता च कृतत्वेन तद्विरोधाभावात्।

वस्तुतस्तु—नैतस्या असाधारणं प्रयोजनम्, अदसोऽसेरि'त्यत्र दीर्घोकारस्य नपुंसकस्य ह्रस्वे परेण ह्रस्वोकारेण सह तन्त्रेणोच्चारणेन द्वयोर्विधानादेव सिद्धिरिति बोध्यम्।

तित्स्वरितमितीति। तत्र हि 'भाव्यमान'परिभाषास्वीकारे 'अमूभ्यामि'त्यत्र न प्राप्नोतीत्याशङ्क्य, 'दिव उदि'ति तपरकरणादेतत्परिभाषां ज्ञापयित्वा समाहितम् ॥ २० ॥

गवे हितं गोहितमिति। ननु शब्दानित्यत्ववारणाय 'एज्घटितस्योच्चारणप्रसङ्गेऽयादिघटितमुच्चारणीयमि'त्यर्थस्यावश्यं वक्तव्यतया तस्याङ्गपर्याप्तोद्देश्यताककार्यत्वेन 'न लुमताङ्गस्ये'त्यनेनैव प्रत्ययलक्षणनिषेधात् कथमत्र तदापत्तिरिति चेन्न। 'उक्रामे' त्याद्यर्थं लुप्तप्रत्ययाव्यवहितपूर्वत्वेन साक्षादवच्छिन्ना यत्राङ्गवृत्त्युद्देश्यता, तत्रैव 'न लुमते'ति निषेधाद् 'गोधनमित्यादाववाद्यादेशवारणाय 'अजव्यवहितपूर्वत्वविशिष्टं यदेज्घटितं तस्यायादिघटितादेश' इत्यर्थं विहाय 'अजव्यवहितपूर्वत्वविशिष्टो य एच् तद्घटितस्यायादिघटित आदेश' इति सूत्रार्थस्यावश्यं वक्तव्यतया लुप्तप्रत्ययाव्यवहितपूर्वत्वस्याङ्गेऽन्वयाभावा'न्न लुमते'त्यस्याप्रवृत्तेः। न चैवं वार्तिकमते 'निर्जराणां धनं, निर्जरधनमि'त्यत्र सप्तम्यन्तस्य निर्दिश्यमानेऽन्वयस्य क्लृप्ततया 'जराया' इति सूत्रस्याजादिविभक्त्यव्यवहितपूर्वत्वविशिष्टो यो जराशब्दान्ताङ्गावयवनिर्दिश्यमानस्तस्य जरसि'त्यर्थो 'न्न लुमते'त्यस्याप्रवृत्त्या प्रत्ययलक्षणेनाजादिविभक्तिपरकत्वाज्जरसापत्तिः।

---

विधिं प्रति तन्निषेधात्। न चापि ह्रस्वे विधेये स्थानिवत्त्वम्, दीर्घस्य स्थानिभूतादचः पूर्वत्वाभावात् ॥ २० ॥

**न चैवं** वार्तिकमत इति। तन्मते अल्विधावपि विध्यर्थं 'प्रत्ययलोपे प्रत्ययलक्षणम्' सूत्रमिदम्। 'वर्णाश्रये' इति तु वर्णप्राधान्यविषयकम्। तदुक्तं वार्तिककृता—'प्रयोजनं ङौ नकारलोपेऽत्वेमुविधयः' इति। जरसापत्तिरिति। अजादिविभक्त्यव्यवहितपूर्वत्वस्य निर्दिश्यमानेऽन्वयेन लुप्तप्रत्ययाव्यवहितपूर्वत्वेन साक्षादवच्छिन्नाङ्गपर्याप्तोद्देश्यताया अभावात् 'न लुमताङ्गस्य' इत्यस्याप्राप्तेरिति भावः।

# वर्णाश्रये नास्ति प्रत्ययलक्षणम् ॥ २१ ॥

भाष्यमते तिसृणां धनं, त्रिधनमि'त्यादौ तिस्रादेशापत्तिश्चेति वाच्यम्; साक्षात् लुप्तप्रत्ययाव्यवहितपूर्वत्वनिष्ठप्रकारतानिरूपितविशेष्यता यत्राङ्गपर्याप्तधर्मावच्छिन्ना, तत्र 'न लुमते'त्यस्य प्रवृत्तिस्वीकारेणाव्यवहितपूर्वत्वस्याङ्गविशेषितनिर्दिश्यमानेऽन्वयेन तन्निष्ठविशेष्यताया अङ्गपर्याप्तधर्मावच्छिन्नत्वा 'त्रिजरधनं, त्रिधनमि'त्यादौ 'न लुमते'ति निषेधस्य प्रवृत्तेः सुलभतया विभक्तिपरकत्वाभावेन तदप्राप्तेः। 'गोहितमि'त्यत्र त्वजव्यवहितपूर्वत्वस्यैच्येव विशेषणत्वेन तन्निष्ठविशेष्यताया अङ्गपर्याप्तधर्मावच्छिन्नत्वाभावान्न 'न लुमते'त्यस्य विषयः। एव 'मुत्कामे'त्यादावपि बोध्यम्।

न च 'एचोऽयवायाव' इत्यस्य शब्दानित्यत्ववारणाय 'आजव्यवहितपूर्वत्वविशिष्टस्यैजन्तस्यार्थबोधनायोच्चारणप्रसङ्गेऽयादिर्घटितमुच्चारणीयमि'त्यर्थस्य करणेन 'गोहितमि'त्यत्र 'न लुमते'त्यस्य प्रवृत्तिः सुलभेति वाच्यम्; एवमर्थस्वीकारे अगागमपक्षे 'गो+अ+अग्रमि'ति स्थितेऽगागमघटकाजव्यवहितपूर्वत्वविशिष्टस्य 'गो' इत्येतस्यैजन्तस्याऽऽगमसमभिव्याहृतस्य निरर्थकस्यार्थबोधनाय प्रसङ्गाभावेन तत्रावाद्यनापत्त्या अगन्यासस्थापनपरभाष्यविरोधापत्तेः, 'गो–ए' एतत्समुदायघटकस्य गो इत्येतन्मात्रस्यापगमे शब्दानित्यत्वस्य तदवस्थत्वाच्च। न च 'गो+ङे, हित+सु' इत्यवस्थायामेव 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग् बाधत' इति न्याये—नेत्संज्ञालोपौ बाधित्वा लुकि कृते प्रत्ययलक्षणेऽप्यच्परकत्वाभावादवादेशाप्राप्तिरिति वाच्यम्; ज्ञापकसाजात्यादित्संज्ञालोपविषयेऽन्तरङ्गानपीति न्यायस्याप्रवृत्तेः।

---

भाष्यमत इति। तन्मते प्राधान्येन अप्राधान्येन वा अलाश्रये विधौ प्रत्ययलक्षणसूत्राप्रवृत्तेः पूर्वत्र दोषाभावादिति भावः। त्रिधनमित्यादाविति। त्रिधनमिति परमत्रिधनमित्यस्योपलक्षणम्। एतेन—त्रिरूपनिर्दिश्यमानस्य अङ्गरूपतया तत्पर्याप्तोद्देश्यताया लुप्तप्रत्ययाव्यवहितपूर्वत्वेन साक्षादवच्छिन्नतया निषेधप्राप्तेः सुलभतया इदमसङ्गतमिति परास्तम्। अङ्गपर्याप्तधर्मावच्छिन्नेति। साक्षात् परम्परया वा तेन धर्मेणावच्छिन्नेति तदर्थः।

ज्ञापकसाजात्यादिति। अत्र केचित्—लाघवात् संज्ञामात्रविषये तन्न्यायाप्रवृत्तिरित्येव ज्ञाप्यताम्। अत एव इहापि किञ्चित्परो भाष्यं सङ्गच्छते; अन्यथा सम्बुद्धिसंज्ञां बाधित्वा पूर्वं लुकि पश्चात् प्रत्ययलक्षणेऽपि सम्बुद्धिपरत्वाभावेन गुणाप्राप्त्या तदसङ्गतिरेव स्यात् प्रत्ययलक्षणे सम्बुद्धिसंज्ञा तु न भविष्यति; प्रत्ययोद्देश्यककार्ये तदप्राप्तेरित्याहुः। तन्न; सामान्येन संज्ञाविषये तन्न्यायाप्रवृत्त्यङ्गीकारे 'राजपुरुषः' इत्यत्र पूर्वं भसंज्ञाप्रवृत्त्या नलोपानापत्तेः। तस्मात् पूर्वोक्तभाष्यानुरोधात् ज्ञापकसाजात्याच्च प्रत्ययस्य पर्याप्त्याऽपर्याप्त्या वा संज्ञायां कर्तव्यायाम् उक्तन्यायो न प्रवर्तत इत्येव कल्पनं युक्तमित्येतत्फलितमाह—इत्संज्ञालोपविषय इत्यादिः।

**वर्णप्राधान्यविषयमेतत् । तत्त्वं च—'प्रत्ययलोप' इति सूत्रे स्थानिवदित्यनुवृत्त्यैव सिद्धे प्रत्ययलक्षणग्रहणं प्रत्ययस्येतराविशेषणत्वरूपं यत्र प्राधान्यं तत्रैव प्रवृत्त्यर्थमित्येतत्सिद्धम् । वर्णप्राधान्यं च—वर्णस्येतराविशेषणत्वरूपं**

---

अत एव 'लुकि न स्थानिवदि'त्यस्य 'पञ्चेन्द्र' इत्युदाहरणं भाष्योक्तं संगच्छते; अन्यथा ङकारपकारयोरित्संज्ञालोपाभ्यां प्रागेव ङीपो लुकि अज्मात्रस्थानिकादेशाभावेन स्थानिवद्भावाप्राप्त्या तदसङ्गतिः स्पष्टैव । अत एव 'ञ्नित्स्वरे प्रत्ययलक्षणप्रतिषेध' इति वार्तिकमपि सङ्गच्छते ।

परिभाषायां प्रमाणमाह—तत्त्वमिति । वर्णाश्रये प्रत्ययलक्षणाप्रवृत्तिमत्त्वमित्यर्थः । प्रत्ययस्येतराविशेषणत्वरूपमिति । स्वावयवनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयत्वरूपमित्यर्थः, तेन 'वारी'त्यादौ सुबन्तसमुदाये सुपो विशेषणत्वेऽपि स्वावयवेऽविशेषणत्वेनोक्तप्राधान्येन प्रत्ययलक्षणसिद्धिः । वर्णस्येतराविशेषणत्वरूपमिति । स्वावयविनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयत्वमित्यर्थः, तेन 'गोहितमि'त्यत्राच्पदार्थस्य एचि विशेषणत्वेऽपि प्राधान्यमेव । अत्र स्वावयवी च प्रत्ययो ग्राह्यः, तेन 'टड्ढे'ति सूत्रेऽतः प्रातिपदिके विशेषणत्वेऽपि न वर्णप्राधान्यक्षतिः ।

---

एतेन—लाघवात् साधुत्वविधायकशास्त्रापेक्षयैव लुकः प्राबल्यं बोध्यते इत्येव ज्ञाप्यत इत्यपि कैश्चिदुक्तं परास्तं वेदितव्यम्; राजपुरुष इत्यत्र भसंज्ञाप्रवृत्त्या नलोपानापत्तेः ।

लोपविषये तदप्रवृत्तौ मानमाह—**अत एव लुकि न स्थानिवदिति । वार्तिकमपि सङ्गच्छत इति** । अन्यथा 'गर्गाः, बिदा' इत्यादौ इत्संज्ञातः पूर्वं यञो लुकि 'ञित्स्वरा'ऽप्राप्त्या तत्प्रतिषेधार्थं क्रियमाणं वार्तिकं व्यर्थमेव स्यादिति भावः । न चेत्संज्ञाविषये तन्न्यायाप्रवृत्तिरित्येतज्ज्ञापने फलाभाव इति वाच्यम्; 'दैवदारवम्' इत्यत्र फलसम्भवात् । तत्र देवदारुशब्दात् 'ओरञ्' इत्यनेन फलेऽर्थे अञि 'तस्य फले लुक्' इत्यनेन लुकि 'ञितश्च तत्प्रत्ययात्' इत्यनेन स्वार्थेऽञ् सिद्ध्यति; अन्यथा स न सिद्ध्येत् ।

ननु परिभाषास्वीकारे 'अतृणेट्' इत्यादौ इमादिर्न स्यात्, तत्र 'हलादौ पिति' इति विशेषणतया वर्णस्याऽऽश्रयणादत आह—मूले—**वर्णप्राधान्यविषयमेतदिति** । अर्थात्सिद्धमेतत् । वार्तिककारमते—'अनल्विधावि'ति निषेधे प्राप्ते विध्यर्थं प्रत्ययलक्षणसूत्रम् । यदि तु—वर्णप्राधान्येऽपि अनया तस्याप्रवृत्तिः; तर्हि प्रत्ययलक्षणसूत्रं व्यर्थमेव स्यात् । वैपरीत्यं तु न; लक्ष्यानुरोधादिति भावः ।

ननु भाष्यकारमते स्थानिवद्भावेन सिद्धे प्रत्ययलक्षणसूत्रं नियमार्थम्, तन्मते वर्णाश्रये प्रत्ययलक्षणसूत्रस्य प्राप्तिरेव नेति 'वर्णाश्रय०' इति परिभाषा व्यर्थैवेति चेत्—सत्यम् । भाष्यमते तस्या अनङ्गीकारात्, वार्तिकमते एवास्या परिभाषायाः सत्त्वात्, तन्मते अल्विधावपि विध्यर्थत्वात् प्रत्ययलक्षणसूत्रस्य । अत एव 'अतृणेट्, मित्रशीः' इत्यादीनां सिद्धिः, तत्र वर्णप्राधान्यविषयकाल्विधौ प्राप्तप्रत्ययलक्षणसूत्रस्य निषेधार्थमियं परिभाषा स्वीक्रियते वार्तिककृता; तदाह—

प्रत्ययनिरूपितविशेष्यतारूपं च, तेन 'गोहितमि'त्यादावत्रादि न, 'चित्राग्रां जाता, चित्रे'त्यादावण्योऽकारस्तदन्तान् ङीबिति ङीप् च न ।

इयमल्विधौ स्थानिवत्त्वाप्राप्तावपि प्राप्तप्रत्ययलक्षणविधेर्निषेधिकेति स्पष्टं भाष्ये ॥ २१ ॥

नन्वतः 'कुकमी'त्यत्र कमिग्रहणेन सिद्धे कंसग्रहणं व्यर्थमत आह—

## उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ॥ २२ ॥

इदमेवास्या ज्ञापकमिति कैयटादयः । कंसेस्तु न, कंसोऽनभिधानात् ।
'प्रत्ययस्य लुगि'त्यादौ भाष्ये स्पष्टा ।
'ण्वुल्तृचावि'त्यादौ भाष्ये व्युत्पन्नानीत्यपि ;

---

वस्तुतस्तु—प्रत्ययप्राधान्यमुक्तवर्णप्राधान्यभिन्नत्वम्, तेन 'गोहितमि'त्यत्र प्रत्ययस्य स्वावयवेऽविशेषणत्वेऽप्युक्तप्राधान्याभावान्न दोषः । प्रत्ययनिरूपितविशेष्यतारूपम् = स्वावयवनिष्ठप्रकारतानिरूपितविशेष्यत्वरूपम् । अस्योदाहरणं—चित्रेति ; आद्योदाहरणं—गोहितमिति । वस्तुतस्त्वाद्यलक्षणेनैव द्विविधवर्णप्राधान्योदाहरणसंग्रहे द्वितीयलक्षणं निष्फलमिति तत्त्वम् ॥ २१ ॥

कमिग्रहणेनेति । धातुग्रहणे तदादिविधिना कमादावुत्तरपदे इत्यर्थादिति भावः । अव्युत्पन्नानीति । प्रकृतिप्रत्ययविभागज्ञानपूर्वकपाणिनिशास्त्रप्रवृत्त्यभाववन्तीत्यर्थः । उणादय इत्यस्योणाद्यन्तानीत्यर्थः । इदमेवेति । कंसग्रहणमेवेत्यर्थः । अनभिधानादिति । 'कमेः सः कंस' इति भाष्योक्त्येति भावः ।

प्रत्ययस्य लुगित्यादाविति । तत्र हि प्रत्ययग्रहणाभावे 'कंसीयपरशव्ययोरि'त्यत्र प्रकृतेर्लुगनिवृत्त्यर्थमवश्यं 'छयतोरि'ति वाच्यमित्युक्त्या, कंसावयव-सस्य परशव्वयवोकारस्य लुग् स्यादित्याशङ्क्यानथा परिहृतम् । 'सर्पिषा, यजुषे'त्यादौ षत्वादिकार्यं तु कारुवाय्वादिशब्दानां व्याकरणान्तरीयरीत्या ज्ञातसाधुत्वकानामस्मिन्नपि व्याकरणे साधुत्वाभ्यनुज्ञानायाऽऽरब्धे 'उणादयो बहुलमि'ति सूत्रे बहुलग्रहणेन साधनीयम् ।

ण्वुल्तृचावित्यादाविति । तत्र हि तृचश्चकारो'ऽप्तृन्नि'त्यत्र विशेषणार्थोऽन्यथा 'मातरावि'त्यादावपि प्राप्नोती'त्युक्त्वा, नप्त्रादिग्रहणस्य नियमार्थत्वेन

---

मूले—अल्विधौ स्थानिवत्त्वाप्राप्तावपीत्यादिः । भाष्यमते 'अतृणेडि'त्यादीनाम्, वार्तिकमते 'सुहृत्प्राकारः' इत्यादीनाञ्च सिद्धिप्रकारोऽन्यतोऽवसेय इत्यलम् ॥ २१ ॥

इदं शाकटायनरीत्या। पाणिनेस्त्वव्युत्पत्तिपक्ष एवेति शब्देन्दुशेखरे निरूपितम्। 'आयनेयी'ति सूत्रे भाष्ये स्फुटमेतत् ॥ २२ ॥

ननु 'देवदत्तश्चिकीर्षती'त्यादौ देवादेः सन्नन्तत्वप्रयुक्तधातुत्वाद्यापत्तिरत आह—

## प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम् ॥२३॥

'यस्मात्प्रत्ययविधिरि'ति सूत्रे यस्मात्प्रत्ययविधिस्तदादि प्रत्यय इति योगो विभज्यते ; गृह्यमाण उपतिष्ठत इति शेषः, तेन तदाद्यन्तांशः सिद्धः।

---

समाहितम्। यदि 'त्वव्युत्पन्नानी'त्येव स्यात्तर्हि नप्त्रादिशब्दानामव्युत्पन्नत्वेन 'तृ' इत्युच्यमानेऽपि दीर्घाप्राप्त्या नियमार्थकत्वकथनमनुपपन्नं स्यादिति भावः।

वस्तुतो नायं भाष्यकारीयसिद्धान्त इत्याह—इदमिति। शब्देन्दुशेखरे 'उणादयो बहुलमि'ति सूत्रे इत्यर्थः। न च कारुवाय्वादिशब्दानामव्युत्पन्नत्वे 'उणादय' इत्यादि सूत्रप्रणयनं पाणिनेरनुपपन्नमिति वाच्यम्; व्याकरणान्तरे उणाद्यन्तत्वेन व्युत्पादितानां कार्वादिशब्दानां बहुलं वर्तमानादौ साधुत्वान्वाख्यानाय सूत्राऽऽवश्यकत्वात्, पाणिनेः सर्वज्ञत्वेन कार्वादिशब्दानामुणाद्यन्तत्वेन ज्ञानेऽपि उणादिप्रत्ययज्ञानपूर्वकस्वशास्त्रप्रवृत्तेरस्वीकारेणादोषाच्च। अत एव शङ्खादिशब्देभ्यो नाद्यादेशवारणाय पाणिनिना प्रयत्नविशेषो नाकारि। किं 'चायनेयी'ति सूत्रे 'शङ्ख' इत्यादावीनाद्यादेशमाशङ्क्य 'प्रातिपदिकविज्ञानादित्यस्य - उणाद्यन्तकार्वादिप्रातिपदिकनिष्ठप्रकृतिप्रत्ययविभागाज्ञानपूर्वकस्वशास्त्रप्रणयनप्रवृत्तिस्वीकारादित्यर्थं इत्यन्यत्र विस्तरः ॥ २२ ॥

देवदत्तश्चिकीर्षतीति। अस्य धातुत्वे 'सुब्लुगापत्तिस्तत एव लुङाद्युत्पत्त्या विशिष्टस्याडाद्यापत्तिश्चेति भावः। धातुत्वाद्यापत्तिरित्यत्रादिना 'सन्यङोरि'ति

---

सुब्लुगापत्तिरिति। यत्तु—प्रातिपदिकसाहचर्येण वृत्तिप्रयोजकस्य सुपो ग्रहणात् न प्रकृते दोषः; साहचर्यस्वरूपं हि यदि प्रातिपदिकावयवस्य लुग् भवति तर्हि वृत्तिप्रयोजकस्यैव, एवं धातावपि। न च 'ओदनमुपसेकं भोक्तुमिच्छति, ओदनमुपसेकं बुभुक्षति' इत्यत्र 'द्वितीयायाञ्च' इति णमुलि 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति समासविकल्पे सुपो वृत्तिप्रयोजकत्वात् लुगापत्तिरिति वाच्यम्; यद्धात्ववयवसुपो लुक् चिकीर्षितः तत्पर्याप्तवृत्तेःप्रयोजकस्य सुपो ग्रहणेनादोषात्, प्रकृते च विशिष्टधात्ववयवत्वप्रयुक्तसुपो लुक् चिकीर्षितः, तत्पर्याप्तवृत्तेरभावात न सुपो लुक्, सुपो हि ओदनमुपसेकमित्येतत्पर्याप्तवृत्तिप्रयोजकत्वादिति। तन्न; इदानीं देवदत्तो गार्ग्यः इति समुदायस्यापि तद्धितान्तत्वेन प्रातिपदिकत्वात् तदवयवस्य सुपो वृत्त्यप्रयोजकस्यापि सम्भवेन साहचर्यस्यासम्भवात्।

**तदन्तांशस्तु 'येन विधिरि'त्यनेन सिद्धः। स च शब्दरूपं विशेष्यमादाय विशेष्यान्तरासत्त्वे ।**

---

द्वित्वापत्तिर्बोध्या। शब्दरूपमिति। तदादीत्येवंरूपं शब्दरूपमित्यर्थः। विशेष्यान्तरासत्त्व इति । तदादीतरविशेष्यान्तरासत्त्व इत्यर्थः । तदितरविशेष्यसत्त्वे तु धर्मिणस्तेनैव लाभात्प्राप्ताप्राप्तविवेकन्यायेन तदादित्वमात्रे परिभाषाविधेयत्वं पर्यवस्यति ।

अन्ये तु—तत्र तदादीतरविशेष्यमादायैव श्रुतत्वात्प्रत्ययपदं तद्विशेषणत्वेन तदन्तबोधकं, विशेष्यान्तरं तु तदादेर्विशेषणमिति वदन्ति। यत्र तु विशेष्यान्तराभावस्तत्र 'तदादिरित्यस्योपस्थितिस्तस्य प्रत्ययनिरूपितविशेष्यत्वं चे'त्युभयं परिभाषा विधत्ते। यत्र च पञ्चम्यन्तात्परत्वं सप्तम्यन्तत्वं वा प्रत्ययस्य, तत्र 'प्रत्ययग्रहणे चापञ्चम्या' इति तदन्तविधिनिषेधेनोपस्थिततदादेरित्यस्य प्रत्ययविशेषणत्वं, समभिव्याहृतपदसमानविभक्तिकत्वं च । अत एव 'वैङ्ह्रस्वादि'त्यादौ पञ्चम्यन्तस्यैव तदादेराक्षेपेण समानविभक्तिकत्वादेङ्ह्रस्वादित्यनेन तदन्तलाभः। एवं 'सुपि-चे'त्यादावपि बोध्यम् ।

---

द्वित्वापत्तिरिति। इदं चिन्त्यम्; तथाहि—इदं वाक्यसंस्कारपक्षे आहोस्वित् पदसंस्कारपक्षे ? नाद्यः—'देवदत्तस्+कृ स' इत्यवस्थायां विशिष्टस्य 'कृस' इत्यस्यापि च धातुत्वम्, तत्रोभयोर्द्वित्वप्राप्तौ अन्तरङ्गत्वात् पूर्वं 'कृस' इत्येतस्यानेकाचः 'कृ' इत्यस्यैव स्यात्, उपसञ्जनिष्यमाणन्यायाच्च। तच्छरीरं हि—यत्र स्वप्रवृत्त्यभावसम्भावनाप्रयोज्यापवादशास्त्रप्रवृत्तिसम्भावना तत्र पूर्वं स्वं न प्रवर्तते इति रूपम्; अस्ति च प्रकृते दे इत्यस्य द्वित्वं न स्यात् तर्हि कृ इत्यस्य द्वित्वे कृते 'अनभ्यासस्य' इति निषेधप्रवृत्तिः स्यात् इति पूर्वं 'दे' इत्यस्य द्वित्वं न भवति। न च 'यदि कृ इत्यस्य द्वित्वं न स्यादि'त्यपि सम्भावना सम्भवत्येवेति वाच्यम्; तथात्वे 'दे' इत्यस्य द्वित्वेऽपि 'कृ स' इत्येतस्यानभ्यासत्वात् द्वित्वे सति निषेधशास्त्राप्रवृत्तेः। नान्त्यः—तत्र 'अनभ्यासस्य' इति निषेधात्, 'तद्धि समानाधिकरणं धातोर्विशेषणम्' इति कौमुदीकारोक्तेः। न चास्या अभावे 'देवदत्तश्चिकीर्षति' इत्यत्रानभ्यासग्रहणप्रत्याख्यानपक्षे द्वित्वं प्राप्नोति, तत्सत्त्वे तु न, इति आरम्भप्रत्याख्यानयोः फलभेदात् तादृशलक्ष्याणामनभिधानं प्राप्नोति, परिभाषासत्त्वे तु नेति सा स्वीकर्तव्येति वाच्यम्, अनभ्यासस्याऽऽकरे प्रत्याख्यातत्वेऽपि एतदर्थमस्माभिस्तत्स्वीकारात्, तथासति प्रकृते दोषाभावात् । एवञ्च पदसंस्कारवाक्यसंस्कारपक्षयोरुभयोरपि नात्र दूषणम्, व्यवस्थितपक्षयोः अन्यतरेणैवेष्टसिद्धौ पक्षान्तरेण दोषदानस्यायुक्तत्वाच्च ।

एतेन—वाक्यसंस्कारे 'देवदत्तस्+कृ स' इत्यवस्थायां विशिष्टोल्लङि विशिष्टस्याङ्गत्वे विशिष्टात्पूर्वमडागमापत्तिरित्यपास्तम् अन्तरङ्गत्वात् 'कृस' इत्यस्मादेव लङुत्पत्तेः। तदुत्तरन्तु 'विशिष्टात्तु उक्तार्थानामि'ति न्यायेन न लङुत्पत्तिः; 'वृक्षप्रचलन' न्यायस्तु संज्ञाविषये न प्रवर्तते, 'धनं, वनम्' इत्यादौ प्रतिवर्णं प्रातिपदिकसंज्ञापादनपरभाष्यप्रामाण्यात् । तस्मात् 'धातुत्वाद्यापत्तिरि'त्यत्र आदिपदात् 'ञ्नित्यादिरिति स्वरापत्तिर्बोध्या। न च सोऽपि उभयविधसमुदायस्य निदन्तत्वे पूर्वोक्तरीत्या अन्तरङ्गत्वात् 'चि' इत्यस्यैव स्यादिति न दोष इति वाच्यम्; चि इत्यस्य

यत्तु—प्रत्ययेन स्वप्रकृत्यवयकसमुदायाक्षेपात्तद्विशेषरत्वेन तदन्तविधिरिति । तन्न; 'इयानि'त्यादौ तस्य तादृशसमुदायेन व्यभिचारेणाक्षेपासम्भवात् ।

यत्र प्रत्ययो निमित्तत्वेनाऽऽश्रीयते, तत्र तदादीत्यन्तांशमात्रोपस्थितिरिति 'अङ्गस्ये'ति सूत्रे भाष्यकैयटयोः । एवं यत्रापि पञ्चम्यन्तात्परः प्रत्यय आश्रीयते, तत्रापि तदादीत्यन्तांशोपस्थितिः, परन्तु तत्र पञ्चम्यन्तता । अत ए'वैङ्ह्रस्वादि'ति सूत्रे एङन्तादित्यर्थलाभः ।

अस्याः परिभाषायाः प्रयोजनान्तरं 'येन विधिरि'त्यत्र भाष्य उक्तं 'परमगार्ग्यायण' इति । परमगार्ग्यस्यापत्यमिति विग्रहेऽपि गार्ग्यशब्दादेव प्रत्ययो, न विशिष्टात् । निष्कृष्य तावन्मात्रेणैकार्थीभावाभावेऽपि वृत्तिर्भवत्येव । अत्र चेदं भाष्यमेव मानमित्यन्यत्र विस्तरः ।

प्रत्ययमात्रग्रहणे एषा, न तु प्रत्ययाप्रत्ययग्रहण इति ।

---

यत्त्विति । अयम्भावः—'प्रत्ययः स्वप्रकृत्याद्यवयवकसमुदायविशिष्टः, अवयवत्वानवच्छिन्नपरत्वावच्छिन्नविधेयताश्रयप्रत्ययत्वादि'त्यनुमानेनाऽऽक्षिप्तस्वप्रकृत्याद्यवयवसमुदायं विशेष्यमादाय तदन्तविधौ न परिभाषोपयोग इति ।

तत्र पञ्चम्यन्ततेति । यत्र पञ्चम्यन्तात्परः प्रत्ययस्तत्र तदादेः पञ्चम्यन्ततेत्यर्थः ।

केचित्तु—सप्तम्यन्तप्रत्ययग्रहणेऽपि तदादेः पञ्चम्यन्तस्यैवोपस्थितिः; अन्यथा 'कुमारी ब्राह्मणिरूपे'त्यत्र कुमारीत्यस्य ह्रस्वाप्राप्त्या वक्ष्यमाणावतरणासङ्गतिः स्यादिति वदन्ति ।

एङन्तादित्यर्थलाभ इति । अन्यथाऽङ्गाक्षेपासम्भवस्यान्यत्र स्पष्टमुक्ततया तदन्तविधेरसम्भव एव स्यादिति भावः । न चैवमपि 'कतरदि'त्यत्र रान्तस्यापि तदादित्वाद्दकारलोपापत्तिः । न च 'स चासावादिश्चे'ति कर्मधारयाऽऽश्रयणेन निर्वाह इति वाच्यम्; अन्यत्र तदादेर्बहुव्रीहेरावश्यकतया तेन वारणासम्भवादिति वाच्यम्; एङ्साहचर्याद् ह्रस्वान्ततदादेः सम्बुद्ध्यवयवाघटितस्य ग्रहणेनादोषात् ।

निष्कृष्येत्यस्यैवार्थमाह—तावन्मात्रेति । तत्पर्याप्तेत्यर्थः ।

प्रत्ययमात्रग्रहण इति । ननु 'प्रतीषिषती'त्यादा'वञ्चने'ति दीर्घवारणायोत्तरसशब्दस्यागन्तुकत्वेनानर्थकतया प्रत्ययत्वाभावस्य शेखरकृतोक्तत्वे'न 'सनाद्यन्ते'ति सूत्रस्थसनशब्दस्य प्रत्ययाप्रत्ययोभयबोधकत्वात्कथं सन्पदे परिभाषाप्रवृत्तिरिति

---

स्वरविध्यनन्तरं 'दे' इत्यस्यापि उदात्तत्वे सति शिष्टस्वरबलीयस्त्वमित्येकारस्यैव उदात्तस्य श्रवणापत्तेरित्यलम् ।

समुदायविशिष्ट इति । घटकत्वसम्बन्धेनेत्यर्थः । सुगममन्यत् ।

**'उगितश्चे'ति सूत्रे भाष्ये**

**इयमङ्गसंज्ञासूत्रे भाष्ये स्पष्टा ॥ २३ ॥**

**'येन विधिरि'ति सूत्रे भाष्य एतद्घटकतदन्तांशस्यापवादः पठ्यते—**

---

चेन्न । प्रत्ययमात्रग्रहण इत्यनेन प्रत्ययबोधकत्वविशिष्टप्रातिपदिकाबोधक एत्र प्रवृत्तिबोधनेन प्रकृतसन्पदस्य प्रातिपदिकाबोधकत्वेन परिभाषाप्रवृत्तेः सुवचत्वात् ।

केचित्तु—प्रत्ययमात्रग्रहण इत्यत्र प्रत्ययपदं प्रत्ययनिष्ठोद्देश्यतानिरूपितविधेयताश्रय-प्रत्ययैतदन्यतरपरं, तेन 'प्रतीषिषती'त्यत्रोत्तरखण्डरूपस्य सनोऽप्रत्ययत्वेऽपि प्रत्ययनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वेन तद्बोधकस्य सन्पदस्योक्तप्रत्ययमात्रबोधकत्वेन दोषाभाव इति वदन्ति ।

वस्तुतस्तु—प्रतिपदोक्तत्वात्पूर्व दीर्घे ह्रस्वप्रवृत्तेः स्वीकारेण हन्साहचर्याद्भ्यासानवयवस्यैवाचो ग्रहणेन च 'प्रतीषिषती'त्यत्र दोषवारणसम्भवेन शेखरोक्ता भाष्यविरुद्धकल्पना व्यर्था । किं चात्र 'सन्यत' इतीत्वानापत्तिः, प्रतीषिषे' त्यत्र अप्रत्ययादित्यस्याप्रवृत्त्यापत्तिश्च ।

उगितश्चेतीति । तत्र हि 'निर्यवमती'त्यादावनया ङीब् न स्यादित्याशङ्क्य, उगित्पदस्य प्रत्ययमात्रबोधकत्वाभावेन समाहितम् ॥ २३ ॥

एतद्घटकेति । एतत्परिभाषोपस्थाप्यतदादिशब्दस्वरूपप्रयोज्येत्यर्थः । अत एव 'किमेत्तिङव्यये'त्यादौ प्रातिपदिकविशेष्यकतदन्तविधेर्न निषेधः ; अन्यथा 'घान्तादामुप्रत्यय' इत्यर्थालाभेन 'पठतितरामि'त्यादौ सुबाद्यनापत्तिः ।

---

भाष्यविरुद्धकल्पनेति । 'अभ्यासो ह्यनर्थक' इति 'अस्तेर्भूः' इति सूत्रस्थभाष्यविरोधात्, अभ्यासस्यार्थप्रत्यायकत्वरूपप्रत्ययत्वस्य असम्भवादित्यर्थः ॥ २३ ॥

अत एव किमेत्तिङेति । इदमुपलक्षणम्—तिङ्ङतिङ इत्यस्य, तेन तत्र पदविशेष्यकतदन्तविधेर्न निषेधः । 'किमेत्तिङ' इत्यादौ तु न दोषः, अस्तु घप्रत्ययादेव प्रत्ययः, 'तिङश्चे' त्यादौ प्रातिपदिकाधिकारबाधः क्लृप्त एव । न च 'पठतितराम्' इत्यादौ विशिष्टस्य तद्धितान्ततदादित्वाभावेन प्रातिपदिकसंज्ञाभावात् सुबनापत्त्या विशिष्टस्य पदत्वाभावेन द्वित्वानापत्तिः, तरामित्येतन्मात्रस्य च प्रातिपदिकसंज्ञाया सुबुत्पत्तौ तन्मात्रस्य द्वित्वापत्तिश्चेति वाच्यम्; तरामित्येतन्मात्रस्य चार्थवत्त्वाभावेन प्रातिपदिकसंज्ञाया अप्राप्तेः । विशिष्टस्य च अर्थवदधातुः' इत्यनेन प्रातिपदिकसंज्ञायां दोषाभावात् । समासग्रहणकृतनियमस्तु न ; उत्तरखण्डस्य स्वातन्त्र्येण प्रयोगानर्हत्वात् । न च विशिष्टस्य अव्ययसंज्ञाभावे सुलोपानापत्तिरिति वाच्यम् ; तद्विषये तदन्तविधिद्वयस्वीकारेण तद्धितान्तान्तेत्यर्थकरणेनादोषात् । सुबाद्यनापत्तिरिति । चिन्त्यमिदमिति अनुपदमेवोक्तम् ।

## प्रत्ययग्रहणे चापञ्चम्याः ॥ २४ ॥

यत्र पञ्चम्यन्तात्परः प्रत्ययः कार्यान्तरविधानाय परिगृह्यते, तत्र तदन्तविधिर्नेत्यर्थः; यथा—'रदाभ्यां निष्ठातो न' इत्यत्र, तेन दृषत्तीर्णे'त्यादौ धातुतका-

---

प्रत्ययग्रहणे चापञ्चम्याः । अव्यवहितोत्तरत्वसम्बन्धावच्छिन्नपञ्चम्यन्तपदप्रयोज्यप्रकारतानिरूपितविशेष्यताप्रयोजकं यत्प्रत्ययमात्रवृत्तिविषयताप्रयोजक पदं तत्तदादिशब्दस्वरूपं विशेष्यमादाय स्वनिष्ठचरमावयवतानिरूपकसमुदायवृत्तिविषयताप्रयोजकं न भवतीति तदर्थः, तेन 'ह्रस्वनद्याप' इत्यत्र आमादिपदे न तदन्तविधिः ।

यत्रेति । शास्त्र इत्यर्थः । पञ्चम्यन्तात्पर इति । अव्यवहितपरत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यताप्रयोजक इत्यर्थः । प्रत्ययः=प्रत्ययबोधकं पदमित्यर्थः । तत्र=शास्त्रे, तेन पदेनेति शेषः । एतेन प्रत्ययसंज्ञकस्य पञ्चम्यन्तात्परत्वाभावेन प्रत्ययबोधकस्याम इत्यादेरनुवर्तमानस्य पञ्चम्यन्तात्परत्वाभावेन चेदमयुक्तमित्यपास्तम् । तेन पदेन तदन्तविधिर्नेत्युक्त्या च ह्रस्वपदे तदादिविशेष्यकतदन्तविधिनिषेधो न ।

कार्यान्तरविधानायेति । यत्तु—अत्र मिश्रैः प्रत्ययेतरकार्यविधानायेत्यर्थः, तेन 'किमेत्तिङव्यये'त्यत्र घान्तादित्यर्थलाभ इत्युक्तम् । तन्न; विशेष्यान्तरासत्त्व एव तदादिशब्दस्वरूपविशेष्यकतदन्तविधिरित्यर्थस्य पूर्वमुक्तत्वेनात्र प्रातिपदिकविशेष्यकतदन्तविधेः सत्त्वेन परिभाषाविषयस्याभावात् मिश्रोक्तरीत्याऽत्र प्रकृतपरिभाषाया प्रवृत्त्यभावे'भवति पाचकतर' इत्यत्र भवतीति तिङन्तात्परपाचकतरेति घान्ततदादेरामुप्रवृत्त्यापत्तेश्च । मम तु प्रकृतपरिभाषाया तदादेरित्यस्योपस्थित्या तिङन्ततदादेघनिरूपिततदाद्यभिन्नस्यैव ग्रहणेनादोषः । अशब्दादाचारक्विबन्तात्कर्मव्यतिहारे आत्मनेपदे इटि निष्पन्नस्य एशब्दस्य 'अतर' इत्यनेन योगे पूर्वरूपे 'एतरेत्य'त आमुप्रत्ययस्तु न; अशब्दादाचारक्विपोऽनभिधानात् । कर्मव्यतिहारस्याप्रतीतेरात्मनेपदासम्भवादेतद्रूपासिद्धेः सर्वसम्मतत्वात् । प्रत्ययविधायके 'गर्गादिभ्यो यञि'त्यादौ यञ्पदस्य प्रत्ययबोधकत्वेऽपि प्रत्ययसंज्ञोद्देश्याप्रत्यययञ्बोधकत्वेन प्रत्ययमात्रबोधकत्वाभावादस्या अप्राप्तिरिति स्पष्टं बोधयितुमियमुक्तिरिति तु तत्त्वम् ।

दृषत्तीर्ण इति । न च'आनन्त्यविकार'परिभाषया निर्दिश्यमान'परिभाषया वा नत्ववारणसम्भवे कथमेतत्परिभाषाफलमिति वाच्यम्; 'तीर्णवन्तात्रि'

---

परिभाषाविषयस्याभावादिति । प्रत्ययप्रकारकतदादिविशेष्यकतदन्तविधेरेव अनया परिभाषाया निषेधादिति भावः । मिश्रोक्तरीत्येति । तेन हि प्रत्ययरूपकार्यविधानात् प्रकृतपरिभाषाया अप्राप्तिरिति स्वीकृतत्वात् । तथा च तदादिविशेष्यकतदन्तविधेस्तत्र सत्त्वादिति भावः ।

रस्य न नत्वम् । तदन्तेत्यंशानुपस्थितावपि तदादीत्यंशस्योपस्थितौ रेफदान्तात्परस्य निष्ठातस्येत्यर्थ इति न दोषः, तदंशानुपस्थितौ मानाभावात्; तदन्तांशोपस्थितौ तूभयोरेकविषयत्वमेव स्यादिति 'दृषत्तीर्ण' इत्यादौ दोषः स्यादेव ।

'स्यतासी लृलुटोरि'त्यादौ लृलुटोः परयोरित्यर्थे नियमेनावधिसाकाङ्क्षत्वेनो-

---

त्यादौ ऋतशब्दादाचारक्विबन्तात्कर्तरि क्विपि निष्पन्नऋतशब्दस्य देवशब्देन समासे गुणे 'देवर्त' इत्यत्र चान्त्यतकारे 'रदाभ्यामि'त्यस्य प्राप्तेः सत्त्वेनानन्त्यविकारत्वाभावा 'दनन्त्यविकार' इति परिभाषाया अप्रवृत्तेः, प्रकृतसूत्रस्थभाष्यप्रामाण्यादेतद्विषये 'निर्दिश्यमान'परिभाषाया अप्रवृत्तेश्च । तत्र हि भाष्ये 'चरितं मुदितमि'त्यत्र नत्वमाशङ्क्य, रदाभ्यामि'त्यस्य तकारविशेषणत्वेन समाहितम् । एतत्सूत्रविषये निर्दिश्यमानपरिभाषाप्रवृत्तौ तु तयैव तद्दोषवारणसम्भवात्तकारविशेषणत्वप्रयासो व्यर्थः स्यात् ।

केचित्त—'चरितं मुदितमि'त्यादावागमविशिष्टस्य यदागमन्यायेन पुनर्निष्ठासंज्ञायामितशब्दस्य निर्दिश्यमानत्वेन तत्र नत्वाप्रवृत्त्यर्थं 'रदाभ्यामि'त्यस्य तकारविशेषणत्वाऽऽवश्यकतया भाष्यस्यात्र निर्दिश्यमानपरिभाषाऽप्रवृत्तिज्ञापकत्वासम्भवान्नैतदेतत्परिभाषायाः, फलं, न वा 'ह्रस्वनद्याप' इत्यपीति वदन्ति । तन्न; अनुदात्ताकारादाचारक्विबन्तात् क्तप्रत्ययेऽतोलोपे दृषच्छब्देन योगे 'दृषत्तमि'त्यत्र नत्ववारणाय परिभाषाऽऽवश्यकत्वात् । एतत्परिभाषायाः सत्त्वे तु तदन्तविध्यभावबोधनेऽप्युपस्थितस्य तदादेः पञ्चम्यन्ततया रेफदान्ततदादेरित्यर्थेन दृषदित्यस्य निष्ठानिरूपिततदादित्वाभावान्न दोषः ।

परिभाषायाः फलान्तरमाह—लृलुटोरिति । 'तस्मिन्नि'ति सूत्रस्य यथाऽव्यवहितपूर्वस्य भवेत्तथा करणीयमित्यर्थाभिप्रायेणेदम् । नन्वेवं ङ्यापोरपि प्रत्यय-

---

ज्ञापकत्वासम्भवादिति । नन्वेवं 'निर्दिश्यमान'परिभाषोपस्थितौ तकारग्रहणं व्यर्थम्, आदेः परस्योपस्थितौ तकारस्यैव सर्वत्र नत्वसिद्धेरिति चेन्न । 'ऋनवनीति ऋत्, दृषत्तीर्णस्य ऋत्, दृषत्तीर्णद्' इत्यत्र दकारस्य नत्ववारणाय तच्चारितार्थ्यात् । न वा ह्रस्वनद्याप इति । नन्वत्र स्थानषष्ठ्यभावादेव निर्दिश्यमानपरिभाषाया अप्राप्तिरिति चेन्न । अवयवषष्ठीविषयेऽपि तत्प्रवृत्त्यङ्गीकारादित्याशयात् ।

वस्तुतस्तु—'इयञ्च अवयवषष्ठीविषयेऽपि' इति ग्रन्थस्य यत्र साक्षात् स्वावयवद्वारा वा स्थानपदार्थेन सम्बन्धस्तत्रैव निर्दिश्यमानपरिभाषाप्रवृत्तिरित्येव तात्पर्यम् । तथा सति 'ह्रस्वनद्याप' इत्यत्र निर्दिश्यमानपरिभाषाया अप्राप्त्या तया वारणासम्भवेन 'न वा ह्रस्वनद्याप' इत्युक्तं चिन्त्यमेव ।

अनुदात्ताकारादिति । अशब्दानुशब्दयोर्बहुव्रीहौ 'आनु' इति जाते 'डाबुभाभ्यामन्यतरस्याम्' इति डापि टिलोपे आशब्दात् 'कर्तुः क्यङ् सलोपश्च' इति क्यङि, क्विपि अल्लोपयलोपयोः

पस्थितधातोरित्यस्यावधित्वेनान्वयान्न तदन्तविधिः । 'ङ्याब्भ्य' इत्यादौ तु न दोषः, तत्र कस्मादिति नियतावध्याकाङ्क्षाया अभावेन पञ्चम्यन्तस्य प्रत्ययविशेषणत्वाभावात् ।

अङ्गसंज्ञासूत्रे तु तदादेः प्रत्यये पर इत्यर्थे पञ्चम्यन्तस्य विशेषणत्वं स्पष्टमेव । अत एव 'उत्तमैकाभ्यामि'त्यादिनिर्देशाः सङ्गच्छन्ते ।। २४ ।।

---

त्वात्ताभ्यां प्रातिपदिकादित्यस्याऽऽक्षेपे तस्य ङ्याब्विशेषणत्वेन प्रकृतपरिभाषया तदन्तविध्यभावे ङ्यन्तादित्याद्यर्थासंभवोऽत आह—ङ्याब्भ्य इति । नियतावध्याकाङ्क्षायाः = उत्थिताकाङ्क्षायाः । पञ्चम्यन्तस्य = आक्षिप्तप्रातिपदिकादित्यस्य । प्रत्ययविशेषणत्वाभावात् = प्रत्ययबोधकङ्याब्निरूपितविशेषणत्वाभावात्, तेन अस्य स्त्री, ई' इत्यादौ सुलोपसिद्धिः । न च 'हल्ङ्याबि'त्यादौ सु ति-सीत्येतदुपस्थिततदादेर्विशेष्यान्तरस्य सत्त्वेन ङ्याप्पदेन तदादित्वधर्ममात्रोपस्थितौ 'ङ्याप्-तदाद्यभिन्नो यः सुतिसितदादिस्ततः परस्य लोप' इत्यर्थे 'बहुश्रेयसी'त्यत्र सुलोपानापत्तिरिति वाच्यम्; विशेष्यान्तरासत्त्व इत्यस्य 'तदादीतरविशेष्यान्तरासत्त्व' इत्यर्थात् ङ्यापपदेनापि धर्मिण एव तदादेरित्यस्योपस्थित्या तदन्तविधिद्वयेन ङ्याबन्ततदाद्यन्तसुतिसितदादेरित्यर्थेनादोषात् ।

वस्तुतस्तु—विनिगमनाविरहेण द्वयोरपि धर्मिणोरेव तदाद्योरुपस्थित्या स्वातन्त्र्येण सुतिसिशब्देऽन्वये परस्परं विशेष्यविशेषणभावेन तदन्तविधिद्वयेन वा दोषाभाव इति दिक् । न च 'अन्ये तु' मतरीत्या 'बहुश्रेयसी'त्यत्र सुलोपानापत्तिः, ङ्याबन्तं यत्सुतिसितदादि, तदन्ताद् ङ्यापदादेरित्यर्थादिति वाच्यम्; तदादीतरविशेष्यसत्त्वे तत्प्रवृत्तेः, सत्त्वपदस्वारस्येनानुवर्तमानस्य श्रूयमाणस्य च विशेष्यस्य सत्त्व एव तत्कल्पनाच्च ।

सप्तम्यन्ते प्रत्ययग्रहणे एतस्याः प्रवृत्तौ प्रमाणमाह—उत्तमैकाभ्यामिति । पूर्वोक्तयुक्तिस्तु न युक्ता; 'तस्मिन्नि'तीत्यनेन पूर्वस्येत्यस्यैवोपस्थित्या 'कस्मात्परे' इत्याकाङ्क्षाया अभावेन पञ्चम्यन्तस्य प्रत्ययविशेषणत्वासम्भवेनोक्तकल्पनाया असम्भवात् । यद्यपि भाष्ये 'प्रत्ययग्रहणं चापञ्चम्या' इति, वार्तिके च 'प्रत्ययग्रहणमि'ति प्रथमान्तपाठो दृश्यते; तथापि फले विशेषाभावात्'अपञ्चम्या' इत्यंशस्यैवापूर्वत्वमिति सूचयितुं च ग्रन्थकृता सप्तम्यन्तपाठ आदृतः । यद्वा—मूले प्रथमान्तपाठ एव; टीकाकाराद्युक्तं सप्तम्यन्तत्वेन व्याख्यानं फलितार्थकथनपरं बोध्यम् । इयं च वाचनिकीति केचित् ।

परे तु—'येन विधि'रित्यत्र तस्मादित्युत्तरस्ये'त्यतः 'तस्मादि'ति, 'अनुदित्सू'त्रादप्रत्यय इति चानुवर्तते, प्रत्ययग्रहणपरिभाषया तदादीत्युपतिष्ठते, तेनेयं सिद्धेति प्राहुः ।। २४ ।।

---

अवशिष्टस्याशब्दस्य नपुंसकह्रस्वत्वे अनुदात्ताकारशब्दो निष्पन्नः; तस्य अनुदात्तौ सुप्पितौ' इत्यनेनानुदात्तत्वात् ।। २४ ।।

नन्वेवं 'कुमारी ब्राह्मणिरूपे'त्यादौ 'घरूपे'ति ह्रस्वापत्तिरत आह—

## उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम् ॥ २५ ॥

'हृदयस्य हृल्लेखयदण्लासेष्वि'त्यत्र लेखग्रहणात् । तत्र लेखेति न घञन्त-

---

कुमारी ब्राह्मणिरूपेति । ननु कोऽयं समासः, बहुव्रीहिः, कर्मधारयः, षष्ठीतत्पुरुषो वा ? नाद्यौ—कुमारीशब्दस्य भाषितपुंस्कत्वेन पुंवत्त्वापत्तेः । नान्त्यः—घसंज्ञायां नदीतरे प्रतिषेधो वक्तव्यो 'नद्यास्तरा नदीतरे' त्यत्र घसंज्ञायां 'घरूपे'ति ह्रस्वमाशङ्क्य, नैतदस्ति प्रयोजनं समानाधिकरण इति वर्तत' इति भाष्यस्वारस्येन 'घरूपे' ति ह्रस्वस्य समानाधिकरणे उत्तरपद एव प्रवृत्त्याऽत्र तदप्राप्तेरिति चेन्न । कुमारी ब्राह्मणिरूपे'ति विग्रहे पुंवद्भावं बाधित्वा परत्वाद् ह्रस्वापत्तेरित्याशयात्, वयोवाचकानामपि पाक्षिकजातिवाचकत्वेन 'जातेश्चे'ति निषेधात् पुंवद्भावाप्राप्त्या बहुव्रीहिसमासस्यापि वक्तुं शक्यत्वाच्च ।

उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम् । उत्तरपदं विशेष्यमादाय प्राप्ततदन्तविधेरेवेयं निषेधिका । लेखग्रहणादिति । ननु लेखग्रहणसत्त्वे तदन्तविधौ लेखान्ते

---

कुमारी ब्राह्मणिरूपेतीति । न च 'घरूपकल्पचेलड्ब्रुवगोत्रमहतेषु ङ्योऽनेकाचः' इति सूत्रे प्रथमोपात्तं घप्रत्ययमपहाय रूपप्रत्ययेऽवतरणदानमयुक्तम्, प्रथमोपात्तस्य त्यागे मानाभावादिति वाच्यम्; घांशे दूषणस्य अवतार्यमाणापनोद्यत्वाभावात्, श्रावणप्रत्यक्षविषयतावच्छेदकधर्मेण साक्षादवच्छिन्नमुख्यविशेष्यताप्रयोजक एव प्रकृतपरिभाषाप्रवृत्तेर्वक्ष्यमाणत्वात् ।

यत्तु—शेखरे एतन्निषेधसामर्थ्यात् प्रदेशेष्वपि न तदन्तविधिरित्युक्तम् । तन्न; उत्तरग्रन्थपर्यालोचनया एतत्पाठस्य प्रक्षिप्तत्वात् । अत एव 'न च ज्ञापितेऽपि व्यर्थम्, पदप्रदेशे 'प्रत्ययग्रहणे यस्मादि'ति परिभाषया तदन्तग्रहणेनैव सिद्धेः' इत्यादिशङ्कासमाधानग्रन्थः सङ्गच्छते । न चैवं घांशे तदन्तविधिर्दुर्वार एवेति वाच्यम्; 'उत्तरपदाधिकारे प्रत्ययस्य विशेष्यत्वमेवे'ति तात्पर्यपर्यवसानेन घादेरपि विशेष्यत्वस्य वक्तव्यत्वात्; अन्यथा साहित्यानुपपत्त्या द्वन्द्वानुपपत्तेः ।

ननु—'घरूपे'ति सूत्रस्य 'घादिषु परेषु' इत्यर्थस्य सत्त्वेन परशब्दस्य नित्यसाकाङ्क्षतया 'कस्मात् पर' इत्याकाङ्क्षायां 'ङ्यन्तात्परो यो घादिस्तस्मिन् परे ङ्यन्तस्य ह्रस्वो भवती'त्यर्थे इति 'स्यतासी लृलुटोः' इतिवदत्रापि पूर्वपरिभाषयैव सिद्धेऽलमनया परिभाषयेति चेन्न । पूर्वपरिभाषया तदादिविशेष्यकतदन्तविधेरेव निषेधेन अस्या आवश्यकत्वात् । पूर्वपरिभाषया सामान्यतस्तदन्तविधिर्निषिद्ध्यत इति तु वक्तुमशक्यम्; 'रात्रेः कृतिविभाषा' इत्यादौ उत्तरपदविशेष्यकतदन्तविधेरपि तया निषेधप्रसक्तेः; अनया तु निषेधो न भवतीत्यनुपदमेवोक्तमिति दिक् ।

पाक्षिकजातिवाचकत्वेनेति । युवजानिः, युवतितरा' इत्युभयविधभाष्योदाहरणात् आकृतिग्रहणा जातिः, यावद्द्रव्यभावित्वमिति लक्षणद्वयाद्वयोवाचकानां जातिकार्यस्य वैकल्पिकत्वस्वीकारात् ।

मनभिधानात् । इयं च 'हृदयस्ये'ति सूत्रे एव भाष्ये स्पष्टा ॥ २५ ॥

---

उत्तरपदे एतत्प्रवृत्त्या परमलेखशब्दे परेऽपि हृदादेशप्राप्त्या तदभावे उत्तरपदरूपविशेष्यान्तरसत्त्वात् प्रत्ययग्रहणपरिभाषया धर्ममात्रोपस्थितौ तदादित्वविशिष्टमण्णन्तमुत्तरपदमित्यर्थे परमलेखशब्दे परे हृदादेशाप्राप्त्या फलभेदेन कथं लेखग्रहणस्य ज्ञापकतेति चेन्न । ज्ञापकपरभाष्यप्रामाण्येन तस्यानभिधानात्, 'गिलेगिलस्ये' त्यत्र तदन्तविधिना 'गिलान्त उत्तरपद' इत्यर्थे 'तिमिगिलगिल' इत्यस्याप्यनेनैव सिद्धेर्गिलगिले चेत्यस्य वैयर्थ्येन 'उत्तरपदाधिकारे प्रातिपदिकग्रहणे न तदन्तग्रहणमिति परिभाषान्तरस्यापि ज्ञापनाल्लेखग्रहणेऽपि तदन्तविध्यभावेन 'हृदयपरमलेख' इत्यत्र तदप्राप्त्या फलभेदाभावाच्च । अत एव 'इष्टकेषीकामालानामि'त्यनेन परमचितादिषु ह्रस्वो न । न च तिमेर्गिलस्य यो गिलस्तद्वाचक'तिमिंगिलगिल'शब्दे गिलान्तस्य गिलगिलेत्यस्योत्तरपदत्वाभावेन तिमिशब्दस्य पूर्वपदत्वाभावेन च गिलेगिलस्येत्यस्याप्राप्त्याऽत्र मुमर्थं गिलगिले चेत्यस्यावश्यकत्वेनोक्तार्थज्ञापकत्वासम्भव इति वाच्यम्; उक्तार्थकतिमिगिलशब्देऽन्तरङ्गत्वात्पूर्वमेव मुम्सिद्धे'गिलस्य गिलो गिलगिलास्तमेर्गिलगिल' इत्यर्थके निरुक्तशब्दे गिलगिले चेत्यस्यासाधारणफलभूतेऽपि तदन्तविधिना गिलेऽगिलस्येत्यनेनैव सिद्धेर्गिलगिले चेत्यस्य वैयर्थ्येनोक्तार्थज्ञापने बाधकाभावात् ।

केचित्तु—'तिमिशीघ्रगिल' इत्यत्र मुमभावाय गिलान्ते चेद् गिलगिले एवेति नियमार्थं गिलगिले चेत्यस्याऽऽवश्यकत्वेनोक्तार्थज्ञापकत्वासम्भवः; तथा च ज्ञापकपरभाष्यप्रामाण्याद् 'हृदयपरमलेख' इत्यस्यानभिधानकल्पनेन, 'वनोरचे' तिवत्तदन्तविधिद्वयकल्पनेन वा न फलभेदः । ज्ञापितायां परिभाषायां तदन्तविधिर्नास्तीत्यस्य तदन्तविधिद्वयं नास्तीति सामान्यतो निषेधः यद्वा—'सुपि चे' त्यादाविव सप्तम्यन्तप्रत्ययग्रहणेऽसप्तम्यन्तस्य तदादेरुपस्थित्या 'तदादेः परो योऽण् तदन्त उत्तरपदे' इत्यर्थेन 'हृदयस्य हृल्लेख' इत्यस्य 'हृदयपरमलेख' इत्यत्र प्रवृत्तेः सुलभतया न फलभेद इति वदन्ति ।

केचित्तु – 'उत्तमैकाभ्यामि'ति निर्देशज्ञापितस्य 'सप्तम्यन्ते प्रत्ययग्रहणे तदादिशब्दरूपं विशेष्यमादाय तदन्तविधिर्न भवती'ति वचनस्य ज्ञापकसाजात्याद्विशेष्यान्तरासत्त्वे एव प्रवृत्त्याऽत्रोत्तरपद इति विशेष्यान्तरसत्त्वेन तन्निषेधाप्राप्त्या 'ऽण्णन्ततदाद्यन्त उत्तरपद' इत्यर्थेन 'हृदयपरमलेख' इत्यत्र लेखग्रहणाभावेऽप्यण्ग्रहणेन हृदादेशप्राप्त्या फलभेदाभावः । ज्ञापिते तूत्तरपदाधिकार इति वचनेऽनेनोत्तरपद-

---

**नियमार्थमिति** । विधित्वे सम्भवति नियमत्वायोगात्, अनभिधानकल्पने तदन्तविधिद्वयकल्पने तदन्तविधिद्वयनिषेधकल्पने वा गौरवाच्च चिन्त्यमिदम् ।

यद्वेति पक्षे ज्ञापनोत्तरं लेखग्रहणस्य स्वांशे चारितार्थ्यसम्भवेऽपि 'हृत्परमलेखः' इत्यस्य सिद्ध्यर्थं लेखग्रहणेन तदन्तविधिरवश्यं वाच्यः; तथासति 'इष्टकेषी' इत्यादावपि तदन्तविधिना

विशेष्यकतदन्तविधेरभावादुत्तरपदस्य विशेषणत्वरूपाद्विशेष्यान्तरासत्त्वे'नोत्तमैकाभ्या-मि'ति निर्देशज्ञापितवचनेन तदादिविशेष्यकतदन्तविधेरप्यभावे 'हृल्लेख' इत्यत्र हृदा-देशाप्राप्त्या स्वांशे चारितार्थ्यमिति वदन्ति ।

न 'चोत्तरपदाधिकारे प्रत्ययग्रहणे' इति परिभाषास्वीकारे 'रात्रेः कृती' त्यत्र कृदन्त इत्यर्थानापत्तिः । न च सूत्रवैयर्थ्यम्, अशब्दादाचारक्विबन्तात् ण्वुलि अलोपे 'रात्रिमक' इत्यादौ कृद्रूपोत्तरपदसम्भवादिति वाच्यम्; ज्ञापकसाजात्यात् श्रावणप्रत्ययत्व-विषयतावच्छेदकधर्मेण साक्षादवच्छिन्नमुख्यविशेष्यताप्रयोजकपद एवैतत्परिभाषाप्रवृत्तेः कृत्पदस्य तथात्वाभावेन परिभाषाविषयाभावात् । अत एव 'खित्यनव्ययस्य' इत्यादौ तदन्तविधिः । 'उपसर्गस्य घञ्' इत्यादौ 'घञन्त' इत्यर्थलाभस्तु 'अमनुष्य' इत्येतद्विशेष्य-कतदन्तविधेः सत्त्वेनोत्तरपदविशेष्यकतदन्तविधिनिषेधकस्यास्याप्रवृत्तेः । न 'चैकहला-दावि'त्यादावेकहलाद्यन्त इत्यर्थापत्तिः । 'उत्तरपदाधिकारे प्रातिपदिकग्रहण' इति परि-भाषायाः सामान्यतः प्रातिपदिकग्रहणे प्रवृत्तिस्वीकारेऽपि, दोपाभावेन श्रावणप्रत्ययत्व-विषयतावच्छेदकधर्मावच्छिन्नविषयताप्रयोजकपद एव प्रवृत्तिस्वीकारे फलाभावेन चात्र तदन्तविधिनिषेधस्य सुवचत्वात् ।

केचित्तु—'उत्तरपदाधिकारे श्रावणप्रत्ययत्वविषयतावच्छेदकधर्मावच्छिन्नविषयता-प्रयोजकं बहुपदघटितं चे'त्येतदन्यतररूपं सप्तम्यन्तं पदं पदघटितं विशेष्यमादाय तदन्त-बोधकं न भवतीत्येकमेवोक्तपरिभाषाद्वयस्थाने वचनं कार्यम्, तेन 'एकहलादावि'त्यादा-वपि न तदन्तविधिसम्भवः । 'बहुपदघटिते'त्यत्र पदघटिते'त्येव वक्तव्ये बहुपदनिर्देशा-'त्खित्यनव्ययस्ये' त्यादौ तदन्तविधिनिषेधो न । सामान्यतः पदघटितविशेष्यकतदन्त-विधिनिषेधादेव 'तुन्दशोकयोरि'त्यादावुपपदविशेष्यकतदन्तविधिनिषेधः सप्तम्यन्त एव निषेधस्वीकारा'दिष्टकेषीके'त्यादौ षष्ठ्यन्तपूर्वपदविशेष्यकतदन्तविधिनिषेधो न । न च षष्ठ्यन्ते एतन्निषेधास्वीकारे 'पादस्य पदे'त्यादौ तदन्तविधौ 'दग्धपादोपहत' इत्यादौ पदादेशापत्तिरिति वाच्यम्; एतद्भाष्योदाहरणादेवात्र सूत्रे 'पूर्वपद' इत्यस्य विशेषणत्व-स्वीकारेणादोषादिति प्राहुः ।

अन्ये तु—उत्तरपदविशेष्यकतदन्तविधेरेवायं निषेधः । पदघटितं सप्तम्यन्तं चेति न निवेश्यं; 'तुन्दशोकयोरि'त्यादौ तु 'ग्रहणवते'त्यनेनैव निषेधसिद्धिः । एवं 'चेष्टकेषीके'-त्यादावपि न दोष इत्याहुः ।

परे तु—पूर्वोक्तनिषेधीयोद्देश्यतावच्छेदके सप्तम्यन्त इत्यस्य न निवेशः, केवलं निरुक्तं पदं पदघटितं विशेष्यमादाय तदन्तोपस्थापकं नेत्येवार्थः, तेन 'दग्धपादोपहत' इत्यत्र षष्ठ्यन्तपूर्वपदविशेष्यकोऽपि तदन्तविधिर्न; 'इष्टकेषीके'त्यादौ तु लक्ष्यानुरोधात्पूर्व-पदमित्यस्य नाक्षेपः । अत ए'वाग्रान्ते'त्यत्रान्तपाठश्चरितार्थः, शुभ्रादौ तदन्तविधिश्च नेति कल्पयन्तीति दिक् ॥ २५ ॥

---

परमचितादिष्वपि परेषु ह्रस्वः स्यादिति सोऽपि पक्षश्चिन्त्य एव । एवमेव वक्ष्यमाणेऽपि 'केचित्तु मते' अयमेवास्वरस इति बोध्यम् ॥ २५ ॥

**नन्वेवं 'परमकारीषगन्धीपुत्र' इत्यत्रेव 'अतिकारीषगन्ध्या पुत्र' इत्यत्रापि**

---

परमकारीषगन्धीति। ननु पूर्वपदस्येति विशेष्यान्तरसत्त्वेन तदादिविशेष्यक-तदन्तविधेरभावेन षष्ठ्यन्तं पदघटितं पूर्वपदं विशेष्यमादाय पूर्वपरिभाषया तदन्त-विधिनिषेधेन वा 'ष्यङ' इत्यस्य ष्यङन्ततदाद्यभिन्नपूर्वपदस्येत्यर्थेनात्र संप्रसारणा-प्राप्त्याऽवतरणासङ्गतिरिति चेत्—

अत्र केचित्—इवशब्दस्य 'अतिकारीषगन्ध्यापुत्र'इत्यतोऽग्रे योजनेन 'मरु-वदुशीनरेषु जर्लमतिवदतिकारीषगन्ध्यापुत्र' इत्यत्रेव स्वप्रतियोगिकाभाववत्व-सम्बन्धेन 'परमकारीषगन्धीपुत्र' इत्यत्रापि स्यादित्यवतरणाशयः। परिभाषा-ऽर्थस्तु—स्त्रीप्रत्ययबोधकपदघटिते शास्त्रेऽनुपसर्जनस्येत्युपतिष्ठते, तद्वाक्ये तदादि-विधिश्च न। उपसर्जनविषयकवाक्ये तु तदादिविधिर्भवत्येव; तथा च 'अनुप-सर्जनीभूतो यः ष्यङ् तदन्तं यत्पूर्वपदं तदवयवनिर्दिश्यमानस्य ष्यङः संप्रसारण-मि'त्यनुपसर्जनविषयकवाक्यस्यार्थः। उपसर्जनविषयकवाक्यस्य तु 'ष्यङन्ततदादि-रूपं यत्पूर्वपदं तदवयवनिर्दिश्यमानस्ये'त्याद्यर्थः। आद्यवाक्योदाहरणं—'परमकारी-षगन्धीपुत्र' इति; द्वितीयवाक्योदाहरणं—कनलुबन्तकारीषगन्ध्याशब्दस्य पुत्रशब्देन समासे 'कारीषगन्धीपुत्र' इति। अत्रोपसर्जनत्वञ्च—स्वान्तपर्याप्तशक्तिनिरूपकार्थनिष्ठ-विशेष्यतानिरूपितप्रकारतानिरूपितस्त्रीत्वनिष्ठावच्छेदकताप्रयोजकत्वम्। 'अतिकारी-षगन्ध्या पुत्र' इत्यत्र स्वम्—ष्यङ्, तदन्तपर्याप्तशक्तिनिरूपकोऽर्थः—कारीषगन्ध्या अति-क्रमणकर्ता, तन्निष्ठविशेष्यतानिरूपितकारीषगन्ध्यापदार्थनिष्ठप्रकारतानिरूपितस्त्रीत्व-

---

अपवादप्रस्तावादाह—नन्विति। अथ 'प्रत्ययग्रहणपरिभाषया शास्त्रावच्छेदेन तदादि-नियमः क्रियते, अनया च लक्ष्यावच्छेदेन स निषिद्ध्यते' इति उत्सर्गापवादयोः समानविषय-कत्वाभावात् कथमस्याः बाधकत्वम्? न च 'अनुपसर्जनस्त्रीप्रत्ययबोधके' इत्यर्थेन समान विषयत्वं सुलभमिति वाच्यम्; उपसर्जनेऽपि 'अतिकारीष' इत्यादौ सूत्रस्थष्यङोऽनुपसर्जनस्त्रीप्रत्यय-बोधकत्वेन सम्प्रसारणप्रसङ्गात्। न च प्रत्ययग्रहणापवादकत्वेन अत्रापि ग्रहणपदसम्बन्धात् 'अनु-पसर्जनस्त्रीप्रत्ययमात्रवृत्तिविषयताप्रयोजकपदे' इत्यर्थेन समानविषयत्वमेवेति वाच्यम्; तथा सति ष्यङः सम्प्रसारणम्' इत्यत्र ष्यङ्पदस्यापि उपसर्जनानुपसर्जनस्त्रीप्रत्ययवृत्तिविषयताप्रयोजकत्वात् परिभाषाया निर्विषयकत्वापत्तेरित्याशङ्कायामाह—परिभाषार्थस्त्विति।

अयम्भावः—परिभाषाया उद्देश्यतावच्छेदकरूपेण उद्देश्यसिध्यर्थं 'ष्यङः सम्प्रसारणम्' इत्यस्याऽऽवृत्तिः क्रियते; एकाऽनुपसर्जनविषयिणी, अपरा चोपसर्जनविषयिणी। तत्र अनुपसर्जन-विषयकवाक्ये परिभाषाप्रवृत्तौ तदादिनियमाभावेन 'परमकारीषगन्धीपुत्रः' इत्यादौ सम्प्रसारण-सिद्धिः, उपसर्जनविषये तदादिनियमात् तत्र तदभावः सिद्ध्यति; तदाऽऽह—स्त्रीप्रत्ययबोधक-पदघटितेत्यादिः। उपतिष्ठत इति। इदमसङ्गतम्; परिभाषा हि उभयं विधत्ते चेत्—शास्त्रस्यो-पसर्जनविषयकत्वं न स्यात्; तथा सति 'उपसर्जनविषयकवाक्ये तु' इत्युत्तरग्रन्थसङ्गतिरेव स्यादिति बोध्यम्। तस्मात् पूर्वप्रदर्शितभावानुसारेण ग्रन्थो योजनीयः।

ननु 'अतिकारीषगन्ध्ये'त्यादौ सम्प्रसारणाभावात् उपसर्जनविषयिणी आवृत्तिर्व्यर्थैव स्यादत आह—द्वितीयवाक्योदाहरणमिति।

'ष्यङः सम्प्रसारणं पुत्रपत्योरि'ति स्यादत आह—

## स्त्रीप्रत्यये चानुपसर्जने न ॥ २६ ॥

विषयसप्तमीयम् । यः स्त्रीप्रत्ययः स्त्रियं प्राधान्येनाऽऽह तत्र तदादिनियमो न, यस्त्वप्राधान्येनाऽऽह तत्र तदादिनियमोऽस्त्येवेत्यर्थः ।

---

निष्ठावच्छेदकताप्रयोजकत्वं ष्यङ इत्युपसर्जनत्वात् ष्यङन्ततदादिरूपपूर्वपदाभावेन न सम्प्रसारणम् । कन्लुबन्ते तु ष्यङ उपसर्जनत्वेऽपि ष्यङन्ततदादिरूपपूर्वपदत्वादुपसर्जनवाक्येन सम्प्रसारणसिद्धिः । ननु 'परमकारीषगन्धीपुत्र' इत्यत्र परमपदोत्तरटापा ष्यङा चेत्युभाभ्यामप्येकस्यैव स्त्रीत्वस्य भानेन निरुक्तप्रकारतावच्छेदकस्त्रीत्वनिष्ठावच्छेदकताप्रयोजकत्वस्य ष्यङि सत्त्वेन तस्योपसर्जनत्वात्सम्प्रसारणानापत्तिरिति चेन्न । उभयवाच्यस्त्रीत्वस्यैक्येऽपि तन्निष्ठावच्छेदकताया भेदान्निरुक्तप्रकारतानिरूपितायाः परमपदोत्तरटाप्प्रयोज्यावच्छेदकतायाः प्रयोजकत्वस्य ष्यङि विरहेण तस्यानुपसर्जनत्वात्तेः, निरुक्तप्रकारतायामभेदसम्बन्धानवच्छिन्नत्वदानेनाप्यदोषाच्च । इत्थं चास्या अपि परिभाषायाः शास्त्र एव प्रवृत्त्या 'प्रत्ययग्रहण'परिभाषाबाधकत्वं सुष्ठूपपद्यत इत्याहुः ।

अन्ये तु— 'परमकारीषगन्धीपुत्र' इत्यत्रोक्तशङ्कानिरासाय 'इष्टकेषीके'त्यादावित्रात्रापि पूर्वपदेत्यस्यानध्याहारेण विशेष्यान्तरसत्त्वेऽपि 'वनारचे'तिवत्तदन्तविधिद्वयेन वा 'परमकारीषगन्धीपुत्र' इत्यत्रे'वातिकारीषगन्ध्या पुत्र' इत्यत्रापि सम्प्रसारणं स्यादिति यथाश्रुतमेवोपवर्ण्य, 'स्त्रीप्रत्ययबोधकपदघटिते शास्त्रेऽनुपसर्जनस्येत्युपतिष्ठते, तदादिविधिश्च ने'ति परिभाषार्थेन 'परमकारीषगन्धीपुत्र' इत्यत्रानुपसर्जनष्यङः सत्त्वात्सम्प्रसारणसिद्धिः । 'अतिकारीषगन्ध्यापुत्र' इत्यत्रानुपसर्जनष्यङोऽभावादेव तदप्राप्तिः । कन्लुबन्ते सम्प्रसारणं भवत्येवेत्याग्रहे तु—स्वान्ततदाद्यवधिकपूर्वपदप्रयोज्यविशेष्यतानिरूपितप्रकारतानिरूपितस्त्रीत्वनिष्ठावच्छेदकताप्रयोजकत्वरूपोपसर्जनत्वस्वीकारेण स्वान्ततदाद्यवधिकपूर्वपदरूपविशेषणाभावेन विशिष्टस्योपसर्जनत्वाभावादेव सम्प्रसारणं सिद्ध्यतीति वदन्ति ।

परे तु— पूर्व'केचित्तु'रीत्यैवावतरणाशयमुपपाद्य यत्र लक्ष्येऽनुपसर्जनस्त्रीप्रत्ययः तत्र तदादिनियमो न=तदादिनाऽतदादेर्व्यावृत्तिर्नेत्यर्थः, अतदादौ तदादिमारोप्यत

---

अवच्छेदकताया भेदादिति । निरूपकभेदेन तद्भेदादित्यर्थः ।

इत्याहुरिति । अत्र कल्पे वाक्यभेदकल्पने गौरवमाशङ्क्याऽऽह— अन्ये त्विति ।

अस्मिन् कल्पे न वाक्यभेदः ; तथापि परिभाषाया लक्ष्येऽप्रवृत्त्या "यः स्त्रीप्रत्ययः स्त्रियं प्राधान्येनाऽऽह" इत्यादिमूलग्रन्थासङ्गतिरत आह— परे त्विति । पूर्वरीत्यैवेति । प्रथमकल्पोक्तरीत्या, न तु द्वितीयकल्पोक्तरीत्येति तदर्थः । एतस्मिन् मते द्वितीयकल्पोक्तरीत्याऽवतरण-

प्रत्यासत्त्या यस्य समुदायस्य स्त्रीप्रत्ययान्तत्वमानेयं तदर्थं प्रत्यनुपसर्जनत्वमेवैतत्परिभाषाप्रवृत्तौ निमित्तम्, तेन 'अतिराजकुमारिरि'त्यादौ राजकुमारीशब्दार्थस्यातिशब्दार्थं प्रत्युपसर्जनत्वेऽपि तदर्थं प्रत्यनुपसर्जनत्वात्तदादिनियमाभावेन ह्रस्वसिद्धिः।

---

इति यावत्। इत्थं च लक्ष्ये परिभाषाप्रवृत्तेरेव 'यः स्त्रीप्रत्ययः स्त्रियं प्राधान्येनाऽऽहे'त्यादिमूलग्रन्थोऽप्यञ्जसैवोपपद्यते। अन्यथा लक्ष्ये प्रवृत्तावपि 'प्रत्ययग्रहण'परिभाषा निषेधकत्वमार्थिकं बोध्यमिति प्राहुः।

तत्त्वविदस्तु—'परमकारीषगन्धीपुत्र' इति प्रयोगदर्शनात् 'यस्मात्प्रत्ययविधिस्तदादिप्रत्यये' इति विभक्तयोगे 'नेयङुवङ्स्थानावस्त्री'त्यतोऽस्त्रीत्यस्य सम्बन्धेन स्त्रीप्रत्ययभिन्ने प्रत्यये गृह्यमाणे तदादेरित्यस्योपस्थित्या स्त्रीप्रत्यये 'प्रत्ययग्रहण'परिभाषाया अप्रवृत्तेश्च 'परमकारीषगन्धीपुत्र' इत्यत्रे'वातिकारीषगन्ध्या पुत्र' इत्यत्रापि संप्रसारणं स्यादिति यथाश्रुतमेवावतरणार्थमुपपाद्य, स्त्रीप्रत्यये तदादिनियमो नेति निषेधः अनुपसर्जनेनैव स्त्रीप्रत्ययेन गृह्यत इति परिभाषार्थः। अत एव उपसर्जने स्त्रीप्रत्यये तदादिनियमादि'ति कौमुदीग्रन्थोऽपि स्वरसत उपपद्यते। प्रथमकल्पे इवशब्दस्यान्यत्रान्वयकल्पनं तु न युक्तम्; इवशब्देन समासस्य नित्यत्वात्तस्यान्यत्रान्वयासम्भवात्। द्वितीयकल्पेऽप्यनुपसर्जन इत्यस्य विधिसूत्रे उपस्थितिमात्रविधानेन दोषवारणात्तदादिनियमो नेति निषेधविधानस्य वैयर्थ्यापत्तिरिति वदन्ति।

यद्यपि कन्लुबन्तकारीषगन्ध्याशब्देन परमशब्दस्य समासे परमकारीषगन्ध्याशब्दे उपसर्जनत्वलक्षणभेदेन फलभेदः; तथापि तस्य रूपस्य भाष्यानुक्तत्वेन विशेषानवधारणात् तस्याकिञ्चित्करत्वमेव।

---

योजने दोष एव, तत्कल्पे 'ष्यङन्ततदाद्यन्तपूर्वपदस्य सम्प्रसारणमि'ति सूत्रार्थेन परिभाषाया अनुपसर्जनस्त्रीप्रत्ययविषये लक्ष्येऽतदादौ तदादित्वारोपेऽपि सूत्रे तदन्तविधिनिषेधाभावेन 'अतिकारीषगन्ध्या पुत्रः' इत्यत्र सम्प्रसारणापत्तेस्तादवस्थ्यात्।

वस्तुतस्तु—द्वितीयकल्पोक्तावरणग्रन्थयोजनानुसारेणापि 'परे तु'मतं सूपपादम्। तथा हि—अवतरणग्रन्थे हि 'येने'त्यस्याध्याहारः, अध्याहृतञ्च—करणतृतीयान्तम्; एवञ्च येन कारणेन= येन कारणेन 'परमकारीषे'त्यादौ सम्प्रसारणं जायते तेनैव 'अतिकारीषे'त्यत्रापि सम्प्रसारणं स्यादिति योजनीयम्। केन कारणेनेति चेत्—परिभाषाया अभावे 'ष्यङ' इत्यत्र तदन्तविधिद्वयेनेति बोध्यम्। स्वीकृतायान्तु परिभाषायां पूर्वपदस्य अनाक्षेपे विशेष्यान्तरसत्त्वे धर्मिण उपस्थितौ च मानाभावेन 'ष्यङन्ततदादित्वविशिष्टस्य पूर्वपदस्य' इत्यर्थेन 'परमकारीषगन्धी'ति भाष्योदाहरणे सम्प्रसारणस्य, 'अतिकारीषगन्ध्या पुत्रः' इत्यत्र सम्प्रसारणाभावस्य चोपपत्तौ न दोष इति बोध्यम्। एतेन—अवतरणस्य नावतार्यमाणार्थोपनोद्यत्वमिति वदन्तः परास्ताः। इति परिभाषार्थ इति। अत्रापि कल्पे पृथग्वाक्यकरणापत्तिर्बोध्या।

अत एवात्र परिभाषायां न शास्त्रीयमुपसर्जनत्वमसम्भवात् । अस्याः

---

अत एवेति । एतद्द्वयसिद्ध्यर्थं प्रत्यासत्तेरवश्याऽऽश्रयणीयत्वादित्यर्थः । शास्त्रीयम् = प्रथमानिर्दिष्टमित्यादि । असम्भवात् = प्रत्यासत्तेर्दुरुपपादत्वात् ।

वस्तुतस्तु – शास्त्रीयमेवोपसर्जनत्वमस्यां ग्राह्यम् । अत एव 'अर्धं नपुंसकमि'त्याद्येकदेशिसमासविधायकशास्त्रप्रत्याख्यानपरभाष्येण न विरोधः; अन्यथा'ऽर्धं नपुंसकमि'ति सूत्रेण समासेऽर्धपदार्थस्य विशेष्यत्वेन ष्यङ उपसर्जनत्वा'दर्धकारीषगन्ध्यापुत्र' इति रूपं, कर्मधारयसमासेन तत्प्रत्याख्यानपक्षे च कारीषगन्ध्यापदार्थस्यैव विशेष्यत्वादनुपसर्जनत्वेन सम्प्रसारणे 'अर्धकारीषगन्धीपुत्र' इति फलभेदाद्भाष्यासङ्गतिः स्पष्टैव । मम तु एकदेशिसमासविधायकसूत्रप्रत्याख्यानपक्षे कर्मधारयसमासे कारीषगन्ध्याया अनुपसर्जनत्वम्, आरम्भपक्षे चैकविभक्तावषष्ठ्यन्तवचनमित्यनेनैकविभक्तीत्यस्य प्रथमानिर्दिष्टत्वाभावेन पूर्वसूत्रस्य चाप्राप्त्या ष्यङन्तस्यानुपसर्जनत्वमिति फलभेदाभावः ।

यद्यपि ष्यङादेः स्त्रीप्रत्ययमात्रस्य नोपसर्जनत्वं; तथापि परिभाषायां स्त्रीप्रत्ययग्रहणेन स्त्रीप्रत्ययान्तस्य ग्रहण बोध्यम् ।

यत्तु - शास्त्रीयोपसर्जनत्वस्य स्त्रीप्रत्ययेऽसम्भव इति । तन्न; अस्य स्त्री, ई' 'याः निष्क्रान्ता, निरिरि'त्यादौ स्त्रीप्रत्ययमात्रेऽपि तत्सम्भवात् । अत्र स्त्रीप्रत्ययमात्रस्योपसर्जनत्वेन 'निरिरि'त्यस्य स्त्रीप्रत्ययान्ततदादित्वाभावात् 'स्त्रीभ्यो ढगि'ति न ढक् । परिभाषायामुपसर्जनपदेन प्रत्यासत्त्या यस्मिन् स्त्रीप्रत्ययान्तत्वमानेयं तत्पर्याप्तसमाससंज्ञाविधायकशास्त्रीयप्रथमान्तपदबोध्यस्य तत्समासीयविग्रहे नियतविभक्तिकस्य च ग्रहणे 'नातिराजकुमारी'त्यादौ ह्रस्वसिद्धिः ।

केचित्तु—अत्र 'कुमारी'त्यस्य शास्त्रीयोपसर्जनत्वाभावेन 'राजकुमारी'त्यत्र स्त्रीप्रत्ययान्ततदादित्वारोपाद् ह्रस्वसिद्ध्याऽत्र कल्पे प्रत्यासत्तेरनुपयोग इति प्राहुः ।

---

प्रत्यासत्तेरिति । यस्मिन् स्त्रीप्रत्ययान्ततदादित्वमानेयं, तस्यैव स्वान्तपदेन ग्रहणम्; एवं द्वितीयकल्पे यस्मिन् तत्त्वमारोपणीयं, तद्घटकस्य स्वान्ततदाद्यव्यवधिकपूर्वपदेन ग्रहणमिति भावः ।

शास्त्रीयमेवोपसर्जनत्वमस्यां ग्राह्यमिति । अत एव 'गोबष्कयणीमतिक्रान्त' इति विग्रहे गोशब्दस्य प्रथमानिर्दिष्टत्वेन उपसर्जनतया तन्निष्ठविशेष्यतानिरूपितप्रकारतायाः स्त्रीप्रत्ययान्ते सत्त्वेऽपि 'बष्कयणी'त्येतस्य अनुपसर्जनत्वेनातदादौ तदादित्वारोपेण समुदाये ङीबन्ततदादित्वेन 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः सिद्ध्यति; अन्यथा गोनिष्ठविशेष्यतानिरूपितप्रकारतानिरूपितस्त्रीत्वनिष्ठावच्छेदकताया ङीपि सत्त्वेन कल्पद्वयोक्तोपसर्जनत्वस्य सत्त्वात् तदादिनियमे ह्रस्वो न स्यात् ।

ननु प्रमाणाभावादिष्टापत्तिरेवेति चेत्तदाऽऽह—अत एवेति । प्रत्याख्यानपरभाष्येणेति । तत्र हि अर्धपिप्पली' इत्यत्र विशेषणविशेष्यभावप्रयुक्तवैजात्येऽपि अर्थे विशेषाभावेन 'अर्धा चासौ पिप्पली चे'ति विशेषणसमासेनैव इष्टसिद्धौ 'अर्धं नपुंसकम्' इति सूत्रं न कर्तव्यम्'' इत्युक्तम् ।

'प्रत्ययग्रहण' इत्यस्यापवादत्वात्तदेकवाक्यतापन्नत्वाच्चात्रापि ग्रहणपदसम्बन्धेन

---

न चोपसर्जनपदार्थतावच्छेदकीभूतायाः स्वान्ततदाद्यवधिकपूर्वपदप्रयोज्य-विशेष्यतायाः स्वान्ततदाद्यर्थावयवावृत्तेर्ग्रहणेनैकदेशिसमासेऽपि ष्यङोऽनुपसर्जन-त्वा'दर्धकारीषगन्धीपुत्र' इत्येव रूपमिति नोक्तफलभेदः, 'स्त्रीभ्यो ढगि'त्यस्य 'स्त्रीवाचकाड्ढगि'त्यर्थस्यैव सत्त्वेन स्त्रीप्रत्ययमात्रस्य कथंचिच्छास्त्रीयोपसर्जनत्व-सम्भवेऽपि फलाभाव इति वाच्यम्; अतिकारीषगन्ध्यापुत्र' इत्यत्रातिपदार्थस्याति-क्रमणकर्तुरपि कारीषगन्ध्यावयवस्य विवक्षणे संप्रसारणापत्तेर्दुरुद्धरत्वात, स्त्रीवाच-कादित्यर्थे मानाभावाच्च। अत एव शुभ्रादिगणे विमातृशब्दपाठश्चरितार्थ इति सङ्क्षेपः।

---

इति सङ्क्षेप इति। शास्त्रीयोपसर्जनत्वस्वीकारे 'गङ्गा च यमुना चे'ति द्वन्द्वे द्वयोः प्रथमान्तपदजन्यबोधविषयत्वेन उपसर्जनतया तदादिनियमेन समुदायस्य आबन्ततदादित्वा-भावेन 'औङ आपः' इति शी न स्यात्, अतिशब्देन समासे ह्रस्वश्च न स्यात्। लौकिकोपसर्जनत्व-स्वीकारे तु स्वान्ततदाद्यवधिकपूर्वपर्यानप्रयोजकतेत्यादेः अभावेनोपसर्जनत्वाभावात् तदादित्वारोपेण आबन्ततदादित्वात् शीभावस्य सिद्धिरिति लौकिकमेव वरम्। 'अतिगोबष्कयणिः' इत्यत्र ह्रस्वसिद्धये प्रकारतायाम्—अवयवावयविभावसम्बन्धेतरसम्बन्धावच्छिन्नेति विशेषणं देयम्, तेन 'गोबष्कय-णी'त्यत्र 'बष्कयणभिन्ना गौ' इति अभेदेन बोधादभेदस्य सम्बन्धाभावेन बष्कयणीनिष्ठप्रकारतायाः सम्बन्धावच्छिन्नत्वाभावात् अनुपसर्जनतयाऽनदादौ तदादेरारोपात् ह्रस्वः सिद्धः। एवम्—आर-म्भप्रत्याख्यानयोः फलभेदोऽपि न; शास्त्रीयोपसर्जनत्वस्वीकारे उपसर्जनमि'ति महासंज्ञाकरणेन लौकिकोपसर्जनत्वस्य तदीयोद्देश्यतावच्छेदकत्वेन उभयोरपि ग्रहणे गौरवाच्च।

किञ्च—शास्त्रीयोपसर्जनत्वस्वीकारे परिभाषायाः किं प्रयोजनम्? न च 'परमकारीष-गन्धी'त्यत्र अतदादौ तदादित्वारोपात् सम्प्रसारणसिद्धिः; न च तदन्तविधिद्वयेन तत्सिद्धिः, तथा सति 'अतिकारीषगन्ध्ये'त्यत्रापि तदापत्तेरिति वाच्यम्; 'न ह्येकं प्रयोजनं योगारम्भं प्रयोजयति' इति न्यायेन 'ष्यङः सम्प्रसारणम्' इत्यत्र अनुपसर्जनस्येति पाठेन सम्प्रसारणसिद्धेः। न च परिभा-षाभावे 'परमा चासौ खट्वा चे'ति कर्मधारये 'परमखट्वेति जाते तस्मात् ङे विभक्तौ 'आबन्तत-दादित्वविशिष्टङिद्वचनतदातेः परस्य ङिद्वचनस्य याडि'ति 'याडापः' इत्यस्यार्थेन 'खट्वे'त्यस्या-ऽऽबन्ततदादित्वेन 'परमखट्वे'त्यस्य तथात्वाभावेन याण् न स्यात् इति वाच्यम्; 'आबन्तं यत्तदादि तदन्तं ङ्यस्माद्विहितस्तदादिस्तस्मात्परस्य ङिद्वचनस्य याडि'त्यर्थेन परिभाषाया अभावेऽपि तत्र याट्सिद्धेः। न चैवं 'अतिखट्वाय' इत्यत्रापि तथात्वात् याट् स्यादिति वाच्यम्; लक्षणप्रतिपदोक्त'-परिभाषया आकारस्य प्रतिपदोक्तस्य ग्रहणेनादोषात्। एवञ्च 'अतिबहुश्रेयसी, अतिगङ्गायमुना' इत्यादौ परिभाषासत्त्वेऽसत्त्वे वा 'गोस्त्रियोरि'त्यत्र तदन्तविधिद्वयं विना ह्रस्वानापत्त्या न ते फले। कृते तु तदन्तविधिद्वये 'अतिगोबष्कयणिः' इत्यत्रापि तेनैव ह्रस्वसिद्धेर्नैतदपि परिभाषाफलम्।

वस्तुतस्तु—स्थलत्रयेऽपि न ह्रस्वः, तदन्तविधिद्वयञ्च नेति न तत्र काचिदपि विचारणा। 'कारीषगन्धीपुत्रः' इति कन्लुबन्तस्थले परिभाषासत्त्वे तदभावे च शास्त्रीयोपसर्जनत्वाभावात् नैतत्

**स्त्रीप्रत्ययसामान्यग्रहणे तद्विशेषग्रहणे च प्रवृत्तिः, न तु स्त्रीप्रत्ययास्त्रीप्रत्यय-ग्रहणे । ध्वनितं चेदमर्थवत्सूत्रे भाष्ये ।**

**इयं च वाचनिक्येव । 'ष्यङ' इति सूत्रे भाष्ये स्पष्टा ॥ २६ ॥**

**नन्वेवं 'तरप्तमपौ घ' इत्यादिना तरबन्तादेः संज्ञा स्यादत आह—**

---

विस्तरस्तु 'नन्वेवमप्यतिखट्वाये' त्यत्रत्य—शब्देन्दुशेखरटिप्पणे द्रष्टव्यः ।

वाचनिक्येवेति । भाष्ये वचनरूपेण पठिता, न तु ज्ञापकमुपन्यस्तमित्यर्थः । अस्यां ज्ञापकन्तु 'यस्मात्प्रत्ययविधिरि'ति विभक्तयोगे 'नेयङुवङ्'त्यतो'ऽस्त्री'त्यस्यानुवृत्त्या प्रसज्यप्रतिषेधात्प्रधानन्यायेन प्रधानेऽनुपसर्जने स्त्रीप्रत्यये तदादिनियमो नेत्यस्त्रीति निषेधवचनमेवेति दिक् ॥ २६ ॥

---

परिभाषाफलम् । एवञ्च शास्त्रीयोपसर्जनत्वस्वीकारे फलाभावात् परिभाषैव नाऽऽदरणीया । लौकिके तु 'स्वान्ततदाद्यवधिके'त्यादौ अवयवावयविभावेतरसम्बन्धावच्छिन्नप्रकारतायाः स्वीकारात् 'गोबष्कयणी'त्यत्र तादृशप्रकारताया अभावात् नैतत्फम् । 'अतिबहुश्रेयसी, अतिगङ्गायमुने' इत्यादौ ह्रस्वः इष्टश्चेत्—परिभाषया अभावेऽपि तदन्तविधिद्वयेनैव सिद्ध्यति । वस्तुतस्तत्र ह्रस्वाभावस्य अनुपदमुक्तत्वेन नैते फले, कनलुबन्तेऽपि तथैव ऊहनीयम् ।

किञ्च—'हल्ङ्याप्०, औङ आपः' इत्यादौ नागेशैस्तदन्तविधिद्वयस्य स्वीकृतत्वात् स्वान्ततदाद्यवधिकेत्यादिपरिष्कृतोपसर्जनत्वं नाभिमतमिति ज्ञायते; अन्यथा 'गङ्गायमुने' इत्यादौ अनुपसर्जनतयैवाऽतदादौ तदादित्वारोपेण आबन्ततदादित्वेन समुदायस्य शीभावसिद्धौ तदर्थं कृतस्य तदन्तविधिद्वयस्य वैयर्थ्यं स्यात् । तथा च फलाभावात्, स्वग्रन्थविरोधात्, अपूर्वशक्तिस्वीकारे गौरवाच्च 'स्वान्ततदाद्यवधिके'त्यादि-लौकिकोपसर्जनत्वं वा न स्वीकार्यम् ।

'स्वान्तपर्याप्ते'त्यादि-लौकिकोपसर्जनत्वस्वीकारे तु—अन्यत्र फलाभावेऽपि परमशब्देन समस्तकन्लुबन्तस्थले परिभाषासत्त्वे उपसर्जनतया सम्प्रसारणाप्राप्तिः, तदसत्त्वे च सम्प्रसारणप्राप्तिरिति फलभेदेन परिभाषा स्वीकार्या । तथा च स्वान्तपर्याप्तेत्यादि-लौकिकोपसर्जनत्वपरिष्कारेण 'यत्रोपसर्जनत्वाभावस्तत्र अतदादौ तदादित्वारोप' इति पूर्वोक्तपरिभाषार्थ इति बोध्यम् । एवञ्च स्वान्तपर्याप्तेत्यादि लौकिकोपसर्जनत्वं ग्राह्यम्, परिभाषा च स्वीकार्या । एतदाशयेनाऽऽह - विस्तरस्त्विति ।

मूले—न तु स्त्रीप्रत्ययास्त्रीप्रत्ययग्रहण इति । तत्फलन्तु बुद्ध्याः 'परममुक्तिरि'त्यत्र कृद्योगलक्षणषष्ठ्यभावः ।

मूले—ध्वनितं चेदमिति । तत्र हि उत्तरसूत्रोक्तं समासग्रहणस्य नियमार्थत्वमुक्तम् । यदि स्त्रीप्रत्ययास्त्रीप्रत्ययसाधारणेऽस्याः प्रवृत्तिः स्यात्तदा 'राजकुमारी' इत्यत्र अतदादौ तदादित्वारोपेण तस्य प्रत्ययान्ततदादित्वेन पूर्वेण प्रातिपदिकाप्राप्त्या तत्र प्रातिपदिकसंज्ञार्थं समासग्रहणस्य विध्यर्थत्वे सम्भवति नियमार्थत्वासङ्गतिः स्पष्टैव ॥ २६ ॥

## संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति ॥ २७ ॥

सुप्तिङन्तमि'त्यन्तग्रहणमस्यां ज्ञापकम् ।

न च प्रत्यययोः पदसंज्ञायामपि 'प्रत्ययग्रहण'परिभाषया तदन्तग्रहणसंभ-

---

संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति । साक्षात्संज्ञानिष्ठविधेयतानिरूपितोद्देश्यताप्रयोजकं प्रत्ययमात्रवृत्तिविषयताप्रयोजकं पद तदादिशब्दस्वरूपं विशेष्यमादाय तदन्तोपस्थापकं न भवतीत्यर्थः । साक्षात्पदनिवेशादेव प्रातिपदिकसंज्ञासूत्रे तदन्तविधिसिद्धिः; अन्यथा कृत्तद्धितप्रत्ययपदानां तदन्तबोधकत्वानापत्तिः ।

नन्वेवमपि 'षः प्रत्ययस्ये'त्यत्र प्रत्ययपदस्य साक्षादुद्देश्यताप्रयोजकत्वाभावेन निषेधाप्रवृत्त्या तदन्तविधौ 'षण्णामि'त्यादौ षस्येत्वापत्तिः, ष्फादौ तदनापत्तिश्चेति चेन्न । तत्र प्रत्ययपदस्य प्रत्ययबोधकसूत्रस्थष्फादिपदबोधकत्वेन प्रत्ययबोधकत्वाभावेनादोषात् ।

अन्तग्रहणमस्या ज्ञापकमिति । न चान्तग्रहणसत्त्वे 'प्रत्ययग्रहण'परिभाषया सुप्पदेन सुबन्ततदादेर्ग्रहणेन बहुव्रीहिणा सुबन्ततदाद्यन्तस्य पदसंज्ञा, तदभावे च सुबन्ततदादेरेवेति फलभेद इति वाच्यम्; 'यस्मात्प्रत्यय' इत्यतस्तदादिपदस्यानुवृत्त्याऽन्तग्रहणे सत्यसति वा तदादेरेव पदसंज्ञायां फलभेदाभावात् ।

केचित्तु—अत्र विशेष्यान्तरस्यान्तपदस्य सत्त्वेनोपस्थिततदादेः 'प्रत्ययग्रहण' परिभाषास्थ 'अन्ये तु'मतरीत्या सुप्तिङन्तनिरूपितविशेष्यत्वेन न फलभेदः ।

---

षण्णामित्यादौ षस्येत्त्वापत्तिरिति । न च फलाभावः; षष्ठादिशब्दे षकारस्य इत्त्वापत्त्या ङीषः प्रसङ्गात् ङीपि ङीषि च स्वरे भेदात् डटष्टित्वं तु 'पञ्चमी'त्यादौ चरितार्थमिति बोध्यम् । न च षष्ठशब्दात् ङीपि अनुदात्तस्य च यत्रोदात्तलोपः' इत्यनेन ङीप उदात्तत्वे स्वरभेदाभावेन इत्सज्ञानापत्तौ फलाभावेन तदन्तविध्यभावप्रसङ्ग इति वाच्यम्; षष्ठशब्दादाचारक्विबन्तात् ण्वति ङीपि फलसत्त्वादिति भावः । एवं 'चूट्' इत्यादावपि तदन्तविधौ जशादौ इत्त्वानापत्तिः, टीकाशब्दादौ चाऽऽपत्तिरिति बोध्यम् ।

अदोषादिति । अन्ये तु—'स्वावयवषकारावच्छेदेन प्रत्ययस्यैवेत्संज्ञा' इत्यर्थकरणेन प्रत्यये साक्षादुद्देश्यतायाः सत्त्वात्परिभाषाप्रवृत्तिः सूपपादेति वदन्ति ।

पदसंज्ञायां फलभेदाभावादिति । नन्वत्र सुप्तिङन्तमिति बहुव्रीहिः, तथा सति अन्तपदार्थे विशेषणतया उपस्थितस्य सुपोऽन्यत्र विशेषणत्वेन अन्वयायोगात् सुबन्ततदाद्यन्तस्येत्यर्थोऽसङ्गत इत्यरुचेराह—केचित्त्विति । अन्ये तु मतरीत्येति । 'विशेष्यान्तरसत्त्वे तस्यैव प्रत्ययपदं विशेषणम्; विशेष्यान्तरन्तु तदादेः' इत्युक्तरीत्या इत्यर्थः । सुबन्तान्तस्य तदादेरित्यर्थेऽपि न फलभेद इति तात्पर्यम् ।

**वात् ज्ञापितेऽपि फलाभाव इति वाच्यम्; पदसंज्ञायाः 'स्वादिष्वि'ति विषये प्रकृतिनिष्ठतया पदग्रहणस्य प्रत्ययमात्रग्रहणत्वाभावात् ।**

---

यद्वा—'सुप्तिङन्तमि'त्यत्र 'निषादस्थपत्यधिकरण'न्यायेन कर्मधारयाऽऽश्रयणेन प्रत्ययग्रहण' परिभाषया तदन्तविधौ 'सुबन्ततदाद्यभिन्नो योऽन्तः स पदसंज्ञको भवती' त्यर्थादन्तग्रहणमन्तरापि सुप्तिङन्ततदादेः पदसंज्ञासिद्धौ तद्व्यर्थं सदस्यां ज्ञापकम् । ज्ञापितायां चैतत्परिभाषायामन्तग्रहणाभावे सुप्तिङोः साक्षादुद्देश्यताप्रयोजकत्वेन तदन्तविधिनिषेधापत्तिरतोऽन्तग्रहणं सुप्तिङोः साक्षादुद्देश्यताप्रयोजकत्वाभावसम्पादनद्वारा स्वांशे चरितार्थम् । अत एव 'सनाद्यन्ता' इत्यनेन सन्नन्तान्तस्य धातुसंज्ञा न; अन्यथाऽत्र तदादेरनुवृत्त्यसम्भवेन 'संज्ञाविधावि'ति परिभाषया प्रवृत्तावप्रवृत्तावपि सन्निरूपिततदादित्वविशिष्टो योऽन्तस्तन्निष्ठान्तताानिरूपकसमुदायस्य धातुसंज्ञा दुर्वा । स्यादिति वदन्ति ।

न चैवं 'तद्धितश्चासर्वविभक्तिः' 'बहुगणवतुडतिसंख्ये'त्यादौ वतु-डति-तद्धितैस्तदन्तविध्यनापत्तिरिति वाच्यम्; एतत्परिभाषया तदादिविशेष्यकतदन्तविधिनिषेधेऽपि आद्येऽसर्वविभक्तिरित्येतद्विशेष्यकतदन्तविधौ बाधकाभावात् । अन्त्ये संख्येति महासंज्ञया लब्धसंख्यानुकरणरूपार्थस्य केवलप्रत्ययेनानवगतेः सामर्थ्यात्तदन्तविधिस्वीकारात् । एवं 'सामन्त्रितमि'त्यादावपि तदन्तविधिर्बोध्यः । स्पष्टं चेदं 'सामन्त्रितमि'ति सूत्रे शब्देन्दुशेखरे ।

न च 'कृदतिङि'त्यत्र तिङ्पदे तदन्तविध्यापत्तिः, तस्य साक्षादुद्देश्यत्वाभावादिति वाच्यम्; 'अतिङि'ति प्रसज्यप्रतिषेधाश्रयणेन तिङ एव निषेधीयसाक्षादुद्देश्यत्वेना-

---

**निषादस्थपत्यधिकरणन्यायेनेति** । विशेष्यविशेषणभावातिरिक्तसम्बन्धाभावप्रयुक्तलाघवमूलकेन तेन न्यायेनेति तदर्थः । यद्वेति पक्षेऽपि पूर्वपक्षोक्तदूषणमेवेति मध्यमपक्ष एव श्रेयानिति बोध्यम् । यद्वा—सुप् तिङन्तमि'ति भिन्ने पदे आश्रित्य सूपपादो मध्यमपक्षः ।

**एवं सामन्त्रितमित्यादावपीति** । महासंज्ञया आमन्त्रणकरणरूपार्थस्य लाभादिति 'एवम्' इत्यस्यार्थः । न च सूत्राऽऽरम्भसामर्थ्यादेव तदन्तविधिर्भविष्यति, अन्यथा प्रकृतिव्यवधानेन प्रथमाया अविद्यमानत्वाप्राप्त्या तद्विधानस्य वैयर्थ्यापत्तिरिति वाच्यम्; 'येन नाव्यवधानमि'ति न्यायेन प्रकृतिव्यवधानेऽपि तत्प्रवृत्ते कल्पनेन 'अगङ्गे' इत्यादौ अकारस्य तत्त्वविधानेन च चारितार्थ्यसम्भवात् । 'डति च' इत्यत्र षट्-कति-कतिपयेत्यनुवादेन कतिशब्दात्त्शुग्विधानसामर्थ्यात् तदन्तविधिः ।

**तिङ्पदे तदन्तविध्यापत्तिरिति** । न च तिङन्ततदादिभिन्नप्रत्ययस्य कृत्संज्ञा इत्यर्थः स्यात्, तथा सति तद्रूपप्रत्ययस्यासम्भवात् तिङ्ग्रहणस्य चारितार्थ्यासम्भव इति वाच्यम्; तस्य 'व्यतिसे' इत्यत्र आचारक्विबन्तादधातोर्लिटि 'औ+अतुः', उः' इत्यत्र च तत्सम्भवात् ।

ननु कर्मव्यतिहारे प्रायो बहुवचनान्तस्यैव प्रयोगेण 'व्यतिसे' इत्यस्यानभिधानात् अशब्दस्य च प्रत्ययान्तत्वेन आमः प्राप्तेः, 'आञ्चकार, आञ्चक्रतुः' इत्यादिप्रयोगस्यैव सम्भवेन न तत्र

'सुप्तिङन्तमि'ति सूत्रे भाष्ये स्पष्टा ॥ २७ ॥

---

दोषात्, संज्ञानिष्ठविधेयतानिरूपितसाक्षादुद्देश्यताप्रयोजकं प्रत्ययबोधकं पदं यत्र शास्त्रे तत्र प्रत्ययबोधकं पदं तदन्तोपस्थापकं नेत्यर्थेनात्र तदन्तविधिनिषेधाच्च ।

केचित्तु—परिभाषास्वीकारेऽनेकत्रानेकक्लिष्टकल्पनापेक्षया 'तरप्तमपौ घ' इत्यत्र यत्नविशेषमाश्रित्य तदन्तविध्यभावकल्पनेन योगविभागादिलाघवेन चैतत्सूत्रमकृत्वैव द्वित्रेषु तत्तद्विधिप्रदेशेषु तरप्तमपोः पाठेनैव सिद्धेरियं निष्फलेति वदन्ति ।

'ईदूदेद्द्विवचनमि'त्यादौ तु 'ङमो ह्रस्वादि'तिवत् विशेषणसम्बन्धमनुभूय पश्चात्तदन्तविधौ 'कुमार्यगारमि'त्यादौ ईकारान्तं यद्द्विवचनं तदन्तस्याभावान्न दोषः । 'क्तक्तवतू' इत्यादौ तु 'यस्य विभाषे'ति सूत्रारम्भसामर्थ्यादनयोः प्रत्ययमात्रबोधकत्वाभावेन तदादेरनाक्षेपाद्वा न तदन्तविधिः । एवं 'लः परस्मैपदमि'त्यादौ 'सिचिवृद्धिरि'त्यादिज्ञापकान्न तदन्तविधिरित्यादि

---

चारितार्थमिति चेत्—सत्यम् । अशब्ददाचारक्विबन्तात्कर्मणि प्रत्यये आत्मनेपदे 'इषीरन्' इत्यत्र चारितार्थ्यसम्भवात् । एवञ्च 'बभूविव' इत्यत्र वकारस्य कृत्संज्ञाया 'नेड् वशी'ति इण्निषेधः, 'एधेरन्' इत्यत्र च कृदन्तत्वेन प्रातिपदिकान्तत्वात् 'नलोपः प्रातिपदिकान्तस्य' इति नलोपः स्यात् । न चावयवस्य कार्ये समुदायो यत्र पर्युदस्यते तत्र समुदायवाचकपदस्य अवयवपरत्वं भवति, यथा—'नश्छव्यः प्रशान्' इत्यत्र प्रशान्शब्दपर्युदासेन तदवयवनकारस्य न रुत्वमित्यर्थः, तथा प्रकृतेऽपि 'तिङन्ततदाद्यवयवप्रत्ययभिन्नप्रत्ययस्य कृत्संज्ञा' इत्यर्थेन तिङः कृत्संज्ञाया अभावेन न पूर्वोक्तदूषणमिति वाच्यम्; 'नश्छव्यः प्रशान्' इत्यत्र प्रशान्रूपनकारस्यासम्भवेन सामानाधिकरण्यासम्भवात् पर्युदासकरणसामर्थ्याच्च तत्र तदवयवपरत्वसम्भवेऽपि अत्र तदवयवपरत्वे मानाभावादिति सुष्ठूक्तं तदन्तविध्यापत्तिरिति बोध्यम् ।

**अदोषादिति** । ननु—निषेधीयसाक्षादुद्देश्यत्वेऽपि संज्ञीयसाक्षादुद्देश्यत्वं नास्तीत्यरुचेराह—**संज्ञानिष्ठेत्यादिः** । वस्तुतस्तु—परिभाषायां साक्षान्निवेशस्य न फलम्, प्राचां मते आवृत्तिसामर्थ्यात्, नव्यमते च प्रत्ययमात्रेऽर्थवत्त्वाभावेन प्रत्ययग्रहणस्य सामर्थ्यात् तत्र तदन्तविधिसिद्धेः । कृत्तद्धिते'ति सूत्रे तदादिविशेष्यकतदन्तविधेरनया निषेधेऽपि अर्थवद्विशेष्यक तदन्तविधेर्निष्प्रत्यूहत्वात् ।

**यत्नविशेषमाश्रित्येति** । 'परौ तरप्तमपौ घः' इति न्यासरूपमिति तदर्थः । कस्मात् परावित्याकाङ्क्षाया 'प्रकृतेः परौ' इत्यर्थेन 'प्रत्ययग्रहणे चापञ्चम्याः' इति निषेधादिति भावः । **योगविभागादिलाघवेन चेति** । पृथग्योगकरणाभावरूपलाघवेनेति तदर्थः ।

**न दोष इति** । 'अशुक्ले वस्त्रे शुक्ले समपद्येतां, शुक्ल्यास्तां वस्त्रे' इत्यत्र शीभावात्पूर्वमेव लुगिति न दोषः । **ज्ञापकान्न तदन्तविधिरिति** । एवं 'सुडनपुंसकस्य, एकवचनं सम्बुद्धिः' इत्यपि न तत्फले; एकवचनान्तस्य सम्बुद्धिसंज्ञायां सोस्तदभावेन सम्बुद्धिपरतो दीर्घप्राप्त्याऽसम्बुद्धाविति पर्युदासात् सम्बुद्धिसंज्ञायां न तदन्तविधिः । एवं सुडन्तस्य सर्वनामस्थानसंज्ञायां तत्रासम्बुद्धाविति पर्युदासान्न तदन्तविधिः । किञ्च—सूत्रान्तर्गतानामेवेयं संज्ञेति न सा तदन्तस्य । एवं 'गत्युत्तमो वा' इति ज्ञापकान्न 'तिङः स्त्रीणि त्रीणी'त्यत्र तदन्तविधिः । एवम्—अष्टनो

ननु 'अवतप्ते नकुलस्थितमि'त्यादौ नकुलस्थितशब्दस्य क्तान्तत्वाभावात्समासो न स्यादत आह—

## कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ॥ २८ ॥

अस्याश्च कर्मणि क्तान्त उत्तरपदेऽनन्तरो गतिः प्रकृतिस्वर इत्यर्थके 'गतिरनन्तर' इति सूत्रेऽनन्तरग्रहणं ज्ञापकम्। 'तद्धि'अभ्युद्धृतमि'त्यादावतिव्याप्तिवारणार्थम् । 'प्रत्ययग्रहण'परिभाषयोद्धृतस्य क्तान्तत्वाभावादेवाप्राप्तौ तद्व्यर्थं सदस्या ज्ञापकम् ।

न 'चाभ्युद्धृतमित्यादौ परत्वाद् 'गतिर्गताचि'त्यनेनाभेर्निघात एवेति वाच्यम्; पादादिस्थत्वेन पदात्परत्वाभावेन च तदप्राप्तेः। अनन्तरग्रहणे कृते तु तत्सामर्थ्याद् गत्याक्षिप्तधातुनिरूपितमेवानन्तर्यं गृह्यत इति न दोषः।

न 'चाभ्युद्धृतमि'त्यादावभिना समासेऽनन्तरस्योदः पूर्वपदत्वाभावेऽपि

---

स्वयमूहनीयम् । अत्र 'एतन्निषेधसामर्थ्यादेव प्रदेशेष्वपि न तदन्तविधिरि'ति क्वाचित्कः प्रक्षिप्तः पाठः, न चेत्याद्यग्रिमशंकानुत्थानप्रसङ्गादिति संक्षेपः ॥ २७ ॥

पादादिस्थत्वेन पदात्परत्वाभावेन चेति। चो हेतौ, यस्माद्धेतोः पदात्परत्वाभावोऽतः पादादित्वं तेनेत्यर्थो न तु 'गतिर्गताचि'त्यस्याप्राप्तौ द्वितीयो हेतुरयम्, पदादित्यस्य 'कुत्सने च सुपी'त्यतः प्रागेव निवृत्तेः।

---

दीर्घादि'ति ज्ञापकाद्विभक्तिसंज्ञाऽपि न तदन्तस्य। शानचष्टेरेत्ववारणाय तिङीत्यनुवर्त्य 'तिङ्रूपात्मनेपदानां टेरेत्वमि'त्यर्थकस्य 'टित आत्मनेपदानां टेरे' इत्यस्य वैयर्थ्यापत्त्याऽऽत्मनेपदसंज्ञाऽपि न तदन्तस्य। 'भवतेरः' इति निर्देशात् सार्वधातुकसंज्ञा न तदन्तस्य। तदपवादत्वाच्चार्धधातुकसंज्ञाऽपि न तदन्तस्य। 'नेड्वशी'त्यारम्भात् कृत्संज्ञा न तदन्तस्य। एवं 'तौ सत्, चुट्, षः प्रत्ययस्य' इत्येतेषां त्रयाणां बोधक एव प्रवृत्तौ तेषां प्रत्ययमात्रवृत्तिविषयताप्रयोजकत्वाभावान्न दोषः। तदेतदाह—स्वयमूहनीयमिति।

परे तु—प्रकृतपरिभाषाया सत्त्वे फलाभावेऽसत्त्वे दोषाभावेऽपि तत्फलानां ज्ञापनेन प्रकारान्तरेण वा निर्वाहे गौरवादस्या आश्रयणमेव वरम्, परिभाषासत्त्वे जायमानदोषाणामुद्धारितत्वेन अदोषादिति वदन्ति ॥ २७ ॥

चो हेताविति। इदं चिन्त्यम्—राजपुरुषादिवाक्ये पदात्परत्वाभावेऽपि पादादिस्थत्वाभावेन तादृशव्याप्तेर्व्यभिचारात्। तस्मात् पादादिस्थत्वेनेत्येव युक्तम्।

मूले—पूर्वपदत्वाभावेऽपीति। नन्वनन्तरग्रहणसामर्थ्यात् कल्पनाकरणस्याऽऽवश्यकत्वेन पूर्वकल्पनायास्त्यागेन पूर्वपदानाक्षेपरूपकल्पनाकरणमन्याय्यमिति चेन्न। परिभाषा-

यत्र गतिकारकसमभिव्याहृतं कृदन्तं तत्र कृद्ग्रहणे तद्विशिष्टस्यैव ग्रहणम्, अतिशब्दात्तदसमभिव्याहृतस्य केवलस्यापीति तदर्थः । अन्यथाऽनया कृद्ग्रहण-विषये परत्वात् 'प्रत्ययग्रहण' परिभाषाया बाध एव स्यादित्यपि ग्रहणम् ।

अत एव 'साङ्कूटिनमि' ति 'गतिकारकोपपदानामि' ति 'कृद्ग्रहण' इति च परिभाषाभ्यां कृदन्तेन समासे कृते विशिष्टादेवाणि सिद्ध्यति, न तु 'संकौटिन-मि'तीति 'पुंयोगादि' ति सूत्रे भाष्योक्तं सङ्गच्छते, अन्यथा तत्र केवल'कूटिन्नि' त्येतस्यापीनुणन्तत्वात्ततोऽणि पाक्षिकदोषो दुर्वार एव स्यात् ।

स्पष्टं चेदं सर्वं 'समासेऽनञ्पूर्वे' इति सूत्रे भाष्य-कैयटयोः । 'गतिरनन्तर' इत्यत्र तु गतेः पूर्वपदस्य क्तान्त उत्तरपदे परे कार्यविधानात्तत्समवधानेऽपि केवलस्य क्तान्तत्वेन ग्रहणं बोध्यम् ।

इयं च कृद्विशेषग्रहणे कृत्सामान्यग्रहणे च, न तु

---

केचित्तु—'अहीने द्वितीये'ति सूत्रे 'ऽनुपसर्ग इति वक्तव्यमि'ति वार्तिकमस्यां ज्ञापकम्; अन्यथा 'सुखप्राप्त' इत्यत्र प्राप्तशब्दस्य क्तान्तत्वाभावादेव तदप्राप्तावनुपसर्ग इत्यस्य वैयर्थ्यापत्तिरिति प्राहुः ।

परत्वादिति । अपवादत्वादित्यर्थः ।

केचित्त—'प्रत्ययग्रहण' परिभाषाया अङ्गसंज्ञासूत्रस्थत्वेन 'कृद्ग्रहण'परि-भाषाया 'गतिरनन्तर' इति सूत्रस्थत्वेनास्याः परत्वादित्यर्थः । प्रत्ययग्रहणपरिभाषाया अवकाश 'उपगोरपत्यम्, औपगवः'. इत्यत्र तद्धितान्तत्वात्प्रातिपदिकत्वम् । अस्याश्च 'व्यावक्रोशी'त्यवकाशोऽत्र 'णचः स्त्रियामञि'त्यञिगतिपूर्वस्य णजन्तत्वाद् वृद्धि-स्वरौ भवतः । 'प्रत्ययग्रहण'परिभाषायाश्च नात्र विषयः; स्त्रीप्रत्यये तदप्रवृत्तेः, पूर्व-मुपपादितत्वादिति प्राहुः ।

कृद्विशेषग्रहणे कृत्सामान्यग्रहणे चेति । विशेषग्रहणे इत्यस्य 'अवतप्ते नकुलस्थित-

---

अनुपसर्जनाधिकारज्ञापिततदन्तविधेः प्रयोजनकथनावसरे 'कुम्भकारेयोऽध्यापयेत, इत्याद्युक्तं सङ्गतमि'ति मूलोक्तं समीचीनमिति । तन्न; प्रत्ययविधौ उक्तन्यायप्रवृत्तावपि उक्तभाष्यविरोधा-भावात् । इत एवारुचेः 'घनं, वनमि'ति दूषणदानोत्तरं 'दश दाडिमानि, षडपूपाः' इत्याद्यनर्थक-वाक्ये दूषणदानात् । 'कुम्भकारेयोऽध्यापयेते'त्यस्यायमाशयः—कुम्भकारीशब्दात् इवार्थे कनि तस्य मनुष्यलुपि कुम्भकारीव मनुष्य इत्यर्थे स्त्रीप्रत्ययान्तस्योपसर्जनत्वेन तदादिविधौ विशिष्टस्य, स्त्रीप्रत्ययान्ततदादित्वाभावेन कारीशब्दादेव ढके उक्तरूपमापद्येत । तथा च भाष्ये 'कदाचिदुक्तरूपमापद्येत' इत्यस्य उपसर्जनत्वे इत्यर्थः । एवञ्च विरोधाभावेन 'साङ्कू-टिनमि'त्यस्यान्यथासिध्या मूलोक्तक्लेशो वृथैवेति दिक् ।

कृदकृद्ग्रहण इति 'अनुपसर्जनादि'ति सूत्रे भाष्ये स्पष्टम् ॥ २८ ॥

## पदाङ्गाधिकारे तस्य च तदन्तस्य च ॥ २९ ॥



पदमङ्गं च विशेष्यं विशेषणेन च तदन्तविधिः । 'येन विधि'रित्यस्यायं प्रपञ्चः, ते'नेष्टकचितं, पक्वेष्टकचितमि' त्यादा 'विष्टकेषीकामालानां चिते'ति 'ह्रस्वो, महान् , परममहान् , परमातिमहानि'त्यादौ 'सान्तमहत' इति दीर्घश्च सिद्धः । अत एव तदुत्तरपदस्येति पाठोऽयुक्त इति भाष्ये स्पष्टम् ।

अत्र पदशब्देनोत्तरपदाधिकारः, केवलपदाधिकारश्च ।

'पादस्य पदाज्याती'त्यत्र न तदन्तग्रहणं, लक्ष्यानुरोधादिति सर्वं 'येन विधिरि'त्यत्र भाष्ये स्पष्टम् ॥ २९ ॥

नन्वेव 'मस्यापत्यामिरि' त्यादावदन्तप्रातिपदिकाभावादिञ् न स्यादत आह–

---

मि'ति फलम् , सामान्यग्रहणे कर्तृकरणे इति सूत्रेण 'नखनिर्भिन्न' इत्यत्र समाससिद्धिः फलं बोध्यमित्यन्यत्र विस्तरः ॥ २८ ॥

पदमङ्गं च विशेष्यमिति । एतयोः पदयोर्विशेष्यत्वमेवेति तात्पर्यग्राहिका परिभाषेयमिति भावः । पदपदं—पदघटितपरं, ते 'नेष्टके'त्यादौ पदघटितस्य पूर्वपदस्य विशेष्यत्वात्तदन्तविधिना 'पक्वेष्टकचितमि'त्यत्र ह्रस्वसिद्धिः । अत एवेति । 'परमातिमहानि'त्यत्र दीर्घप्रवृत्तेरेवेत्यर्थः ।

केवलपदाधिकार इति । तेन 'परमानडुद्भ्यामि'त्यस्य सिद्धिरित्यन्यत्र विस्तरः ॥ २९ ॥

अदन्तप्रातिपदिकाभावादिति । अयम्भावः—स्वघटकत्व-स्वघटकपूर्वत्वाभाववत्त्व-स्वघटकोत्तरत्वैतत्त्रितयसम्बन्धेन स्वविशिष्टत्वं स्वनिरूपितान्तत्वम् , एवं स्वघट-

---

मूले—कृदकृद्ग्रहण इतीति । तेन 'प्रधासः, प्रजुगुप्सति' इत्यादौ तदादिनियमेन समुदायस्य ञिदन्तनिदन्ततदादित्वाभावेन प्रघटकाकारस्य 'ञ्नित्यादेरि'त्यादिना नोदात्तत्वम् । 'बहुसुरागिणी' इत्यत्र इनः स्त्रियामिति कप् च न । 'हरिभक्तिः, सुभक्तिरि'त्यादौ च भकाराकारस्यैव स्वर इति बोध्यम् ।

मूले—भाष्ये स्पष्टमिति । तत्र तदन्तविधिप्रयोजनकथनावसरे 'कुम्भकारी, नगरकारी' इत्यत्र विशिष्टाद्यथा स्यादवयवान्मा भूदिति नैतदस्ति प्रयोजनम् । कृद्ग्रहणपरिभाषयाऽप्येतत्सिध्यति, न सिध्यति कृद्ग्रहण इत्युच्यते । न चैतत् कृद्ग्रहणं कृदकृद्ग्रहणमेतत् , कृदप्यण् तद्धितोऽपि" इत्युक्तम् ॥ २८ ॥

पाणिनिमतमाह—अयंभाव इत्यादिना—सूत्रयाञ्चकारेत्यन्तेन । अत्रेदं तत्त्वम्—

कत्व-स्वघटकोत्तरत्वाभाववत्त्व—स्वघटकपूर्वत्वैतत्त्रितयसम्बन्धेन स्वविशिष्टत्वं—स्वादित्वमित्याद्यन्तपदार्थयोः स्वीकरणीयतया 'इरि'त्यादावदन्तप्रातिपदिकत्वाभावात्प्रत्ययादित्वाभावाच्चेत्स्वराद्यनापत्तिरित्यभिप्रेत्य सूत्रकार 'आद्यन्तवदेकस्मिन्नि'ति सूत्रयाञ्चकार। वार्तिककारस्तु – आद्यन्तपदार्थयोः पूर्वत्वपरत्वे अनिवेश्य 'इरि' त्यादावाद्यन्तत्वयोरास्येन निर्वाहे 'आद्यन्तवदि'ति सूत्रं प्रत्याचख्यौ 'अपूर्वानुत्तरलक्षणत्वादाद्यन्तयोः सिद्धमेकस्मिन्नि'ति वार्तिकनिरूपणेन ।

आदित्वान्तत्वे सूत्रकारमते समुदायघटकयत्किञ्चिन्निरूपितपूर्वत्वपरत्वयोः सत्त्वे एव 'भवत, इत्याभ्यामि'त्यादौ केवलाकारे तदसम्भवात्तदर्थमाद्यन्तवत्सूत्रारम्भः,'इयाय' इत्यादौ केवले इधातावेकाज्घटितत्वं स्वत एवेति सूत्रकृतस्तात्पर्यम् । घटकत्वञ्च सूत्रकृन्मते — स्वनिष्ठविषयित्वसम्बन्धावच्छिन्नव्याप्यतानिरूपितविषयित्वसम्बन्धावच्छिन्नव्यापकताश्रयत्वम् । एवं स्वनिष्ठविषयित्वसम्बन्धावच्छिन्नव्यापकतानिरूपितविषयित्वसम्बन्धावच्छिन्नव्याप्यताश्रयत्वं घटितत्वम् । स्वपदेन च यन्निरूपिते घटकत्व-घटितत्वे चिकीर्षिते तस्य ग्रहणम्, स्वाधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्वं व्यापकत्वम । स्वाभावाधिकरणनिरूपितवृत्तित्वाभाववत्त्वं व्याप्यत्वम् । व्यापकत्वलक्षणे स्वपदेन व्याप्यो ग्राह्यः, व्याप्यत्वलक्षणे च स्वपदेन व्यापकस्य ग्रहणम् । येन सम्बन्धेन वृत्तिता स सम्बन्धो व्याप्यतावच्छेदकः, अधिकरणता च यत्सम्बन्धावच्छिन्ना स व्यापकतावच्छेदकसम्बन्धः । विषयि = ज्ञानम् , विषयः = पदार्थः, स च विषयित्वसम्बन्धेन ज्ञाने इति विषयित्वसम्बन्धोऽवच्छेदकः । एवञ्च विषयित्वसम्बन्धेन रेफाभावाधिकरणं 'पटः' इत्याकारकं ज्ञानम्, तन्निरूपितवृत्तित्वं पटे, अवृत्तित्वं रामशब्दे इति लक्षणसमन्वयः । स्वम्—रामशब्दः, विषयितासम्बन्धेन तदधिकरणं 'राम.' इति ज्ञानम्, तद्वृत्त्यत्यन्ताभावो 'घटो नास्ति पटो नास्ती'त्याकारको घटपटाद्यत्यन्ताभावः तत्प्रतियोगित्वं—घटपटादौ, अप्रतियोगित्वं रेफे इति लक्षणसमन्वयः । एवमसहायेऽपि स्वस्मिन् स्वनिरूपितव्याप्यत्वव्यापकत्वयोः सत्त्वेन घटकत्व-घटितत्वेऽतिदेशमन्तरैव सिद्धे ; परं स्वघटकोत्तरत्व स्वघटकपूर्वत्वयोरभावेनान्तत्वादित्वयोरतिदेशाय सूत्रारम्भः ।

वार्तिककारमतेऽपि सूत्रकृदुक्ते एव घटकत्व-घटितत्वलक्षणे परमादित्वान्तत्वलक्षणे च भिन्ने; तदाह—वार्तिककारस्त्विति । एतन्मते आदित्वान्तत्वयोः समुदायघटकयत्किञ्चिन्निरूपितपूर्वत्वोत्तरत्वयोः अनपेक्षतया 'आभ्यामि'त्यादौ एकस्मिन्नपि स्वस्मिन् स्वव्याप्यत्व-स्वव्यापकत्वयोः सत्त्वेन स्वघटकत्वेन स्वघटकावधिकपूर्वत्वाभावात् स्वघटकावधिकोत्तरत्वाभावाच्चादित्वान्तत्वयोः सिद्धौ तदर्थं कृतं सूत्रमप्रयोजकमिति तात्पर्यम् ।

अत्र सूत्रकारमते स्वघटकावधिकोत्तरत्वादेरतिदेशः, भाष्यकारमते स्वघटकत्वस्य; अन्यसम्बन्धस्तु मुख्य एव । वार्तिककृन्मते सर्वेषामनतिदेशत्वमेवेति सूक्ष्मदर्शिभिरवगन्तव्यम् । एवं वार्तिककृन्मते एकस्मिन्नपि मध्यमत्वं स्वत एव । मध्यमत्वञ्च तन्मते — समुदायविशिष्टत्वम्; वै०— स्वघटकत्व-स्वविशिष्टभिन्नत्व स्वविशिष्टभिन्नत्वैतत्त्रितयसम्बन्धेन । सम्बन्धघटकप्रथमवै०— स्वघटकावधिकपूर्वत्व-स्वघटकावधिकोत्तरत्वाभाववत्त्वोभयसम्बन्धेन । द्वितीय वै०—स्वघटकावधिकोत्तरत्व-स्वघटकावधिकपूर्वत्वाभाववत्त्वोभयसम्बन्धेन; लक्षणसमन्वयः स्वयमूहनीयः । फलाभावाच्च न विचारितमिदं व्याख्याकृतेति बोध्यम् ।

# व्यपदेशिवदेकस्मिन् ॥ ३० ॥

निमित्तसद्भावाद्विशिष्टोऽपदेशो मुख्यो व्यवहारो यस्यास्ति स व्यपदेशी ।

---

भाष्यकारस्तु—इरि'त्यादौ कथं चिन्निर्वाहेऽपि 'धुगि'त्यादावसहाये घटकत्वस्य कथमप्यसम्भवेन सूत्रवार्तिककारयोः स्थूलदर्शित्वमुपदर्शयन सामान्यतः परिभाषया दोषनिकरं निराकुर्वन्नाह—व्यपदेशिवदिति ।

आद्यन्तलक्षणे तु वार्तिककृदुक्ते एव भाष्यकृदभिमते । नन्वेवमादित्वस्वीकारे कुम्भशब्दे ककारमकाररूपवर्णद्वयस्यादित्वापत्त्यैकहलादित्वाभावेनोदकुम्भ' इत्यादा-'वेकहलादा'वित्युदादेशानापत्तिः, भवति च ककारमकाररूपवर्णद्वयस्य स्वं कुम्भशब्द-स्तद्घटकत्वं स्वघटकोत्तरत्वाभाववत्त्वञ्चेत्युभयसम्बन्धेन कुम्भशब्दविशिष्टत्वमिति चेन्न । स्वघटकविशिष्टसंख्याभाववत्त्वरूपतृतीयसम्बन्धस्याद्यन्तत्वयोर्लक्षणे निवेशेना-दोषात । वैशिष्ट्यञ्च संख्यायाम्—स्वपूर्ववृत्तित्व-स्वोत्तरवृत्तित्वोभयसम्बन्धेन, तेन ककारमकारयोर्निरुक्तोभयसम्बन्धेनोकारविशिष्टद्वित्वसंख्यावत्त्वेन तत्त्वाभावान्न दोषः । एवमन्तत्वलक्षणेऽप्यूहनीयम् ।

न च 'धुगि'त्यादौ घटकत्वस्याऽपि लोकत एव सिद्धेः परिभाषा व्यर्थैव, न वा सूत्रवार्तिककारयोः स्थूलदर्शित्वमिति वाच्यम्; घटकत्वस्य स्वव्यापकत्व-स्वव्याप्यत्वाभाववत्त्वोभयसम्बन्धेन स्वविशिष्टत्वरूपतया स्वस्मिन् स्वव्यापक-त्वेऽपि स्वव्याप्यत्वाभावरूपद्वितीयसम्बन्धाभावेन स्वस्य स्वघटकत्वासम्भवात् । व्याप्यव्यापकभावश्च विषयितासम्बन्धेन ज्ञानरूपमधिकरणमादाय बोध्यः । एवं घटितत्वमपि विषयितासम्बन्धेन स्वव्याप्यत्व-स्वव्यापकत्वाभाववत्त्वोभयसम्बन्धेन स्वविशिष्टत्वरूपं बोध्यम् । न च 'येन विधिरि'त्यत्र 'स्वस्य चे'त्युक्तेरस्यापि तेनैव सिद्धेरवतरणासङ्गतिरिति वाच्यम्; 'स्वस्य चे' त्यस्यैतत्परिभाषामूलकत्वेनावतरण-काले तदज्ञानेन तत्सङ्गतेः सुवचत्वादित्यन्यत्र विस्तरः ।

एकस्मिन्=असहाये । निमित्तसद्भावात्=वर्णसमभिव्याहाररूपसहायसत्त्वात् । विशिष्टोऽपदेशो=मुख्यो व्यवहारः, तद्विशिष्टेन तुल्यं कार्यं कर्तव्यमिति शेषः;

---

भाष्यमतमाह—भाष्यकारस्त्विति । अत्र मते—आदित्वमध्यमत्वान्तत्वलक्षणानि वार्तिककृन्मतोक्तान्येव; परं घटकत्व-घटितत्वलक्षणे भिन्ने एव । तन्मतेऽसहाये घटकत्व-घटि-तत्वे न स्तः । तथा च 'इरि'त्यादौ सूत्रकृन्मते निर्वाहेऽपि 'इयाये'त्यादौ एकाज्घटितत्वव्यवहारो न स्यादित्येतदर्थं परिभाषाया आवश्यकत्वेन तयैव 'आभ्यामि'त्यादावपि सिद्धौ व्यापकत्वात् परिभाषैवाऽऽश्रिता भाष्यकारेण । युक्ततरञ्चैतत्—लोके स्वस्मिन् स्वघटकत्व स्वघटितत्वव्यवहारस्य भाक्तस्यैव प्रसिद्ध्या सूत्रवार्तिकयोर्मते स्वस्मिन् स्वघटकत्व-स्वघटितत्वव्यवहारस्य मुख्यत्वा-पत्त्या लोकविरोधापातात्; अत आह—इरित्यादाविति ।

स्वस्य चेत्यस्यैतत्परिभाषामूलकत्वेनेति । इदं कैयटमतेन । तन्मते हि व्यपदे

यस्तु व्यपदेशहेत्वभावादविद्यमानव्यपदेशोऽसहायः स तेन तुल्यं वर्तते, कार्यं प्रतीत्येकस्मिन्नसहायेऽपि तत्कार्यं कर्तव्यमित्यर्थः । तेनाकारस्याप्यदन्तत्वान्न क्षतिः ।

**एकस्मिन्नित्युक्ते सभासन्नयनेन आकारस्य नादित्वं दरिद्राधातावाकारस्य नान्तत्वम् ; अन्यथा सभासन्नयने 'भव' इत्यर्थे 'वृद्धाच्छः' दरिद्रातेरिवर्णान्तलक्षणोऽच्च स्यात् । अत एव 'हरिष्वि'त्यादौ सोः पदत्वं न, लोकेऽपि बहुपुत्रसत्त्वे नैकस्मिन् ज्येष्ठकनिष्ठत्वादिव्यवहारो 'ऽयं मे ज्येष्ठः, कनिष्ठो, मध्यम' इति, किं त्वेकपुत्रसत्त्व एव ।**

**अनेन चाशास्त्रीयस्याप्यतिदेशः । अत एव 'इयाये'त्यादावेकाच्त्वनिब-**

---

'तेन तुल्यमि'ति वतिः । वस्तुतस्तु—व्यपदेशिवदिति 'तत्र' तस्येवेति सप्तम्यन्ताद्वतिः ।

**असहायत्वञ्च**—मुख्यधर्मवदघटितत्वं, मुख्यधर्मवदघटकत्वं, मुख्यधर्मवदसमभिव्याहृतत्वं चेति त्रितयरूपं बोध्यम्, मुख्यधर्मश्चारोप्यमाणो धर्मः । तथा च सभासन्नयनशब्दे भासन्नयनवृत्तिवृद्धत्वं, भासन्नयनशब्दस्य समर्थप्रातिपदिकत्वं, सभ्शब्दे वृद्धित्वस्यानतिदेशेन सभासन्नयनशब्दस्य वृद्धत्वं च नेति त्रयाणां क्रमेण फलानि बोध्यानि । एवं दरिद्राधातावपि त्रयाणां फलान्येकत्र बोध्यानि । **किन्त्वेकपुत्रसत्त्व एवेति** । बहुपुत्रसत्त्वे तस्य ससहायत्वादिति भावः । अनेनास्य न्यायस्य लौकिकत्वं सूचितम् ; स्पष्टं चेदं भाष्येऽपि ।

**अत एव**=अस्य न्यायस्य लौकिकत्वेनाशास्त्रीयधर्मातिदेशे प्रवृत्तेरेव ।

---

शिवद्भावोऽप्रातिपदिकेनेत्यस्य सूत्रोपात्तान्तादिविषयकत्वाद् 'रौणी'त्यत्र केवलेऽण् प्रकृतिमात्रफलकस्य स्वस्य चेत्यस्य 'व्यपदेशिवदेकस्मिन्नि'त्येतदनतिरिक्तत्वयैतदवतरणत्वे तदवतरणत्वानतिरेकात् । नागेशमते च तत्र 'पूर्णादिनि', सपूर्वाच्चे'त्येकयोग एव कर्तव्ये पृथग्योगकरणमस्यां ज्ञापकमित्युक्तम् । सूत्रोपात्तान्तादिविषयत्वे तु तत्रान्तादिपदाभावाद्धर्मिग्राहकमानविरोधः स्फुट एव । ततश्च व्यपदेशिवद्भावस्यानया निषेधे रौण्यर्थे स्वस्य चेत्यस्यापूर्वत्वे प्रकृते तेनैव सिद्धौ अग्रदनिति प्रकृतपरिभाषायाः फलं बोध्यम् । तत्राग्रान्तशुद्धेत्यादिना दत्रादेशो न स्यादिति बोध्यम् ।

यद्वा—स्वस्य चेत्यस्यापूर्वत्वे सिद्धे 'उत्सर्गसमानदेशा अपवादाः' इति न्यायेन व्यपदेशिद्भावोऽप्रातिपदिकेनेत्यस्य गृह्यमाणे प्रातिपदिके एव प्रवृत्त्या तत्प्रतिप्रसवस्यास्यापूर्वस्य स्वस्य चेत्यस्यापि तादृशस्थले एव प्रवृत्तेः सिद्धतया 'अत इञ्' इत्यत्र च आनुपूर्व्यवच्छिन्नविषयताप्रयोजकेत्यर्थकगृह्यमाणप्रातिपदिकत्वाभावात् तस्याप्राप्तौ प्रकृतपरिभाषयैव अस्यापत्यमित्यत्र इञ् विधेय इति तन्मतेनापि तस्यावतरणत्वं युक्तमिति बोध्यम् ।

तृतीयान्ताद्वतिस्वीकारे आद्यन्तवदिति सूत्रस्थशेखरग्रन्थविरोधः स्यादत आह—**वस्तुतस्त्विति** ।

**अशास्त्रीयधर्मेति** । शास्त्रीयत्वञ्च—शास्त्रसङ्केतितावच्छेदकधर्मत्वम् । अच्त्वस्य अन्तत्वादिस्वयोश्च तथात्वेपि **एकाच्त्वस्यातथात्वेन** अशास्त्रीयस्याऽप्यनयातिदेशः सिद्ध्यति ।

न्धनद्वित्वसिद्धिः। अत एव 'भवती'त्यादौ 'भू' इत्यस्याङ्गत्वम्, 'इयानि'-त्यादौ कार्यकालपक्षे तद्धितान्तत्वनिबन्धनप्रातिपदिकत्वं च सिद्ध्यति; अन्यथा यस्माद्विहितस्तदादित्वाभावान्न स्यात्।

यत्तु—योऽर्थवांस्तत्रार्थस्य त्यागोपादानाभ्यामेकाज्व्यपदेशो, य'थेयाये' त्यादावर्थवतो धातोरयं वर्णरूप एकोऽजिति कैयटः। तन्न; त'स्यैकपदा ऋगि' त्यत्र भाष्योक्तरीत्या मुख्यव्यवहारसत्त्वात्। 'एकपदा ऋगि'त्यत्र 'अर्थेन युक्तो व्यपदेश' इति भाष्ये उक्तम्; ऋक्त्वादेरर्थशब्दोभयवृत्तित्वेन तस्याः शब्द-मात्ररूपं पदमेकोऽवयव इत्यर्थ इति तदाशयः।

तस्मादेकस्मिंस्मतत्तद्धर्मारोपेण युगपद्यथा ज्येष्ठत्वादिव्यवहारो, यथा च 'शिलापुत्रकस्य शरीरमि'त्यादावेकस्मिन्नारोपितानेकावस्थाभिः समुदायरूपत्वा-द्यारोपे'णैतस्य शरीरमि'त्यादिव्यवहारस्तथाऽत्रैकाच्त्वादिव्यवहारोपपत्तिरिति लोकन्यायसिद्धेयम्।

न चासहाय एवैतत्प्रवृत्तौ 'भवती'त्यत्र 'भू' इत्यस्याङ्गत्वानापत्तिः, ससहायत्वादिति वाच्यम्; शपमादायाङ्गत्वे कार्ये यस्माद्विहितस्तदादित्वे तस्य ससहायत्वाभावाल्लोके विजातीयकन्यादिसत्त्वेऽप्येकपुत्रस्य तस्मिन्ने'-वायमेव ज्येष्ठ' इत्यादिव्यवहारवत्।

न चैवं 'निजौ चत्वार एकाच' इति भाष्यासङ्गतिः, इकारस्यासहायत्वा-भावेन तत्रैकाच्त्वानुपपादनादिति वाच्यम्; 'एकस्मिन्नि'त्यस्यापर्यालोचनया तत्प्रवृत्तेः।

---

कार्यकालेति। यथोद्देशे तु स्थानिवत्त्वेनापि तत्सिद्धम्। अन्यथा = अस्य न्यायस्याशास्त्रीयधर्मातिदेशेऽप्रवृत्तिस्वीकारे।

'आद्यन्त'सूत्रस्थकैयटोक्तमनुवदति—यत्त्विति। अर्थवतो धातोरिति। तत्तच्छब्द-फलव्यापारैतत्त्रितयारब्धसमुदायरूपस्येत्यर्थः। वर्णरूप इति। न चैकाजितिबहुव्रीहि-सत्त्वात्पुनरेतदनुपपन्नेमेवेति वाच्यम्; धातोर्निरुक्तत्रितयारब्धसमुदायरूपत्वेन तत्तद्वर्ण-फलव्यापारान्यतरैतद्द्वयारब्धसमुदायरूपे तदवयवे एकाज्व्यपदेशकरणे बाधकाभावात्। मुख्यव्यवहारसत्त्वादिति। तथोपपादने गौणत्वाभावेन लोकदृष्टान्तविरोध इति भावः। अर्थमाश्रित्य यो व्यवहारः स मुख्य एवेत्यत्र भाष्यं प्रमाणयति—एकपदेति। तथा च यत्र मुख्यव्यवहारो नास्ति, स एतद्विषय इति भावः।

ज्येष्ठत्वादीति। आदिना मध्यमत्व-कनिष्ठत्वसंग्रहः।

इकारस्यासहायत्वाभावेनेति। एकाच्त्वरूपमुख्यधर्मवद्घटकत्वादिति भावः।

'अर्थवता व्यपदेशिवद्भाव' इत्यत्रार्थवत्पदेनाप्यसहायत्वमुपलक्ष्यते; अर्थबोधकेन शब्देन व्यपदेशिसदृशो भावः कार्यं लभ्यत इति तदर्थः । प्रायोऽसहाय एवार्थवत्त्वात् ।

'कुरुते' इत्यादौ 'तशब्दाकारोऽचामन्त्य' इति व्यवहारे 'स आदिर्यस्ये'ति व्यवहारे चासहाय एवेति तत्र व्यपदेशिवद्भावेन टिसंज्ञासिद्धिरित्यन्यत्र विस्तरः ॥ ३० ॥

---

अन्यत्र विस्तर इति । उद्द्योतादावित्यर्थः । वस्तुतस्तु—अनया परिभाषया स्वस्मिन स्वघटकत्व-स्वघटितत्वे एवातिदिश्येते । एकस्मिन्घटकत्वव्यवहारप्रयोजकीभूतस्वव्यापकत्वरूपैकसम्बन्धवति एवं घटितत्वव्यवहारप्रयोजकीभूतस्वव्याप्यत्वरूपैकसम्बन्धवति च व्यपदेशिवत् घटकत्वघटितत्वव्यवहारप्रयोजकीभूततत्तदुभयसम्बन्धरूपवैशिष्ट्यवतीव कार्यं घटकत्वघटितत्वव्यवहाररूपं भवतीत्यर्थः । अत एव 'निजौ चत्वार एकाच' इति भाष्यं स्वरसत उपपद्यते । नागेशोक्तं तु पूर्वोक्तं सर्वमयुक्तमेव, रामशब्दस्यासहायत्वेन जराशब्दत्वादेशापत्तेः । न च स्वस्मिन् स्वमुखप्रविष्टधर्मस्यैवानेनातिदेशः, यथा—अशब्दे, स्वम्—अशब्दः मुखे प्रविष्टो यस्यैवंभूतस्य अकारान्तत्वाकारादित्वधर्मस्यैवातिदेशो न जराशब्दत्वादेः, एवं 'धुगि'त्यादिधातौ धात्ववयवत्वादेरतिदेश इति न काऽप्यनुपपत्तिरिति वाच्यम्; एकस्मिन्पुत्रे ज्येष्ठत्वाद्यतिदेशानापत्तेः; कुम्भशब्दादिककाररूपहलि हल्द्वयघटितत्वातिदेशेन विशिष्टस्यैकहलादित्वानापत्तेः, केवलेऽकारेऽजव्यवहितपूर्वत्वापत्त्या यणाद्या-

---

मूलकृदभिमतं परिभाषार्थं खण्डयन्नाह—वस्तुतस्त्वनयेति । अत्रार्थे प्रमाणन्तु—वक्ष्यमाणं "निजौ चत्वार" इति भाष्यमेव; तदाह—भाष्यं स्वरसत उपपद्यत इति । एतन्मते 'एकस्मिन्नि'त्यस्य असहाये इत्यर्थाभावेन परिभाषाप्रवृत्तिः सुकरा । तथा चानया परिभाषयां इकारमात्रे स्वघटितत्वातिदेशेनैकाच्त्वात् "निजौ चत्वार एकाच" इति न भाष्यासङ्गतिः । त्वन्मते एकदेशयुक्तिविकल्पने गौरवमिति भावः ।

यस्यैवंभूतस्येति । आरोप्यमाणो यो मुख्यधर्मस्तन्मुखप्रविष्टधर्मोऽत्वादिरूपस्तद्वत्त्वस्य तत्र स्वतः सिद्धत्वे एवानया परिभाषयाऽऽरोपो भवतीति यावत् । ज्येष्ठत्वाद्यतिदेशानापत्तेरिति । ननु तत्रापि मुख्यधर्ममुखप्रविष्टधर्मस्य पितृनिष्ठजनकतानिरूपितजन्यताश्रयत्वरूपस्य स्वतःसिद्धतया तद्घटितस्य ज्येष्ठत्वस्यातिदेशः सुलभ इत्यरुचेराह—कुम्भशब्दादिति । एकहलादित्वानापत्तेरिति । तथा सति 'उदकुम्भ' इत्यादौ उदादेशानापत्तिः, लोकसिद्धया अनया परिभाषया अशास्त्रीयेऽपि कार्ये प्रवृत्तेरिति भावः । एतेन—एकहलादित्वानापत्तिरित्यापत्तिदानमयुक्तम्, कार्यप्रवृत्तये एव तत्प्रवृत्तेरित्युक्तं कैश्चित् परास्तम् ।

अत्र केचित्—सूत्रस्यैकपदप्रतिपाद्यस्यैव धर्मस्यानया अतिदेशो भवतीति स्वीकुर्वन्ति, तेन केवलेकारेऽजव्यवहितपूर्वत्वातिदेशेन यणापत्तिरपि न; अन्यथा 'दधि, मधु' इत्यादौ व्यावृत्तये

पत्तेः, 'भू-धुगि'त्यादौ दुह् शब्दस्य मुख्यधर्मवद्भूधात्ववयवसमभिव्याहृतत्वेन मुख्यधर्मवदकारादिघटितत्वेन च 'दुह्' इत्यस्यासहायत्वाभावाद्धात्ववयवत्वानतिदेशेन भष्भावानापत्तेश्च। मम त्वेतत्सर्वमाञ्जस्येनैवोपपद्यते। न च घटकत्व घटितत्वमात्रातिदेशे एकपुत्रसत्त्वे 'ऽयं मे ज्येष्ठ' इत्यादिव्यवहारो न स्यादिति वाच्यम्; घटकत्वघटितत्वमात्रातिदेशेनैव ज्येष्ठत्वादिव्यवहारस्य सुपपादत्वात्।

स्वज्येष्ठपुत्रत्वञ्च—स्वपुत्रसमुदायविशिष्टत्वं; वैशिष्ट्यञ्च—स्वघटकत्व-स्वघटकोत्पत्त्युत्तरकालिकोत्पत्तिकत्वाभाववत्त्वोभयसम्बन्धेन। एवं कनिष्ठपुत्रत्वम्—स्वपुत्रसमुदायविशिष्टत्वम्; वैशिष्ट्यञ्च—स्वघटकत्व-स्वघटकोत्पत्तिपूर्वकालिकोत्पत्तिकत्वाभाववत्त्वोभयसम्बन्धेन। लक्षणसमन्वयस्तु स्वयमूहनीयः। मध्यमत्वञ्च—स्वाभाववत्त्व-स्वाभाववत्त्व-स्वघटकत्वैतत्त्रितयसम्बन्धेन निरुक्तपुत्रसमुदायविशिष्टत्वम्। आद्ये—अभावीयप्रतियोगितावच्छेदकसम्बन्धौ च—स्वघटकोत्पत्तिपूर्वकालिकोत्पत्तिकत्व-स्वघटकोत्पत्त्युत्तरकालिकोत्पत्तिकत्वाभाववत्त्वोभयरूपौ। द्वितीये तु तौ—स्वघटकोत्पत्त्युत्तरकालिकोत्पत्तिकत्व-स्वघटकोत्पत्तिपूर्वकालिकोत्पत्तिकत्वाभाववत्त्वोभयरूपौ। यत्र 'क ख-ग' नामानस्त्रयः पुत्रा देवदत्तस्य, तत्र 'ख' पुत्रे निरुक्तपुत्रसमुदाय-

---

क्रियमाणमजुग्रहणमनया परिभाषया तत्राप्यजव्यवहितपूर्वत्वातिदेशे व्यर्थमेव स्यादित्यरुचेराह—भू-धुगित्यादाविति।

भष्भावानापत्तेश्चेति। अत्र नागेशानुयायिनः—'धुगि'त्यत्र झश्निष्ठचरमावयवतानिरूपकत्वसमानाधिकरणबश्निष्ठावयवतानिरूपकत्वसमानाधिकरणं यद्धातुत्वं तस्य मुख्यधर्मत्वेन विवक्षितत्वात्। तादृशधर्मवत्त्वस्य च 'दुघ्' इत्यत्र कस्मिन्नप्यवयवेऽभावेन समुदायस्यासहायत्वात्। 'भू धुगि'त्यत्र दोषदानमप्यनुचितम्, असहायपदार्थे समभिव्याहारस्य 'हे राम, ऐः कृतमि'त्यत्र मुख्यधर्मादन्तत्ववद्रामशब्दसमभिव्याहृतत्वादसहायत्वाभावेन अदन्तत्वानतिदेशेनैत्वोऽनापत्तिवारणार्थं नियतपौर्वापर्यरूपत्वस्य स्वीकारावश्यकत्वात्। एवञ्च रामशब्दे जराशब्दत्वातिदेशो न; जराग्रहणवैयर्थ्यापत्तेः। 'हे निर्जर, रामाय' इत्यत्र तु न चारितार्थ्यम्; नियतपौर्वापर्याभावात्, मुखप्रविष्टस्य च तत्र सिद्धत्वाभावाच्चेति वदन्ति। तन्न समीचीनम्; राजन्शब्देऽनन्तमघवन्शब्दत्वातिदेशेन रेफस्य सम्प्रसारणापत्तेः। न चानया सूत्रस्थैकपदप्रतिपाद्यस्यैवातिदेश इति वाच्यम्; 'धुगि'त्यत्र शुद्धधात्ववयवत्वस्य सूत्रस्थैकपदप्रतिपाद्यत्वेऽपि आरोपानापत्तेः, ससहायत्वात् झश्निष्ठचरमावयवतानिरूपकेत्यादिप्रागुक्तधर्मस्य सूत्रस्थैकपदप्रतिपाद्यत्वाभावाच्चातिदेशानापत्तेः। किञ्च—'भवती'त्यत्र भूशब्दे तदादित्वस्यैकपदप्रतिपाद्यत्वेऽपि ससहायत्वादारोपानापत्तिः, शब्व्यवहितपूर्वत्वसमानाधिकरणतदादित्वारोपेऽसहायत्वेऽपि तस्य सूत्रस्थैकपदप्रतिपाद्यत्वाभावेन तदारोपानापत्तेः, धातौ धातुभेदस्यारोपापत्तेश्च।

यत्तु—अत्र विजयाकाराः—स्वविशिष्टे स्वस्यातिदेश इति परिभाषार्थः; वै०—स्वाश्रयाघटकत्व-स्वाश्रयासमभिव्याहृतत्व-स्वाश्रयाघटितत्व-स्वमुखप्रविष्टधर्मवत्त्वैतच्चतुष्टसम्बन्धेन। मुखप्रविष्टत्वञ्च — स्वघटकनिष्ठावयवत्वव्याप्यधर्मावच्छिन्नविशेष्यतानिरूपितप्रकारतावच्छेदकत्वम्, तेन रामशब्दे न जरात्वातिदेशः। न च धातौ धातुभिन्नत्वातिदेशः; 'धुगि'त्यत्र च तादात्म्येन धात्ववयवस्यैव अतिदेशः सिद्ध्यति। एतेन—इकारादावजव्यवहितपूर्वत्वातिदेशेन यणापत्तिः,

घटक 'क' पुत्रोत्पत्त्युत्तरकालिकोत्पत्तिकत्वेनान्त्यसम्बन्धसत्त्वेऽपि 'एकसत्त्वेऽपि द्वयं नास्ती'ति रीत्योभयसम्बन्धावच्छिन्नप्रतियोगिताकाऽऽद्यस्वाभाववत्त्वम्, एवं स्वघटक 'ग' पुत्रोत्पत्तिपूर्वकालिकोत्पत्तिकत्वेन तदभावरूपैतत्सम्बन्धाभावेनापरसम्बन्धसत्त्वेऽप्युभयसम्बन्धावच्छिन्नप्रतियोगिताकद्वितीयस्वाभाववत्त्वं स्वघटकत्वञ्चेति सम्बन्धत्रयेण पुत्रसमुदायविशिष्टत्वान्मध्यमपुत्रत्वलक्षणसमन्वयः । एकपुत्रसत्त्वे तु स्वाभाववत्त्वरूपसम्बन्धद्वयस्य विद्यमानतया केवलस्वघटकत्वमात्रातिदेशेन मध्यमत्वव्यवहारोऽपि सूपपद्यत इति दिक् ॥ ३० ॥

---

'धुगि'त्यादौ धात्ववयवत्ववद्दकारघटितत्वेन ससहायत्वादतिदेशानापत्तिश्चेति केषाञ्चिद्दृशा निरस्ता; आद्ये मुख्यप्रविष्टधर्माभावात्, एकपदप्रतिपाद्यस्य पूर्वं वाच्यघटितस्यैव धर्मस्यातिदेश इत्यर्थस्यातिदेशमात्रस्वभावसिद्धत्वाच्च, इदानीमतिदिश्यमानधर्मवदघटितत्वस्य अनिवेशाद् द्वितीयापत्तेरप्यभावाच्चेति । तदप्यसमीचीनम्; स्वाश्रयाघटितत्वस्यानिवेशे 'बलरामेणे'त्यत्र समासपूर्वावयवत्वरूपपूर्वपदत्वस्य 'बलरामे' इत्यत्रातिदेशेन प्रातिपदिकान्तेति वैकल्पिकणत्वापत्तेः । स्वम्-पूर्वपदत्वं, तदाश्रयो बलशब्दस्तदघटकत्वम्, एवं स्वाश्रयासमभिव्याहृतत्वं तद्घटकनिष्ठा याऽवयवत्वावच्छिन्ना विशेष्यता तन्निरूपितप्रकारतावच्छेदकत्वं समासत्वे, तद्वत्त्वस्य च 'बलरामे' इत्यत्र सत्त्वेन दोषसत्त्वात् । तन्निवेशे च 'धुगि'त्यत्र दोष इति उभयतः पाशारज्जुपातात् । किञ्च— एकपदप्रतिपाद्यस्यैवातिदेश इत्यपि न; तत्र पूर्वदोषस्य उक्तत्वात् । अनितीति अन् विच् वशब्देन वरुणवाचकेन अन्शब्दस्य समासे 'वान्' इत्यत्रान्नन्तमघवन्शब्दत्वस्यातिदेशेन श्वन्निति वस्य सम्प्रसाणापत्तेश्चेत्यास्तां तावत् परदोषनिरीक्षणेन ।

ननु घटकत्वघटितत्वमात्रातिदेशे 'इः + इयानि'त्यत्र तद्धितान्ततदादित्वानतिदेशेन प्रातिपदिकसंज्ञानापत्तिरिति चेन्न । 'अ + अस् + इ' इत्यवस्थायां तद्धितान्ततदादित्वस्य सत्त्वेन तस्य सुपो लुकि आनुमानिकस्थानिवद्भावेन तत्रापि सुलभत्वात् । एवमेव 'व्यतिसे' इत्यत्रापि बोध्यम् ।

मूले—शपमादायाऽङ्गत्वे कार्ये यस्माद्विहितस्तदादित्वे तस्य ससहायत्वाभावादिति । ननु प्रकृतिनिष्ठाऽऽदितानिरूपकसमुदायत्वमेव तदादित्वम् । तद्रूपमुख्यधर्मवान् भू अ इति भू अति वा, तद्घटकत्वमेव 'भू' इत्यस्येति ससहायत्वमेवेति ससहायत्वाभावादिति मूलकारोक्तिः कथं सङ्गच्छत इति चेत्सत्यम् । शबव्यवहितपूर्वत्वसमानाधिकरणतदादित्वारोपे ससहायत्वाभावादिति तात्पर्यात्, एकपदाप्रतिपाद्यस्यापि अनयाऽतिदेशो भवत्येवेति प्रागेवोक्तत्वात् ।

सूपपद्यत इति दिगिति । अत्रेदं चिन्तनीयम्—'क ख ग घ ङ' नामानः पञ्च पुत्राः सन्ति, तज्ज्येष्ठपुत्रत्व खसंज्ञकेऽपि स्यात्, तथा हि—पुत्रसमुदायपदेन पञ्चानां पुत्राणां मध्ये मध्यस्थत्रयाणां समुदायग्रहणे खसंज्ञकस्य स्वघटकत्वात् स्वघटकौ गघौ, तदुत्पत्त्युत्तरकालिकोत्पत्तिकत्वाभाववत्त्वमपीति स्वघटकोत्पत्त्युत्तरकालिकोत्पत्तिकत्वस्यापि सत्त्वात् ।

एतेन—'स्वजन्यघटितत्व-स्वाजन्याघटितत्वैतदुभयसम्बन्धेन पितृविशिष्टविशिष्टत्वं ज्येष्ठत्वमि'त्यादिविजयाकारोक्तलक्षणमपि परास्तम्; जन्यत्वस्य सामान्यतः प्रवेशे विजातीयकन्यासत्त्वे असहाये ज्येष्ठत्वादिव्यवहाराभावप्रसङ्गाच्च । तस्माद् भाष्यवार्तिककारयोर्मते पितृविशिष्टत्वं ज्येष्ठत्वम् । वै०—स्वनिष्ठजनकतानिरूपितपुंस्त्वसमानाधिकरणजन्यताश्रयमात्रारब्धसमुदायघटकत्व-स्वनिष्ठजनकतानिरूपितपुंस्त्वसमानाधिकरणजन्यताश्रयोत्पत्त्युत्तरकालिकोत्पत्तिकत्वाभाववत्त्वैतदुभय-

ननु गर्गादिभ्यो विहितो यञ् तदन्तविधिना परमगर्गादिभ्योऽपि स्यादत आह—

## ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति ॥ ३१ ॥

इयं च 'समासप्रत्ययविधौ प्रतिषेध उगिद्वर्णग्रहणवर्जमि'ति वार्तिकस्थप्रत्य-

---

तदन्तविधिनेति। प्रातिपदिकस्य विशेष्यत्वा'त्तेन विधिरि'त्यनेनेत्यर्थः। ग्रहणवता प्रातिपदिकेनेति। ग्रहणवत्प्रातिपदिकप्रयोज्यं तदन्तकर्मकं ग्रहणं नेति परिभाषार्थः। इयं चोक्तप्रातिपदिकस्य विशेष्यत्वे तात्पर्यग्राहिका। ग्रहणवत्प्रातिपदिकत्वञ्च—उगिद्ग्रहणभिन्नत्वे सति वर्णग्रहणभिन्नत्वे सति प्रत्ययग्रहणभिन्नत्व, तेन 'उगितश्च' 'अत इञ्, यञिञोश्चे'त्यादौ नैतत्प्रवृत्तिः।

वस्तुतस्तु—उगिद्ग्रहणभिन्नत्वेत्यस्य न फलम्, 'उगितश्चे'त्यादावनुपसर्जनाधिकारेण स्त्रीप्रत्ययमात्रे तदन्तविधेर्ज्ञापनात्।

---

सम्बन्धेन। एवं पितृविशिष्टत्वं कनिष्ठत्वम्। वै०—स्वनिष्ठजनकतानिरूपितपुंस्त्वसमानाधिकरणजन्यताश्रयमात्रारब्धसमुदायघटकत्व—स्वनिष्ठजनकतानिरूपितपुंस्त्वसमानाधिकरणजन्यताश्रयोत्पत्तिपूर्वकालिकोत्पत्तिकत्वाभाववत्त्वैतदुभयसम्बन्धेन। एवम्—पितृविशिष्टत्वं मध्यमत्वम्, वै०—स्वनिष्ठजनकतानिरूपितपुंस्त्वसमानाधिकरणजन्यताश्रयमात्रारब्धसमुदायघटकत्व स्वाभाववत्त्व स्वाभाववत्त्वैतत्त्रितयसम्बन्धेन। प्रथमे—अभावीयप्रतियोगितायाश्च स्वनिष्ठजनकतानिरूपितपुंस्त्वसमानाधिकरणजन्यताश्रयोत्पत्तिपूर्वकालिकत्वाभाववत्त्व-स्वनिष्ठजनकतानिरूपितपुंस्त्वसमानाधिकरणजन्यताश्रयोत्पत्त्युत्तरकालिकत्वैतदुभयसम्बन्धेन। द्वितीये—अभावीयप्रतियोगिता च स्वनिष्ठजनकतानिरूपितपुंस्त्वसमानाधिकरणजन्यताश्रयोत्पत्तिपूर्वकालिकत्व-स्वनिष्ठजनकतानिरूपितपुंस्त्वसमानाधिकरणजन्यताश्रयोत्पत्त्युत्तरकालिकोत्पत्तिकत्वाभाववत्त्वैतदुभयसम्बन्धेन। लक्षणसमन्वयः व्याख्याकृदुक्तरीत्या स्वयमूहनीयः।

अत्र लक्षणे पूर्वमुक्तत्रितयारब्धसमुदायमादाय 'ख' संज्ञकस्य न ज्येष्ठत्वापत्तिः, तादृशजन्यताश्रयपुत्रोत्पत्त्युत्तरकालिकोत्पत्तिकत्वस्यैव तस्मिन् सत्त्वात्, तत्र सामान्याभावस्य निवेशेन तादृशोत्पत्तिकत्वे सति तादृशोत्पत्तिकत्वाभावस्य असम्भवादित्येवं सर्वत्रोह्यमित्यलम् ॥ ३० ॥

तदन्तविधिप्रस्तावादाह—मूले—नन्विति।

स्त्रीप्रत्ययमात्रे तदन्तविधेर्ज्ञापनादिति। स्त्रीप्रत्ययमात्रे इति सामान्यतो ज्ञापने 'क्रौड्यादिभ्यश्च, दैवयज्ञी'इत्यादेस्तदन्तर्गतत्वेन तत्रापि तदन्तविध्यापत्तेः, अनुपसर्जनाधिकारे तदन्तविधिरिति ज्ञापनेन तस्य चारितार्थ्यसम्भवात्। 'शूद्रा चामहत्पूर्वा' इत्यस्य तु टाब्विधौ तदन्तविधिज्ञापनेन चारितार्थ्यान्न प्रकृते तेनापि तदन्तविधिः। एवञ्च प्रकृतेऽनुपसर्जनाधिकारान्तर्गतत्वेन टापोऽविधायकत्वेन च 'उगितश्च' इत्यस्य तदन्तविध्यप्राप्तौ तत्प्राप्त्यर्थं उगिद्भिन्नत्वेत्यस्याऽऽवश्यकत्वात्।

यांशानुवादः । अत एवायं प्रत्ययविधिविषय एव । अत एव 'येन विधिरि'ति सूत्र-भाष्ये प्रत्ययविधिभिन्ने 'ऽस्तृन्नित्यादौ गृह्यमाणप्रातिपदिकेनापि तदन्तविधिप्रतिपादनं, 'स्वसा, परमस्वसे'त्याद्युदाहरणं च सङ्गच्छते ।

---

यत्तु—प्रातिपदिकत्वव्याप्यधर्मावच्छिन्नबोधकत्वं गृह्यमाणप्रातिपदिकत्वमिति । तन्न; 'द्व्यच' इत्यादेर्द्व्यच्त्वस्य प्रातिपदिकत्वव्याप्यत्वाभावेन निषेधाप्रवृत्त्या तदन्तविधावनेकाद्यपि प्रवृत्त्यापत्तेः । न च प्रातिपदिकमात्रवृत्तिविषयताप्रयोजकत्वं तत्त्वम्; अत इञि'त्यादेरपि तथात्वेन तदन्तविधिनिषेधापत्तेः न च सिद्धान्ते 'अस्मायामेधे'त्यादावसन्तादित्यर्थानापत्तिरिति वाच्यम्; असपदस्य प्रत्ययबोधकत्वेनोक्तप्रातिपदिकत्वाभावात । प्रत्ययमात्रग्रहणभिन्नत्वमिति निवेशे तु न मानम् ।

प्रत्ययविधिविषय एवेति । तत्त्वञ्च—प्रत्ययविशिष्टविधायकत्वे सति प्रत्ययाधिकारपठितत्वम्; वैशिष्ट्यञ्च—स्वतादात्म्य-स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वान्यतरसम्बन्धेन । 'गर्गादिभ्यो यञि'त्यादौ तादात्म्येन प्रत्ययविशिष्टविधायकत्वात् 'नान्तादसंख्यादेरि'त्यादौ प्रत्ययनिष्ठोद्देश्यतानिरूपितविधेयताश्रयमडागम-

---

प्रत्ययबोधकत्वेनोक्तप्रातिपदिकत्वाभावादिति । प्रत्ययवृत्तिविषयताप्रयोजकत्वं प्रत्ययबोधकत्वमिति असोऽपि तादृशत्वेन प्रत्ययग्रहणभिन्नत्वाभावेन तदन्तविधिः सिद्ध्यति । "नौद्व्यचष्ठन्, द्व्यचः, वृद्धाच्छः' इत्येतेषु द्व्यजादिपदानां प्रत्ययवृत्तिविषयताप्रयोजकत्वाभावेन न तदन्तविधिरिति भावः ।

**प्रत्ययमात्रग्रहणभिन्नत्वनिवेशे तु न मानमिति** । अत्र केचित्—प्रत्ययमात्रग्रहणभिन्नत्वमवश्यं निवेशनीयम्; अन्यथा अशब्दादाचारक्विपि शवुले अल्लोपे च 'अक' इति स्थिते, ततः स्त्रीत्वविवक्षायां टापि 'अके'ति जाते तस्य प्रत्ययरूपत्वाद् द्व्यच्त्वाच्च प्रातिपदिकार्थेन सहान्वययोग्यत्वाच्च द्व्यच्पदस्यापि प्रत्ययवृत्तिविषयताप्रयोजकत्वेन गृह्यमाणप्रातिपदिकत्वाभावेन द्व्यजन्तादप्यापत्तेः । एवं 'वृद्धाच्छः' इत्यत्र तदन्तविधौ ग्लुचुकायनिशब्दादपि छः स्यात्, वृद्धसंज्ञकाऽऽयनिप्रत्ययान्तत्वात् ।

यत्तु—अशब्दात् 'चरती'त्यर्थे ठकि ठस्येकि 'यस्ये'ति लोपे 'टिड्ढाणञ०' इति ङीपि इकीति जाते, तस्य द्व्यच्त्वात् प्रत्ययवृत्तिविषयताप्रयोजकत्वमिति । तत्तुच्छम्; 'इकी'त्यत्र स्थाकारस्य लोपेन ङीप्प्रत्ययान्तत्वेन च समुदायस्य प्रत्ययवृत्तिविषयताप्रयोजकत्वाभावात् । 'अके'-त्यत्र तु सवर्णदीर्घत्वात् पूर्वान्तवद्भावेन प्रत्ययरूपत्वात्तत्त्वम् । एवञ्च 'असु-क्षेपणे' इत्यस्मात् क्विपि 'असि'त्यस्य प्रत्ययमात्रवृत्तिविषयताप्रयोजकत्वाभावेन 'अस्माय' इत्यत्र तदन्तविधिनिषेधः स्यात्, तन्निवारणायासादिभिन्नत्वमपि निवेशनीयम् ।

यद्वा—'असमासे निष्कादिभ्यः' इति असमासग्रहणेन परिभाषाऽनित्यत्वेन वा न दोष इति वदन्ति । तन्न; 'प्रत्ययमात्रग्रहणभिन्नत्वमि'त्यत्र मात्रपदनिवेशे फलाभावात् । 'द्व्यच' इत्यत्र तदन्तविध्यभावस्तु रुक्मिणीशब्दस्य द्व्यजन्तत्वादेव सिद्धे पुनश्शुभ्रादिगणपाठकरणसामर्थ्यात् सिद्धः ।

अत एव च तदन्तविधिसूत्रे भाष्ये समासेत्यादिनिषेधस्य कथनवदस्य न कथनम् । सोऽपि निषेधो विशिष्य तत्तद्रूपेण गृहीतप्रातिपदिकसूत्र एव । ध्वनितं चेद'मसमासे निष्कादिभ्य' इति सूत्रे भाष्ये ।

अत्र च ज्ञापकं 'सपूर्वाच्चे'ति सूत्रम् ; अन्यथा 'पूर्वादिनिरि'त्यत्र तदन्तविधिनैव सिद्धे किं तेन ॥ ३१ ॥

---

विधाय क्त्वात्प्रत्ययविधित्वम् । प्रत्ययाधिकारपठितत्वमात्रोक्तौ—'त्वमान्ते'त्यादावपि प्रत्ययविधित्वेन व्यपदेशिवद्भावोऽप्रातिपदिकेनेति निषेधा'दग्रदन्नि'त्यस्यासिद्धयापत्तेः, वक्ष्यमाणपरिभाषाया अपि प्रत्ययविधिविषयत्व एव प्रवृत्तेः ।

सोऽपि निषेध इति । प्रत्ययविधौ प्रतिषेध इत्यर्थः । विशिष्येत्यस्यार्थमाह—तत्तद्रूपेणेति । उगिद्वर्णग्रहणाभिन्नमित्येतन्निषेधबोधितेनोगिद्ग्रहणभिन्नत्वे सतीत्यादिपूर्वोक्तरूपेणेत्यर्थः ॥ ३१ ॥

---

यदपि – 'द्व्यचः' इति सामर्थ्यादेव तदन्तविधिर्न भविष्यतीति । तदपि न ; अनेकाजिति न्यासे गौरवात् 'बह्वच' इति सूत्रयितुमशक्यम्, द्व्यचस्तस्याप्राप्तेः । अच इत्यप्यशक्यम् । एकाच्कस्यापि प्राप्तेः । न च 'नौद्व्यचष्ठन्' इत्यत्र तदन्तविधिना द्व्यजन्तादित्यर्थः स्यादिति वाच्यम् ; तत्र नौशब्दस्य गृह्यमाणप्रातिपदिकत्वेन विशेष्यत्वे तदर्थग्राहिकयाऽनया नौशब्दस्य विशेष्यत्वे सिद्धे द्वन्द्वे साहित्यस्याऽऽवश्यकत्वेन तदर्थं द्व्यच्पदस्यापि विशेष्यत्वस्यावश्यकत्वेन तस्मिन् कल्पिते द्व्यच्पदस्य विशेषणत्वाभावेन 'येन विधिरि'त्यनेन तदन्तविधेरप्राप्तेः ।

यद्वा – रुक्मिणीशब्दस्य शुभ्रादिगणे पाठकरणसामर्थ्यात् सर्वत्र द्व्यच्पदेन तदन्तविधिर्नेति सामान्यतो ज्ञापनेन द्व्यच्पदस्य विशेष्यत्वकल्पनेन द्वन्द्वोत्पादकसाहित्यानुपपत्त्या नौशब्दस्यापि विशेष्यत्वकरणेनादोषात् । एवं 'वृद्धाच्छः' इत्यत्रापि वृद्धान्तात् प्रातिपदिकादित्यर्थो न भवति ; गहादिगणे उत्तमशाखैकशाख-समानशाखादीनां पाठसामर्थ्यात्तत्र तदन्तविधिनिषेधात् । एवञ्च 'प्रत्ययग्रहणभिन्नत्वमि'त्यस्य प्रत्ययमात्रग्रहणभिन्नत्वमित्यर्थे न मानमिति बोध्यम् ।

वस्तुतस्तु—प्रत्ययमात्रग्रहणभिन्नत्वमित्याकारकनिवेशे अनुपसर्जनाधिकारेण तदन्तविधिज्ञापनपरं भाष्यमेव मानम् ; अन्यथा अशब्दात्तस्येदमित्यर्थेऽणि अल्लोपे च 'अण्'रूपप्रातिपदिकस्य सत्त्वेन तस्य च प्रत्ययवृत्तिविषयताप्रयोजकत्वात् गृह्यमाणप्रातिपदिकत्वाभावेन प्रकृतपरिभाषया तदन्तविधेरनिषेधेन तदन्तविधिनोपसर्जनत्वेऽपि प्रासङ्गिकवारणार्थत्वेन अनुपसर्जनादित्यस्य चारितार्थ्यात्तेन तदन्तविधिज्ञापनं भाष्योक्तमसङ्गतं स्यात् ।

अन्ये तु – वर्णग्रहणभिन्नत्वेत्यादिनिवेशे गौरवात् प्रातिपदिकत्वव्याप्यधर्मावच्छिन्नविषयताप्रयोजकत्वं—गृह्यमाणप्रातिपदिकत्वम् ; प्रत्ययोगिद्वर्णादिनिष्ठधर्मस्य प्रातिपदिकत्वव्याप्यत्वाभावेन न तेषु दोषः । व्याप्यत्वञ्च – तदभाववदवृत्तित्वम्, प्रातिपदिकत्वाभाववत्प्रत्ययादिनिरूपितवृत्तिताया' प्रत्ययादिषु सत्त्वात् सिद्धस्तेषु व्याप्यत्वाभावः । नौद्व्यचः, द्व्यचः, वृद्धाच्छः' इत्यादिषु तु पूर्वोक्तरीत्या समाधेयमिति वदन्ति ।

**नन्वेवं 'सूत्रान्ताट्ठक्, दशान्ताड्ड, एकगोपूर्वादि'त्यादेः केवलसूत्रशब्द-दशनशब्दैकशब्दादिष्वपि प्रवृत्तिर्व्यपदेशिवद्भावात्स्यादत आह—**

---

एकशब्देति । वस्तुतस्त्विदमयुक्तं, पूर्वत्वादिघटितधर्मस्य व्यपदेशिवद्भावेनानतिदेशात्; अन्यथा इक्यप्यजव्यवहितपूर्वत्वातिदेशेन यणापत्तिः ।

---

परे तु—स्वसमानाधिकरणोपस्थितीयविषयताप्रयोज्यत्व-स्वानधिकरणवृत्त्यानुपूर्व्यनवच्छिन्नोपस्थितीयविषयताप्रयोज्यत्वाभाववत्त्वोभयसम्बन्धेन प्रातिपदिकत्वविशिष्टाऽर्थवत्त्वव्याप्या या शाब्दबोधीया विषयता तत्प्रयोजकत्वं—गृह्यमाणप्रातिपदिकत्वं स्वीकुर्वन्ति । तथा हि-असत्वावच्छिन्नविषयताया अर्थवत्त्वाभाववत्प्रयसशब्दस्थासनिरूपितवृत्तित्वस्य सत्त्वेनार्थवत्त्वाव्याप्यत्वाद् गृह्यमाणप्रातिपदिकत्वाभावेन न तदन्तविधिः । प्रत्ययभिन्नत्वे सतीत्यादेरुदाहरणं 'यञिञोश्च' इति ज्ञेयम्, तत्र यञ्त्वावच्छिन्नविषयतायाः प्रातिपदिकत्वसमानाधिकरणोपस्थितीयविषयताप्रयोज्यत्वाभावेन तदभावः । अशब्दादपत्यार्थके इञि यस्येति लोपे च केवलावशिष्टस्य इकारस्य प्रातिपदिकत्वेन इञ्त्वावच्छिन्नविषयतायाः प्रातिपदिकत्वसमानाधिकरणोपस्थितीयविषयताप्रयोज्यत्वेऽपि, प्रातिपदिकत्वानधिकरणदाक्षिस्थेकारवृत्त्यानुपूर्व्यनवच्छिन्नोपस्थितीयविषयताप्रयोज्यत्वस्यैव सत्त्वात् प्रयोज्यत्वाभाववत्त्वरूपद्वितीयसम्बन्धविरहेण उभयसम्बन्धेन प्रातिपदिकत्वविशिष्टत्वाभावाद् गृह्यमाणप्रातिपदिकत्वाभाव इति । उगिद्भिन्नत्वे सतीत्यस्योदाहरणन्तु— उगितश्चेति । तत्र उगित्वावच्छिन्नविषयतायाः सर्वनामसंज्ञकस्य भवच्छब्दस्योगित्त्वात् प्रातिपदिकत्वेन प्रथमसम्बन्धसत्त्वेऽपि प्रातिपदिकत्वानधिकरणशतृवृत्त्यानुपूर्व्यनवच्छिन्नोपस्थितीयविषयताप्रयोज्यत्वसत्त्वेन द्वितीयसम्बन्धविरहान्न गृह्यमाणप्रातिपदिकत्वमिति । वर्णभिन्नत्वे सतीत्यस्य उदाहरणन्तु—अत इञ् इति । तत्र वासुदेवापरपर्यायभूताऽशब्दनिष्ठशाब्दबोधीयविषयतायाः प्रथमसम्बन्धसत्त्वेऽपि प्रातिपदिकत्वानधिकरणरामशब्दघटकाकारवृत्त्यानुपूर्व्यनवच्छिन्नोपस्थितीयविषयताप्रयोज्यत्वस्यैव सत्त्वेन द्वितीयसम्बन्धविरहान्न गृह्यमाणप्रातिपदिकत्वम् । नन्वेवं द्व्यच्त्वावच्छिन्नविषयताया अपि दत्ताशब्दस्य प्रातिपदिकत्वेन द्व्यच्त्वेन च प्रथमसम्बन्धवत्त्वा अपि प्रातिपदिकत्वानधिकरणाकारवृत्त्यानुपूर्व्यनवच्छिन्नोपस्थितीयविषयताप्रयोज्यत्वेन द्वितीयसम्बन्धाभावाद् गृह्यमाणप्रातिपदिकत्वाभाव इति चेत्सत्यम् । तत्र रथिनणीशब्दपाठसामर्थ्यात् इति पूर्वोक्तरीत्या समाधेयम् । द्रोश्चेत्यत्र—द्रुत्वावच्छिन्नविषयताया 'द्रुद्रु-गतौ' इति धाताववि सत्त्वेन प्रातिपदिकत्वानधिकरणवृत्तित्वेऽपि आनुपूर्व्यवच्छिन्नत्वेन द्वितीयसम्बन्धविरहाद् गृह्यमाणप्रातिपदिकत्वाभावेन तदन्तविधिनिषेध इति सर्वत्र दोषपरिहार इति प्राहुः ।

अत्र मते—सर्वत्र सम्बन्धविशिष्टा विषयता शाब्दबोधीया ग्राह्या । सा च सर्वत्रोपस्थितिविषयताप्रयोज्यैवेति सर्वतन्त्रसिद्धान्तः । तद्वर्णोत्तरं तद्वर्णत्वम्—आनुपूर्वीत्वमिति उक्त्याहारान्तर्गतवर्णेत्संज्ञकार्थकोगितो नकारेत्संज्ञकेकारार्थकेऽभ्र तथात्वाभावेन तदवच्छिन्नविषयताया आनुपूर्व्यनवच्छिन्नत्वं स्फुटमेव । एवमेव द्व्यच्पदस्यापि द्व्यज्घटितसमुदायार्थकत्वेन तदवच्छिन्नविषयताया अपि आनुपूर्व्यनवच्छिन्नत्वे विरोधाभावः । पूर्वोक्तप्रातिपदिकत्वव्याप्येत्यादिस्वीकारे तु पूर्वोक्ताकाररूपप्रातिपदिकस्य वृद्धशब्दस्य गृह्यमाणप्रातिपदिकत्वाभावेन तदन्तविधिर्दुर्निवार्य इति बोध्यम् ॥ २१ ॥

## व्यपदेशिवद्भावोऽप्रातिपदिकेन ॥ ३२ ॥

'पूर्वात्सपूर्वादिनिरि'त्ये कयोगे एव कर्तव्ये पृथग्योगकरणमस्या ज्ञापकम् । न 'चेष्टादिभ्य' इति सूत्रेऽनुवृत्त्यर्थं तथा पाठः, अत एव 'वानिष्टी'त्यादि-सिद्धिरिति वाच्यम् ; ज्ञापकपरभाष्यप्रामाण्ये 'नानिष्टी' त्यादिप्रयोगाणाम-निष्टत्वात् , एकयोगेऽपि तावत उत्तरत्रानुवृत्तौ बाधकाभावाच्च ।

---

पूर्वात्सपूर्वादिति । न च कैयटोक्तरीत्या सूत्रोपात्तान्तादिशब्दे एवैतत्प्रवृत्त्या कथमेतज्ज्ञापकम् , सूत्रेऽन्तादिपदोपादाने एतत्प्रवृत्तिस्वीकारादेव 'रौण' इत्यादौ व्यपदेशिवद्भावेन रोणीशब्दान्तत्वादणादिसिद्धिः; अन्यथा, अनया निषेधाद्व्यपदेशि-वद्भावाप्रवृत्त्या तदनापत्तिरिति वाच्यम् ; तत्रत्यान्तादिशब्दस्यावयववाचकपरत्वेना-दोषात । न च 'पूर्वी'त्यस्यासिद्धिः, सपूर्वकत्वस्य पूर्वशब्दे पूर्ववदनतिदेशादिति वाच्य-म् ; अस्य ग्रन्थस्य 'पूर्वान्तादिनिरि'त्येकयोग एव कर्तव्ये योगद्वयकरणमस्य ज्ञापकमि-त्याशयात् । न 'कृतपूर्वी'त्यत्र सूत्रस्य चारितार्थ्येन 'पूर्वी'त्यत्रासामर्थ्यादिन्यनापत्तिः, 'पूर्वादिनिरि'ति योगविभागे तु सामर्थ्यादसामर्थ्येऽपि तत्प्रवृत्तेरिति वाच्यम् ; इष्टादिषु पूर्वशब्दं निवेश्य 'इष्टाद्यन्तेभ्य इनिरि'त्यनेनैव 'कृतपूर्वी'त्यादिसिद्धौ पूर्वा-न्तादिति पृथग्योगकरणेनासामर्थ्येऽप्येतत्प्रवृत्तेरुक्तरूपद्वयसिद्धौ पृथग्योगकरणस्य ज्ञापकत्वे बाधकाभावात् । 'कृतपूर्वी'त्यत्राप्यसामर्थ्याविशेषात्सूत्रवैयर्थ्येनासामर्थ्येऽ-प्येतत्प्रवृत्तेरावश्यकत्वेनोक्तज्ञापकस्य सुस्थत्वाच्च ।

ग्रन्थतत्त्वविदस्तु—एकयोगे इति ग्रन्थस्य 'गणे पूर्वान्त' इति प्रपठ्य 'इष्टादिभ्य इनिरि'त्येवरूपे एकस्मिन् योगे कर्तव्ये इष्टादिभ्य इत्यतः पृथक् भिन्नं पूर्वात्सपूर्वा-दिति योगयोः करणं 'पूर्वादिनिः सपूर्वाच्चे'त्येवंरूपमस्या ज्ञापकमित्यर्थो, न तु 'पूर्वात्सपूर्वादिनिरि'त्येवंरूपे एकयोगे इत्यर्थः । एकयोगेऽपीति । इष्टादिभ्य इति

---

कैयटोक्तरीत्येति । एतत्तत्त्वं प्रागेवाभिहितम् । पूर्वान्तादिनिरिति । एतदेवाभि-प्रेत्य सूत्रोपात्तान्तादिशब्दविषय एव प्रकृतपरिभाषायाः प्रवृत्तिरिति कैयटेनोक्तमित्यवगन्तव्यम् ।

सुस्थत्वाच्चेति । नन्वेवमपि पूर्वात् सपूर्वादिनिरित्येकयोग एव कर्तव्ये इति मूलग्रन्था-सङ्गतिः, 'यत्तर्हि योगविभागं करोति, इतरथा हि पूर्वात् सपूर्वादिनिरित्येव ब्रूयादि'ति येन विधि-रि'ति सूत्रस्यज्ञापकपरभाष्यासङ्गतिः । किञ्च—पूर्वशब्दं निवेश्य इष्टाद्यन्तेभ्यः इति न्यासे न चेत्यादिशङ्का-समाधानपरमूलग्रन्थासङ्गतिश्चेत्यत आह—ग्रन्थतत्त्वविदस्त्विति ।

मूले—ज्ञापकपरभाष्यप्रामाण्येनेति । पूर्वशब्दमिष्टादिषु पठित्वा पूर्वान्तादिनिरित्येक-योग एव कर्तव्ये पूर्वान्तादिनिः, इष्टादिभ्यश्चे'ति भिन्नयोगकरणसामर्थ्यात् तादृशप्रयोगाणां मुनि-त्रयमतेऽनिष्टत्वात् तादृशभाष्यप्रामाण्येनेति भाष्योपष्टम्भकस्याप्रयोजकत्वमिति ध्येयम् ॥ ३२ ॥

अत एव 'नान्तादसङ्ख्यादेरि'ति चरितार्थम् ; अन्यथा 'पञ्चम' इत्यादावपि व्यपदेशिवद्भावेन सङ्ख्यादित्वात्तद्वैयर्थ्यं स्पष्टमेव ।

इयं च प्रातिपदिकग्रहणे एव न तु प्रातिपदिकाप्रातिपदिकग्रहणे, तेन 'उगितश्चे'त्यत्र न दोष इति तत्रैव भाष्ये स्पष्टम् ।

इयं ग्रहणवतेति च परिभाषा प्रत्ययविधिविषयैवे'त्यसमासे निष्कादिभ्य' इति सूत्रे भाष्य-कैयटयोः, तेन 'अहन्नि'त्यादेः परमाहन्शब्दे केवलाहन्शब्दे च प्रवृत्तिरित्यन्यत्र विस्तरः ॥ ३२ ॥

ननु वान्तो यी'त्यादौ 'यादौ प्रत्यय' इत्यर्थः कथमत आह—

## यस्मिन्विधिस्तदादावल्ग्रहणे ॥ ३३ ॥

योगेऽपि तावतोन्तमात्रस्य उत्तरत्र इष्टादिभ्य इत्यत उत्तरम्, अनुवृत्तौ सम्बन्धे । अयम्भावः—गणे पूर्वशब्दं प्रपठ्य 'इष्टाद्यन्तेभ्य इनिरि'ति वक्तव्ये 'पूर्वादिनिः, सपूर्वाच्चे'ति सूत्रकरणं ज्ञापकमिति । योगविभागस्य ज्ञापकत्वन्तु न, परिभाषास्वीकारेऽपि गणे पूर्वशब्दं निवेश्य 'इष्टादिभ्य इनिस्तदन्ताच्चे'ति न्यासेनेष्टसिद्धेस्तस्य सिद्धान्तेऽपि वैयर्थ्यात् । न चासामर्थ्ये वृत्त्यर्थं 'पूर्वादिनिरि'ति योगस्याऽऽवश्यकत्वमिति वाच्यम् ; इष्टादिष्वेव द्विवारं पूर्वशब्दस्य पाठेनैकस्यासामर्थ्येऽपि प्रवृत्त्यर्थत्वेन पूर्वीति सिद्धे 'पूर्वादिनिरि'त्यादियोगद्वयस्य परिभाषाज्ञापकत्वे बाधकाभावादिति प्राहुः ।

अत एवेति । एतत्परिभाषास्वीकारादेवेत्यर्थः । प्रातिपदिक एवेति । निरुक्तग्रहणवत्प्रातिपदिक एवेत्यर्थः ; तथा च 'निरुक्तग्रहणवत्प्रातिपदिकग्रहणभिन्ने व्यपदेशिवद्भावो भवतीति परिभाषार्थो बोध्य' इति दिक् ॥ ३२ ॥

कथमिति । तदन्तविधेः सम्भवादिति भावः । न च यान्तप्रत्ययाप्रसिद्ध्या न तदन्तविधिरिति वाच्यम् ; 'गोमयमत्तीति गोमयात्' ततो णिचि लटि 'गोमययती'त्यादौ तत्प्रसिद्धेः ।

यस्मिन्विधिरिति । अल्मात्रवृत्तिविषयताप्रयोजके सप्तम्यन्ते विशेषणताप्रयो-

---

तत्प्रसिद्धेरिति । न च 'धातोरि'त्यस्य उदाहरणप्रत्युदाहरणयोरसम्भव इति वाच्यम् ; भूधातोर्यति निष्पन्नस्य 'भोय'शब्दस्य च समासे ततो णिचि टिलोपे 'भव्ययति' इत्यादौ उदाहरणसम्भवात् भूधातोर्विचि निष्पन्नाद् भोशब्दात् 'तत्र साधुः' इति यति भोयशब्दे निष्पन्ने, तस्यान्यशब्देन समासे ततो णिचि 'भोययति' इत्यादौ प्रत्युदाहरणसम्भवात् ।

परिभाषायां ग्रहधातोर्विषयत्वमर्थः, ल्युटश्च प्रयोजकत्वम्, तस्य चाल्पदेन सह स्वमात्रवृत्तित्वसम्बन्धेनान्वयः । तथा चैतत्पर्यवसन्नार्थमाह—अल्मात्रवृत्तीत्यादि । विशेषणतेति ।

तदन्तविधेरपवाद इयम् । वाचनिक्येषा येन विधिरित्यत्र भाष्ये पठिता ।

---

जके पदे यो विधिः स तदलादौ बोद्धव्यः। वाचनिक्येषेति ! भाष्ये वचनरूपेणैवैषा पठिता न तु ज्ञापकमुपन्यस्तमिति भावः । अत्र ज्ञापकं तु 'नल्यपी'ति सूत्रम् ; अन्यथा 'प्रदाये'त्यादौ हलन्तकिङत्प्रत्ययपरत्वाभावेनेत्वाप्राप्त्या सूत्रवैयर्थ्यं स्पष्टमेव। न च 'प्रदायच्छत्त्रमि'त्यादौ तुकि तत्संभवः, न च तुको बहिरङ्गासिद्धत्वं 'नाजानन्तर्ये' इति निषेधादिति वाच्यम्; आतो लोप इटि चे'त्यादा'वच्यजन्तार्धधातुक' इत्यर्थेन तुकः पूर्वमेव लोपप्रवृत्त्या ईत्वस्य प्राप्त्यभावेन तद्वैयर्थ्यस्य सूपपादत्वात्।

केचित्तु—'रथवदयोश्चे'ति सूत्रमस्यां ज्ञापकम्, अन्यथा 'कोः कदि'त्यत्राजन्त इत्यर्थेन कोः कदादेशे 'कद्रथ' इत्यादिसिद्धेस्तद्व्यर्थं स्यादिति वदन्ति। तन्मन्दम्; रथशब्दादाचारक्विबन्तात्कर्तरि क्विपि 'कद्रथ्' इति थान्ते सूत्रस्य चारितार्थ्यादिति दिक्।

---

अभेदसम्बन्धावच्छिन्नप्रकारतेति तदर्थः, तत्फलन्तु 'आद्गुणः' इत्यत्र तदादेरनुपस्थितिरूपं बोध्यम् ! अन्यथा तदादेरुपस्थित्या 'अजादौ परे' इत्यर्थे पूर्वस्य उपघटकस्याकारस्य परस्याजादेः सम्पूर्णेन्द्रशब्दस्यैकादेशेऽसङ्गतिः स्पष्टैव ।

मूले—तदन्तविधेरपवाद इति । एतेन 'येने'त्यस्यानुवृत्तिर्विशेषणता चाभेदसम्बन्धावच्छिन्नेति उभयमपि सूचितम् ।

सूपपादत्वादिति। न चात्रापि 'नाजानन्तर्ये' इति निषेधान्न तुकोऽसिद्धत्वमिति वाच्यम्; तस्या जातबहिरङ्गासिद्धत्व एव प्रवृत्तिस्वीकारात् । न च 'उत्सर्गशास्त्रप्रवृत्त्यभावसम्भावनाप्रयोज्या यत्रापवादशास्त्रप्रवृत्तिसम्भावना, तत्रोत्सर्गशास्त्रं पूर्वं न प्रवर्तते' इत्येतत्स्वरूपेण 'उपसञ्जनिष्यमाण'न्यायेन अत्रापि 'आतो लोपः' इति शास्त्रप्रवृत्त्यभावसम्भावनाप्रयोज्य'नल्यपी'त्यपवादशास्त्रप्रवृत्तिसम्भावनायाः सत्त्वेन पूर्वमलोपस्यासत्त्वात्, पुनस्तुकि 'प्रदायच्छत्रम्' इत्यत्र प्राप्ते तद्वारणार्थं निषेधस्य चारितार्थ्यमिति वाच्यम्; निषेत्रस्य लोपापवादत्वाभावात् । अकृतव्यूहपरिभाषा तु नास्त्येव । उपसञ्जनिष्यमाणन्यायमूलकातोलोपापवादत्वकल्पनापेक्षया नल्यपीत्यस्य परिभाषाज्ञापकत्वस्यैवोचितत्वाच्च ।

सूत्रस्य चारितार्थ्यादिति दिगिति। अत्र केचित्—'कुत्सिताश्वः'इत्यत्राजन्तोत्तरपदत्वेन 'कोः कदि'त्यनेनैव कदादेशे सिद्धे पुनस्तत्र कदादेशाय कृतं 'त्रौ च' इति सूत्रं व्यर्थं सदस्यां ज्ञापकमिति । न च त्रिशब्दादाचारक्विबन्तात्कर्तरि क्विपि तुकि च, 'त्रिदि'त्यत्र अजन्तत्वाभावेन 'कोः कदि'ति कदादेशाप्राप्त्या 'कत्त्रिदि'त्यत्र तत्सिद्धये 'त्रौ च' इत्यस्य चारितार्थ्यमिति वाच्यम्;

**अस्याश्च स्वरूपसती सप्तमी निमित्तम् । अत एव 'नेड्-वशि-कृती'त्यादौ वशादेः कृत इत्याद्यर्थलाभः ।**

**इयं 'चाऽऽर्द्धधातुकस्येडि'ति सूत्रे वलादेरित्यादिग्रहणसामर्थ्याद् विशेष्य-**

---

स्वरूपसती सप्तमीति । न तु तदर्थो विवक्षित इति भावः ।

आदिग्रहणसामर्थ्यादिति । इदं च न्यायसिद्धार्थानुवादकं, 'येन विधिरि'ति सूत्रस्य समानाधिकरणे विशेषण एव प्रवृत्त्याऽर्थाधिकारानुरोधा'दुत्सर्गसमानदेशा०, इति न्यायेन चास्या अपि समानाधिकरणविशेषण एव प्रवृत्त्या सामानाधिकरण्यस्य समानविभक्तिकत्व एव सम्भवादिति भावः ।

केचित्तु—'आर्धधातुके वली'ति न्यासेन सिद्धे आदिग्रहणं व्यर्थमेवेति वदन्ति ।

---

अत्र सादृशलाक्षणिकत्वेन गौणत्वात् गौणमुख्यन्यायेन 'त्रौ च' इत्यस्याप्रवृत्तेः । आचष्टेऽर्थे णिचि तदन्तात् क्विपि तुकि 'त्रौ चे'त्यस्य चारितार्थ्यमिति तु न भ्रमितव्यम्; णिचः स्थानिवत्त्वेन तुकोऽप्राप्तेः । 'क्वौ विधिं प्रति न स्थानिवत्' इत्यस्य तु क्विमुच्चार्य विहितं प्रति न स्थानिवदित्यर्थस्वीकारेणात्र तुकि तस्यानुच्चारणेन तद्वचनस्याप्राप्तेः । 'क्वौ लुप्तमि'त्यस्य तु 'सख्युः, गोमान्' पदस्तत्रञ्च क्वौ लुप्तस्य निदर्शनमि'ति वचनात्परिगणितेष्वेव प्रवृत्तेरत्र तदप्राप्तेः । न चान्यपदार्थं विशेष्यीकृत्य त्रिशब्दस्य यशब्देन सह समासे ततो णिचि क्विपि अल्लोपयलोपयोः कृतयोः 'त्रि' इत्यस्यामवस्थायां ततः पदद्वित्वे णिचि क्विपि टिलोपे 'त्रित्र्' इति जाते, 'कत्रित्र्' इत्यत्र कदादेशाय 'त्रौ चे'त्यस्य चारितार्थ्यमिति वाच्यम्; न पदान्ताः परेणाऽणः सन्तीति तादृशानामनभिधानात् । न च त्रिशब्दाण्णिचि ततः 'एरचि' इति वृद्धौ 'त्राय' इति जाते पुनर्णिचि क्विपि अल्लोपयलोपयोः 'त्रा' इति जाते, ततो णिचि क्विपि, 'प्रकृत्यैकाजि'ति प्रकृतिभावे आदन्तत्वात् पुकि 'त्राप' इति जाते 'कुत्सिता + त्राप् कत्त्राप्' इत्यत्राजन्तोत्तरपदस्याभावेन तेन कदादेशाप्राप्त्या तत्रादेशाय 'त्रौ चे'त्यस्य चारितार्थ्यमिति वाच्यम्; द्वितीयणिचः स्थानिवत्त्वेन तृतीयणिज्निमित्तक पुकोऽप्राप्त्याऽदोषात् । न चात्र द्वितीयणिज्निमित्तिक एव पुक् कस्मान्न भवतीति वाच्यम्; अल्लोपस्य स्थानिवत्त्वात् बहिर्भूतक्विब्निमित्तकयलोपस्य बहिरङ्गत्वेनासिद्धत्वाच्चेति वदन्ति । तन्न सम्यक्; तस्यैव 'त्रा'शब्दस्य ऋशब्देन सह समासे 'ऋत्यक' इत्यनेन ह्रस्वसमुच्चिते प्रकृतिभावे ततो णिचि टिलोपे क्विपि णिलोपे च 'त्र' इति जाते ततो वृद्धौ पुकि च 'त्रा' इति जाते 'कत्त्राप्' इत्यत्र 'त्रौ चे'त्यस्य चारितार्थ्यसम्भवेन परिभाषाज्ञापकत्वासम्भवात । पुकि टिलोपस्य स्थानिवद्भावस्तु न ऋ इति पदे परतः पूर्वस्य त्रेत्यस्य कार्यविधानेन 'न पदान्तेति' तन्निषेधात्, वृद्धेः प्राक् टिलोपणिलोपयोः सत्त्वादचः पूर्वत्वेन दृष्टत्वाभावाच्च । अचः पूर्वत्वेन दृष्टत्वं यथा स्थानिवद्भावेन नायाति, तथान्यत्र प्रपञ्चितमिति दिक् ।

व्यर्थमेवेतीति । न चोभयोः सप्तम्यन्तत्वकरणे प्रकृतेरिट् स्यादिति वाच्यम्; निषेधस्य प्राप्तिपूर्वकत्वात् 'नेड्वशीकृति०' इति प्रत्ययस्येण्निषेधार्थकशास्त्रस्य चारितार्थ्याभावेन तत्सामर्थ्यादार्धधातुके इति षष्ठ्यर्थे सप्तमीं स्वीकृत्य 'आर्धधातुकस्येडि'त्यर्थकरणेनादोषात् ।

**विशेषणयोरुभयोः सप्तम्यन्तत्व एव प्रवर्तते, तेन 'डः सि धुडि'त्यादौ सादेः पदस्येति नार्थः ।**

**'तीषसह, सेसिची'त्यादौ यथा तादेरित्याद्यर्थलाभस्तथा शब्देन्दुशेखरे निरूपितम् ॥ ३३ ॥**

---

अन्ये तु—तस्मिन्नि'ति परिभाषया सप्तमीनिर्देशस्य निरवकाशत्वाद्वलाद्यार्धधातुकाव्यवहितपूर्वस्येडागमापत्त्या नैतद्युक्तमिति प्राहुः ।

नार्थ इति । समानाधिकरणविशेषणाभावात, असंभवाच्च सान्तस्य पदस्येत्यपि नार्थ इति भावः । दिवस्पृथिव्योरि'त्यत्र तत्संभवेऽपि 'नैकमुदाहरणमि'ति न्यायेन सामान्यतः सूत्रस्य वैयर्थ्यमित्याशयः ।

शब्देन्दुशेखरे निरूपितमिति । तत्र हि तीति प्रथमार्थे सप्तमी, तस्य वलादिपदार्थैकदेशे वल्पदार्थेऽभेदेनान्वयः; तथा च 'तकाराभिन्नो यो वल् तदादेरि'त्यर्थे उक्तपरिभाषाप्रवृत्तिं विनाऽपि सिद्ध्यति । एवं 'सेसिची'त्यत्रापि बोध्यम् ।

वस्तुतः—तीत्यादिसप्तम्याऽव्यवहितपूर्वोपस्थित्या 'तकाराव्यवहितपूर्वेभ्य इषादिभ्यः परस्य वलादेरार्धधातुकस्येडि'त्याद्यर्थाश्रयणेनैवेष्टसिद्धिरिति शेखरकारोक्तप्रयासो व्यर्थ एवेति बोध्यम् ।

---

**नैतद्युक्तमिति प्राहुरिति ।** नन्वनुपदोक्तरीत्या युक्तमेवेति वाच्यम्; 'नेड्वशी'त्यत्रापि द्वयोः सप्तम्यन्तत्वात्तत्रापि षष्ठीप्रकल्पकाभावेन 'आर्धधातुकस्ये'त्यनेन प्रकृतेरिडागमविधानं 'नेड्वशी'त्यनेन निषेध इति प्राप्तिनिषेधयोः सूपपादत्वेन प्रकृतेरिडागमे महादोषापत्तेः । षष्ठ्यन्तत्वे तु निषेधस्यापि उत्सर्गसमानदेशा अपवादाः' इति न्यायेन षष्ठ्यन्तत्वेन विपरिमाणेऽदोषो बोध्यः ।

**समानाधिकरणविशेषणाभावादिति ।** तत्र समानविभक्तिकत्वस्य तन्त्रत्वादिति भावः । यत्तु—'स्तोकं पचति, मृदु पचति, सोमेन यजेत, प्रकृत्या चारुः' इत्यत्रासमानविभक्तिकयोरपि सामानाधिकरण्यदर्शनेन विरुद्धविभक्तिकयोरपि सामानाधिकरण्यं भवतीति । तन्न; 'नीलस्य घटः' इत्यत्राप्यभेदान्वयबोधापत्तेः, प्रातिपदिकार्थानुयोगिकाभेदसंसर्गकशाब्दबोधे एव समानविभक्तिकत्वस्य प्रयोजकत्वाङ्गीकारेण 'स्तोकं पचति' इत्यादावदोषाच्च । 'प्रकृत्या चारुः' इत्यत्र तु अभेदप्रकारक एव बोध इति न दोषः । विशेषणविभक्तेरभेदार्थकत्वपक्षेऽपि प्रकृत्यादिशब्दोत्तरतृतीयातिरिक्ततृतीययाऽभेदबोधने तृतीयान्तविशेष्यवाचकपदसमभिव्याहारस्य प्रयोजकत्वाङ्गीकारेण 'प्रकृत्या चारुरि'त्यत्र न दोष इति बोध्यम् ।

**असम्भवाच्च सान्तस्य पदस्येत्यपि नार्थ इति ।** समानविभक्तिकत्वाभावेऽपि 'ड' इति पञ्चम्या सीति सप्तम्यन्तस्य षष्ठीप्रकल्पकतया समानाधिकरणविशेषणभावात् 'येन विधिरि'त्यस्य प्राप्तेः । 'असम्भवादि'ति हेतुकथनं न युक्तम्, सम्प्रति निरवकाशतया रुत्वापवादकत्वकल्पनेन सूत्रस्य चारितार्थ्यसम्भवात्, 'न लोपः०' इति सूत्रेऽन्तग्रहणसामर्थ्यात् 'पदस्ये'त्यधिकारे प्रकारद्वयस्य क्लृप्तत्वेन प्रकृते वैयधिकरण्यान्वयेनादोषाच्च ।

केचित्तु—'वान्तो यी'त्यादौ 'प्रत्ययघटकयकाराऽव्यवहितपूर्वस्य ओदौदन्ततदादेर्वान्त आदेश' इत्याद्यर्थेन सर्वत्रेष्टसिद्धया परिभाषा व्यर्थैव। न च 'उष्ट्रगोयुगमि'त्यत्रोष्ट्रगोशब्दस्यौकारान्ततदादित्वेनावादेशापत्तिरिति वाच्यम्; औकारसाहचर्येण तत्प्रत्ययघटकाघटितस्यैव तदादेर्ग्रहणेन गोशब्दस्य प्रत्ययघटकत्वेन तदप्राप्तेः। गव्युगचि कर्तव्ये प्रत्यये ओकारोच्चारणसामर्थ्यान्न वान्तादेश इति तु न युक्तम्; उष्ट्रगोयुगशब्दस्याच्छब्देन समासे ततो णिचि टिलोपे निष्पन्नोष्ट्रगोयुग् इति गान्तस्य तृशब्देन समासे पुनर्णिचि ततः क्विपि उग्न् इति टेर्लोपे क्विब्निमित्तकयलोपे 'उष्ट्रगो' इत्योकारान्तरूपसिद्धयर्थं तस्याऽऽवश्यकत्वात्। 'गव्युगच्'प्रत्यये तु पूर्ववत् प्रक्रियायां वकारस्योठि औकारान्तरूपापत्तेः। 'यकाराव्यवहितपूर्वयोः प्रत्ययाव्यवहितपूर्वयोरोदौतोरि'ति तु न सूत्रार्थः; 'हे भानो! याती'त्यादावप्यत्रादेशापत्तेः। 'ङमो ह्रस्वादि'त्यत्र तु 'पदे परे ङम् ततः परस्याच' इत्यर्थेन नव्यमतेऽपि न 'परमदण्डिनावि'त्यत्र ङमुट्। 'मीनाती'त्यत्रेत्संज्ञकशकारादावित्यर्थस्तु लक्षणया बोध्यः। यद्वा—'इत्संज्ञकशे परत आत्वं नेत्यर्थः। न च शस्येत्संज्ञालोपाभ्यामपहारात्कथं तत्परत्वमिति वाच्यम्; सामर्थ्याद्भूतपूर्वतत्परत्वाश्रयणेनादोषात, इत्संज्ञालोपयोर्लक्ष्ये एव प्रवृत्तिस्वीकारात्। एतद्वचनस्यासत्त्वादे 'वैचहलादौ तादौ चे'त्यादावादिग्रहणं चरितार्थमित्यन्यत्र विस्तर इति प्राहुः॥ ३३॥

---

**गान्तस्यतृशब्देन समास इति।** अन्यथा प्रथमं जातस्य णिलोपस्य स्थानिवत्त्वेन टिलोपो न स्यात्; सति तु समासे स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावान्न भवति।

**औकारान्तरूपापत्तेरिति।** ननु अच्छब्देन समासे कृते तत्र संहितायां नित्यतया णिजुत्पत्तिपर्यन्तमप्यवस्थानासम्भवेन अवादेशे कृते णिजादीनामुत्पत्त्या यथान्यासेऽपि तादृशमेव रूपम्।

**यत्तु**—उपदेशावस्थायामेवादेशः प्रवर्तत इति। तन्न; तदानीम् ओदन्ततदादेरभावेन तदप्राप्तेरिति चेत्—सत्यम्। यलोपोत्तरं निमित्तापाये नैमित्तिकस्याप्यपायः' इति वचनादवादेशस्यापि निवृत्त्या यथान्यासे ओकारान्तं रूपं 'गव्यु गचि' औकारान्तमिति फलभेदः स्यादित्याशयान्न दोषः।

**अवादेशापत्तेरिति।** न च प्रत्यासत्त्या प्रत्ययघटकयकारस्य ग्रहणेन प्रकृते यकारस्य धातुघटकतया न दोष इति वाच्यम्; 'अस्य स्त्री+ई' तस्माद् द्वित्वविवक्षायाम् औविभक्तौ 'यौ' इति जाते 'हे भानो। यौ' इत्यत्र यकारस्य प्रत्ययरूपत्वेन व्यपदेशिवद्भावेन प्रत्ययघटकत्वाच्चावादेशापत्तेः।

**ननु**—नव्यमते कार्यित्वनिवेशेन उत्तरपदत्वे चेति निषेधाप्रवृत्त्या प्रत्ययलक्षणेन 'दण्डिन्' इत्यस्य पदत्वेन 'परमदण्डिनौ' इत्यत्र ङमुड्वारणाय 'पदे' इत्यनुवर्त्य 'अजादौ पदे' इत्यर्थो भवति, परिभाषाभावे तु स न सेत्स्यतीत्यत आह - ङमो ह्रस्वादिति। एवं 'अपो भिः, कोः कत्तत्पुरुषेऽचि, अतो दीर्घो यञि, सुपि च' इत्यादौ सर्वत्र 'प्रत्ययघटकेऽचि, उत्तरपदघटकेऽचि' इत्याद्यर्थो वेदितव्यः। 'नेड्वशी'त्यादौ वशाव्यवहितपूर्वत्वविशिष्टात्.दादेः परस्य कृत इडागमो नेति तदर्थः।

**इत्यन्यत्र विस्तर इति।** नन्वेवं—'गोत्रे लुगचि' इत्यात्राजादौ प्रागदीव्यतीये

'घटपटं घटपटावि'त्यादिसिद्धय आह—

## सर्वो द्वन्द्वो विभाषयैकवद्भवति ॥ ३४ ॥

'द्वन्द्वश्च प्राणी'त्यादिप्रकरणाविषयः सर्वो द्वन्द्व इत्यर्थः। 'चार्थे द्वन्द्व' इति सूत्रेण समाहारेतरेतरयोगयोरविशेषेण द्वन्द्वविधानान्न्यायसिद्धेयम्।

'तिष्यपुनर्वस्वोरि'ति सूत्रस्थं बहुवचनस्येति ग्रहणमस्या ज्ञापकम्। तद्धीदं 'तिष्यपुनर्वसू'त्यत्र तद्व्यावृत्त्यर्थम्।

न चैवमप्यत्र 'जातिरप्राणिनामि'ति नित्यैकवद्भावेन बहुवचनाभावादिदं सूत्रं व्यर्थमिति वाच्यम्; तद्वैकल्पिकत्वस्याप्यनेन ज्ञापनात्। न चैते प्राणिन

---

घटपटं घटपटावित्यादिसिद्धय इति। न च नवीनमते उद्भूतावयवभेदविवक्षायामितरेतरयोगद्वन्द्वेन तिरोहितावयवभेदविवक्षायां समाहारद्वन्द्वेन चोक्तरूपद्वयं सिद्ध्यतीति वाच्यम्; सर्वनामातिरिक्तशब्देष्वेकत्रोभयविवक्षाया अभावेन रूपद्वयानापत्तेः। अत एवानेकवृक्षतात्पर्येऽपि 'वृक्षा' इति 'वनमि'ति च व्यवस्थयैव प्रयोगो न तु 'वनानि, वृक्ष' इति। सर्वो लोकः, सर्वे लोका' इति द्विविधस्यापि लोके प्रयोगात्सर्वनामस्थले उभयविवक्षाऽपि।

सर्वो द्वन्द्व इति। इयञ्च परिभाषा द्वन्द्वविषयेऽप्युभयविवक्षायां तात्पर्यग्राहिका। बहुवचनस्येति ग्रहणमिति। द्वन्द्वविषये उद्भूतावयवभेदविवक्षामात्रस्वीकारे सर्वत्र बहुवचनस्यैव सत्त्वेन तद्ग्रहणं निष्फलं; तिरोहितावयवभेदविवक्षामात्रस्वीकारे सर्वत्रैकवचनस्यैवोत्पत्त्या बहुवचनासंभवात्तद्व्यर्थमिति भावः।

तद्वैकल्पिकत्वस्यापीति। जातिप्राधान्य एकवद्भावो व्यक्तिप्राधान्ये तदभाव

---

विवक्षिते इत्यर्थो न लभ्येत; प्राग्दीव्यतीयघटकेऽचि विवक्षिते इत्यर्थे तु 'गार्ग्यरूप्यमि'त्यत्रापि दोषः स्यात्। न च प्राग्दीव्यतीयघटकत्वमचः सर्वत्रैवास्तीति सामर्थ्यादजादावित्यर्थलाभ इति वाच्यम्; सामर्थ्यकल्पनापेक्षया अनेकत्रानेकक्लिष्टकल्पनापेक्षया च वरं परिभाषाश्रयणम्। 'येन विधिरि'त्यनेन प्राप्ततदन्तविधिं बाधित्वा वैयधिकरण्यान्वये प्रमाणाभावः, गौरवञ्चेत्यलमतिविस्तरेण ॥ ३३ ॥

पूर्वपरिभाषायां 'तीषसह' इत्यस्य 'तास्यार्धधातुक' इत्यादिशेखरे निरूपितार्थस्य प्रदर्शनाय उपन्यस्तत्वात् तत्र समाहारद्वन्द्वैकवद्भावस्य कुतस्त्यात्तत्प्रसङ्गात् तदेकवद्भावस्य विकल्पसम्बन्धिविचारणायामाह—घटपटं घटपटाविति।

मूले—न्यायसिद्धेयमिति। ननु—'चार्थे द्वन्द्वः' इत्यस्य क्वचिल्लक्ष्यावच्छेदेन इतरेतरयोगस्य करणेन क्वचिच्च समाहारद्वन्द्वकरणेन च चारितार्थ्ये सम्भवति उभयविवक्षायां मानाभावेन कथं न्यायसिद्धत्वमित्यरुचेराह—मूले—तिष्यपुनर्वस्वोरिति।

इति वाच्यम्; 'आपोमयः प्राण' इति श्रुतेरद्भिर्विना ग्लायमानप्राणानामेव प्राणित्वात् । स्पष्टं चेदं 'तिष्यपुनर्वस्वोरि'ति सूत्रे भाष्ये । अत एव 'द्वन्द्वश्च प्राणी'त्यादेः प्राण्यङ्गादीनामेव समाहार इति विपरीतनियमो न ॥ ३४ ॥

## सर्वे विधयश्छन्दसि विकल्प्यन्ते ॥ ३५ ॥

'व्यत्ययो बहुलमि'ति सूत्रे भाष्ये बहुलमिति योगविभागेन 'षष्ठीयुक्तश्छन्दसी'ति सूत्रे वेति योगविभागेन चैषा साधिता, तेन 'प्रतीपमन्य, ऊर्मिर्युद्ध्यति'त्यादि सिद्धम् । 'युद्ध्यत' इति प्राप्नोति ॥ ३५ ॥

ननु 'क्षिय' इत्यादावियङ्कथमत आह—

---

इत्येवंरूपस्य व्यवस्थितविकल्पस्येत्यर्थः । न चैतद्वैकल्पिकत्वज्ञापनेन बहुवचनग्रहणस्य चारितार्थ्येनोक्तपरिभाषाज्ञापकत्वासंभव इति वाच्यम्; 'फल्गुनीप्रोष्ठपदानामि'त्यतो नक्षत्रग्रहणानुवृत्तिसंभवे पुनः सूत्रे नक्षत्रग्रहणे नक्षत्रव्यक्तिप्राधान्य एवैतत्प्रवृत्तेर्जातिप्राधान्ये प्रवर्तमानस्य 'जातिरप्राणिनामि'त्येकवद्भावस्यात्र विषयाभावेन, व्यक्तिप्राधान्येऽपि पूर्ववदेकतरविवक्षामात्रस्वीकारे बहुवचनग्रहणवैयर्थ्यस्य सूपपादत्वात् । अत एव = बहुवचनग्रहणज्ञापितपरिभाषासत्त्वादेव । उक्तविपरीतनियमे त्वन्यत्र तिरोहितावयवभेदविवक्षाया अभावेन बहुवचनग्रहणं व्यर्थमेव स्यादिति भावः ॥ ३४ ॥

विकल्पस्य प्रक्रान्तत्वादाह—सर्वे विधय । इति । आचार्यैरिति शेषः । विकल्पन्त इति पाठस्तूचितः ।

मूलमाह—व्यत्यय इति । वेति योगविभागेनेति चेति । एवं चानेन योगविभागेन सर्वेष्टसिद्धौ छन्दसि विकल्पविधायकान्यन्यानि वचनानि निरर्थकानीति ध्वनितम् । तेन = सर्वविधीनां वैकल्पिकत्वेन ॥ ३५ ॥

इयङ्कथमिति । सूत्रघटकक्षिशब्दस्य धात्वनुकरणत्वेऽपि धातुत्वाभावादिति भावः ।

---

बहुवचनग्रहणं व्यर्थमिति । तिष्यपुनर्वसुशब्दस्य व्यक्तिप्राधान्ये एकवद्भावाप्राप्त्या व्यावर्त्याभावेन बहुवचनग्रहणेन ज्ञापितेऽपि स्वांशे चारितार्थ्याभावेन 'यावता विने'ति न्यायेन प्राण्यङ्गादीनां समाहार एवेति नियमकल्पनस्य 'जातिरप्राणिनामि'त्यत्र व्यवस्थितविभाषाश्रयणस्य 'चार्थे द्वन्द्वः' इत्यत्रोभयविवक्षायाश्च बहुवचनग्रहणेन ज्ञापनमिति बोध्यम् ॥ ६४ ॥

अनुकरणत्वञ्च = स्वसदृशबोधतात्पर्यकोच्चारणविषयत्वम् । अनुकार्यत्वञ्च—स्वसदृश-

# प्रकृतिवदनुकरणं भवति ॥ ३६ ॥

'क्षियः' इतीयङ्निर्देशोऽस्या ज्ञापकः ।

तत्रैव प्रातिपदिकत्वनिबन्धनविभक्तिकरणादनित्या चेयमिति 'क्षियो दीर्घादि'ति सूत्रे भाष्ये स्पष्टम् ॥ ३६ ॥

---

प्रकृतिवदनुकरणं भवति । प्रकृतिवत् = अनुकार्यवृत्तिधर्मवदित्यर्थः ।

नन्वनेन धातुत्वातिदेशे प्रातिपदिकसंज्ञा न स्यादत आह—अनित्येति । ननु 'क्षिय' इति सूत्रे दीर्घान्तानुकरणे दीर्घग्रहणवैयर्थ्यापत्तिः, ह्रस्वान्तानुकरणे विपराभ्यां जेरि'तिवद् गुणापत्तिश्चेति चेन्न । लक्ष्यघटकानुकार्यस्य क्षिशब्दस्य फलाभावाद्घित्वाभावेन तदनुकरणस्यास्यानेन न्यायेन घित्वाभावातिदेशाद् गुणाप्राप्तेः । सखिशब्दसाहचर्येणानुकरणक्षिशब्दावयवेकारभिन्नस्यैव घिसंज्ञासूत्रे ग्रहणादस्य घित्वाभावेन गुणाप्राप्तेश्चेति दिक् ॥ ३६ ॥

---

शब्दप्रतिपाद्यत्वे सति शब्दत्वम् । अत्र शास्त्रीयाया एव प्रकृतेराश्रयणम्, अनया च शास्त्रीयस्यैव धर्मस्यातिदेशः, तेनापशब्दानुकरणेषु नापशब्दत्वमिति 'ऋलृक्' सूत्रे भाष्ये स्पष्टम् ।

अनित्येतीति । इदमनित्यं कार्यभेदेन, न तु लक्ष्यभेदेन ; तथा सत्येकत्रैव लक्ष्ये एकस्मिन् कार्ये तस्यैव धर्मस्यातिदेशो भवति अपरस्मिन् न भवति । तथा च प्रातिपदिकत्वाभावाय धातुत्वातिदेशे न भवति इयङर्थञ्च भवति । न च प्रातिपदिकत्वाभावोऽशास्त्रीय इति वाच्यम् । 'अधातुरि'ति पर्युदासलभ्याशास्त्रीयेऽपि शास्त्रतात्पर्यत्वेन शास्त्रीयत्वबोधनात् ।

अथ 'क्षि + अस्' इत्यवस्थायामिकारान्तत्वाद्घिसंज्ञायां 'घेर्ङिति' इत्यनेन इयङः परत्वाद् गुणे घेरिति प्राप्तौ ज्ञापितेऽपि स्वांशे चारितार्थ्यासम्भवात् कथं ज्ञापकत्वम्? न च सूत्रस्थ'क्षिय' इत्यस्य निष्ठापरतो दीर्घीभूतस्यानुकरणत्वाद् घिसंज्ञाया अप्राप्तेरदोष इति वाच्यम्; दीर्घीभूतस्यानुकरणे सूत्रस्थेन बोध्यस्यापि दीर्घत्वेन दीर्घादित्यस्याभावेऽपि दीर्घात्परीभूतस्य क्षस्येत्यर्थस्य सत्त्वेन ह्रस्वात्परस्य तकारस्य नकाराप्राप्तौ तद्वारणार्थं कृतस्य दीर्घादिति ग्रहणस्य वैयर्थ्यं स्यादित्याशये नाशङ्कते—नन्विति । घित्वाभावातिदेशादिति । ननु—घित्वाभावरूपधर्मस्य अशास्त्रीयत्वात् कार्यस्य च गुणाभावस्य चाशास्त्रीयत्वादतिदेशो न स्यादित्यरुचेराह—सखिशब्देति । न चैतादृशसाहचर्यग्रहणे मानाभावः; अन्यथा विनिगमनाविरहेण हरिशब्दावयवेकारभिन्नस्यापि ग्रहणस्य आपादयितुं शक्यत्वादिति वाच्यम्; 'यावता विना०' इति न्यायेन इयङा निर्देशो दीर्घग्रहणञ्च तथा साहचर्यग्रहणे मानमिति तात्पर्यात् ।

केचित्तु—सूत्रे दीर्घान्तस्यैवानुकरणम्; दीर्घग्रहणञ्च तस्यैवानुकरणमस्तीत्यत्र तात्पर्यग्राहकम् । तथा च गुणप्राप्तेराशङ्कैव नोदेतीति वदन्ति ॥ ३६ ॥

ननु 'रामावि'त्यादौ वृद्धौ कृतायां कार्यकालपक्षे कथं पदत्वम्, उभयत

---

कार्यकाल इति । ननु पदसंज्ञायां यथोद्देशस्यैव पूर्वं सिद्धान्तितत्वादेतत्पक्षयोर्व्यवस्थिततयाऽऽद्यपक्षेणेष्टसिद्धेश्चात्र कार्यकालपक्षोद्भावनमयुक्तम् । किञ्च—सुप्तदादित्वयोर्व्यपवर्गघटितत्वाभावेनान्तादिवत्त्वेनैव सिद्धे'रुभयत' इति निषेधोल्लेखोऽप्यसङ्गत इति चेन्न । कार्यकालपक्षस्य 'यदा कार्यं तदा संज्ञा, स्वदेशत्याग' इत्यंशद्वयरूपतया यथोद्देशपक्ष एवेत्येवकारेण स्वदेशत्यागस्यैव व्यावृत्त्या कार्यप्रवृत्तिकाले संज्ञाया आवश्यकत्वात् भपदसंज्ञेत्यादौ भसाहचर्यात्स्वादिष्विति पदसंज्ञाया एव ग्रहणाच्च ।

---

मूले—वृद्धौ कृतायामिति । द्विर्वचनात् प्रागिति शेषः । नित्यत्वाद् वृद्धेः पूर्वं प्राप्तेरिति भावः । मूले—कार्यकालपक्ष इति । यथोद्देशे तु न दोषः, कार्यविशेषानुसन्धानं विना नित्यादप्येकादेशात् पूर्वमन्तरङ्गत्वात् , 'राम + औ' इत्यवस्थायां प्रवृत्तायाः पदसंज्ञाया आनुमानिकस्थानिवद्भावेन समुदायेऽपि सुलभत्वात् ।

व्यपवर्गेति । पौर्वापर्यलक्षणेति तदर्थः । अंशद्वयरूपतयेति । कार्यकालस्य उपेक्षाबुद्धिप्रयुक्तत्वादेकत्र वाक्यार्थबोधेन तदर्थमावश्यकत्वज्ञानेऽपि अन्यत्रापि फलवत्त्वमस्तीत्यस्य ज्ञाने प्रमाणाभावादेकत्रैव संज्ञाशास्त्रस्य प्रवृत्तिः स्यात्तदर्थं यदा कार्यं तदा संज्ञेत्यावश्यकम् । लक्षणोपप्लववत् संज्ञाशास्त्रोपप्लवोऽपि भवतीत्यर्थः । संज्ञाशास्त्राणां विधिदेशीयत्वसिद्ध्यर्थञ्च स्वदेशत्याग इत्यपि स्वीकार्यमिति भावः ।

भसाहचर्यादिति । इदं चिन्त्यम्—तथा सति 'राजन्यः' इत्यत्र नलोपैकवाक्यतापन्नपदसंज्ञाया कार्यकालपक्षेऽसिद्धत्वेन भसंज्ञया बाधानापत्त्या नलोपापत्तेः । यदि तु 'अन् ये चाभावकर्मणोः' इत्यादिज्ञापकाज्जात्यव्यवहितपूर्वत्ववन्नान्ते पदत्वबाध इत्युच्यते; तदाऽपि कर्तृशब्दादस्मि भसंज्ञायां प्राप्तायामन्तर्वर्तिविभक्त्या पदसंज्ञायाश्च प्राप्तायां भसंज्ञाया यथोद्देशपक्षीयत्वेन स्वदेशस्थत्वात् पदसंज्ञायाश्च कार्यकालपक्षीयत्वेन 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' इति सूत्रस्थत्वात् परत्वात् पदसंज्ञायाम् 'इकोऽसवर्णे०' इति प्रकृतिभावे 'कर्तृ + अ' इत्यनिष्टरूपप्रसङ्गात् । न च तस्याः परत्वेऽपि भसंज्ञया निरवकाशत्वेन तस्या बाध एवेति वाच्यम्; 'राज्ञे'त्यादौ 'सुप्तिङन्तमि'त्यस्याप्राप्तिविषये भसंज्ञायाश्चारितार्थ्येन निरवकाशत्वासम्भवात् ।

आश्रयणेऽन्तादिवत्त्वाभावाद्यस्माद्विहितस्तदादितदन्तत्वाभावादत आह—

---

उभयत इति निषेधस्य प्राचीनमते सर्वत्रैव प्रवृत्तेस्तदनुसारेणैतद्ग्रन्थप्रवृत्तेः, तदादित्वस्य प्रत्ययाव्यवहितपूर्वत्वघटितरूपतया व्यपवृक्तत्वेन नवीनमतेऽपि एतद्ग्रन्थस्य सुवचत्वाच्च। यथोद्देशपक्षेणेष्टसिद्धावपि कार्यकालपक्षेऽपि दोषवारणसंभवप्रदर्शनस्यैव ग्रन्थकृदभिप्रेतत्वाच्च।

वस्तुतः - परिभाषाफलं तु 'चकारे'त्यत्र 'कर' इत्यस्याभ्याससंज्ञारूपं बोध्यम्। आनुमानिकस्थान्यादेशभावेन तु न निर्वाहः। पूर्वस्य 'कृ' इत्यस्यानर्थकत्वेन तदप्रवृत्तेः। न 'चारे'त्यत्र अरित्यस्य सर्वविकारत्वेनैतन्न्यायाप्रवृत्त्या कथमभ्यासत्वमिति वाच्यम्; द्वित्वशास्त्रीयोद्देश्यताश्रयद्वित्वशास्त्रीयविधेयताश्रयैतदुभयमात्रारब्धसमुदायत्वस्य 'ऋ ऋ' इति समुदायनिष्ठस्या'नेनार् ऋ' इत्यत्रातिदेशेनारित्यस्य तादृश-

---

तदनुसारेणैतद्ग्रन्थप्रवृत्तेरिति। ननु—प्राचां मते सर्वत्रैवोभयत आश्रयणे अन्तादिवत्त्वाभावेऽपि आनुमानिकस्थान्यादेशभावेन स्थानिवत्सूत्रेण तदादितदन्तत्वातिदेशेन पदसंज्ञा सुलभेति तन्मतेऽपि नावतरणं सम्भवतीति चेन्न। तस्य अशास्त्रीयत्वेन तेन तदनतिदेशात्, प्राचीनमते अन्तादिवत्सूत्रस्य स्थानिवत्सूत्रेणैव गतार्थत्वात्, अन्तादिवत्त्वस्यासत्त्वे सत्त्वे च समानफलाय तदपवादस्य स्थानिव-सूत्रापवादत्वेनावश्य स्वीकरणीयत्वात्, प्रकृते स्थानिवत्सूत्रप्रवृत्तेरपि 'उभयत आश्रयणे' इत्यनेन प्रतिरोद्धुं शक्यत्वाच्च।

नवीनमतेनाप्यवतरणं योजयितुमाह—तदादित्वस्येति। अयम्भावः—नवीनमते 'ऽन्तादिवच्चे'त्यनेन अशास्त्रीयस्यातिदेशेऽपि तेन तदादित्वमत्र अतिदेष्टुमशक्यम्, एकादेशात् प्राग् तदादित्वस्य 'राम + औ' इति समुदाये सत्त्वेन रामशब्दे तदभावात्। न च व्यपदेशिवद्भावेन रामशब्दे तदादित्वमतिदिश्य ततः पूर्वान्तवद्भावेन विशिष्टे स्यादिति वाच्यम्; रामशब्दस्य मुख्यधर्मवद्घटकतया असहायत्वाभावेन तेन तत्र तदतिदेशासम्भवात् स्थानिन्येव तदादित्वस्याभावात्। तस्मात् प्रत्ययाव्यवहितपूर्वत्वसमानाधिकरणतदादित्वस्यैव पूर्वान्तवद्भावेन विशिष्टेऽतिदेशो वाच्यः, स तु न सम्भवति पूर्वत्वघटितत्वेन व्यपवृक्तत्वादिति; तदाऽऽह—तदादित्वस्येत्यादिः। तदादित्वस्येत्यस्य—अतिदेष्टव्यस्य तदादित्वघटितधर्मस्येत्यर्थः।

एतेन—तदादित्वस्य प्रत्ययाव्यवहितपूर्वत्वघटितत्वस्य कथमप्यसम्भवात् तदादित्वस्य प्रत्ययाव्यवहितपूर्वत्वघटितरूपतया व्यपवृक्तत्वेन नातिदेश इत्यसङ्गतमित्यपास्तम्। पाणिनिमतेनादित्वस्य स्वघटकावधिकपूर्वत्वघटितत्वाच्च।

यथोद्देशपक्षमादाय 'रामौ' इत्यस्य सिद्धौ फलान्तरमाह—वस्तुत इति। अभ्याससंज्ञारूपमिति। मुखप्रविष्टवर्णस्य जातिव्यञ्जकत्वाज्जातिव्यञ्जकस्य ककारस्य प्रकृते विकाराभावेनार्धाधिकविकारेऽपि परिभाषाप्रवृत्तेरिति भावः। कथमभ्यासत्वमिति। स्थानिवद्भावेन तु नैतल्लभ्यम्, नवीनमतेन 'अनल्विधावि'ति तन्निषेधात् 'हलादिशेषः' इत्यस्य 'अभ्यासोऽहल भवति आदिश्चेच्छिष्यते' इत्येतदर्थकतया तस्याभ्यासत्वेन साक्षादवच्छिन्नोद्देश्यकत्वादिति भावः। समुदायत्वस्येति। ननु—तादृशसमुदायस्य उद्देश्यताश्रयसत्ताधीनतया विकृतावयवसत्ताव्याप्य-

# एकदेशविकृतमनन्यवत् ॥ ३७ ॥

अनन्यवदित्यस्यान्यवन्नेत्यर्थः ; तत्रान्यसादृश्यनिषेधेऽन्यत्वाभावः सुत-

---

समुदायघटकत्वेन तादृशविधेयताश्रयावधिकपूर्वत्वेन च तत्सिद्धेः । 'पूर्वोऽभ्यास' इत्यनेन द्वित्वशास्त्रीयविधेयताश्रयद्वित्वशास्त्रीयोद्देश्यताश्रयैतदुभयमात्रारब्धसमुदायघटकस्यैव तादृशविधेयताश्रयावधिकपूर्वस्याभ्याससंज्ञाविधाना'त्प्रोर्णु' इत्यस्याभ्याससंज्ञाप्रसङ्ग इति बोध्यम् ।

एकदेशविकृतमिति । एकदेशः=स्वावयवो, विकृतमिति भावक्तान्तप्रकृतिकार्शआद्यजन्तम् । अनन्यवत्=स्ववदित्यर्थः । तथा च स्वावयवविकारघटितं स्ववद्भवतीति यावत् । अत्रैकदेशेन विकृतमेकदेशो वा विकृतो यस्येति व्युत्पत्तिद्वयं तु न युक्तम् ; मान्ताकारान्तोक्तशब्दयोर्निरुक्तैकदेशविकृतत्वासंभवात् । कथंचिदकारान्तरामशब्दे तत्संभवेऽपि तत्रातिदेशस्य निष्फलत्वात् । 'एकदेशो विकृतो यस्मिन्नि'ति बहुव्रीहिर्वाऽत्र बोध्यः ।

न चैवं निर्जरशब्दे जराशब्दत्वापत्तिः ; एकदेशविकृतपदेन स्वाघटकत्व-स्वघटकमात्रोद्देश्यकविकारेतरत्वैतदुभयसम्बन्धेन स्वविशिष्टाघटितस्य ग्रहणात् ( 'निरि'त्यस्य 'जरा' इत्येतदघटकत्वेन स्वघटकमात्रोद्देश्यकविकारो ह्रस्वरूपस्तदितरत्वेन च स्वविशिष्टतया 'निर्जर' इत्यस्य तद्घटितत्वात्तदेकदेशविकृतत्वाभावात् ) । स्वघटकमात्रेति द्वितीयसंबन्धनिवेशान्न 'जर' इति समुदायस्यैकदेशविकृतत्वम् । न चैवमपि 'निर्जरे'त्यत्रारेति समुदायस्य जराशब्दत्वापत्तिः स्वघटकोद्देश्यकविकारे-

---

सत्ताकत्वेन विकृतावयवनिबन्धनकार्यत्वात् प्रकृतपरिभाषाया अप्रवृत्तौ अरित्यस्याभ्याससत्त्वाभावेनारेत्यादीनां सिद्धिर्न स्यादिति चेत्—अत्रोच्यते ; स्वविशिष्टवर्णघटितसमुदायघटकत्व—स्वीयविधेयताश्रयावधिकपूर्वत्वैतदुभयसम्बन्धेन द्वित्वशास्त्रविशिष्टस्य अभ्याससंज्ञा भवतीत्यर्थे तात्पर्यसत्त्वात् । सम्बन्धगतवैशिष्ट्यञ्च—स्वीयोद्देश्यताश्रयानवयवत्व—स्वीयविधेयताश्रयानवयवत्वैतदुभयसम्बन्धेन । तथा चैतादृशसमुदायत्वस्य तत्सत्ताधीनसत्ताकत्वाभावेन तदतिदेशाय तत्प्रवृत्तिः सूपपादेति बोध्यम् ।

अर्शआद्यजन्तमिति । यस्य य एकदेशो विकारघटितः स तद्वदित्यर्थः, यथा अदन्तरामशब्दस्यैकदेशः रामिति मान्तोऽकारलोपविकारघटितः अशास्त्रीयस्यापि विकारपदेन ग्रहणात् , स रामशब्दवदित्यतिदेशेन रामशब्दत्वारोपः सिद्ध्यतीति भावः । एकदेशो विकृतमिति कर्मधारयः समासः, विकृतशब्दस्य विशेषणत्वेऽपि परनिपातो निपातनादिति बोध्यम् । अनन्यवत्=स्ववदित्यर्थ इति । अनन्यशब्दस्य स्वपदार्थे रूढत्वात् । न अन्योऽनन्य इति व्युत्पत्तिस्तु नैतल्लभ्यम् ; अन्यत्वस्य केवलान्वयित्वात् । अनन्यशब्देन यद्वृत्तिधर्मारोपः कर्तव्यस्तस्य ग्रहणम् । अन्यशब्दाद्वतिस्तदन्तेन नञ्समासः, प्रसज्यप्रतिषेधश्च ; तदाऽऽह—अन्यसादृश्यनिषेधे

राम् । अत एव तादृशादर्थबोधः ; अन्यथा शक्ततावच्छेदकानुपूर्व्यज्ञानात्ततो बोधो न स्यात् । एवञ्च रामिति मान्तस्य यस्माद्विहितस्तत्त्वमौ इत्यस्य परादिवत्त्वेन सुप्त्वमिति तदादितदन्तत्वमार्थसमाजग्रस्तम् ।

छिन्नपुच्छे शुनि श्वत्वव्यवहारवन्मान्ते तत्त्वं लोकन्यायसिद्धम् ।

---

तरयावद्घटितस्याप्येकदेशविकृतपदेन ग्रहणात् । इत्थं च स्वघटकोद्देश्यकविकारघटितत्व स्वघटकोद्देश्यकविकारेतरयावद्घटितत्व-स्वविशिष्टाघटितत्वैतत्त्रितयसम्बन्धेन । स्वविशिष्टं स्ववद्भवतीति परिभाषार्थः । अत्र वैशिष्ट्यं च स्वाघटकत्व—स्वघटकमात्रोद्देश्यकविकारेतरत्वरूपं पूर्वोक्तमनुसन्धेयम् । अत्र मात्रपदनिवेशादेव 'काण्ड'इत्यादावेतन्न्यायेन प्रातिपदिकत्वानतिदेशान्न प्रकारान्तरेण ह्रस्ववारणपरभाष्यविरोधः ।

शक्ततावच्छेदकानुपूर्वीति । न च शक्ततावच्छेकानुपूर्वीरूपधर्मस्य विकृतावयवघटितत्वेन तदतिदेशासंभवात्कथं परिभाषासत्त्वेऽपि तादृशादर्थबोध इति वाच्यम्; 'एकदेशविकृतमनन्यवद्यथा भवेत्तथा करणीयमि'ति परिभाषार्थस्वीकारेण मान्तवृत्त्यानुपूर्व्यामेव तच्छक्ततावच्छेदकत्वारोपेण मान्तेऽपि तादृशशक्त्यनुमानेन ततो बोधस्य निष्प्रत्यूहत्वात् ।

केचित्तु—रामशब्दत्वस्याखण्डतया विकृतावयवनिबन्धनकार्यत्वाभावेन परिभाषाप्रवृत्तिः सुलभैव । न चैवमेकदेशविकृतत्वासंभवः ; तत्तच्छब्देषु वर्णकल्पनायामपि रामशब्दत्वादेरखण्डत्वे बाधकाभावात् । न चानुपूर्व्येव रामशब्दत्वावगमप्रयोजिका, अत एव घटशब्दे न रामशब्दत्वबुद्धिः तथा चात्र पूर्वोक्तदिशाऽऽनुपूर्व्या अनतिदेशेन कथं रामशब्दत्वावगतिरिति वाच्यम्; आनुपूर्व्या अभावेऽपि परिभाषाया एवात्र खण्डरामशब्दत्वावगतिप्रयोजकत्वात् ।

आर्थसमाजेति । अर्थानामयमार्थः, स चासौ समाजस्तेन ग्रस्तम् । अर्थसमाजेति पाठे तु 'अर्थानां समाज' इति व्युत्पत्तिर्बोध्या ।

---

अन्यत्वाभावः सुतरामिति मूलोक्तव्याख्यानं नाऽऽश्रयणीयं गौरवादिति भावः ।

ननु—मूलोक्तव्याख्यानमपि कथं सङ्गतम् यद्येकदेशविकृतापेक्षयाऽन्यो गृह्यते, तर्हि सादृश्यस्य भेदघटिततया मान्तापेक्षयाऽन्यघटपटादिभिन्नत्वे सति घटपटादिगतभूयोधर्मवत्त्वरूपसादृश्यस्य निषेधेऽपि मान्तेऽदन्तरामशब्दत्वं सुदुर्लभम् । अपि च—अदन्तरामशब्दस्याप्यन्यशब्देन सङ्ग्रहात्तद्गतसादृश्यनिषेधे अदन्तरामभिन्नत्वे सति रामगतभूयोधर्मवत्त्वरूपसादृश्याभाववत्त्वं मान्तस्येति सुतरामन्यत्वाभावः कथमिति चेत्—अत्रोच्यते ; अन्यो नाम—भेदाधिकरणम् , स च भेदो रामशब्दत्वावच्छिन्नप्रतियोगिताको ग्राह्यः, यद्गतधर्मारोपः कर्तव्यस्तद्गतधर्मावच्छिन्नप्रतियोगिताकभेदस्य ग्रहणात् । तथा च भेदाधिकरणगतधर्मः सादृश्यम् । तादृशभेदवत्त्वमिति यावत् । तच्च भेदस्वरूपम् । तथा च प्रकृते रामशब्दत्वावच्छिन्नप्रतियोगिताकभेदस्य राम्-

अत एव 'प्राग्दीव्यत' इति सूत्रे भाष्ये दीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरण-मिदमित्युक्त्वा, 'किमर्थं विकृतनिर्देशः ? एतदेव ज्ञापयत्याचार्यो भवत्येषा परिभाषैकदेशविकृतमनन्यवदि'त्युक्तम् । एतेन—अयं न्यायः शास्त्रीयकार्य एव शास्त्रीयविकार एवेत्यपास्तम् । विकृतावयवनिबन्धनकार्ये तु नायं,

---

अत्र एवेति । एतन्न्यायाङ्गीकारादेवेत्यर्थः । दीव्यतिशब्दैकेति । दीव्यतिशब्दवृत्त्यर्थ-वत्त्वं तान्ते आरोप्य कृतमनुकरणमित्यर्थः । अत एवावध्यवधिमतोः साजात्यादर्थ-निर्देशघटितसूत्र एवाणः सम्बन्धः, तेन 'बाह्वादिभ्यश्चे'त्यादौ नाणः सम्बन्धः । एतेन—रीश्वरादितिवन्निरर्थकतान्तस्यावधित्वस्वीकारेऽपि दोषाभावेन परिभाषाप्रवृत्ति-र्निष्फलेत्यपास्तम् ।

---

शब्दे निषेधात् 'तत्त्वमित्यन्यत्वाभाव. सुतराम्' इति ग्रन्थो रमणीय एव । अत्र भेदघटितसादृश्य-स्वीकारे दोषाभावेऽपि, अभेदघटितस्यैव स्वीकारो वैयाकरणानामिति बोध्यम् ।

अर्थवत्त्वमिति । दीव्यतिशब्दवाच्यार्थवाचकतावच्छेदकमित्यर्थः । आरोप्येति । एक-देशविकृतन्यायेनेत्यर्थः । कृतमनुकरणमिति । उच्चारणमित्यर्थः । मुख्यं शब्दरूपार्थबोधकत्व-रूपमनुकरणत्वमादाय यथाश्रुतार्थकत्वन्तु न युक्तम्; तथा सति 'अर्थवद्दीव्यच्छब्दात् प्रागणधि-क्रियत' इत्यर्थापत्त्या अर्थासङ्गतेः, अर्थवद्दीव्यच्छब्दस्याष्टाध्याय्यामदर्शनात् । एवञ्च सूत्रे दीव्यतिशब्दस्यैकदेशविकृतो दीव्यच्छब्दो निर्दिश्यते । स 'चैकदेशविकृत'न्यायेन दीव्यतिशब्द-वाच्यार्थं बोधयति, तेनार्थस्यावधित्वं लभ्यते । अत एव प्रकृतसूत्रस्थदीव्यतिशब्दवाच्यस्यैवार्थस्य अवधिभावो विवक्षित इति कैयटः । एवञ्च एकदेशविकृतोऽप्यर्थबोधक इति विवरणञ्च सङ्गच्छते ।

एतेन—'प्रकृतोपयोग्यर्थशून्यत्वादर्थवत्त्वारोपस्यानुकरणेऽनुपयोगाच्च दीव्यतिशब्दवृत्त्यर्थ-वत्त्वं तान्ते आरोप्य, कृतमनुकरणमित्यर्थं इत्ययुक्तम्' इत्यपास्तम् ।

यदपि केचित्—सूत्रे दीव्यच्छब्दो दीव्यतेरनुकरणम्, तच्चानुपपन्नमनुकार्यसमानानुपूर्वी-कत्वाभावादत 'एकदेशविकृत' न्यायेन तदुपपाद्य दीव्यतिशब्दस्यैवावधिभावमभ्युपगच्छन्ति । तदप्यकिञ्चित्करम्, फलेऽविशेषात् पूर्वोक्तकैयटोद्योतविरोधाच्च, दीव्यतेरनुकरणत्वोपपत्तये शक्तता-वच्छेदकानुपूर्व्या अतिदेशस्य भवताऽपीष्टत्वाच्च ।

यदपि—स्वांशे चारितार्थ्यस्य चर्चा न कार्या, यदनुपपत्त्या यत्कल्पितं तेन तदुपपत्ति-मात्रस्य ज्ञापनेऽपेक्षितत्वादिति । तदप्यनवबोधविजृम्भितम्; यद्येकदेशानुकरणत्वमादाय दीव्य-च्छब्दमात्रस्यावधिभावे पाणिनितात्पर्यम्, तर्हि ततोऽपि लाघवात् 'प्राग् दीवोऽण्' इत्येव वक्तव्ये 'दीव्यत' उच्चारणमेकदेशविकृतन्यायं बोधयति । ज्ञापिते तु तस्मिन् तथा न्यासो न कर्तुं शक्यते, अर्थाधिकविकारेण तन्न्यायाप्रवृत्तेरिति स्वांशे चारितार्थ्यस्य सूपपादत्वात् । अर्थाधिकविकारे न्यायाप्रवृत्ताविदं भाष्यमपि गमकं बोध्यम् ।

मूले—विकृतावयवनिबन्धनकार्ये त्विति । विकृतावयवसत्ताव्याप्यसत्ताकत्वं विकृताव-यवनिबन्धनत्वम्, तेन 'कतरत् इत्यादौ ह्रस्वान्तत्वप्रयुक्तः सम्बुद्धिलोपो न, न वा 'मघवतः' इत्यत्रान्न-न्तत्वप्रयुक्तं सम्प्रसारणम्; नापि 'राज्ञः क च' इति कादेशोत्तरमनन्तत्वेन 'राजकीयमि'त्यत्राल्लोपः ।

छिन्नपुच्छे शुनि पुच्छवत्त्वव्यवहारवद्विकृतावयवव्यवहारस्य दुरुपपादत्वात् ।
एवमक्तपरिमाणग्रहणेऽपि नायम्,

---

अक्तपरिमाणेति । अक्तपरिमाणम् = परिच्छिन्नपरिमाणं, तेन संख्यात्वव्याप्यधर्मानयने परिमाणत्वव्याप्यधर्मानयने तद्घटितधर्मानयने चैतदप्रवृत्तिरित्यर्थः । तेन शतत्वशतमुद्राघटितमञ्जूषात्वयोः शेटकत्वशेटकपरिमितधान्यघटितमञ्जूषात्वयोश्च नातिदेशः ।

केचित्तु — परिच्छेदकधर्मसमनियतधर्मस्यापि नानेनातिदेशः । अत एव शेखरे चतुष्ट्वसमनियतजराशब्दत्वस्यानेनातिदेशाभावेन स्थानिवत्सूत्रेण तदतिदिश्य जरसादेश उपपादितः । 'गुडोदकमि'त्यत्र दकशब्दे उदकशब्दत्वमनेन न्यायेना-

---

परिच्छिन्नपरिमाणमिति । परिमाणेन परिच्छिन्नार्था अक्तपरिमाणपदेन गृह्यन्ते । परिमाणपदेन सङ्ख्याया अपि ग्रहणम् । आनुपूर्वीविशेषस्यापि ग्रहणमिति केचित् । तथा च परिच्छिन्नार्थवाचकानां द्रोणाढकाद्येकद्व्यादिशब्दानां सर्वनामतिङादिशब्दानाञ्चानेन न्यायेन न्यूने न प्रवृत्तिः । अक्तपरिमाणत्वञ्च — सङ्ख्यात्व परिमाणत्वैतदन्यतरव्याप्यधर्मावच्छिन्नविषयताकबुद्धिप्रतिबन्धकबुद्धिविषयताश्रयत्वम् । सङ्ख्यात्व परिमाणत्वव्याप्यैकत्वाऽऽढकत्वधर्मावच्छिन्नैकाढकविषयकबुद्धिप्रतिबन्धक द्वि व-खारित्वधर्मावच्छिन्नद्वि-खारीविषयकबुद्धिविषयताश्रयत्वं द्वि खार्योरिति लक्षणसमन्वयः ।

अत्रेदं तत्त्वम् — द्रोणाढकादीनामर्थेषु मुख्यमेवाक्तपरिमाणत्वम्, सर्वनामतिङादिषु च तद्भाक्तमेव — अक्तपरिमाणसमनियतानुपूर्वीमत्त्वरूपम् । तदभिप्रायेणैव तत्र तत्र भाष्ये व्यवहार इति बोध्यम् ।

केचित्तु — सर्वत्र मुख्यमेव तदस्तीति मन्यन्ते । तथा हि — अक्तपरिमाणत्वञ्च — सङ्ख्यात्व-परिमाणत्वान्यतरव्याप्ययत्किञ्चिज्जातिव्यापकीभूताभावप्रतियोगित्वम् । व्यापकत्वघटकाधिकरणता च स्वाश्रयाश्रयत्वसम्बन्धावच्छिन्ना ग्राह्या । ( तथा च सङ्ख्यात्वव्याप्या जातिः — पञ्चत्वम्, स्वाश्रयाश्रयत्वसम्बन्धेन तदधिकरणम् — पञ्चाक्षरावयवकसमुदायः, तन्निष्ठाभावः — न जरात्वाभावाभावः, अपि तु घटत्वाद्यभाव एव, तदीयप्रतियोगितावच्छेदकम् — घटत्वत्वम्; अनवच्छेदकम् — जरात्वाभावत्वम्, तद्वत्वरूव्यापकत्वम् — जरात्वाभावस्य, तत्प्रतियोगित्वम् — जरात्वस्येति लक्षणसमन्वय । एवञ्च तिङ्त्व-सर्वनामत्व प्रत्ययत्वोपसर्गत्वादीनामक्तपरिमाणत्वमस्ति, धातुत्व-प्रत्ययत्वादीनाञ्च न तथात्वमिति । तन्न सम्यगित्यन्ये; अङ्गत्वे उक्ताक्तपरिमाणत्वाभावेन तदसङ्गतेः । न चेष्टापत्तिः; अङ्गसंज्ञासूत्रस्थभाष्यविरोधात् ।

वस्तुतस्तु — तद्भाष्यमेकदेशिभूतम्, 'आयसी गोमती' इत्यादौ एकदेशविकृतन्यायेनाङ्गत्वमाश्रित्य नुमाऽऽपादनपरं'राचः परस्मिन्नि'ति सूत्रस्थभाष्यविरोधात् ।

तेन शतत्वेति । शतशब्दस्य 'ब्राह्मणानां शतम्' इत्यादौ सङ्ख्यापरत्वेनापि दर्शनाच्छतत्वस्य सङ्ख्यात्वव्याप्यत्वं नानुपपन्नमिति बोध्यम् । शतशब्दः सङ्ख्येयपर एव भवतीति मते तु — शतत्वशब्दः शतत्व-वत्परो बोध्यः । शतमुद्राघटितेति । अत्र घटितशब्द आधाराधेयभावेन विशिष्टपरः । चतुष्ट्वसमनियतेति । अत्र चतुष्ट्वं चतुष्ट्वत्वपरम्, सामनैयत्यनियामकसम्बन्धश्च स्वाश्रयाश्रयत्वरूपः ।

उक्तयुक्तेः ; एतत् 'येन विधिरि'त्यत्र भाष्यकैयटयोर्ध्वनितम् ।

यत्र त्वर्द्धं तदधिकं वा विकृतं, तत्र जातिव्यञ्जकभूयोवयवदर्शनाभावेन तत्त्वाप्रतीतौ कार्यसिद्ध्यर्थं विकृतानलरूपावयवत्वप्रतीत्यर्थं च स्थानिवत्सूत्रम् । क्वचित्तु लक्ष्यानुरोधान्न्यायानाश्रयणम् , तेन 'अभीयादि'त्यादिसिद्धिः ।

---

श्रित्योदके केवल इति स्वरापादनपरं भाष्यं त्वेकदेश्युक्तिः । अत ए'वाभीयादि'त्यत्र भान्ते अभिशब्दत्वातिदेशभावेनोपसर्गात्परत्वाभावाद् ह्रस्वो नेति प्राहुः ।

अन्ये तु—'उदके केवल' इति सूत्रस्थभाष्यविरोधान्नैतद्युक्तम् । 'अभीयादि' त्यत्र तु न्यायस्यानित्यत्वाद् ह्रस्वाप्रवृत्तिः ; अत 'एवाभीयात्पतञ्जलि'रित्यादौ न जश्त्वमिति वदन्ति ।

उक्तयुक्तेरिति । लोकव्यवहारादित्यर्थः । ध्वनितमिति । तत्र 'व्यक्तपरिमाणवाचकाः संख्यापरिमाणशब्दा नैवाधिके न्यूने वा प्रवर्तन्त' इत्युक्तम् ।

नन्वनेनैव न्यायेन सर्वत्र सिद्धेः स्थानिवत्सूत्रं व्यर्थमत आह—यत्रेति । अर्धं तदधिकं वेति जातिव्यञ्जकभूयोवयवदर्शनाभावे हेतुभूतमेवैतन्न तु न्यायाप्रवृत्तौ । अत एवार्धाधिकविकारभूते मुखादौ न्यायेन श्वत्वावगतिः । कार्येति । 'रामाये' त्यादौ सर्वविकारे स्थानिवत्त्वेन दीर्घसिद्ध्यर्थमित्यर्थः ।

वस्तुतस्तु— स्वसमभिव्याहृतवर्णाघटितत्व– स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रया- वधिकपूर्वत्वैतदुभयसम्बन्धेन द्वित्वशास्त्रीयोद्देश्यताश्रयविशिष्टस्य 'पूर्वोऽभ्यास' इत्यनेना- भ्यासंसंज्ञाबोधना'च्चकारारे'त्यादौ दोषाभावेन परिभाषा निष्फलैव, न वा 'रामा- त्रि'त्यादौ पदत्वाद्यसिद्धिः । यथोद्देशपक्षे पूर्वं जातपदत्वस्यानुमानिकस्थान्या- देशभावेनौकारान्ते सुलभत्वात् । न च शक्ततावच्छेदकातिदेशार्थं तत् ; अकारान्त- वृत्तिशक्ततावच्छेदकधर्मातिदेशाभावेऽप्यौकारान्तवृत्तेस्तस्य पूर्ववदतिदेशेन 'रामावि'- त्यादौ बोधसम्भवात् । 'न चोदके केवल' इति सूत्रस्थभाष्यविरोधः, ज्ञापकपर-

---

ह्रस्वाप्रवृत्तिरिति । 'वार्णादाङ्गं बलीयः' इति परिभाषया प्रथमं ह्रस्वे पश्चात्सवर्णदीर्घे कृतेऽनन्तरं 'लक्ष्ये लक्षण'न्यायेन ह्रस्वाप्रवृत्तौ 'अभीयादि'त्यस्य सिद्धौ न तदर्थमस्यानित्यत्वमत आह— अत एवेति ।

मूले—विकृतानलरूपेति । विकृतोऽनलरूपोऽवयवस्तत्त्वमित्यर्थः, तेन यशश्शब्दाण्णिचि टिलोपे अनेनासत्त्वालाभेन स्थानिवत्त्वेन तत्त्वमाश्रित्य अस्मायेति विनिः सिद्ध्यति । अनेन न्यायेन तु विकृतावयवनिबन्धनकार्यं न सेत्स्यतीति भावः ।

स्पष्टं च क्वचिन्न्यायाप्रवृत्तिः 'प्रथमयोः पूर्वसवर्ण' इत्यत्र कैयटेन दर्शितेत्यन्यत्र विस्तरः ॥ ३७ ॥

॥ इति शास्त्रत्वसम्पादनोद्देशनामकं प्रथमं प्रकरणम् ॥

---

भाष्यविरोधवत्तस्याकिंचित्करत्वात् । न च 'देवदत्तावारतुरि'त्यादौ देवादेः समुदायस्याभ्याससंज्ञापत्तिः । पदसंस्कारपक्षे 'आरतुरि'त्यस्य सिद्ध्युत्तरं देवदत्तशब्देन तद्योगादिति वाच्यम्; वाक्यसंस्कारपक्षाऽऽश्रयणेन देवदत्तादिशब्दस्य द्वित्वशास्त्रीयोद्देश्यताश्रयसमभिव्याहृतत्वेन तद्घटिततादृशसमुदायेऽभ्याससंज्ञाया अप्रवृत्तेः । अभ्याससंज्ञीयविशिष्टपदार्थे स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयद्वित्वप्रयोजकप्रत्ययान्ततदादिघटकेति विशेषणदानेनादोषाच्चेति दिक् ॥ ३७ ॥

॥ इति भूतितिलके शास्त्रत्वसम्पादनोद्देशनामकं प्रथमं प्रकरणम् ॥

---

मूले—स्पष्टं चेति । अत्र स्पष्टं यथा स्यात्तथेति योज्यम्; अन्यथा दर्शितेत्यस्य स्त्रीलिङ्गत्वेन तदसङ्गतिः स्पष्टैव ॥ ३७ ॥

॥ इति श्रीवैयाकरणप्रवर 'गणपतिशास्त्रिमोकाटे' कृत-तत्त्वप्रकाशिकाभिधे 'भूति'व्याख्याने शास्त्रत्वसम्पादनोद्देशनामकं प्रथमं प्रकरणम् ॥



## अथ बाधबीजन्नाम द्वितीयं प्रकरणम् ।

# पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः ॥ ३८ ॥

पूर्वात्परं बलवत्, विप्रतिषेधशास्त्रात् पूर्वस्य परं बाधकमिति यावत् ॥३८॥
नन्वेवं 'भिन्धी'त्यत्र परत्वात्तातङा बाधितो धिर्न स्यादत आह—

## अथ भूतितिलके द्वितीयं प्रकरणम् ।

शास्त्रत्वसम्पादनोद्देशप्रकरणानन्तरं क्रमप्राप्तं बाधबीजप्रकरणमारभमाणस्तद्बीजानि सङ्कलय्य दर्शयति—पूर्वपरेति । उत्तरोत्तरं बलीय इति । आनुपूर्व्ये द्वे वाच्ये इति द्वित्वम् । पूर्वपरेति समस्तपदघटकपूर्वपूर्वपदप्रतिपाद्यशास्त्रापेक्षयोत्तरोत्तरपदप्रतिपाद्यशास्त्रस्य बलवत्त्वमित्यर्थः । तथा च सति विरोधे बलीयसा दुर्बलं बाध्यत एवेति तु लोकतः सिद्धम् ।

अनुमानप्रयोगमाह—पूर्वादिति । परशास्त्रं पूर्वशास्त्रात्रधिकबलवत् परशास्त्रत्वात् । पक्षतावच्छेदकस्य हेतुत्वेनास्य अप्रयोजकतया विपरीतशङ्काकलुषितत्वात्तन्निरासायाऽऽह—विप्रतिषेधशास्त्रादिति । एतेन विप्रतिषेधशास्त्ररूपहेतोः शब्दरूपत्वेनाऽऽकाशवृत्तित्वाद्वैयधिकरण्येन नानुमानसम्भव इत्यपास्तम् ॥ ३८ ॥

नन्वेवमिति । एवम् = परशास्त्रस्य परत्वरूपबलवत्त्वेन बाधकत्वकल्पनायाम् ।

धिर्न स्यादिति । अत्र केचित्—तातङ्विधेर्वैकल्पिकत्वेन तदभावपक्षे ध्यादेशेनोक्तरूपसिद्धेरवतरणासङ्गत्या 'भिन्धकी'त्यत्र धिना परत्वाद् बाधितोऽकज् न स्यादिति पाठभेदेनावतारयन्ति । तन्न; धेरन्तरङ्गत्वेनातुल्यबलत्वात् परत्वेन बाधासम्भवात् । अत एव भाष्ये'ऽन्तरङ्गत्वाद्धित्वेऽकजि'त्येवोक्तम् ।

यत्तु—विकल्पस्थलेऽभावस्यापि विधेयत्वेन 'तातङा बाधित' इत्यस्य 'तातङभावेन बाधित' इत्यर्थादवतरणसङ्गतिरिति केचित् । तदपि न समीचीनम्; अप्राप्तविभाषास्थलेऽभावस्य सिद्धत्वेन शास्त्रेण तद्विधानासम्भवात् । अत एव 'मुमुक्षत' इत्यत्र 'मुचोऽकर्मस्ये'ति गुणाभावपक्षे 'अत्र लोपोऽभ्यासस्ये'त्यभ्यासलोपो न ।

अन्ये तु—'भिन्धी'ति भिन्तादित्यस्योपलक्षणम्, क्वचिद् भिन्तादित्येव मूलपाठः तथा च 'भिन्तादि'त्यत्र तातङा बाधितो धिर्नैव स्यादिति तातङि स्थानिवद्भावप्रतिषेधानर्थक्यमिति शङ्कायामाह—पुनः प्रसङ्गेति । अत एव 'पुनः प्रसङ्गविज्ञानमि'त्येतावदनुक्त्वा, 'सिद्धमि'त्येतदन्तं भाष्यकृतोक्तम् । इत्थञ्च 'पुनः प्रसङ्गविज्ञानमि'त्येव परिभाषा, भाष्ये तातङि स्थानिवद्भावप्रतिषेधानर्थक्य-

## पुनः प्रसङ्गविज्ञानात्सिद्धम् ॥ ३९ ॥

नन्वेवं 'तिसृणामि'त्यत्र परत्वात्तिस्रादेशे पुनस्त्रयादेशः स्यादत आह—

## सकृद्गतौ विप्रतिषेधे यद्बाधितं तद् बाधितमेव ॥४०॥

तत्र क्वचिच्चरितार्थयोरेकस्मिन् युगपदुभयोरसम्भवेन बाधक भावात्पर्यायेण तृजादिवच्छास्त्रद्वयप्रसङ्गे नियमार्थं विप्रतिषेधसूत्रमिति 'सकृ

---

शङ्कानिवारकतया सिद्धशब्दान्तमुपन्यस्तम्। प्रसङ्गे सति=शास्त्रस्य प्राप्तौ सत्त्याम पुनस्तस्य विज्ञानात्=पुनर्बुद्धिविषयीकरणात्सिद्धमतो वार्तिकं तत्प्रतिषेधायाऽऽवश्य मिति तदाशयमुपवर्णयन्ति।

परे तु—'तिसृणामि'त्यत्र परत्वात्तिस्रादेशेन बाधितो नुट् न स्यादिति भाष्य क्तमेतदवतरणं दातुमुचितमिति वदन्ति ॥ ३९ ॥

सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव। गतौ=शास्त्रयोः प्राप्तौ; विप्र षेधे सति सकृद् यद् बाधितं तद् बाधितमेव ज्ञेयमित्यर्थः। द्वयोर्न्याययोः सिद्धिप्रक मुपपादयति—तत्र क्वचिच्चरितार्थयोरिति। एकस्याचारितार्थ्ये त्वतुल्यबलवत्त्वे तद्विषयस्यैवाभाव इति भावः। पर्यायेण तृजादिवच्छास्त्रद्वयप्रसङ्ग इति। असति बाध उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्य क्लृप्ततया पर्यायस्थले च तत्तदन्यतरत्व दिना व्यापकत्वम्, यथा—'रुग्रिमीकां, ण्वुलतृचोश्चा'न्यतमत्वादिना व्यापकत तथा च 'कारक' इत्यत्र तदुद्देश्यतावच्छेदकवति लक्ष्ये स्वरूपेण तृचोऽभावेऽप्यन्य तरत्वेन तदभावाभावान्न व्यापकताहानिः।

केचित्तु—व्यापकभेदेन तल्लक्षणस्यापि भेदात्पर्यायस्थले 'ण्वुल्तृचावि'त ण्वुल्निष्ठव्यापकत्वलक्षणे तादृशोद्देश्यतावच्छेदकाधिकरणं तृजनधिकरणं, तृज्नि व्यापकत्वलक्षणे तदुद्देश्यतावच्छेदकाधिकरणं ण्वुलनधिकरणं बोध्यं, न त्व तरत्वादिना व्याप्यव्यापकभाव इति वदन्ति।

यत्तु—पर्यायस्थले उद्देश्यतावच्छेदकसामानाधिकरण्येन विधेयान्वयो, न त वच्छेदकावच्छेदेनेत्युभयोरपि समावेशसिद्धिरिति। तन्न; उभयोरप्यविवक्षायां कदा

---

### अथ तत्त्वप्रकाशिकायां बाधबीजन्नाम द्वितीयं प्रकरणम्।

क्वचिच्चरितार्थयोरितीति। ननु विप्रतिषेधशब्दस्य विरोधवाचकत्वात् अन्य न्यत्र लब्धावकाशत्वे सति एकस्मिल्लक्ष्ये युगपत्प्रवृत्तिरूपे तुल्यबलविरोध इत्यर्थः कस्माल्ल इति चेन्न। 'परं कार्यमि'त्येव वक्तव्ये विरोध एव बाधकत्वात्तेनैव 'विरोधे सति परस्य बलवत्त्व त्यर्थे लब्धे पुनर्विप्रतिषेधसामर्थ्यात्तल्लभ्यत इति भावः।

दूगति'न्यायसिद्धिः । "यथा—तुल्यबलयोरेकः प्रेष्यो भवति, स तयो. पर्यायेण कार्यं करोति, यदा तमुभौ युगपत्प्रेषयतो नानादिक्षु च कार्ये, तदोभयोर्न करोति यौगपद्यासम्भवात् , तथा शास्त्रयोर्लक्ष्यार्थयोः क्वचिल्लक्ष्ये यौगपद्येन प्रवृत्त्यसम्भवादप्रतिपत्तौ प्राप्तायामिदं परविध्यर्थम् । तत्र कृते यदि पूर्वप्राप्तिरस्ति, तर्हि तदपि भवत्येवेति पुनः प्रसङ्गविज्ञानसिद्धिरि"ति विप्रतिषेधसूत्रे भाष्ये स्पष्टम् ।

यत्तु—कैयटादयो व्यक्तौ पदार्थे प्रतिलक्ष्यं लक्षणोपप्लवादुभयोरपि शास्त्रयोस्तल्लक्ष्यविषययोरचारिताार्थ्येन पर्यायेण द्वयोरपि प्राप्तौ परमेवेति नियमार्थमिदमिति 'सकृद्गति'न्यायसिद्धिः । अत्र पक्षे एतन्नियमवशादेतल्लक्ष्यविषयपूर्वशास्त्रानुपप्लव एव । जातिपक्षे तु उद्देश्यतावच्छेदकाक्रान्ते क्वचिल्लक्ष्ये चरितार्थयोर्द्वयोः शास्त्रयोः 'सत्प्रतिपक्ष'न्यायेन युगपदुभयासम्भवरूपविरोधस्थल उभयोरप्यप्राप्तौ परविध्यर्थमिदमिति पुनः प्रसङ्गविज्ञानसिद्धिरित्याहुः । तन्न, व्यक्तिपक्षे सर्वं लक्ष्यं शास्त्रं व्याप्नोति न जातिपक्षे इत्यत्र मानाभावात् । 'न ब्राह्मणं हन्यादि'त्यादौ जात्याश्रयसकलव्यक्तिविषयत्वार्थमेव जातिपक्षाश्रयणस्य भाष्ये दर्शनात् ।

अत एव 'सरूप'सूत्रे भाष्ये "जातौ पदार्थेऽनवयवेन साकल्येन विधिप्रवृत्ते 'गौरनुबन्ध्य' इत्यादौ सकलगवानुबन्धनासम्भवात् कर्मणो वैगुण्यमुक्तम् । द्रव्यवादे चासर्वद्रव्यावगते 'गौरनुबन्ध्य' इत्यादावेकः शास्त्रोक्तोऽपरोऽशास्त्रोक्त" इत्युक्तम् । किञ्च—न हि भाष्योक्ततृजादिदृष्टान्तस्य व्यक्तिपक्ष

---

ण्वुल्तृज्रहितप्रयोगस्यापि साधुतापत्तेः । इत्थञ्च प्रकृतेऽपि बाधकाभावात् 'त्रेस्त्रय एतच्छास्त्रीयोद्देश्यतावच्छेदकव्यापकत्वं त्रयादेशस्य तिसृत्रयैतद्वृत्त्यन्यतरत्वेनैव स्यात् , एवं 'त्रिचतुरोरि'ति शास्त्रविधेयस्य 'तिस्रि' त्यस्याप्युक्तान्यतरत्वेनैव व्यापकत्वं स्यादिति भावः ।

व्यक्तौ पदार्थ इति । 'व्यक्तिः पदानां वाच्ये'ति मत इत्यर्थः । ननु परमेवेति नियमकल्पने तद्व्यक्तिविषयककल्पितपूर्वशास्त्रस्य वैयर्थ्यं दुर्वारमित्यत आह— अत्र पक्ष इति । जातिपक्ष इति । जातिपदं प्रवृत्तिनिमित्तपरम् । सत्प्रतिपक्षन्यायेनेति । यथा सत्प्रतिपक्षस्थले न कस्यापि साध्यस्यानुमितिः, परस्परप्रतिबन्धादत्रापि तथैव न कस्यापि शास्त्रस्य प्रवृत्तिः स्यादित्यर्थः । इदमिति । विप्रतिषेध इति शास्त्रमित्यर्थः । सर्वं लक्ष्यमिति । कर्म द्वितीयान्तम् । शास्त्रमिति । कर्तृप्रथमान्तम् । उद्देश्यतावच्छेदकावच्छेदेनान्वयस्य सर्वस्मिन्नेव पक्षे अभियुक्तैरङ्गीकारादित्यर्थः । अस्मिन् लोकसिद्धेऽर्थे भाष्यसम्मति सप्रपञ्चं निरूपयति—न ब्राह्मणं हन्यादिति ।

एव सर्वविषयत्वं न जातिपक्ष इत्यत्र मानमस्ति ।

अपि च व्यक्तिपक्षेऽप्यन्यव्यक्तिरूपविषयलाभेन चरितार्थयोरियं व्यक्ति-विरोधात्स्वविषयकत्वं न कल्पयतीति वक्तुं शक्यम् । जातिपक्षेऽपि तज्जात्या-श्रयतद्व्यक्तिविषयकत्वमेव नैतद्व्यक्तिविषयत्वमित्यत्र विनिगमकाभावः ।

तत्र लक्ष्यानुसारात् क्वचिच्छास्त्रीयदृष्टान्ताश्रयणं, क्वचिल्लौकिकदृष्टान्ता-श्रयणमिति भाष्यसम्मतमार्ग एव युक्त इति बोध्यम् ।

द्वयोः कार्ययोर्यौगपद्येनासम्भव एव विप्रतिषेधशास्त्रोपयोगी । इद'मिको

---

कैयटमतं दूषयित्वा स्वमतं निगमयति—तत्रेति । शास्त्रीयदृष्टान्तेति । 'तृजादि-भिस्तुल्यं पर्यायः प्राप्नोती'ति भाष्योक्ततृजादिदृष्टान्तेत्यर्थः । लौकिकेति । यथा 'तुल्य-बले'ति भाष्योक्तलौकिकदृष्टान्तेत्यर्थः ।

यौगपद्येनासम्भव इति । एकस्मिन् प्रयोगे यौगपद्येनासम्भवो विप्रतिषेधशास्त्रप्रवृत्त्युपयोगी, न तु केवलमेकस्य कार्यद्वयासम्भव एव । अत

---

कैयटमतं दूषयित्वेति । अयम्भावः—कैयटः व्यक्तिपक्षे प्रतिलक्ष्यं लक्षणोपप्लवात् 'राम+भ्यस्'इत्यर्थमुपप्लुत'सुपि च, बहुवचने झल्येदि'त्येतयोरचारितार्थ्यात्तृजादिदृष्टान्तेनान्यतरत्वेन व्यापकत्वं व्यापकत्वकुक्षिप्रविष्टाधिकरणतायां वा सङ्कोचे निरुक्तलक्ष्ये उभयोः पर्यायेण प्राप्तौ परनियमस्तार्थत्वेन सकृद्गतिन्यायसिद्धिः । जातिपक्षे हि उपप्लवाभावात् क्वचित् चारितार्थ्ययोः 'सत्प्रतिपक्ष'न्यायेन निरुक्तलक्ष्येऽप्राप्त्या परविध्यर्थत्वेन पुनः 'प्रसङ्गविज्ञान'न्यायसिद्धिरित्याह । तन्न; उभयपक्षेऽपि सम्भवति लघुधर्मस्य व्यापकतावच्छेदकत्वे गुरुधर्मस्य तत्त्वासम्भवेन उद्देश्यतावच्छेदके एव तत्र सङ्कोचः स्यादित्युभयन्यायासिद्धिरिति नागेशेनोक्तम्—'व्यक्तिपक्ष' इत्यारभ्य 'अपरोऽशास्त्रोक्तः' इत्यन्तेन । तत्र कैयटः प्रत्यवतिष्ठते—नैवम्, यतो ह्युद्देश्यता-वच्छेदके सङ्कोचे व्यक्तिपक्षे तल्लक्ष्ये उभयोरप्राप्तौ उपप्लुतशास्त्रवैयर्थ्यमेव स्यादिति तत्राधिकरण-तायामेव सङ्कोचः । जातिपक्षे तु सूत्रवैयर्थ्याभावात् सम्भवति उद्देश्यतावच्छेदके सङ्कोच इति; अत आह—नागेशः—मूले—किञ्चेति । तृजादिदृष्टान्तेनाधिकरणतायां सङ्कोचे तस्य च दृष्टान्तस्य जातिव्यक्त्युभयपक्षकत्वे बाधकाभावेन जातिपक्षेऽप्यधिकरणतायां सङ्कोचे उभयन्यायासिद्धिरतदव-स्थैवेति तदाशयः ।

न केवलं प्राप्तिमात्रेणाधिकरणतायां सङ्कोचः, अपि तु यत्रोभयशास्त्रवैयर्थ्यं तत्रैवाधिकरण-तायां सङ्कोचः; अन्यथा 'श्रीशः' इत्यत्र 'इको यणचि' इत्यस्य 'अकः सवर्णे दीर्घः' इत्यस्य च प्राप्त्या तत्राप्यधिकरणताया सङ्कोचे पर्यायापत्तिर्दुरुद्धरैव स्यात् । तस्मात् सूत्रवैयर्थ्येऽधिकरणतायां सङ्कोचः, तत्सार्थक्ये च उद्देश्यतावच्छेदके एव । तत्र सूत्रवैयर्थ्यं व्यक्तिपक्षे एव न जातिपक्षे इति तत्र तृजादिदृष्टान्तप्रसक्तिरिति कैयटाभिमताशयं खण्डयन्नाह—नागेशः मूले—**अपि चेति ।** यत्रोपप्लावकशास्त्रवैयर्थ्यं तत्रैवाधिकरणतायां सङ्कोचो न पुनरुपप्लुतशास्त्रवैयर्थ्यं तत्प्रयोजकम् । अत एव व्यक्तिपक्षे 'श्रीशः' इत्यत्र यण् न इति तदाशयः । तस्माल्लक्ष्यानुरोधेन क्वचित् तृजादि-दृष्टान्ताश्रयणम्, क्वचिच्च लौकिकन्यायाश्रयणमिति भाष्यसम्मत एव पक्षः श्रेयानिति तत्त्वम् ।

गुणे'ति सूत्रे कैयटे स्पष्टम् । यथा—'शिष्टादि'त्यादौ ताताङ्शाभावयोर्युगपत् प्रवृत्तौ स्वस्वनिमित्तानन्तर्यासम्भवः यद्यपि तातङादेः स्थानिवद्भावेनास्त्येव तत्; तथाप्यादेशप्रवृत्त्युत्तरमेव स, न तु तत्प्रवृत्तिकाले । एवं नुमतृज्वत्त्वयोः 'प्रियक्रोष्टूनी'त्यादौ युगपदसम्भवो 'यदागमा' इत्यस्य नुम्प्रवृत्त्युत्तरं प्रवृत्तेः । 'एवं 'भिन्द्धी'त्यत्र तानङ्घिभावयोर्युगपदेकस्थानिसम्बन्धस्याङ्गरूपनिमित्तानन्तर्यस्य चासम्भवो बोध्यः । नुम्नुटोरपि नुड्वजादिविभक्त्याऽऽनन्तर्यबाधो नुमि ह्रस्वान्ताङ्गबाध इत्यसम्भवाद्विप्रतिषेधः ।

क्वचिदिष्टानुरोधेन पूर्वशास्त्रे स्वरितत्वप्रतिज्ञाबलात् स्वरितेनाधिकं कार्य-

---

एव भाष्ये 'नावश्यं द्विकार्ययोग एव विप्रतिषेधः, किं तर्ह्यसम्भवोऽपी'त्युक्तम् । 'द्विकार्ययोग' इत्यस्य द्वाभ्यां कार्याभ्यां योगो यस्यैकस्य स न विप्रतिषेधविषय इत्यर्थः । यथा शिष्टादिति । हिशब्दाव्यवहितपूर्वत्वं धात्वव्यवहितपरत्वं चेत्यादि सर्वं विधेये विशेषणमिति भावः ।

वस्तुतस्तु—तत्तच्छास्त्राणां स्वविधेयघटितं साध्विति बोधनवत्तदितरदसाध्वित्येतावत्पर्यन्तं बोधनेऽपि व्यापारोऽत एव गाव्यादीनामसाधुत्वम् । तथा च 'शिष्टादि'त्यादौ 'शाहावि'ति शास्त्रेण 'शाही'त्यस्य साधुत्वं 'शास्तादि'त्यस्यासाधुत्वं बोध्यते; 'तुह्योरि'ति शास्त्रेण च 'शास्तादि'त्यस्य साधुत्वं 'शाही' त्यस्यासाधुत्वं बोध्यत इति परस्परविरोधः स्पष्ट एव । एवं प्रियक्रोष्टूनी'त्यत्रापि बोध्यम् । नुमनुटोर्विषये तु 'वारीणामि'ति लक्ष्यस्यैवोभाभ्यां साधुत्वबोधनेऽप्युभयोरपूर्वबोधकत्वासम्भवेनैकस्य विधायकत्वमपरस्यानुवादकत्वं वक्तव्यम्; तत्र 'कस्यानुवादकत्वं कल्प्यमि'ति विचारेऽनुवादकस्य लोके निकृष्टतया परिगणनेन विरोधः स्पष्ट एव । मूलोक्तं तु न युक्तम्; आदेशप्रवृत्तिकाले निमित्तानन्तर्याभावेऽपि

---

विधेये विशेषणमिति । हिशब्दाव्यवहितपूर्वस्य शासः प्रसङ्गे शासाधुरित्यर्थे शामात्रस्य साधुत्वापत्त्या निमित्तस्य विधेयविशेषणत्वमावश्यकमिति भावः ।

वस्तुतः 'अन्तरतम'परिभाषया शामात्रस्याऽऽदेशत्वाप्राप्त्या विधेये निमित्तविशेषणं नाऽऽवश्यकमित्यतः प्रकारान्तरेण विरोधमाह—वस्तुतस्त्विति । परस्परविरोधः स्पष्ट एवेति । उभाभ्यामपि शास्त्राभ्यां नकारघटितस्य 'वारिनामि'त्यस्यैव साधुत्वबोधनात् नुमुत्तरं दीर्घो न भविष्यतीति तु अन्या कथेति भावः ।

वारीणामिति लक्ष्यस्यैवेति पाठस्तु चिन्त्यः । वस्तुतस्तु 'ह्रस्वनद्यापो नुट्' इत्यनेन अजन्ताङ्ग हलादिविभक्तिश्चेति द्वयोः पौर्वापर्यस्य साधुत्वशासनं, 'इकोऽचि विभक्तौ' इत्यनेन नान्ताङ्गाजादिविभक्त्योरव्यवहितपौर्वापर्यस्य साधुत्वशासनमिति विरोधस्य सूपपादत्वेनानुवादकत्वोक्तिश्चिन्त्यैवेति बोध्यम् ।

मित्यर्थात्पूर्वमेव भवति । तेन 'सर्वे पूर्वविप्रतिषेधा सङ्गृहीता इति 'स्वरितेने'-ति सूत्रे भाष्ये । विप्रतिषेधसूत्रस्थपरशब्दस्येष्टवाचित्वात् तत्सङ्ग्रह इति विप्रतिषेधसूत्रे भाष्ये ॥ ४० ॥

नन्वेवम्—'एधते' इत्यादौ परत्वाद्विकरणेऽनुदात्तङित' इत्यादिनियमा-

---

तदुत्तरं स्थानिवत्त्वादिना तत्सत्त्वेनासम्भवोपपादनस्यैवासम्भवात् । किञ्च—यदा-गमा'इति न्यायस्याऽऽगमप्रवृत्तिकाल एव प्रवृत्तिः, 'आद्यन्तावि'ति शास्त्रसहकारेणो-द्देश्यग्रहणग्राह्यत्वविशिष्टानामागमानां तत्तच्छास्त्रैर्विधानात् । किञ्च—स्वस्वनिमित्ता-नन्तर्यासम्भवोऽपि दुरुपपाद एव । पूर्वोक्तरीत्या निमित्तानां विधेयविशेषणत्वेन तदुप-पादने तु तेषां विधेयकुक्षिप्रविष्टत्वेन 'शास्ती'त्यादावपि हिपरकशादेशापत्तिः । न च विशिष्टस्य विधेयत्वेऽपि 'प्राप्ताप्राप्तविवेक'न्यायेन शाशब्द एव विधेयता पर्यवस्यति, हिशब्दपूर्वत्वं तु 'सर्वादीनि'त्यादौ सर्वार्थवाचकत्वमिवोद्देश्यगतमेवापेक्षितमिति न दोष इति वाच्यम्; 'शिष्टादि'त्यत्राप्युद्देश्ये शास्धातौ हिशब्दपूर्वत्वस्य सत्त्वेनासम्भवस्य दुरुपपादत्वादिति दिक् ।

परशब्दस्येष्टवाचित्वादिति । अपरमिति पदविभागेन वा तत्सङ्ग्रह इति केचित्॥४०॥

पूर्वविप्रतिषेधस्य भाष्योक्तस्थल एव प्रवृत्तिरित्याशयेन शङ्कते—नन्विति । एधत इति । ननु विकरणस्य कृताकृतप्रसङ्गित्वेनातुल्यबलत्वादवतरणासङ्गतिरिति चेत्—

---

असम्भवादिति । ननु प्रवृत्तिकालिकं विरोधमादाय विप्रतिषेधसूत्रस्य निष्प्रत्यूहं प्रवृत्तेः सम्भव एवेत्यरुचेराह—किञ्चेति । तत्तच्छास्त्रैर्विधानादिति । इदमपि न युक्तम्—प्रवृत्तिकाले उद्देश्ये तृजन्तत्वाभावेन तृजन्तरूपविधेये सर्वनामस्थानरूपनिमित्तानन्तर्यबाधरूप-विरोधस्य तादवस्थ्यात् प्रवृत्त्युत्तरं नास्तीत्यन्यदेतदित्यत आह— किञ्चेति ।

निमित्तस्य उद्देश्ये विशेषणत्वेऽसम्भवो दुरुपपादः, विधेये विशेषणत्वे 'शास्ती'त्यादौ दोषः, आवृत्त्या उभयविशेषणत्वे च गौरवमत आह—न च विशिष्टस्येति । 'प्राप्ताप्राप्तविवेक' न्यायेन विधेयताङ्गीकारे 'शास्ती'त्यादौ न दोषः; वैशिष्ट्यञ्च—स्वरूपेणैव । तच्च उपलक्षणम्, न तु विशेषणम्, विधानकाले तदभावात्, विधानोत्तरन्तु तदस्त्येव । अत एव 'उद्देश्यगत तद-पेक्षितमि'त्युक्तिः सङ्गच्छते इति भावः । तदेतदाह—असम्भवस्य दुरुपपादत्वादिति ॥ ४० ॥

मूले—एधत इति । 'स्पर्धते' इत्यादीनामुपलक्षणमिदम् । 'एधते' इत्यत्र तु अनुदा-त्तेत्करणसामर्थ्यात्तत्प्रवृत्तेः । स्पर्धधातोरनुदात्तेत्वस्य तु लिटि युज्विधौ च चरितार्थत्वमिति न तत्सामर्थ्याश्रयणं युक्तम् । एधेस्तु लिटि आम्प्रसक्त्या अजादित्वात् 'अनुदात्तेतश्च हलादेः' इत्येतद्विहितयुचोऽप्राप्त्या चारितार्थ्याभावात् । न च 'एधिषीष्ट' इत्यत्र चारितार्थ्यम्, सीयुटश्छि-त्त्वात् तकाराद्यवयवत्वेन व्यवधानाभावादिति वाच्यम्; 'अनुदात्तङित् धात्वोरव्यवहितपरस्य निर्दि-श्यमानस्य लस्यात्मनेपदमि'त्यर्थात् सीयुड्विशिष्टस्य 'यदागम'परिभाषाप्रयोज्यत्वेन निर्दिश्यमान-त्वाभावात् । अवतार्यमाणपरिभाषाघटक'विकरणे'ति पदं सीयुटादीनामुपलक्षणम्, तेन परिभाषा-सत्त्वे सीयुटमपि बाधित्वा पूर्वं नियमप्रवृत्त्या सर्वेष्टसिद्धिरिति ।

नुपपत्तिः, तेन व्यवधानादत आह—

## विकरणेभ्यो नियमो बलीयान् ॥ ४१ ॥

अत्र 'वृद्भ्यः स्यसनोरि'ति सूत्रेण स्ये विभाषाऽतङ्विधानं ज्ञापकम्;

अत्र केचित्—'एधत' इत्यस्य 'एधिष्यत' इत्यस्योपलक्षणत्वेन तत्र तस्य शब्दान्तरे प्राप्तवत्वेनानित्यत्वात् परत्वेन बाधस्य सुवचत्वमिति वदन्ति। तन्न; 'एध+ल' इत्यवस्थायां विकरणेभ्यः परत्वात्तिबादिषु कृतेषु पूर्वं नियमप्रवृत्तावपि तद्घटकेष्वेव परेषु विकरणप्रवृत्तेर्वाच्यतया शब्दान्तरे इत्यस्य विषयाभावात्। न हि पूर्वमष्टादशसु परेषु विकरणस्य प्रसङ्गो नियमप्रवृत्त्युत्तरं तु नवस्वेवेति तत्प्रवृत्तिः सुवचा। सर्वथा तेष्वेव शब्देषु परतो विकरणप्रवृत्तेः शब्दान्तर इत्यस्य विषयाभावात्।

अन्ये तु - विकरणस्य नित्यत्वेऽपि नियमानुपपत्तिर्दुर्वारेत्यवतरणसङ्गतिः। 'परान्नित्यं बलवदि'त्युत्तरमस्याः परिभाषायाः पाठे कर्तव्ये पूर्वं पाठस्तूभयोः सङ्ग्रहार्थ इति वदन्ति।

यत्तु—केचिद्वक्ष्यमाणानुमानेन नित्यस्य परावधिकबलवत्त्वेऽपि पूर्वावधिकबलवत्त्वकल्पने मानाभावः। न च 'दण्डापूपिक'न्यायेन तत्सिद्धिः; फलाभावेन तदकल्पनात्। अन्तरङ्गादौ तु परशास्त्रबाधकत्वासिद्धये तत्कल्पनावश्यकत्वादिति प्राहुः। तन्न; परान्नित्यमि'त्यत्र परपदस्यानित्यपरत्वेन तस्य पूर्वशास्त्रापेक्षया बलवत्त्वस्यापि वक्ष्यमाणत्वात्। अत एव 'परत्वान्नित्यत्वाच्चे'ति भाष्यादि सङ्गच्छते। विकरणानां खश्यानशादौ नियमशास्त्राणां लडादौ चारितार्थ्यं बोध्यम्। स्यविकरणस्यापवादत्वं तु न शङ्क्यम्; 'भविष्यति गम्यादय' इति निर्देशेन 'तक्र'न्यायस्यानित्यत्वेनाप्रवृत्तौ परत्वादेव बाधप्रवृत्तेस्तत्रापि सत्त्वादिति दिक्। विभाषाऽतङ्विधानमिति। अतङिति च्छेदः, परस्मैपदमिति तदर्थः। क्वचित्तु विकल्पविधानं ज्ञापकमिति पाठः; अत एवाग्रे विकल्पविधानं व्यर्थं स्यादित्युक्तम्।

अत्र कल्पे विषयसप्तम्याश्रयणं विप्रतिषेधशास्त्रबाधश्चेति पक्षान्तरमाह—

---

तिबादिषु कृतेष्विति। तिप् तस्-झीति सामान्यशास्त्रेणेत्यर्थः। विहितानां नियम इति पक्षं स्वीकृत्यैव प्रकृतपरिभाषाया अवतरणदानेन पूर्वं सामान्यशास्त्रेण विहितेषु तिङ्क्षु परतो विकरणानां प्रवृत्तेस्तदुत्तरं नियमेन क्रियमाणा व्यावृत्तिरव्यवहितपरत्वाभावान्न स्यात्। अत एव मूले नियमानुपपत्तिर्दर्शिता, न तु तिङामप्राप्तिरिति ध्येयम्।

परिभाषायां स्वीकृतायामपि पूर्वं तिङां प्रवृत्तेः तत्प्रवृत्तिकाले स्वरूपविकरणस्याभावेन 'वृद्भ्यः स्यसनो' इत्यस्याप्रवृत्त्या ज्ञापितेऽपि स्वांशे चारितार्थ्याभाव इत्यतः स्य इति विषयसप्तम्या श्रयणम्, तेन तस्य वृतादिव्यवहितपरत्वेन तत्रानुदात्तङित इति नियमप्रवृत्त्याऽऽत्मनेपदमेव स्यादिति पक्षे परस्मैपदविधानार्थं 'वृद्भ्य' इत्यस्याऽऽवश्यकत्वमिति स्वांशे चारितार्थ्यमित्याशयेनाह—अत्र कल्प इति।

अन्यथा स्यव्यवधाने नियमाप्रवृत्तौ सामान्यशास्त्रेणोभयसिद्धौ विकल्पविधानं व्यर्थं स्यात्। अत्रार्थे ज्ञापिते तु 'स्य इति तत्र विषयसप्तमी बोध्ये-'त्यनुदात्तङित' इत्यत्र भाष्यकैयटयोः स्पष्टम्।

विकरणव्यवधानेऽपि नियमप्रवृत्तेरिदं ज्ञापकमिति 'शदेः शित' इत्यत्र भाष्ये ध्वनितम्।

वस्तुतः अस्माज् ज्ञापकादनुदात्तङित इत्यादि प्रकरणं तिबादिविध्येकवाक्यतया विधायकम्। तत्र 'धातोरि'ति विहितपञ्चमी, तत्समानाधिकरणमनुदात्तङित' इत्यादि विहितविशेषणमेव। एवञ्च लावस्थायां स्येऽपि तद्व्यवधाने तङ्सिद्धिः। शबादिभ्यस्तु पूर्वमेव नियमः। यद्वा—लमात्रापेक्षत्वादन्तरङ्गा

---

विकरणव्यवधान इति। 'शदेः शित इत्यत्र भाष्ये ध्वनितमिति। तत्र हि 'न्यविशते'त्यत्र वक्ष्यमाणमूलोक्तरीत्याऽटोऽनित्यत्वेन नित्यत्वाद्विकरणे तदन्तस्याटि विशधातोर्नेः परत्वाभावेन नियमो न प्राप्नोतीत्याशयेन 'उपसर्गनियमेऽड्व्यवाये उपसंख्यानमि'ति वार्तिककृतोक्तम्। तच्चोक्तार्थस्वीकारे एव सङ्गच्छते; अन्यथाऽनेनाऽड्व्यवधाने 'न्यविशत' इत्यस्य प्रवृत्तिस्वीकारेऽपि विकरणव्यवधानेन तिबादीनां विशः परत्वाभावान्नियमाप्राप्त्या तदसङ्गतिः स्पष्टैव।

ननु 'तिप्तस्झी'ति सूत्रेण विहितानामनुदात्तङित इत्यादिर्नियमे तु जातप्रत्ययानां निवृत्तिः; तदनुरोधेन कल्पितप्रकृतीनां निवृत्तिर्भिन्नवाक्यत्वकल्पना चेति दूषणमित्याह—वस्तुत इति। तत्र = तिबादिविधायकसूत्रे। विहितविशेषणस्वीकारादेव लिट् 'लुनाती'त्यादौ न तिबाद्यादेशाः। इदं च विहितविशेषणं 'स्यतासी' इत्यत्र 'आयादय' इत्यत 'आर्धधातुक' इत्यनुवृत्त्या लावस्थायामेवान्तरङ्गत्वेन स्यादय इति भाष्यानुरोधेन।

वस्तुतस्तु—स्यादिभ्यः परत्वादेव तिबादय इति दिग्योगलक्षणपञ्चम्यामपि न दोषः। न च स्यप्रत्ययो नित्यः; शब्दान्तरे प्राप्नुवतो विधेरनित्यत्वात्। न च 'विपराभ्यामि'त्यादीनामनेकपदसापेक्षत्वेन अन्तरङ्गत्वात्स्ये तद्व्यवधाने तिबादिप्रवृत्यर्थं विहितविशेषणमिति वाच्यम्; विपराभ्यां परत्वयोग्याज्जेरित्यर्थस्य शेखर एव सिद्धान्तितत्वेन तस्यान्तरङ्गत्वाभावात। पूर्वमेवेति। तद्विधौ कर्त्रर्थसार्वधातुकपरत्वस्यापेक्षणादिति भावः। एकवाक्यतया विधानमिति पक्षे विहितविशेषणाश्रयणप्रयुक्तं गौरवमत आह—यद्वेति। इदं प्राचामनुरोधेन। ननु नियम्यविधानमिति

---

तदसङ्गतिः स्पष्टैवेति। एवञ्च अत्र कल्पे 'तस्मिन्नि'ति परिभाषाया अबाध इति लाघवम्। नन्वेवमपि व्यवधानस्य शरणीकर्तव्यतया 'तस्मादित्युत्तरस्य' इत्यस्य' बाध इति पूर्वसमत्वमिति चेत्—सत्यम्। अत्र कल्पे विप्रतिषेधशास्त्रस्याबाधात्, परिभाषाश्रयणे तु तद्बाधकल्पनादिति पूर्वपक्षापेक्षयाऽत्र पक्षे लाघवमिति बोध्यम्।

आदेशा लकारविशेषापेक्षत्वात् स्यादयो बहिरङ्गा इति दिग्योगलक्षणपञ्चम्यामपि न दोषः। अत्र पक्षे 'वृद्भ्यः स्ये'ति सूत्रं स्वविषय इति व्याख्येयम्. आत्मनेपदशब्दादौ भाविसंज्ञाऽऽश्रयणीयेति तत्त्वम्।

भिन्नवाक्यतया सामान्यशास्त्रविहितानां नियमे तु लुगादिनेव नियमेन जातनिवृत्तिरङ्गीकार्या। 'भुक्तवन्तं प्रति मा भुङ्क्था इति ब्रूयात्; किं तेन कृतं स्यादि'ति न्यायस्तु नात्र शास्त्र आश्रयितुं युक्तो; नियमादिशास्त्राणां वैयर्थ्यापत्तेः।

---

पक्षे लादेशाभावेन परस्मैपदादिसंज्ञाभावात् तद्विधानानुपपत्तिरत आह—भाविसंज्ञेति।

किं तेन कृतं स्यादिति। तथा च वाक्यानर्थक्यमिति भावः। न च बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वरूपलिङाद्यर्थस्य नञादिनाऽभावो बोध्यते; तेन तत्सत्त्वे बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वाभावो लिङादिभिर्गम्यते। तथा च 'भुक्तवन्तमि'त्यत्र 'त्वत्कर्तृकं भोजनं बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वाभाववदि'ति बोधनस्य सम्भवात् कथं तदानर्थक्यमिति वाच्यम्; विध्यर्थे लिङो विधानात् प्रवृत्तिजनकत्वेन तात्पर्यविषयत्वं तदर्थः। नञादिसत्त्वे च निवृत्तिजनकत्वेन तात्पर्यविषयत्वं भासते, तथा च कृतभोजने निवृत्त्यप्रयोजकत्वेन तन्नैरर्थक्यस्य स्पष्टत्वात्।

नात्र शास्त्र इति। वस्तुतस्तु—एतच्छास्त्रे तदाश्रयणेऽपि न दोषः, शास्त्रे प्रवृत्तेर्ज्ञानरूपतया तिबादिशास्त्रेण जनितस्येदं साध्विति ज्ञानस्य नियमशास्त्रेण निवृत्तिसम्भ-

---

तद्विधानानुपपत्तिरिति। एकवाक्यताकरणे 'लस्य स्थाने आत्मनेपदं भवति' इत्यर्थः स्यात्; स चानुपपन्नः, तदानीमात्मनेपदज्ञानाभावात्। तज्ज्ञानञ्च 'तङानावात्मनेपदम्' इत्येतज्ज्ञानाधीनम्। तज्ज्ञानञ्च लस्थानिकत्वापेक्षणेन 'तिप् तस् झी'त्यादिवाक्यार्थनिश्चयानन्तरं इत्यन्योन्याश्रयेण विधानानुपपत्तिरिति भावः।

अथ 'तङानावि'त्यस्य 'तङानौ आत्मनेपदसंज्ञौ स्तः' इत्येवास्त्वर्थः, माऽस्तु लस्थानिकौ तङानाविति वाच्यम्; शानचः चानशश्च प्राप्तात्मनेपदसंज्ञावारणार्थं तस्याऽऽवश्यकत्वात्। किञ्च अस्याः परस्मैपदसंज्ञापवादकत्वेन 'उत्सर्गसमानदेशा' इति न्यायेन तस्यापि लस्थानिकत्वस्याऽऽवश्यकत्वात्।

ननु 'अनुदात्तङित आत्मनेपदम्' इत्यादीनां नियमार्थत्वात् अनुदात्तङिद्धातोरेवाऽऽत्मनेपदमिति नियमात् अन्येभ्यः परस्मैपदे सिद्धे तद्विधानार्थं कृतस्य 'शेषात्कर्तरि परस्मैपदम्' इति सूत्रस्य वैयर्थ्यमिति चेत्—सत्यम्। अनुदात्तेन्ङिद्धातोः सामान्यशास्त्रतः प्राप्तपरस्मैपदवारणार्थं तस्याऽऽवश्यकत्वात्। कृते तु तस्मिन् शेषादेव परस्मैपदमिति नियमात् अनुदात्तेदादीनां धातूनां शेषत्वाभावात् परस्मैपदाप्राप्तेरदोषात्। न च 'वृद्भ्यः स्यसनोः' इति सूत्रस्य नियमार्थत्वेन उभयं भवति तर्हि एषामेवेति नियमेन अन्येषामुभयपदव्यावृत्तेरदोष इति वाच्यम्; नियमस्य सजाती-

ध्वनितं चेदं 'स्थानेऽन्तरतम' इति सूत्रे भाष्ये। शास्त्रानर्थक्यन्तु वृद्धि संज्ञासूत्रे तिरस्कृतम्। सामान्यशास्त्रेणोत्पत्तिस्तु सरूपसूत्रस्थकैयटरीत्या प्रधानानुरोधेन गुणभेदकल्पना तावत्प्रकृतिकल्पनया कार्या, प्रत्ययनिवृत्तौ तत्कल्पितप्रकृतेरपि निवृत्तिः कल्प्येति गौरवमित्यन्यत्र विस्तरः ॥ ४१ ॥

## परान्नित्यं बलवत् ॥ ४२ ॥

कृताकृतप्रसङ्गित्वात्। तत्राक्लृप्ताभावकस्याभावकल्पनापेक्षया क्लृप्त

---

वात्। निवृत्तिश्च तज्ज्ञानधर्मिकभ्रमत्वप्रकारकज्ञानरूपा। तत्साधुत्वे पुण्यजनकत्वावच्छेदकत्वाभावप्रकारकज्ञानरूपा वा। पूर्वशास्त्रेण तादृशसाधुत्वबोधनस्य फल साधुष्वेव शास्त्रं प्रवर्तते इति नियमानुसारेणोत्तरशास्त्रप्रवृत्तये तदीयोद्देश्यतावच्छेदकसम्पादनमेव, तेन भापीयगगर्यादिशब्देषु न शास्त्रप्रवृत्तिरिति दिक्।

ध्वनितमिति। तत्र हि तस्य सूत्रस्य ज्ञातानामन्तरतमादेशानां निवर्तकत्वमुक्तम् ॥ ४१ ॥

परान्नित्यं बलवत्। 'नित्यं परशास्त्रावधिकबलवत्, कृताकृतप्रसङ्गित्वादि'त्यनुमानप्रयोगः। ननु—उत्सर्गबहिरङ्गयोर्नित्यत्वेऽपि तदपेक्षयाऽनित्यापवादान्तरङ्गयोर्बलवत्त्वे हेतोर्व्यभिचार इति चेन्न। साध्यदलीयपरपदार्थे अन्तरङ्गापवादभिन्नत्वरूपविशेषणदानेन दोषात्। न चैवमप्यनित्यपरशास्त्रस्यैव 'विप्रतिषेध' इति शास्त्रेण प्राबल्यबोधनाद्धेतोर्बाधितत्वमिति वाच्यम्; अनेन नित्यस्य प्राबल्यबोधनेन विप्रतिषेधाभावात् तत्सूत्रप्राप्त्या बाधासम्भवात्। न च श्रुतत्वाद्विप्रतिषेधसूत्रसहकृतेन पूर्वान्तभावेन पूर्वमनित्यपरशास्त्रस्य बलवत्त्वे प्रमाणनिश्चिते बाधितत्वादेतस्यानुमानस्यासम्भव इति वाच्यम् विप्रतिषेध इत्येतच्छब्दोच्चारणसामर्थ्यादेव पूर्वमेतत्प्रवृत्तेर्ज्ञापनेनादोषात्। 'परान्नित्यमि'त्यत्र परपदमनित्यपरम्, तेनानित्यपूर्वशास्त्रस्य नित्यशास्त्रावधिकपरत्वाभावेऽतद्बाधकत्वं नित्यपरशास्त्रस्य सिद्ध्यति। अत एव च परत्वान्नित्यत्वाच्चेति भाष्यादिग्रन्थाः सङ्गच्छन्ते। अत्र हेतुदले त्रैपादिकभिन्नत्वे सतीति निवेशनीयम्, तेन नित्यत्रैपादिकस्य सापादिकाऽनित्यापेक्षया बलवत्त्वविरहेऽपि न क्षतिः। एवं 'पूर्वात् बलवती'ति पूर्वोक्तानुमानेऽपि पूर्वपदार्थे नित्यान्तरङ्गापवादभिन्नत्वं हेतुदले त्रैपादिकभिन्नत्वं च निवेशनीयमित्यन्यत्र विस्तरः।

ननु पक्षतावच्छेदकस्यैव हेतुत्वेनान्वयदृष्टान्ताभावेन हेतोरप्रयोजकत्वशङ्का तदवस्थैवेत्यत आह—तत्राक्लृप्तेति। बाधद्वयकल्पनापेक्षयैकस्य बाधस्य कल्प

---

यापेक्षतया समुचितोभयपदव्यावृत्तेरपि एकपदस्य प्राप्तस्य व्यावर्त्याभावात्। अनुदात्तेन्ङिद्धातोरात्मनेपदमेवेति नियमेन सिद्धेरेतत्सूत्रं व्यर्थमिति तु वक्तुमशक्यम्, आत्मनेपदनिमित्तहीनाद्धातोरुभयपदप्राप्तेः ॥ ४१ ॥

भावकस्यैव तत्कल्पनमुचितमिति नित्यस्य बलवत्त्वे बीजम्; तदाह—कृताकृत प्रसङ्गि नित्यम्, तद्विपरीतमनित्यम्। अत एव 'तुदती'त्यादौ परादपि गुणान्नित्यत्वात् शप्रत्ययादिर्भवति ॥ ४२ ॥

यद्व्यक्तिसन्बन्धितया पूर्वं प्रवृत्तिः, तद्व्यक्तिसम्बन्धितयैव पुनः प्रवृत्तौ कृताकृतप्रसङ्गित्वमित्याशयेनाऽऽह—

## शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति ॥ ४३ ॥

इदं 'शदेः शित' इति सूत्रे भाष्ये स्पष्टम्। तत्र हि 'न्यविशते'त्यत्र विकरणे कृते तदन्तस्याड् कृते धातुमात्रस्येत्यडनित्य इत्युक्तम् ॥ ४३ ॥

एतत्तुल्यन्यायेनाऽऽह—

---

लाघवमिति लाघवरूपोऽनुकूलस्तर्क इति भावः। अत एवेति। नित्यस्य बलवत्त्वादेवेत्यर्थः। ननु 'तुदती'त्यत्रोभयोः समत्वम् गुणस्यापि शप्प्रत्ययोत्तरं प्राप्तेः, क्ङिति चे'त्यनेन तद्बाध इति त्वन्यत्, बाधकाबाधितेत्यर्थस्याद्याप्यनिष्पत्तेरित्यत आह—आदीति। तेन 'रुणद्धि, रन्धयती'त्यस्य सङ्ग्रहः। आद्ये गुणं बाधित्वा श्नम्; द्वितीये तु उपधावृद्धिं बाधित्वा 'रधिजभोरची'ति नुम् ॥ ४२ ॥

'कृताकृतप्रसङ्गि नित्यं तद्विपरीतमनित्यमि'त्येका परिभाषा। तत्र प्रथमांशस्योदाहरणं प्रदर्श्य द्वितीयांशस्यानेकविधत्वं प्रदर्शयति—यद्व्यक्तीति। इष्धातोः सनि द्वित्वेटोः प्राप्तौ द्वित्वस्य शब्दान्तरप्राप्तिकत्वेनानित्यत्वात् पूर्वमिटि 'एषिषिषती'ति सिद्धिरेतत्फलम्। व्यक्तिविशेषचिन्तायां नित्यस्योदाहरणं तु 'च्यवन्त' प्लवन्त' इति। अत्र हि 'च्यु+अ+अन्ते'ति स्थिते शप्प्रत्ययनिमित्तकगुणस्य पररूपस्य च प्राप्तौ वक्ष्यमाणरीत्या नित्यैकादेशात्प्राक् गुणस्य सिद्धिः ॥ ४३ ॥

अत्र हि व्यक्तिपदेनोद्देश्यव्यक्तिविभिन्नव्यक्तेश्च ग्रहणमविशेषादित्याह—एतत्तुल्येति। आद्योदाहरणम्—'मा भवानुजिह्दि'ति। अत्र ह्वेर्णिचि लुङि शब्दान्तरात्प्राप्नुवतोऽनित्याद् द्वित्वात् पूर्वं परत्वेन 'णौ चङी'ति ह्रस्वः। बहिरङ्गाऽप्युपधाह्रस्व इत्यनेनैतद्वारणे तु पूर्वोक्तं 'च्यवन्त' इत्युदाहरणमनुसन्धेयम्। अत्रा-'च्यचः परस्मिन्नि'ति स्थानिवत्त्वेन 'क्ङिति चे'ति निषेधाप्रवृत्तिरिति चेद्भाष्योक्त

---

एषिषिषतीति। इदं चिन्त्यम्—द्वित्वप्रवृत्त्युत्तरमिटोऽपि प्राप्त्या तस्यापि नित्यत्वेन द्वयोर्नित्यत्वात् परत्वादिष्टसिद्धेः। यच्च मूले 'न्यविशते'त्येतत्फलमिति। तदप्ययुक्तम्; अडुत्तरं विकरणे ततः पूर्वं वा विशेषाभावेनास्या निष्फलत्वात्।

वक्ष्यमाणरीत्येति। 'शब्दान्तरादि'ति परिभाषाया इति भावः ॥ ४३ ॥

## शब्दान्तरात् प्राप्नुवतः शब्दान्तरे प्राप्नुवतश्चानित्यत्वम् ॥ ४४ ॥

एतन्मूलकमेवाऽऽह—

## लक्षणान्तरेण प्राप्नुवन्विधिरनित्यः ॥ ४५ ॥

### अतिदेशविषये इय'मसिद्धवत्' सूत्रे कैयटेनोक्ता ॥ ४५ ॥

---

'न्यविशते'त्येवोदाहरणं बोध्यम् । अत्र हि विकरणान्तस्याटि कृते विशेर्नेः परत्वाभावान्नियमानुपपत्तौ 'उपसर्गनियमेऽड्व्यवाय उपसंख्यानमि'ति वार्तिकस्योक्तिसम्भव एवैतस्या परिभाषायाः प्रयोजनम् । द्वितीयोदाहरणम्—'करिष्यत' इति । अत्र हि शब्दान्तरे प्राप्नुवतो विकरणस्यानित्यत्वात्परत्वेन पूर्वं आदेशे 'स्वरित ञित' इत्यस्य प्रवृत्तिः ; अन्यथा नित्यत्वात्पूर्वं विकरणे ञितः परत्वाभावान्नियमो न स्यात् ॥ ४४ ॥

यदि व्यक्तिपदेन शास्त्ररूपव्यक्तिर्गृह्यते ; तदाऽऽह—लक्षणान्तरेणेति । एतद्वचनमनुसन्धायैव नुम्जरसोः प्राप्तयोः परत्वाज्जरसिति भाष्यकृतोक्तम् । अन्यथा पूर्वमजन्तलक्षणेन जरसुत्तरं झलन्तलक्षणेन प्राप्तस्यापि नुमो नित्यत्वे परत्वाज्जरसादेशप्रतिपादकभाष्यासङ्गतिः स्पष्टैव ॥ ४५ ॥

नन्वेवं 'तुदती'त्यत्र गुणे कृते शप्रत्ययस्य शब्दान्तरात्प्राप्नुवत्त्वेनानित्यत्वात्

---

नियमो न स्यादिति । 'विकरणेभ्यो नियमो बलीयानि'त्यनेन गतार्थमेतत् ॥ ४४ ॥

मूले—असिद्धवत्सूत्र इति । तत्र हि 'कुर्वः' इत्यादौ लघूपधगुणोकारलोपयोः प्राप्तौ नित्यत्वादुदारलोपः। गुणस्तु लोपे कृते 'प्रत्ययलक्षणेन प्राप्नोति' इत्यनेन न्यायेनानित्य इत्युक्तम् ।

मूले—लक्षणान्तरेणेति । वचनफलन्तु 'बभूवतुः' इति हैमवतीकाराः । अन्यथा भू+अतुस्' इत्यवस्थायां वुकि कृतेऽपि वुकोऽसिद्धत्वादुवङ्प्राप्त्याऽनित्यत्वादुवङि ततो वुकि कृते तदसिद्धिः स्पष्टैव । न च वुकोऽप्युवङि कृते प्राप्त्या नित्यत्वं शङ्क्यम् ; शब्दान्तरप्राप्त्या वुकोऽनित्यत्वात् ।

नन्वेवं 'वुग्युटावि'ति वार्तिके वुग्ग्रहणं व्यर्थमिति चेन्न । वार्तिके वुग्ग्रहणस्यापि लक्षणान्तरेणेत्यत्र प्रमाणत्वात् । लक्षणान्तरेणेत्यस्य सत्त्वे तु उवङो लक्षणान्तरेण प्राप्त्याऽनित्यत्वेनोभयोर्ग्रहणं सार्थकम् । असिद्धवत्सूत्रप्रत्याख्याने तूदाहरणान्तरं गवेषणीयम् ; इत एवास्वरसात्कैयटेनोक्तेत्युक्तमिति दिक् ।

भाष्यासङ्गतिः स्पष्टैवेति । वस्तुतः इयादेशमेव परत्वाद् बाधित्वा जरसादेश इति तत्प्राप्तिसमकाले नुमोऽप्राप्त्याऽदोषात् । भाष्ये परशब्द उत्कृष्टवाचकः, तथा च 'परत्वात् = उत्कृष्टत्वात् प्रतिपदोक्तत्वात् जरसादेशस्य' इत्यर्थेन भाष्यं सुसङ्गतमेवेति ध्येयम् ॥ ४५ ॥

यदा तु शास्त्रव्यतिरेकेण तद्विधेयकार्ययोरेव नित्यत्वादिविचारो यदाऽपि व्यक्तिविशेषाश्रयणाभावः, तदाऽऽह—

**क्वचित् कृताकृतप्रसङ्गमात्रेणापि नित्यता ॥ ४६ ॥**



कृते द्वितीये नित्यत्वेनाभिमतस्य पुनः प्रसङ्गमात्रं नित्यत्वव्यवहारे प्रयोजकम्, न तु बाधकाबाधितफलोपहितप्रसङ्गोऽपि तथेति भावः ॥ ४६ ॥

तदाऽऽह—

**यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् ॥ ४७ ॥**



क्वचित्तु बाधकाबाधितफलोपहितप्रसङ्ग एव गृह्यते ; तदाऽऽह—

**यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यम् ॥ ४८ ॥**



परत्वाद् गुणे कृते रूपासिद्धिरत आह—यदा त्विति । एवञ्च लक्ष्यानुरोधादेषैव परिभाषा तत्र स्वीक्रियत इति भावः ।

कृताकृतप्रसङ्गि नित्यमिति प्रथमांशघटकप्रसङ्गांशे बाधकाबाधितत्वरूपविशेषण-सत्त्वासत्त्वद्वैविध्येनोक्तपरिभाषाऽपि द्विविधेत्याशयेऽऽनाह—कृते द्वितीय इति ॥ ४६ ॥

बाधकाबाधितफलोपहितप्रसङ्ग एवेति । इदमेव तु सार्वत्रिकमिति तत्त्वम् ।



कृते द्वितीय इतीति । यस्य च लक्षणान्तरेणेत्यस्योदाहरणं 'स्वामाचष्टे, त्वापयती'त्यादि । मपर्यन्तस्य त्वमौ पररूपात्पूर्वं नित्यत्वाट्टिलोपः वृद्धिः पुक् । अत्र पररूपे कृते एकाच्त्वात्प्रकृत्यैकाजिति प्रकृतिभावेऽपि टिलोपस्य प्रसङ्ग इति यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यमिति प्रकृतपरिभाषया नित्यत्वात् टिलोपस्यैव प्रवृत्तेः । न चान्तरङ्गत्वात्पररूपे प्रकृत्यैकाजिति प्रकृतिभावे च 'त्वादयति, मादयति' इत्येवं रूपमिति वाच्यम् ; 'नाजानन्तर्यें' इति सत्त्वे तन्निषेधात्, तदसत्त्वे अन्तरङ्गपरिभाषाया अनित्यत्वाच्च । नन्वेवमपि वार्णपरिभाषया टिलोपस्यैव प्रवृत्तेष्टिलोपस्य नित्यत्वं नोपयुज्यत इति चेत्—तदा उदाहरणान्तरं मृग्यम् । धर्मिग्राहकमानाद्भावकार्यविषय एव वर्णपरिभाषा प्रवृत्तिरित्यन्ये ॥४६॥

सार्वत्रिकमितीति । एतद्वचनोदाहरणं 'स्योनः' इति । अत्र 'गुणात् पूर्वं नित्यत्वादूठ् गुणस्तु ऊठि यणा बाधितत्वादनित्य' इति मूले स्पष्टम्, 'अस्मै' इति च कौमुद्यां स्पष्टम् ।

सप्तमे कैयटेन एतदुपष्टम्भकं लोकव्यवहारद्वयमुदाहृतम्—वालिसुग्रीवयोर्युध्यमानयोर्भगवता वालिनि हतेपि सुग्रीवस्य वालितः प्राबल्यं न व्यवहरन्ति, भगवत्सहायैः पाण्डवैर्जये लब्धेऽपि पाण्डवानां प्राबल्यं व्यवहरन्ति चेति । सर्वं चेदं लक्ष्यानुरोधाद् व्यवस्थितम् ॥ ४८ ॥

'लुटः प्रथमस्ये'ति सूत्रे भाष्ये—

**स्वरभिन्नस्य प्राप्नुवन्विधिरनित्यो भवति ॥ ४९ ॥**



इति पठ्यते ।

---

उपष्टम्भकमिति । ष्टभिधातौ सकारटकारयोरुपदेशे सत्त्वेनाऽऽद्यसकारस्य ष्टुत्वेन षकारो न षत्वेनेति बोध्यम् ।

व्यवहारद्वयमिति । अत्र केचित्=रामायणे वालिसुग्रीवयोर्युद्धप्रसङ्गे सुग्रीवपलायनस्य रामकर्तृकवालिहननस्य च सुप्रसिद्धया सुग्रीवस्य वालितः प्राबल्यं न व्यवहरन्तीति युक्तमेव, एवं भारते युद्धे भगवत्कर्तृकशस्त्रग्रहणाभावप्रतिज्ञायाः पाण्डवकर्तृककौरवपराजयस्य च स्पष्टमुल्लेखात् कौरवेभ्यः पाण्डवानां प्राबल्यं व्यवहरन्तीत्येतदपि युक्तमेवेति दृष्टान्तदार्ष्टान्तिकयोरत्यन्तं वैषम्यम्; अन्तर्यामितया प्रेरणामात्रेण तत्त्वं तु उभयसाधारणमित्ययुक्तोऽयं सन्दर्भविरुद्धो ग्रन्थ इति वदन्ति ।

परे तु—भगवता युद्धे शस्त्रग्रहणाभावरूपस्वप्रतिज्ञायाः परिरिरक्षिषया शस्त्रग्रहणेऽकृतेऽपि पाण्डवशस्त्रादिषु विशेषशक्त्युत्पादनादिद्वारा सैनिकद्वारा राजेव शत्रूञ्जिघांसुर्भगवानेव कौरवान् विजिग्ये । अत एव 'निमित्तमात्रं भव सव्यसाचिन्' इत्यनेन भगवान् स्वप्रतिज्ञाभङ्गभिया स्वयं साक्षात् शस्त्रमदिधीषुरर्जुनं समबोधयत् । इत्थं च यथा ततोऽधिकबलवत्त्वव्यवहारप्रयोजकस्य वालिकौरवदमनकर्तृत्वस्य मुख्यबीजस्य भगवत्येव सत्त्वेपि नोभयत्र तद्व्यवहारः, एवं कृताकृतप्रसङ्गरूपस्य बलवत्त्वप्रयोजकमुख्यव्यवहारस्य न सर्वत्र बलवत्त्वप्रयोजकत्वमित्यत्यन्तसन्दर्भशुद्धः समदृष्टान्तदार्ष्टान्तिकोऽयं ग्रन्थ इति ग्रन्थतत्त्वविदो विदाङ्कुर्वन्त्विति प्राहुः ॥४८॥

स्वरभिन्नस्येति । स्वरेण भिन्नस्येत्यर्थः । स्वरोपि शब्दान्तरत्वसम्पादक इति भावः । एतत्परिभाषोदाहरणं 'दध्युदकमि'ति । अत्र हि 'दधि+उदकमि'ति स्थिते

---

अत्र केचिदिति । हैमवतीकारा इति तदर्थः ॥ ४८ ॥

मूले—लुटः प्रथमस्येति सूत्रे भाष्य इति । तत्र हि "श्वः कर्ता' इत्यत्र 'तास्यनुदात्तेत्' इति स्वरस्य डारौरसाश्च प्राप्तेः परत्वात्प्राप्तमनुदात्तं बाधित्वा नित्यत्वात् डा इत्युक्त्वा अनुदात्तस्यापि कृताकृतप्रसङ्गितया नित्यत्वमाशङ्क्य, शब्दान्तरस्य प्राप्त्या तस्यानित्यत्वे उक्ते डादेशोऽपि भिन्नस्वरस्य प्राप्नुवन्नित्य इत्युभयोरनित्यत्वात् परत्वादनुदात्तस्वरः" इत्युक्तम् ।

यत्र त्वेकस्यैव कार्यस्य परत्वं नित्यत्वं च, तत्रेच्छयाऽन्यतरत्तदुभयं वा तस्य बलवत्त्वे नियामकमुल्लेख्यम्। अत एव तत्र तत्र परत्वान्नित्यत्वाच्चेति भाष्ये उच्यते।

वस्तुतः—तत्र परत्वादित्युक्तिरेकदेशिनः। स्पष्टं चेदं विप्रतिषेधसूत्रे कैयटे। 'णौ चङी'ति ह्रस्वापेक्षया नित्यत्वान्तरङ्गत्वप्रयुक्तद्वित्वस्य प्रथमतः प्रवृत्तौ नित्यत्वादित्येव भाष्य उक्तम्। एवं नित्यान्तरङ्गयोर्बलवत्त्वमपि यौगपद्यासम्भव एवेति बोध्यम्॥ ४९॥

---

नन्विपयस्येत्याद्युदात्तत्वेनेकारस्यानुदात्तस्य यणादेशः प्राप्नोति। उदके केवल इति कृते तु 'उदात्तस्ये'ति स्वरान्तरस्य प्राप्तत्वेन यणादेशोऽनित्यः। तथा च तं बाधित्वोदके केवल इत्यस्य परत्वात्प्रवृत्त्याऽन्तोदात्तस्य यणि 'उदात्तस्वरितयोर्यण' इति स्वरितत्व-मुकारस्य सिद्ध्यतीति भावः।

अन्यतरत्तदुभयं वेति। न च तस्य नित्यत्वे तुल्यबलविरोधाभावेन विप्रति-षेधसूत्राप्रवृत्तेरेतदयुक्तमिति वाच्यम्; विप्रतिषेधे नित्यान्तरङ्गापवादभिन्नेन पूर्व-शास्त्रेण सह परशास्त्रस्य विरोधे सति परं कार्यमिति विप्रतिषेधसूत्रार्थेन परशास्त्रस्य नित्यत्वेऽपि पूर्वशास्त्रस्य नित्यत्वाद्यभावेन विप्रतिषेधसूत्रप्रवृत्तौ बाधकाभावात्। पूर्वपदार्थे नित्यादिभिन्नत्वविशेषणदानेनोपपत्तौ परपदार्थेऽपि तद्विशेषणदाने माना भावात्। तुल्यबलविरोध इति वृत्तेरपि तुल्यबलेन नित्यादिभिन्नेन पूर्वशास्त्रेण सह विरोध इत्येवार्थो, न तु 'तुल्यबलयोर्विरोधे' इत्यर्थो मानाभावात्फलाभावाच्च। न च द्वयोर्नित्यत्वेऽन्तरङ्गत्वे वा परत्वाद् बाधो न स्यात्पूर्वशास्त्रस्य तद्भिन्नत्वा-भावादिति वाच्यम्; स्ववृत्तिनित्यत्वाभावविशिष्टं यन्नित्यत्वं तदभाववता स्ववृत्ति-तन्निरूपितान्तरङ्गत्वाभावविशिष्टं यदन्तरङ्गत्वं तदभाववता चेति पूर्वपदार्थे विशे-षणदानेनादोषात्। एवं 'परान्नित्यमि'त्यत्र परपदार्थे स्ववृत्तितन्निरूपितान्तरङ्ग-त्वाभावविशिष्टं यदन्तरङ्गत्वं तदभाववतेति विशेषणं देयम्, तेन द्वयोरन्तरङ्गत्वेऽपि नित्यत्वाद् बाधसिद्धिरिति दिक्।

पूर्वशास्त्रस्य नित्यान्तरङ्गत्वापवादत्वे त्वतुल्यबलत्वं स्पष्टमेव। अत्रैवोपोद्बलक-माह—अत एवेति।

परत्वादित्युक्तिरेकदेशिन इति। पूर्वोक्तयत्त्वित्यादिना प्रतिपादितकेचिन्मते तु नित्यत्वादित्युक्तिरेवैकदेशिन इति दिक्। यौगपद्यासम्भव इति। विरोधे सत्येव बल वता दुर्बलस्य बाधदर्शनादिति भावः॥ ४९॥

---

सिद्ध्यतीति भाव इति। अन्ये तु—स्वर-यणित्युभयोः कृताकृतप्रसङ्गित्वेन नित्यत्वात् परत्वात् स्वरे ततो यणि इष्टसिद्धेर्नैतत्फलमिति वदन्ति।

परे तु—पूर्वोत्तरपदनिमित्तकार्यात् प्रागन्तरङ्गोऽपि एकादेशो नेत्यत्रैकादेशपदं सन्धिकार्य-स्योपलक्षणम्, तेनैव सिद्धेरिदं निष्फलमित्याहुः॥ ४९॥

नित्यादप्यन्तरङ्गं बलीयः, अन्तरङ्गे बहिरङ्गस्यासिद्धत्वात्; तदाऽऽह—

## असिद्धं बहिरङ्गमन्तरङ्गे ॥ ५० ॥

अन्तर्मध्ये = बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्ये, अन्तर्भूतान्यङ्गानि निमित्तानि यस्य तदन्तरङ्गम्। एवं तदीयनिमित्तसमुदायाद् बहिर्भूताङ्गकं बहिरङ्गम्। एतच्च 'खरवसानयोरि'ति सूत्रे'ऽसिद्धवदत्रे'त्रे च भाष्यकैयटयोः स्पष्टम्।

---

नित्यादिति। 'अन्तरङ्गं नित्यावधिकबलवत्, अन्तरङ्गत्वादि'त्यनुमानप्रयोगः। अनुकूलतर्कमाह—अन्तरङ्गे बहिरङ्गस्येति। एतेनास्य हेतोः पक्षमात्रवृत्तित्वादप्रयोजकमिदमित्यपास्तम्।

बहिरङ्गशास्त्रीयेति। इदमन्तरङ्गत्वस्वरूपपरिचायकं न तु लक्षणकुक्षिप्रविष्टम्, एवं बहिरङ्गलक्षणे तदीयनिमित्तेत्यपि, तेन नान्योन्याश्रयः। तथा च स्वप्रवृत्तौ निमित्तत्वेनाऽऽश्रीयमाणो यावान् शब्दसमुदायस्तद्विशिष्टं स्वापेक्षयाऽन्तरङ्गमित्यर्थः; वैशिष्ट्यं च स्वघटकनिमित्तकत्व-स्वघटकेतरानिमित्तकत्वोभयसम्बन्धेन। 'ग्रामणिने' त्यादौ नुम्विधायकशास्त्रप्रवृत्तावाश्रीयमाणशब्दसमुदायः 'ग्रामणी आ' इति, तद्घटकप्रकृतिमात्रसापेक्षत्वाद् ह्रस्वस्यान्तरङ्गत्वम्। नुमस्तु ह्रस्वापेक्षया नान्तरङ्गत्वं, किन्तु बहिरङ्गत्वमेव, ह्रस्वनिमित्तभूतप्रकृतीतरविभक्तिनिमित्तकत्वादिति बोध्यम्। इत्थं च स्वप्रवृत्तौ निमित्तभूतो यावान् शब्दसमुदायस्तद्विशिष्टत्वं स्वापेक्षया बहि-

---

परिभाषायां प्रथमोपस्थितत्वाऽपि बहिरङ्गस्य 'पाठक्रमादार्थक्रमो बलीयान्' इति न्यायेन प्रथममन्तरङ्गपदार्थं विविनक्ति। तत्र समुदायज्ञानस्य पदार्थज्ञानपूर्वकत्वात् प्रथमं तदन्तर्गतान्तःशब्दार्थं कथयति। तत्रान्तःशब्दस्य नित्यसापेक्षत्वात् 'कस्यापेक्षया' इति जिज्ञासायामाह—मूले—बहिरङ्गशास्त्रीयेत्यादि। एवम्—अन्तःशब्दार्थं बोधयित्वा समुदायपदार्थमाह—मूले—अन्तर्भूतानीत्यादिना।

अत्रेदं बोध्यम्—अन्तरङ्गत्वञ्च अनेकविधम्,—दैशिक-कालिकादिभेदात्। तत्र दैशिकं पूर्वोपस्थितनिमित्तकत्वेन 'पट्व्या, मृद्व्या, अग्नुस्तुवत्' इत्यादौ, कालिकत्वेन 'खट्वोदकादौ'। नव्यमते अपरनिमित्तकत्वेनापि 'पचावेदम्' इत्यादौ, अन्तर्भूतनिमित्तकत्वेन 'विश्वौहः, पयोडि'-त्यादौ। एवम्—एकपदसम्बन्धिवर्णद्वयापेक्षत्वं 'प्रेद्ध' इत्यादौ प्राचां मते अर्थसंज्ञाकृतालपापेक्षत्वं 'गौधेरः, पचेत्' इत्यादौ 'रुद्यादि'त्यादौ 'स्रजिष्ठ' इत्यादौ पूर्वं पूर्वमन्तरङ्गत्वमिति सर्वेषां लक्ष्यानुरोधाद् व्यवस्थेति नातिप्रसङ्गः। तत्रान्तर्भूतनिमित्तकत्वं परिष्कुर्वन्नाह—स्वप्रवृत्ताविति। अत्र स्वपदेन बहिरङ्गशास्त्रं ग्राह्यम्।

ग्रामणिनेत्यादाविति। इदमुपलक्षणम्—ग्रामणिनीत्यस्य। 'ग्रामणि+आ' इत्यत्र तु 'आङो नास्त्रियाम्' इत्यनेन परत्वाद् बाधान्नुमोऽप्राप्तेः। नाविधायकस्य च ह्रस्वोत्तरमेव घिसंज्ञाया प्राप्त्या तत्र ह्रस्वान्तरङ्गत्वापेक्षाभावाच्च।

अत्राङ्गशब्देन शब्दरूपं निमित्तमेव गृह्यते शब्दशास्त्रे तस्यैव प्रधानत्वात् , तेनार्थनिमित्तकस्य न बहिरङ्गत्वम् । अत एव 'न तिसृचतसृ' इति निषेधश्चरितार्थः; अन्यथा स्त्रीत्वरूपार्थनिमित्तकतिस्रपेक्षयाऽन्तरङ्गत्वात् त्रयादेशे तदसङ्गतिः स्पष्टैव । अत एव त्रयादेशे 'स्रन्तस्य प्रतिषेध' इति स्थानिवत्सूत्रस्थभाष्यवार्तिकादि सङ्गच्छते ।

एतेन—'गौधेरः, पचेदि'त्यादावेयादीनामङ्गसंज्ञासापेक्षत्वेन बहिरङ्ग-

---

रङ्गत्वम् , वैशिष्ट्यञ्च—स्वनिमित्तकत्व-स्वघटकेतरनिमित्तकत्वोभयसम्बन्धेनेति तत्त्वम् । इदं चान्तरङ्गस्य नित्यावधिकबलवत्त्वे उदाहरणम् , परावधिकबलवत्त्वे तु 'रियती'त्यादि । अत्र हि परत्वात्प्राप्तं गुणं बाधित्वाऽन्तरङ्गत्वादियङिति बोध्यम् ।

अत एवेति । अर्थनिमित्तकस्य बहिरङ्गत्वाभावादेवेत्यर्थः । न च त्रयादेशोत्तरं तिस्रादेशे दीर्घवारणाय 'न तिसृ'ति चरितार्थमिति वाच्यम्; त्रयादेशस्येव दीर्घस्याप्यन्तरङ्गत्वेन पूर्वं प्रवृत्तौ पश्चात्तिस्रादेशे 'लक्ष्ये लक्षण'न्यायेन पुनर्दीर्घप्राप्त्या सूत्रवैयर्थ्यस्य सूपपादत्वात् । न च 'त्रेस्रय' इत्यादावुद्देश्यनिमित्तयोर्विशिष्टरूपत्वेन 'अर्थवद्ग्रहण'परिभाषयोपस्थितार्थद्वयस्य निमित्तत्वेन साम्यमिति वाच्यम्; तिस्रादेशेऽपि तत्परिभाषोपस्थितार्थस्य स्त्रीत्वरूपार्थस्य विभक्तिसंज्ञारूपार्थस्य चेति त्रयाणां निमित्तत्वेनाऽऽधिक्यात् , 'त्रेस्रय' इत्यादौ परिभाषयोपस्थितार्थस्य द्वेधा भानेऽप्यर्थस्यैक्येनार्थद्वयनिमित्तकत्वाभावाच्च ।

गौधर इति । ननु एयादेरङ्गसंज्ञाप्रत्ययसंज्ञोभयापेक्षत्वस्येव लोपविधायकस्यापि लोपसंज्ञावल्संज्ञोभयनिमित्तकत्वेन साम्यम् । न च लोपस्य विधेयत्वेनानिमित्तत्वम्; लोपस्य विधेयत्वेऽपि संज्ञाया अविधेयत्वेन निमित्तत्वे बाधकाभावात् । किञ्चायमादावङ्गसंज्ञाया अन्यथासिद्धत्वेनानिमित्तत्वमित्यरुचेराह—पचेदिति । अत्र हि इयादेशस्य अनुसंज्ञा, अङ्गसंज्ञा, सार्वधातुकसंज्ञा, स्वं रूपमि'त्येतद्-

---

अर्थद्वयस्य निमित्तत्वेन साम्यमिति । वस्तुतः—तिस्रादेशविधायकस्य अल्पनिमित्तकत्वमेव, न साम्यम् । तथा हि—'अर्थवत्'परिभाषोपस्थाने अर्थाश्रयः अर्थत्वार्थेति अंशत्रयोपस्थानम् । प्रकृते 'त्रेस्रयः' इत्यत्र त्र्यंशे आमंशे च 'अर्थवत्'परिभाषोपस्थितया अंशषट्कोपस्थितिः, 'त्रिचतुरोः स्त्रिया तिसृचतसृ' इत्यत्र तु स्त्रीत्वरूपार्थस्य तन्निष्ठायाः स्त्रीत्वत्वजातेः 'अर्थवत्'परिभाषया पूर्वोक्तांशत्रयस्य चोपस्थितिरिति पञ्चानामुपस्थितिरिति तिस्रादेशस्यैव चान्तरङ्गत्वमिति बोध्यम् ।

अर्थस्यैक्येनेति । अत्र अर्थशब्दोऽभिधेयपरः, तेन 'स्वं रूपमि'ति बोधितत्रिशब्दाभिधेयोऽर्थत्वम् , अर्थश्च गृह्यते । तत्राऽऽद्यस्य जातिरूपस्यैक्येनेति तदर्थः । एवञ्च अर्थत्वेन भानादर्थस्य ऐक्यमिति भावः । 'उपस्थितार्थस्य द्वेधा भाने' इत्यत्रापि अर्थशब्दमभिधेयपरं मत्वा अर्थस्वरूपो व्याख्येयः । एतेन—प्रकृत्यर्थप्रत्ययार्थयोरैक्यस्योपपादनासम्भवादिदमयुक्तमित्यपास्तम् ।

**तयाऽसिद्धत्वाद्वलिलोपो न स्यादिति परास्तम्। एयादेशादेरपरनिमित्त-कत्वेनान्तरङ्गत्वाच्च।**

---

**बं** घित-यासंज्ञेति संज्ञाचतुष्टयसापेक्षत्वेन बहिरङ्गत्वमिति भावः। **न च नव्यनये** वर्णद्वयसापेक्षत्वेन लोपस्य समुदायसापेक्षे यादेशापेक्षयाऽन्तरङ्गत्वम्। न च पर-निमित्तकत्वेन लोपस्य बहिरङ्गत्वम्, इयादेशस्यापि पूर्वनिमित्तकत्वेन समत्वादिति वाच्यम्; 'अतो येय' इत्येतद्विधेयघटकयकारनिमित्तकत्वेन लोपस्य निमित्तसमु-दायघटकेतरनिमित्तकत्वेन पूर्वोक्तान्तरङ्गत्वाभावात्। 'अक्षद्यूरि'त्यादौ तु स्थानि-द्वारा घटकत्वमादायान्तरङ्गत्वसत्त्वान्न क्षतिः। अपरनिमित्तकत्वेति। ऊकाल इति निर्देशोऽत्र मानम्। तत्र हि 'निषादस्थपत्यधिकरण'न्यायेन क्लृप्तसमाहारद्वन्द्वेऽपर-निमित्तकत्वेनान्तरङ्गत्वस्य बाधकत्वकल्पनायामेव दीर्घनिर्देश उपपद्यते। अन्यथा 'उ+उ' इति स्थिते परत्वान्नित्यत्वात् पूर्वं सवर्णदीर्घे पश्चाद् ह्रस्वे दीर्घनिर्देशा-सङ्गतिः स्पष्टैव।

नन्वेवं 'दुद्यूषती'त्यत्र 'दिव्+स्' इति स्थिते ऊठं बाधित्वाऽपरनिमित्त-कत्वेन पूर्वं द्वित्वेऽभ्यासे उकारश्रवणानापत्तिः। 'नामी'ति सूत्रे आमीति न्यासे 'राम+आमि'ति स्थिते नित्यत्वाद्दीर्घे ह्रस्वग्रहणसामर्थ्येन भूतपूर्वह्रस्वान्तत्वमादाय

---

बहिरङ्गत्वमिति भाव इति। अत्र इयादे प्रकृतिप्रत्ययोभयापेक्षत्वेन बहिरङ्गत्वम्। यलोपस्य तदादिप्रत्ययैतदुभयान्तर्भूतवर्णद्वयनिमित्तकत्वेन अन्तरङ्गत्वं नव्यमतेऽप्यस्तीति तस्मिन् कर्तव्ये इयादीनामसिद्धत्वाद्वलिलोपानापत्तिः। तस्मात् 'चेले क्नोपेरि'ति निर्देशेन वलिलोपे 'अन्तरङ्ग'परिभाषायाऽप्रवृत्तिरवश्यं वक्तव्या। एवञ्च चिन्त्यमिदं सर्वम्। यद्वा इत एवारुचेराह, मूले—अपरनिमित्तकत्वेनान्तरङ्गत्वाच्चेति।

तथा च अनया बहिरङ्गत्वासमानाधिकरणान्तरङ्गत्वस्य प्राबल्यबोधनात् पूर्वोक्तलक्ष्ये संज्ञा-निरपेक्षत्वेन वलिलोपस्यान्तरङ्गत्वेऽपि परनिमित्तकत्वेन बहिरङ्गत्वात् तादृशान्तरङ्गत्वाभावेन ना-सिद्धत्वं वलिलोपापेक्षया एयादीनामित्येवं व्याचक्षते केचित्। तत् खण्डयन्नाह—**न च नव्यनय** इत्यादिः। स्थानिद्वारेति। स्थानिता च स्वपर्याप्ताऽऽदेशतानिरूपिता ग्राह्या, तेन न प्रागुक्तलक्ष्ये दोषः, नापि धर्मिग्राहकमानविरोधश्चेति बोध्यम्। एतेन—"यकारस्य विधेयान्तर्गतत्वेन लोपस्या-न्तरङ्गत्वाभाववर्णनं केषाञ्चित् न युक्तम्; 'नाजानन्तर्य'परिभाषावतरण-ज्ञापकभाष्ययोरसङ्गत्यापत्तेः, परनिमित्तकत्वेनान्तरङ्गलोपस्य बहिरङ्गत्वमयुक्तम्, इयादेशस्यापि पूर्वनिमित्तकत्वेन साम्यादित्यपि केषाञ्चिदुक्तं हेयमेव, 'अपरनिमित्तकत्वेन अन्तरङ्गत्वाच्च' इति मूलग्रन्थविरोधादि"ति विजयाकारो-क्तमपास्तम्; अपर्याप्ताया आदेशताया ग्रहणे मानाभावात्, फलाभावात, प्रागुक्तकेषाञ्चिन्मत-खण्डनवत् मूलग्रन्थखण्डनेऽपि तात्पर्यसत्त्वेन तद्विरोधोपपादनस्य अकिञ्चित्करत्वात्, एयादेशाभि-प्रायेण मूलग्रन्थस्य योजयितुं सुशक्यत्वाच्चेति दिक्।

निषादस्थपत्यधिकरणन्यायेनेति। यथा तत्र कर्मधारये लाघवात् तस्यैव करणम्, एवमत्रापि समाहारे लाघवात् तत्रैव प्रवृत्तिरिति भावः।

ननु 'येन विधिस्तदन्तस्ये'ति सूत्रे भाष्ये 'इको यणची'त्यादावपि तदन्तविधौ 'स्योन' इत्यत्रान्तरङ्गत्वाद्यणो गुणबाधकत्वमिष्यते। तन्न सिद्ध्येत्, ऊनशब्दमाश्रित्य यणादेशो नशब्दमाश्रित्य गुण इत्यन्तरङ्गत्वाद् गुण एव स्यादित्युक्तम्।

अत्र कैयटः—सिवेर्बाहुलकादौणादिके नप्रत्यये गुणवलोपोठां प्रसङ्ग ऊठ-पवादत्वाद्वलोपं बाधते गुणं त्वन्तरङ्गत्वाद् बाधते। गुणो ह्यङ्गसम्बन्धिनी-

---

नुट्साधनपरभाष्यग्रन्थसङ्गतिः, तत्र त्वपरनिमित्तकत्वेनान्तरङ्गत्वाद्दीर्घात्पूर्वं नुट्प्रवृत्ते-र्भूतपूर्वगत्याश्रयणं विफलम्, एवं 'जहर्थे'त्यत्र गुणे कृतेऽजन्तत्वाभावेऽप्यचस्तास्व-दितीण्निषेधायोपदेश इत्यनुवृत्तेर्भाष्यकृत्कृताया वैयर्थ्यं स्यात्, त्वन्मतेऽपरनिमित्त-कत्वेनान्तरङ्गत्वाद् गुणात्पूर्वमेवेण्निषेधप्रवृत्तिसम्भवादिति चेन्न। आद्यऊठोऽन्यथा-सिद्धत्वेनाङ्गानपेक्षणान्न्यूनसमुदायापेक्षत्वरूपैकविधान्तरङ्गत्वेनोभयोः साम्ये परत्वात् पूर्वमुट्प्रवृत्तेः सुवचत्वात्। अन्यथा सिद्धस्य निमित्तपदेन परिभाषायां ग्रहणाग्रहेऽपि वक्ष्यमाणान्तरङ्गत्वस्योठ्यत्र सत्त्वेन साम्याच्च। द्वितीयतृतीययोस्तूकाल इति निर्देशेना-विशेषादपूर्वनिमित्तकत्वरूपान्तरङ्गत्वस्यापि परिभाषाप्रवृत्तिप्रयोजकत्वस्वीकारेण नुडिण्नि-षेधयोः पूर्वनिमित्तकत्वेनोभयोः समतया दोषाभावात्।

केचित्तु—व्याख्यानात् 'ऊकाल' इत्यत्रेतरेतरयोगद्वन्द्वं प्रकल्प्य प्रसिद्धफलाभावाद-परनिमित्तकं नान्तरङ्गमिति वदन्ति।

संज्ञाकृतबहिरङ्गत्वानाश्रयणे भाष्यकैयटविरोधमाह—नन्विति। तदन्तविधा-विति। तदपवादभूते तदादिविधावित्यर्थः। इत्युक्तमिति। तथा चैतत्संज्ञाकृतबहिरङ्ग-त्वाश्रयणे एव सङ्गच्छते, तेन संज्ञाकृतबहिरङ्गत्वं स्पष्टमेव भाष्यध्वनितमिति भावः। ऊठपवादत्वादिति। न च 'देवमाचष्टे, द्यूरि'त्यत्र णिलोपटिलोपयोः स्थानिवत्त्वेन

---

अपूर्वनिमित्तकत्वरूपान्तरङ्गत्वस्यापीति। अन्ये तु—अपूर्वनिमित्तकत्वे सति अपरनिमित्तकत्वम—अन्तरङ्गत्वमित्येकमेव स्वीकुर्वन्ति, फले तु न विशेषः। अत एव 'यः स' इत्यादौ 'त्यदादीनामि'त्यतः प्रागन्तरङ्गत्वात् हल्ङ्यादिलोपो न। अत एव च 'अजरा स्त्रीम्' इत्यत्र नुमजरसोर्विप्रतिषेधविचारपरभाष्यबलात् विभक्त्यादेशो जरसपेक्षया पूर्वविप्रतिषेधेनेति स्वग्रन्थेन न विरोधः। अन्यथा अपरनिमित्तकत्वेन अन्तरङ्गत्वादेव जरसः पूर्वं शीभावे तद्ग्रन्था-सङ्गतिः स्पष्टैव।

प्रसिद्धफलाभावादिति। न च 'पचावेदम्' इत्यत्रापरनिमित्तकत्वेन अन्तरङ्गे 'एत ऐ' इति कर्तव्ये आद्गुणस्यासिद्धत्वात् ऐकारो न इत्यस्ति फलमिति वाच्यम्; तत्र पदद्वयसम्बन्धि-वर्णद्वयापेक्षत्वेन बहिरङ्गस्यैकपदसम्बन्धिवर्णनिमित्तकैत ऐ इत्यन्तरङ्गे कर्तव्येऽसिद्धत्वेन अन्यथा तत्सिद्धेः, परिभाषाफलत्वेन तस्य खण्डयिष्यमाणत्वाच्च।

मिग्लक्षणां लध्वीमुपधामार्द्धधातुकं चाऽऽश्रयति। ऊठ् तु वकारान्तमङ्गमनुनासिकादिञ्च प्रत्ययमित्यल्पापेक्षत्वादन्तरङ्गः। तत्र कृते यण्गुणौ प्राप्नुत इति। एवञ्च संज्ञापेक्षस्यापि बहिरङ्गत्वं स्पष्टमेवोक्तमिति चेन्न। तदन्तविधावपि बहुपदार्थापेक्षत्वरूपबहिरङ्गत्वस्य गुणे सत्त्वेन तत्र दोषकथनपरभाष्यासङ्गतेः, बहिरङ्गान्तरङ्गशब्दाभ्यां बह्वपेक्षत्वाल्पापेक्षत्वयोः शब्दमर्यादयाऽलाभाच्च। तथा सति 'असिद्धं बह्वपेक्षमल्पापेक्ष' इत्येव वदेत्। अत एव विप्रतिषेधसूत्रभाष्ये 'गुणाद्यणादेशोऽन्तरङ्गत्वादि'त्यस्य 'स्योन' इत्युदाहरणम्, न तु 'गुणादूडन्तरङ्गत्वादि'त्युक्तम्। त्वद्रीत्या तदपि वक्तुमुचितम्। प्राथम्यात्तदेव वा वक्तुमुचितम्। मम त्वन्तरङ्गपरिभाषया तद्वारणासम्भवात्तन्नोक्तम्।

---

वलोपाप्राप्त्योठि क्वौ विधि प्रति निषेधात्तदप्राप्त्या तत्रोठश्चारितार्थ्यमिति वाच्यम्; अनुनासिकनिमित्तकोठोऽपवादत्वमित्येतत्तात्पर्येणादोषात्। अन्तरङ्ग इति। न्यनसंज्ञानिमित्तकत्वादित्यर्थः। भाष्यासङ्गतेरिति। त्वद्रीत्याऽनेकसंज्ञासापेक्षगुणापेक्षया यण एवान्तरङ्गत्वेन गुणस्यान्तरङ्गत्वप्रतिपादकोक्तभाष्यासङ्गतेरित्यर्थः। ननु गुणाद्यणादेशोऽन्तरङ्गत्वादित्यनेन गुणादूठोऽन्तरङ्गत्वमुक्तप्रायम्, ऊठ्प्रवृत्तिं विना यणोऽप्राप्तेरत आह—प्राथम्यादिति।

---

भाष्यासङ्गतेरित्यर्थ इति। ननु शब्दशास्त्रे शब्दस्य प्राधान्यात् शब्दकृतबहिरङ्गत्वान्तरङ्गत्वसम्भवे तेनैव निर्वाहे यत्र तथा न सम्भवति, तत्र संज्ञाकृतान्तरङ्गबहिरङ्गभावाश्रयणमिति 'सिव् न' इत्यत्र तादृशबहिरङ्गान्तरङ्गत्वयोरभावेन संज्ञाकृतबहिरङ्गाश्रयणेन निर्वाहः।

ऊठिकृते यण्-गुणयोः प्राप्तौ शब्दकृतबहिरङ्गान्तरङ्गभावसम्भवात् तदेवोक्तमिति न भाष्यविरोध इत्यरुचेराह, मूले—बहिरङ्गान्तरङ्गशब्दाभ्यामित्यादिना। ननु बहिरङ्गत्वेन अभिमतशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नत्वेन आश्रीयमाणो यावान् शब्दसमुदायस्तद्घटकनिमित्तसंख्यान्तर्भूतसंख्यावन्निमित्तकत्वम्—अन्तरङ्गत्वम्, एवम्—अन्तरङ्गत्वेन जिघृक्षितशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नत्वेन आश्रीयमाणो यावान् शब्दसमुदायस्तन्निमित्तसंख्याबहिर्भूतसंख्यावन्निमित्तकत्वं बहिरङ्गत्वमित्यर्थकरणेन बहिरङ्गान्तरङ्गशब्दाभ्यामपि बह्वपेक्षत्वाल्पापेक्षत्वरूपार्थयोर्लाभ इत्यरुचेराह, मूले—अत एव विप्रतिषेधसूत्रेति। उक्तप्रायमिति। 'अन्तरङ्ग'परिभाषाया उदाहरणानि साकल्येन कथनीयानीति नियमाभावात् भाष्यकारैः स्वाभिमतमेकमुदाहरणं दत्तम्, तेन संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणमिति वक्तुमयुक्तमित्यपि बोध्यम्। परिनिष्ठितरूपसमीपस्थस्यैव प्रथमं बुद्ध्यारूढतया तस्यैव प्राथम्यम्। 'सिउ ने'त्यस्य तथात्वेन तत्रैवान्तरङ्गत्वस्य फलं प्रदर्शितमिति न प्राचां भाष्यविरोधः, प्रत्युत 'सिव्'+न' इत्यवस्थायामूठोऽनुपपत्त्या तवैव भाष्यविरोध

किञ्च सिद्धान्ते नित्यत्वाद् गुणात् पूर्वमूठ्, गुणस्तु ऊठि यणा बाधितत्वादनित्यः। उनशब्दमाश्रित्येत्यादिभाष्येण च परिभाषायामङ्गशब्देन सप्तम्याद्यन्ततयोपात्तं शब्दरूपं निमित्तमेव गृह्यत इति स्पष्टमेवोक्तम्।

---

ननु भाष्यस्यान्यथोपपत्त्यभावात् कैयटोक्तमेवाऽऽवश्यकमित्यतो भाष्यं स्वमते लापयति—किञ्चेति। किन्त्वित्यर्थः। सप्तम्याद्यन्ततयेति। इदमन्तरङ्गशास्त्रीयं निमित्तम्, बहिरङ्गशास्त्रीयन्तु षष्ठ्याद्यन्तपदोपात्तमपि ग्राह्यमित्यर्थः। तथा च बहिरङ्गत्वेन विवक्षितं यच्छास्त्रं तद्घटकेन सप्तम्यन्तेन पञ्चम्यन्तेन षष्ठ्यन्तेनान्येन वा प्रथमान्तभिन्नेन केनचित्पदेनाऽऽश्रीयमाणो यावान् शब्दसमुदायस्तद्घटको यच्छास्त्रीयसप्तम्यन्तपञ्चम्यन्तान्यतरपदेन गृह्यते, तदन्तरङ्गमित्यर्थः। यण्शास्त्रीयसप्तम्यन्तेनाऽऽश्रीयमाण 'ऊन' इति समुदायस्तद्घटको नशब्दो गुणशास्त्रस्थेन सप्तम्यन्तेन गृह्यत इति तदन्तरङ्गम्। गुणशास्त्रस्थाङ्गपदेनाऽऽश्रीयमाणः 'सिऊ' इति, तद्घटक ऊशब्दो नाच्शब्देन गृह्यते, अच्शब्दस्याजादीत्यर्थात् ससहाये व्यपदेशिवद्भावाप्रवृत्तेः। न च भाष्यमते ससहायेऽपि व्यपदेशिवद्भावप्रवृत्तेरुक्तभाष्यविरोध इति वाच्यम्; अन्तरङ्गशास्त्रीयसप्तम्यन्तपदेन गृह्यमाणस्य तत्पदप्रयोज्यविषयतापर्याप्त्यधिकरणघटकपूर्वत्वाभाववतो ग्रहणेनादोषात्। एतेन—ईदृशान्तरङ्गत्वस्वीकारे वक्ष्यमाणज्ञापकासङ्गतिः, 'नाजानन्तर्य'परिभाषावतरणाद्यसङ्गतिश्च स्यादिति परास्तम्।

---

इत्याशयेनाह—नन्विति। चकारस्य दोषसमुच्चयार्थकत्वासम्भवादाह—किन्त्वित्यर्थ इति। ननु सिद्धान्ते तथा सिद्धयाऽपि पूर्वपक्षे गुणस्यैवान्तरङ्गत्वाद् ऊडुत्तरं प्राप्त्या तस्यापि नित्यत्वात् परत्वाद् गुणे कृते ऊठ्, तदुत्तरं यण्-गुणयोरन्तरङ्गत्वविचारपरकभाष्यासङ्गतिरेव त्वन्मते इति चेत्—अत्रोच्यते, आपाद्यमानेऽर्थे न्यायानादर इति तदन्तविधिपक्षे दोषदानतत्परैर्भाष्यकारैर्नैतच्चिन्तितम्। यदि न भवति चेत्तदपि दूषणं बोध्यम्। यद्वा—यणो गुणबाधकत्वोक्त्या गुणस्य नित्यत्वविघटन एव प्रकृतभाष्यतात्पर्यमित्याशयः। गुणाद्यणादेशोऽन्तरङ्ग इत्यस्य तदन्तविधिपक्षे ऊनशब्दमाश्रित्य यणादेश इत्यस्य चायं भावः—'सिव्+न' इति स्थिते गुणोठोः प्राप्तौ परत्वाद् गुणे प्राप्ते नित्यत्वादूठ्। न च गुणोऽपि नित्यः ऊठि कृते गुणयणोः प्राप्तौ तदन्तविध्यभावकल्पेऽन्तरङ्गत्वाद्यणा बाधितत्वाद् गुणस्यानित्यत्वम्। तदन्तविधिपक्षे तु ऊठि कृते बहिरङ्गं यणं बाधित्वा अन्तरङ्गत्वाद् गुणस्यैव प्राप्त्या गुणस्यापि तदपेक्षया नित्यत्वात् परत्वादूठं बाधित्वा गुण एव स्यात्। तथा चोठो नित्यत्वोपपादने एव तात्पर्यम्, न तु ऊडुत्तरं प्राप्तयोर्यण्गुणयोरन्तरङ्गत्वबहिरङ्गत्वबोधने तात्पर्यमिति। एवञ्च भाष्यसङ्गतेस्तदर्थे न संज्ञाकृतबहिरङ्गत्वस्याश्रयणमिति बोध्यम्।

व्यपदेशिवद्भावप्रवृत्तेरिति। 'निजौ चत्वार एकाच' इति भाष्यादिति भावः। अदोषादिति। नन्वेवं 'ग्रामणिनी'त्यत्र बहिरङ्गत्वेनाभिमतनुम्शास्त्रीययत्किञ्चित्पदम्—इगिति, तेनाऽऽश्रीयमाणसमुदायो—ग्रामणीति, तद्घटकेन ह्रस्वविधायकघटकेन सप्तम्यन्तेन वा पञ्चम्यन्तेन वाऽऽश्रीयते इति तस्यान्तरङ्गत्वं न स्यात्। न च अपरनिमित्तकत्वेनान्तरङ्गत्वं स्यादिति वाच्यम्; प्रसिद्धफलाभावादपरनिमित्तकत्वं नान्तरङ्गत्वमिति वदतां मते तदभावादिति चेद्—

यत्तु—कैयटेन तदन्तविधिपक्षे परत्वाद् गुणः प्राप्नोतीत्युक्तम्; तत्तु नशब्दमाश्रित्येत्यादिभाष्यासङ्गत्या चिन्त्यम्।

वलिलोपेऽन्तरङ्गपरिभाषा न प्रवर्तत इति तु न युक्तम्, तत्सूत्रे भाष्य एव व्रश्चादिषु लोपातिप्रसङ्गमाशङ्क्योपदेशसामर्थ्यान्न। न च 'वृश्चति' इत्यादौ चारितार्थ्यम्; बहिरङ्गतया सम्प्रसारणस्यासिद्धत्वेन पूर्वमेव तत्प्राप्तेरिति भाष्योक्तेः।

---

वलिलोप इति। ननु वलिलोपेऽन्तरङ्गपरिभाषाया अप्रवृत्तिरवश्यमङ्गीकार्या; अन्यथा 'क्नोपयति'त्यत्र पुकोऽसिद्धत्वेन वलिलोपानापत्तेः, 'चेलेक्नोपेरि'ति निर्देशासङ्गतेश्च। अत एव नरदान्तसूत्रे वरेग्रहणं यलोपे यातिरिति भाष्योदाहरणं च सङ्गच्छते। 'यायावरो यातिरि'त्यत्र चातो लोपे कृते तस्य यायाय वर इति यायायति इति समुदायसापेक्षत्वेन बहिरङ्गतयाऽसिद्धत्वादन्तरङ्गवलिलोपस्याप्राप्त्या तदसङ्गतिः स्पष्टैव। वलिलोप इति निषेधश्च जातबहिरङ्गासिद्धत्वस्यैव, न तु समकालिकबहिरङ्गासिद्धत्वस्य। यद्वा—ज्ञापकसाजात्यादयं निषेधो यलोपविषयक एव, तेन 'वृश्चती'ति भाष्यविरोधोऽपि नेति चेन्न। अजनिष्ठान्यानन्तर्यनिमित्तककार्यप्रवृत्त्युत्तरप्रवर्तमानान्तरङ्गे कर्तव्ये बहिरङ्गपरिभाषा न प्रवर्तत इत्यर्थकेन 'नाजानन्तर्ये' इति निषेधेनान्तरङ्गपरिभाषाया अप्रवृत्त्या 'यायवरो यातिरि'ति भाष्यसङ्गतेः सुवचत्वात्। अत्रार्थे अजिनष्ठान्यानन्तर्यनिमित्तकं कार्यं चान्तरङ्गमेव ग्राह्यमित्यत्र तु न मानम्। एवं 'क्नोपयती'त्यत्रापि बोध्यम्।

केचित्तु—बहिरङ्गशास्त्रीयप्रथमान्तभिन्नेन केनचित्पदेनाऽऽश्रीयमाणो यावान् समुदायस्तस्य वास्तविकः स्थानिद्वारा वा घटको यच्छास्त्रीयसप्तम्यन्तपदेन गृह्यते तदन्तरङ्गमित्यन्तरङ्गत्वस्वीकारात ('क्नोपयती'त्यत्र निरुक्तसमुदाय 'क्नूय्' इति, तस्य वास्तविकघटकः पुङ् नास्त्यतो) नान्तरङ्गत्वं वलिलोपस्य। 'अक्षद्यूरि'त्यादौ स्थानिद्वारा घटकत्वं बोध्यम्। यद्वा—वास्तविकघटक इत्यत्र बहिरङ्गशास्त्रप्राप्तिकाले घटकोऽपेक्षित इति वदन्ति।

---

उच्यते; क्रमिकान्वाख्यानपक्षे परस्याप्राप्तिरूपमन्तरङ्गत्वमादाय ह्रस्वत्वसिद्धिर्निराबाधैवेति व्याख्यातॄणामाशयात्; पदसंस्कारपक्षे तु नैतत्सिद्ध्येत्।

अन्ये तु—बहिरङ्गत्वेन जिघृक्षितशास्त्रीयोद्देश्यतावच्छेदकावच्छेदेन आश्रीयमाणो यावान् शब्दसमुदायः, तद्घटकमात्रनिमित्तकत्वमिति पूर्वोक्तलक्षणेन प्रकृते न दोषः। एवञ्च अस्यान्तरङ्गत्वस्य स्वीकारेण 'वाह ऊठ्' इत्यत्र स्वाशे चारितार्थ्यात् सिद्धान्ते 'स्योन' इत्यत्र यणोऽन्तरङ्गत्वे च सिद्धे न तदर्थमङ्गपदेन सप्तम्याद्यन्ततयेत्यत्र अङ्गपदमन्तरङ्गपदघटकाङ्गपरमिति वक्तव्यम्, अपि तु ऊनशब्दमाश्रित्य यणादेशो नशब्दमाश्रित्येति पूर्वपक्षलापनाय उभाभ्यामप्यङ्गपदाभ्यां सप्तम्यन्ततयोपात्तं ग्राह्यम्। नापि सप्तम्यन्तपदेन तत्प्रयोज्यविषयतापर्याप्त्यधिकरणघटकपूर्वत्वाभाववतो ग्रहणमिति वक्तव्यम्। एवञ्च प्रागुक्तात् पृथगेवेदमन्तरङ्गत्वमिति प्राहुः।

यत्त—नलोपस्य षट्संज्ञायामसिद्धत्वात् 'पञ्चे'त्यत्र न षडिति निषेध इति। तच्चिन्त्यम्; नलोपस्य हि पदसंज्ञासापेक्षत्वेन बहिरङ्गत्वं वाच्यम्। तच्च

---

परे तु—स्वप्रवृत्तौ निमित्ततप्रयोजकेन केनचिदेकेन पदेनाऽऽश्रीयमाणसमुदाय-विशिष्टो यच्छास्त्रीयसप्तम्यन्तपञ्चम्यन्तान्यतरपदेनाऽऽश्रीयते तत् स्वापेक्षयाऽन्तरङ्गम्; वैशिष्ट्यञ्च—स्वघटकत्व-स्वघटकोत्तरत्वोभयसम्बन्धेन। 'यायावरो यातिरि'त्यत्र बहिरङ्गशास्त्रीयपदेनाऽऽश्रीयमाणो 'वर' इति 'ति' इति च, तद्विशिष्टत्वं वकारस्य तकारस्य वा नास्तीति नान्तरङ्गत्वं वलिलोपस्य। एवं 'क्नोपयती'त्यत्र पुक् न केनापि निमित्ततप्रयोजकपदेनाऽऽश्रीयते, यश्चाऽऽश्रीयते आदन्तो न तद्घटकत्वं पुको विधानात् प्रागिति न दोषः। 'विश्वौह' इत्यत्र तथाभूतो णिरस्स गुणशास्त्रीयसप्तम्यन्तपदेन गृह्यत इति गुणस्यान्तरङ्गत्वम्। एवम्—'असुस्रुवदि'त्यादावपीदमेवान्तरङ्गत्वम्। 'स्योन' इत्यत्र पूर्वपदे ऊन इति समुदायस्तथा, तद्घटकत्वं तद्घटकोत्तरत्वं नशाब्द-स्येति स नशब्दो गुणशास्त्रीयसप्तम्यन्तेन गृह्यत इति गुणस्यान्तरङ्गत्वम्। यणस्तु न तथाऽन्तरङ्गत्वं, गुणशास्त्रीयाङ्गपदेन गृह्यमाणः 'सिऊ' इति समुदायस्तद्विशिष्टत्वं यद्य-प्यूठोऽस्ति; तथापि यण्शास्त्रीयसप्तम्यन्तेन स न विवक्षितः, किन्तु 'ऊन' इति समु-दायः। सिद्धान्ते तु 'ऊ' इत्येवाच्पदेन विवक्षित इति यणोऽन्तरङ्गत्वं सिद्धम्। यद्वा—अन्तरङ्गत्वलक्षणे स्वघटकोत्तरत्वमनिवेश्य तादृशसमुदायघटको यच्छास्त्रीय-सप्तम्यन्तपदविशिष्टस्तदन्तरङ्गमिति वाच्यम्; वैशिष्ट्यञ्च—स्वप्रयोज्यविषयता-श्रयत्व–स्वप्रयोज्यविषयताश्रयघटकावधिकपूर्वत्वाभाववत्त्वोभयसम्बन्धेन। 'स्योन' इत्य-त्रोठ यणशास्त्रीयसप्तम्यन्तपदप्रयोज्यविषयताश्रयोनशब्दघटकनशब्दावधिकपूर्व इति न यणोऽन्तरङ्गत्वं, 'यायावर' इत्यत्र नाजानन्तर्य इति द्वितीयार्थेन सिद्धम्। अथवाऽ-स्मिन्नपि लक्षणे पूर्वोक्तसम्बन्धद्वयेन तादृशसमुदायविशिष्टो यच्छास्त्रीयेत्यादिवक्तव्य-मिति वलिलोप इति निषेधो निष्फल एवेति प्राहुः।

षट्संज्ञायामसिद्धत्वादिति। बहिरङ्गपरिभाषयेत्यर्थः। न च परिभाषाया अप्रवृत्ता-वपि संज्ञापदेनाविशेषात् षट्संज्ञाया अपि नलोपेति सूत्रे ग्रहणेन तत्र कर्तव्याया नलोपस्यासिद्धत्वं भवेदिति वाच्यम्; 'नलोपः सुप्स्वरे'ति सूत्रे संज्ञापदेन घिसंज्ञाया एव ग्रहणात्। अत्र मानं च तत्सूत्रस्थं भाष्यमेव। तथा हि—'संज्ञाविधौ किमुदा-हरणं दण्डिदत्तौ दत्तदण्डिनौ, नात्र घित्वाद्दण्डिन एव पूर्वनिपातः। ननु च यदा घित्वं तदा पूर्वनिपातः। यदा पूर्वनिपातस्तदा नलोपे घित्वमितीदमयुक्तम्। संज्ञा-ग्रहणसामर्थ्येन यस्य पूर्वपदस्य घित्वं भावि तस्य पूर्वनिपात' इत्युक्तम्। यदि 'पञ्चे'त्यत्र स्त्रीप्रत्ययाभावाय संज्ञाग्रहणस्य चारितार्थ्यं, तदा संज्ञाग्रहणसामर्थ्यो-पपादनं भाष्योक्तमसङ्गतं स्यात्। एतदर्थफलं 'धूलिहावि'ति। एतेन—'इकोऽचीत्य-त्राज्ग्रहणस्य 'हे वारिषु शय' इत्यत्र गुरुसंज्ञायां नलोपस्यासिद्धत्वेन प्लुतः स्या-दिति चारितार्थ्यमित्यपास्तम्। अजग्रहणज्ञापकतापरभाष्यस्याप्यत्रार्थे ज्ञापकत्वस्य सुवचत्वात्।

न, संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणात्। 'पञ्चे'त्यत्र निषेधस्तु स्त्रियां यत् प्राप्नोति तन्नेति व्याख्यानसामर्थ्येन भूतपूर्वषट्त्वमादायेति बोध्यम्।

अत एव कृतितुग्ग्रहणं चरितार्थम्। 'वृत्रहभ्यामि'त्यादौ पदत्वनिमित्तकत्वेऽपि नलोपस्य बहिरङ्गत्वाभावात्। भ्यामः पदसंज्ञानिमित्तत्वेऽपि नलोपस्य तन्निमित्तकत्वाभावात्। परम्परया निमित्तत्वमादाय बहिरङ्गत्वाश्रयणे तु न मानम्। ध्वनितं चेदं 'नलोपः सुपि'ति सूत्रे भाष्य इति तत्रव भाष्यप्रदीपोद्योते निरूपितम्।

अन्तरङ्गे कर्तव्ये जातं

---

व्याख्यानसामर्थ्येनेति। तत्स्वभावेनेत्यर्थः। एतेनैतद्व्याख्यानं 'प्रियपञ्चानं द्रौपदीं पश्ये'त्यत्र डाब्व्यावृत्तये चरितार्थमित्यपास्तम्।

केचित्तु—डाब्विधायक 'नषडि'त्यनुवर्त्य डापोऽपि निषेध इति वदन्ति।

भूतपूर्वेति। पूर्वं भूतं स्थितं षट्त्वं स्थानिवद्भावेनादायेत्यर्थः। षट्त्वं तु सङ्केतसम्बन्धेन षट्पदवत्त्वमतो 'नानल्विधावि'ति निषेधविषय इति भावः।

अत एवेति। संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणादेवेत्यर्थः। वृत्रहभ्यामिति। वृत्रेति पृथक् पदं, हभ्यामिति प्रकृतोपयोगि वर्तमाने उपपदरहिताद्धन धातोः क्विप्येतद्रूपम्, तेन 'ब्रह्मभ्रूणे'ति नियमाक्रान्तं नेति भावः। एतेन नलोपस्य वृत्रहन्निति समुदायापेक्षत्वेन बहिरङ्गत्वमेवेत्यपास्तम्।

जातमिति। एतत्फलं वक्ष्यमाणं 'पचावेदमि'ति बोध्यम्। ननु—'इत ऐरि'ति न्यासेनैत्वव्यावृत्तिसिद्धेरत्र न दोषः। न च नेरैत्वापत्तिः, इकारोच्चारणसामर्थ्यादुत्वस्येवैत्वस्यापि बाधसम्भवात्। न च गौरवाद् मेर्नैरिति न कृतमिति वाच्यम्; सामर्थ्यादित्यस्य 'तक्रकौण्डिन्य'न्यायेन तद्बाधादित्यर्थेनादोषात्। यत्तु—'मेर्निरि'ति मकारस्य नकारादेशे कर्तव्ये इकारान्तादेशविधानसामर्थ्यादित ऐरित्यस्य बाध इति। तन्न; परशब्दमुच्चार्य विहितकार्याभावेन 'आदेः परस्ये'त्यस्याप्रवृत्त्या मकारस्य नकारादेशासम्भवात्। अत एव 'नित्यं ङित' इत्यत्र तदप्रवृत्तिरिति चेन्न। 'पचावेदमि'त्यादौ 'आमेत' इत्यस्य दुर्वारत्वात्। अशब्दादाचारक्विबन्ताल्लटि कर्मव्यतिहार उत्तमपुरुष इटि निष्पन्नेन एशब्देन पचावेत्यस्याख्यातमिति समासे पुनः सुशब्देन पचावैशब्दस्य समासे नपुंसकह्रस्वे 'सुपचावि' इत्यत्रैत्वापत्त्या 'इत ऐ' इति न्यासस्य कर्तुमशक्यत्वेन 'पचावेदमि'त्यत्रैत्ववारणाय जातबहिरङ्गासिद्धत्वस्याऽऽवश्यकत्वात्। न च प्रतिपदोक्तैकारग्रहणेनादोष इति वाच्यम्; 'एधस्व, पचावेभ्य' इत्यत्र बहुवचन इत्येकारस्यापि प्रतिपदोक्तत्वेनैत्वापत्तेः।

---

पचावैशब्दस्येति। वस्तुतः इदं चिन्त्यम्—कृते एकादेशे तदादित्वेन समासग्रहणस्य विध्यर्थत्वसम्भावनया नियामकत्वोक्तिपरकभाष्यात् ईदृशानां लक्ष्याणामनभिधानात्।

केचित्तु—'एत ऐ' इत्यत्र मण्डूकप्लुत्या सूत्रव्यत्यासेन वा 'टित आत्मनेपद' इत्यत आत्मनेपदानुवृत्त्या 'प्रतिपदोक्त'परिभाषयाऽऽत्मनेपदशब्दघटितशास्त्रविहितैकारस्य ऐकारविधानान्नैतज्ज्ञावबहिरङ्गासिद्धत्वस्य फलमिति वदन्ति। एवम्—'असूषुदद्' इत्यत्र 'णौ चङी'ति ह्रस्वस्यासिद्धत्वाल्लघूपधगुणो न। न च 'नाजानन्तर्ये' इति निषेधः; 'पुगन्ते'त्यत्र 'येन नाव्यवधान'न्यायेनैकवर्णव्यवधानग्रहणेऽपि 'नाजानन्तर्य'परिभाषायां तद्ग्रहणे मानाभावेन तदप्राप्तेः। न च क्नोः क्त्विेन प्रत्ययोपदेशकाले लघूपधस्य गुणविधानान्नात्र दोष इति वाच्यम्; तुर्वीधातोर्वनिपि 'तोर्वे'त्यत्र गुणानापत्तेः।

केचित्तु—'उपदेशसामर्थ्याद्वलोपो ने'ति वकारप्रत्याख्यानपरभाष्यप्रामाण्येन 'तोर्वे'त्यस्यानभिधानेन नैतत्फलमिति वदन्ति।

अन्ये तु—पुगन्तसाहचर्यात् सार्वधातुकसाहचर्याच्चाऽऽर्धधातुके परतोऽपि स्वोत्तरप्रत्ययानिमित्तकस्यैवैको गुणविधानान्न 'असूषुदद्'इत्यत्र दोष इति प्राहुः।

'जागृढ' इत्यत्र सम्प्रसारणस्य बहिर्भूततसूनिमित्तकत्वेनासिद्धत्वान्न रुगादय इति तु न फलम्, 'ऋत्वत' इत्यस्याभ्यासविशेषणत्वेनादोषात्। न च 'अदिद्रपदि'त्यत्र 'णौ चङी'ति ह्रस्वस्यात उपधाया इति न वृद्धिरित्येतत्फलमिति वाच्यम्; 'अत उपधाया' इत्यत्रादुपधाद्विहिते णितीत्यर्थेनादोषात्। न चैवं 'राग' इत्यत्र वृद्धिर्न स्यादिति वाच्यम्, 'घञि चे'त्यत्र घञि विवक्षित इत्यर्थेनादोषात्। अत एव रञ्जेर्णौ मृगरमणे नलोपे रजयतीत्येव।

---

सूत्रव्यत्यासेन वेति। 'ब्रुवः पञ्चानामादित आहो ब्रुवः' इत्यस्याग्रे 'टित आत्मनेपदानां टेरे, थासः से, लिटस्तझयोरेशिरेच्, लोट् च, आमेतः, सवाभ्यां वामौ, उत्तमस्यैत ऐ, पिच्च, लङ्वत्, एवः' इत्येवं न्यासेनेत्यर्थः। वदन्तीति। न च 'एधस्वेदमि'त्यत्र 'सवाभ्यां वामौ' इत्यनेन अमादेशाभाव एव जातासिद्धत्वस्य फलमिति वाच्यम्; 'सकारसाहचर्येण सवाभ्यामित्यैतद्विहितानवयवबकारात् परस्यैवामादेशः' इत्यर्थकरणेनादोषात्। आत्मनेपदमुच्चार्य विहितस्यैकारस्यैवाऽऽदेश इति तु न सम्यक्; 'एधस्व'इत्यत्राऽऽदेशानापत्तेः।

नैतत्फलमिति वदन्तीति। नन्विदमयुक्तम्, 'तोर्वे'त्यस्यानभिधानेऽपि 'सीदती'त्यत्र गुणापत्त्या प्रत्ययोपदेशकाले लघूपधस्येति वक्तुमशक्यत्वात्, "कुरुवयपिबां प्रतिषेध" इति वार्तिकविरोधात्, "'रियति, पियति, अमुमुवत्' इत्यत्र अन्तरङ्गत्वादियङ्" इति भाष्यविरोधाच्च।

यत्तु—लघूपधाद्विहितप्रत्ययाव्यवहितपूर्वस्यैको गुण इत्यर्थेन न तत्फलमिति। तन्न; 'एटती'त्यत्र गुणानापत्तेः। 'इट्+ति' इत्यस्यां दशायां शपो लघूपधाद् विहितत्वाभावात्। यद्वा—प्रत्ययविधानकाले यो लघुस्तदुपधस्येत्यर्थाश्रयणे तु नैतत्फलमिति सम्यगेव। 'एटती'त्यत्र तिप्प्रत्ययविधानकाले इकारस्य लघुत्वमस्त्येवेति न दोषः।

अदुपधाद्विहित इति। न च 'जन्हार' इत्यादौ क्विदर्थस्यापि 'ऋतश्चे'ति गुणस्य परत्वात् 'णल्यपि'प्रवृत्त्या ततो वृद्धिर्न स्यादिति वाच्यम्; 'घञि च भावकरणयोः' इतिवत्तत्रापि विषयसप्तमीस्वीकारेणादोषात्। एवं 'ब्रुवो वचिः' इत्यत्रापि आर्द्धधातुके इति विषयसप्तमी, तेन 'वाचकः' इत्यत्र न दोषः।

केचित्तु—अत्र जनीजृषिति घटादित्वान्न दोष इति प्राहुः।

परे तु—पर्जन्यवत्पूर्वं नित्यत्वात्प्रतिपदोक्तत्वाच्च ह्रस्वे 'रजयती'त्यत्रात इति वृद्धिर्न। मित्त्वफलन्तु 'चिण्णमुलोरि'ति बोध्यमित्याहुः।

'जगदम्बे'त्यत्र 'सन्निपात'परिभाषया न टाबित्येतदपि न जातासिद्धत्वस्य फलम्। 'अम्बाऽत्रे'त्यत्र सवर्णदीर्घस्य पदद्वयापेक्षत्वेनासिद्धत्वान्नाम्बार्थेति पुनर्ह्रस्व इति तु न फलम्। 'लक्ष्ये लक्षण'न्यायेनैवात्र तद्व्यावृत्तेः सुवचत्वात्। न च तन्मात्र-स्थानिकविकाराभावेन 'लक्ष्ये लक्षण'न्यायाप्रवृत्तिः। अत एव 'काण्ड' इत्यत्रैतन्न्याया-प्रवृत्त्या प्रकारान्तरेणैवात्र ह्रस्ववारणं भाष्योक्तं सङ्गच्छत इति वाच्यम्; तादृश-भाष्यप्रामाण्येन विभक्तिस्थानिकैकादेशस्थले मात्रपदेन व्यावृत्तावप्यत्र तद्व्यावृत्तौ मानाभावात्। ईदृशन्यायस्वरूपवर्णनस्यान्यत्र स्पष्टत्वात्।

केचित्तु—भूधातोः क्विबन्तादौकारे सुपि 'भुवादि'त्यत्रोवङि कृते बहिरङ्गत्वे-नोवङोऽसिद्धत्वादूठ् न। न चोठ्यपि 'भू+ऊ+औ' इति स्थिते 'लक्ष्ये लक्षण'न्याये-नोवङोऽप्राप्त्या 'न भूसुधियोरि'ति निषेधेनाङ्ग्यणोऽभावेऽपि 'इको यणची'ति यणीष्टसिद्धिरिति वाच्यम्; अन्तरङ्गत्वादपवादत्वाद्वा यणं बाधित्वा सवर्णदीर्घे ततो यणि 'भ्वावि'त्यस्यापत्तेः। न च 'भू+ऊ+औ' इति स्थिते वार्णपरिभाषया सवर्णदीर्घं बाधित्वा 'ओः सुपी'ति यणि 'भुवावि'त्यस्य सिद्धिः, सुधीसाहचर्येण हल्पूर्व एव निषेधप्रवृत्तिस्वीकारेणात्र तद्विषयाभावादिति वाच्यम्; 'भुवावि'त्यत्र पूर्वोकारे 'इको यणची'ति यण् प्राप्नोति, तं बाधित्वाऽपवादत्वाद्दीर्घः, तं बाधित्वा वार्णपरिभाषया ऊठो यण् प्राप्नोति, तमन्तरङ्गत्वाद् बाधित्वा 'इको यणि'ति यण्

---

न जातासिद्धत्वस्य फलमिति। अत्र केचित्—'औजिढत्'इति जातासिद्धत्वस्य फलम्। तत्रान्तरङ्गे ढ्लोपे कर्तव्ये चङन्तसमुदायनिमित्तकद्वित्वस्य बहिरङ्गतयाऽसिद्धत्वान्न दीर्घा-पत्तिरिति प्राहुः। तन्न; जातासिद्धत्वाङ्गीकारेऽपि अन्तरङ्गे दीर्घे कर्तव्ये 'नाजानन्तर्ये' इति निषेधात् 'चङि' इति द्वित्वस्य असिद्धत्वाभावेन दीर्घप्राप्तेर्निर्बाधत्वात्। 'नाजानन्तर्ये' इत्यस्य अनित्यत्वे न दृढतरं मानम्। किञ्च अभ्यासकार्ये द्वित्वस्यासिद्धत्वं नेत्यवश्यं कल्पनीयेनैव वचनेन द्वित्वस्या-सिद्धत्वाभावः। अत एव 'ह्रस्वः, हलादिः शेषः' इति सूत्रद्वयं चरितार्थम्; अन्यथा ह्रस्वे हलादिः शेषे च कर्तव्ये प्रत्ययनिमित्तकद्वित्वस्यासिद्धतया अभ्यासाभावेन सूत्रवैयर्थ्यस्य स्फुटत्वात्।

ननु सूत्रारम्भसामर्थ्यादभ्यासशब्दमुच्चार्य कार्ये कर्तव्ये द्वित्वासिद्धत्वाभावज्ञापनेन सूत्र-द्वयसार्थक्यसम्भवेन प्रकृते 'ढ्लोप' इति दीर्घस्याऽभ्यासशब्दमुच्चार्य विधानाभावेन तत्र कर्तव्ये जातासिद्धत्वसत्त्वेन दीर्घप्राप्तिरिति चेन्न। यङ्लुगन्ते 'आरति' इत्यादौ 'ढ्लोप' इति दीर्घाना-पत्त्या तादृशकल्पनायाः वक्तुमशक्यत्वात्। तस्मात् तत्र दीर्घाभावस्येष्टत्वे रसाहचर्येण अभ्यासान-वयवस्यैव ग्रहणमित्युपायान्तरमनुसर्तव्यम्। 'आरती' इत्यादौ अभ्यास एव, न तु अभ्यासावयव इति न दोषः।

अन्तरङ्गत्वादिति। न च 'वार्ण'परिभाषया 'ओः सुपि' इति यणेव स्यादिति वाच्यम्; समानस्थानिकत्वाभावात्, समाननिमित्तकत्वाभावाच्च तदप्राप्तेः।

**तत्कालप्राप्तिकश्च बहिरङ्गमसिद्धमित्यर्थः ।**

---

इति चक्रकापत्तेर्दुरुद्धरत्वात् । क्विबन्तस्वयंभूशब्दादणि 'स्वायंभवमि'त्यत्रोठि 'स्वायंभ+ऊ+अ' इति स्थिते वार्णपरिभाषया गुणं बाधित्वोत्रङ्याऽऽद्गुणे इष्टरूपानापत्तेश्च । न च 'च्छ्वोरि'ति सूत्रे छसाहचर्येण स्वोत्तरप्रत्ययानिमित्तकस्य वस्य ग्रहणेन नोक्तदोषद्वयावकाश इति वाच्यम्; इष्धातोः क्विप्यशब्देन समासे इषशब्दाचारक्विपि लटि शतृप्रत्यये शपा सह पररूपे 'इषदि'त्यत्र छत्वे प्रत्ययलक्षणेन क्विप्परकत्वात् शत्वे 'इशदि'त्यत्र स्वोत्तरनिमित्तकस्यापि छस्य सत्त्वेनोक्तसाहचर्यस्य वक्तुमशक्यत्वात् । न च शपा सह पररूपस्य स्थानिवद्भावाच्छत्वाप्राप्तिरिति वाच्यम्; 'न पदान्त'सूत्रेण निषेधेन स्थानिवद्भावाप्राप्तेः । नौशब्देन अशब्दस्य समासे 'नाव' इति जाते, तत आचारक्विबन्ताण्णावल्लोपे 'नावयती'त्यत्रान्तर्वर्तिक्विपमादाय प्राप्तस्योठो वारणाय जातबहिरङ्गत्वस्यासिद्धत्वप्रयोजकत्वमावश्यकम् । न चोठि कर्तव्येऽल्लोपस्य स्थानिवत्त्वमिति वाच्यम्; 'न पदान्ते'ति 'क्वौ विधिं प्रती'ति वा तन्निषेधात् । दीङो वन्यर्थे के 'दीय'शब्दाचारक्विबन्ताण्णावल्लोपे 'दिययती'त्यत्र क्विपो वकारमादाय प्राप्तयलोपाभावाय चोक्तपरिभाषाऽऽवश्यकी । एवमिच्छच्छब्देन अशब्दस्य समासे 'इच्छद' इति जाते, तत्र आचारक्विबन्तात् क्विप्यल्लोपे तशब्देन समासे, ततो णिचि टिलोपे 'इच्छयती'त्यत्र शत्ववारणमप्येतस्याः फलं बोध्यमित्यन्यत्र विस्तरः । तत्कालप्राप्तिकमिति । अत एव 'उच्छती'त्यत्र गुणात्पूर्वं तुकि लघूपधत्वाभावान्न गुणः । 'अभवकदि'त्यत्र नित्यमकचं बाधित्वाऽन्तरङ्गत्वा'दितश्चे'ति लोपः; अन्यथाऽकचि कृते इकारलोपे 'अभवतक्' इति स्यादिति दिक् ।

---

**इशदिति ।** सिद्धान्तेऽन्तरङ्गपरिभाषया शकाराप्राप्त्या 'इच्छदि'ति भवति, अशुद्धस्य शुद्धरूपवन्निर्देशोऽयुक्त इति प्रतिभाति । छसाहचर्येण अवादेशानवयववकारस्य ग्रहणे तु 'स्वायम्भव इति न फलम् ।

**आवश्यकमिति ।** अत्र सत्यप्यूठि अनुपपत्त्यभावादिदं फलं चिन्त्यम् । तथा हि—ऊठि सति 'ना+ऊ+अयति' इत्यत्र णिज्निमित्तकवृद्धौ 'ना औ' इति जाते, वृद्धौ 'नौ+अयति' इत्यत्रावादेशे 'नावयति' इति रूपसिद्धेः । न च वृद्धौ कर्तव्यायामल्लोपस्य स्थानिवद्भाव इति वाच्यम्; स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावात् तदप्राप्तेः । अवादेशे 'लक्ष्ये लक्षण'न्यायस्तु न प्रवर्तते, पूर्वमशब्दनिमित्तकावादेशः, इदानीं तु णिनिमित्तक इति लक्ष्यभेदात् ।

**आवश्यकीति ।** इदमपि चिन्त्यम्—प्रत्ययलक्षणेन क्विप्त्वातिदेशेऽपि वल्त्वातिदेशाभावेन लोपाप्राप्तेः । वल्त्वस्य प्रत्ययाप्रत्ययसाधारण्येन अतिदेशालभ्यत्वात्, वार्तिकमते वर्णाश्रये तन्निषेधाच्च ।

**इत्यन्यत्र विस्तर इति ।** एवं जातासिद्धत्वस्य फलं 'पुनर्भ्रावि'त्यपि बोद्ध्यम् । अत्र क्विब्निमित्तकोठ् स्यात् । न च वकारस्य छसाहचर्याद् आदेशानवयवस्य ग्रहणमिति वाच्यम्;

केचित्तु—'रियति, असुस्रुवदि'त्यादौ लघूपधगुणादन्तरङ्गत्वादियङादिसिद्धिः। 'अयजे इन्द्रमि'त्यादौ सवर्णदीर्घं बाधित्वाऽन्तरङ्गत्वादाद्गुणः। 'ग्रामणिनी कुले' इत्यत्र नुमं बाधित्वाऽन्तरङ्गत्वाद् ह्रस्वः। 'रुव्यादि'त्यादौ प्रकृतिप्रत्ययापेक्षाडीङ्भ्यां प्रागन्तरङ्गत्वात् यासुट्। 'कश्च अश्च ईशश्चे'ति द्वन्द्वे नित्यमपि गुणं बाधित्वाऽन्तरङ्गत्वात् सवर्णदीर्घे 'केशा' इति रूपसिद्धिः, अन्यथा 'कैशा' इति स्यादिति समकालप्राप्तिकबहिरङ्गासिद्धत्वस्योदाहरणान्याहुः। तन्न; 'रियति, असुस्रुवदि'त्यादौ सत्यपि गुणे तस्य जातबहिरङ्गत्वेनासिद्धतया इकारादिबुद्ध्या इयङादिसिद्धेर्निष्प्रत्यूहत्वात्।

यत्तु—'येन नाव्यवधानमि'ति न्यायेन पुगन्तसाहचर्येण च हलन्तलघूपधे एव गुणप्रवृत्तिस्वीकारान्नैतत्समकालप्राप्तिकबहिरङ्गासिद्धत्वफलमिति। तन्न; भीधातोर्घञर्थे के तदन्तादाचारक्विबन्तात् कर्तरि क्विप्यल्लोपयलोपयोः पुनराचारक्विबन्ताल्लटि शपि 'भयती'त्यत्र गुणानापत्तेः, अल्लोपस्य स्थानिवद्भावेनाकारव्यवधानात्। मम तु स्थानिवत्त्वेन 'भिअ' इत्येवंरूपतया लघूपधत्वेन तत्प्रवृत्तेः सुलभत्वात्। एकमात्रिकवर्णव्यवधाने गुणप्रवृत्तिस्वीकारे त्वेतद्भाष्यमेव मानं बोध्यम्। 'अयज+इ+इन्द्रमि'त्यादौ तु परमपि दीर्घं बाधित्वा नित्यत्वादाद्गुणः। एवं 'रुव्यादि'त्यत्रापि नित्यत्वादेव यासुट्प्रवृत्तिर्बोध्या। 'केशा' इत्यत्र गुणस्य नित्यत्वेऽप्यपवादत्वात्सवर्णदीर्घे उक्तरूपसिद्धेर्नैतानि समकालिकबहिरङ्गासिद्धत्वोदाहरणानीति दिक्। 'पट्व्या, मृद्व्ये'ति भाष्योक्तोदाहरणमपि न चारु; पूर्वं परयणादेशेऽपि तस्य स्थानिवद्भावात्पूर्वयणादेशेनेष्टसिद्धेः।

---

'ब्राह्मणकण्डूति' इति भाष्यविरोधात्। 'इच्छदि'ति प्रयोगे प्रत्ययलक्षणेन शादेशाप्राप्त्या छकारस्य स्वोत्तरप्रत्ययनिमित्तकस्यैव सत्त्वेन साहचर्यस्य प्रागुक्तरीत्या वक्तुमशक्यत्वात्। न च वसाहचर्यात् धातुत्वव्याप्यश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयत्वाभाववच्छकारस्य ग्रहणम्, तादृशस्य च छकारस्य साहचर्यात् स्वोत्तरप्रत्ययानिमित्तकस्य वस्य ग्रहणमिति परस्परसाहचर्येणादोष इति वाच्यम्; 'चकार, बभूव' इति यस्यां क्रियायामिति समासे ततो णिचि टिलोपे ततः क्विपि ऊठः प्राप्त्या वकारे तादृशधर्माभावेन परस्परसाहचर्यस्य वक्तुवशक्यत्वात्। न च 'पुनर्भ्वौ' इत्यत्रोठि 'लक्ष्ये लक्षण'न्यायेन पुनर्यणोऽप्राप्त्या उवङि 'पुनर्भुवौ' इत्यापत्तौ 'दृन्करपुनः पूर्वस्य भुवो यण् वक्तव्यः' इति यण्विधानं व्यर्थमिति वाच्यम्; इदानीं पुनर्भुवौ' इति ह्रस्वघटितरूपसिद्ध्यर्थं तदावश्यकत्वात्। अन्यथा उवङि 'पुनर्भुवौ' इत्यत्रोठि 'पुनर्भु+उ+औ' इत्यत्र 'इको यणचि' इति यणो बाधात् सवर्णदीर्घेण ततो यणि 'पुनर्भ्वावि'त्यापत्तेः। ऊठि पुनरुवङ् तु न, 'लक्ष्ये लक्षण'न्यायात्। न च छसाहचर्यात् स्वोत्तरसुब्निमित्तकवकारस्यैव ग्रहणमित्यत्र न दोष इति वाच्यम्; पुनर्भूशब्दादाचारक्विपि तदन्ताद् घञर्थे के उवङि 'पुनर्भुवः' इत्यत्र वकारस्य सुब्निमित्तकत्वेन ऊठापत्तेः। तस्मिन् सति पुनरुवङोऽप्राप्त्या अनिष्टं रूपं स्यात्। एवं विच्छधातोर्घञर्थे के 'विच्छ' इत्यत आचारक्विबन्तात् क्यचि 'विच्छय' इत्यतः कर्तृक्विपि अल्लोपयलोपयोः 'विच्छ' इत्यस्मिन् उपपदे अतधातोः क्विपि 'विच्छमततीति विच्छात्' इति जाते, ततो णिचि टिलोपे 'विच्छयति' इत्यत्र शत्वापत्तिवारणमपि जातबहिरङ्गासिद्धत्वस्य फलम्। अस्त-

प्रश्नादिषु पदसंस्कारपक्षे समानकालत्वमेव द्वयोरिति बोध्यम्।

एतेन—अन्तरङ्गं बहिरङ्गाद् बलीय इति परिभाषान्तरमित्यपास्तम्, एनामाश्रित्य विप्रतिषेधसूत्रे भाष्ये तस्याः प्रत्याख्यानाच्च।

---

केचित्तु—'इ उ आ' इत्येतेषां समासेऽत्र पूर्वं परयणादेशे पूर्वस्येकारस्य यणादेशानापत्तिः। स्थानिवद्भावेन तु न निर्वाहः, 'न पदान्ते'ति निषेधात्। ननु परयणादेशस्य जातबहिरङ्गासिद्धत्वेन पूर्वयणादेशेऽप्युक्तरूपसिद्धिः। न च 'नाजानन्तर्य' इति निषेधः; यत्र बहिरङ्गशास्त्रप्राप्त्युत्तरकालमेवान्तरङ्गप्राप्तिस्तत्रैव तन्निषेधप्रवृत्तेः, अत्र तु द्वयोरपि यणोः समकालेऽपि प्राप्तिसत्त्वेन 'नाजानन्तर्य' इत्यस्य विषयाभावात्। अत एव 'ओमाङोश्चे'त्याङ्ग्रहणं चरितार्थमिति चेन्न। परयणुत्तरं पूर्वस्य यण्यपि तस्य वलिलोपेन निवृत्तेर्दुर्वारत्वात्। 'अचः परस्मिन्नि'ति स्थानिवत्त्वेन तु न निस्तारः; पूर्वयणः स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावात्। निरुक्तान्तरङ्गपरिभाषास्वीकारे तु पूर्वयणुत्तरं परयण्प्रवृत्त्या पूर्वयणः स्थानिभूतादचः पूर्वत्वेन दृष्टत्वात् स्थानिवद्भावेन वल्परत्वाभावान्न वलिलोपः। तथा च 'य्वा' इति रूपसिद्धिरेतदन्तरङ्गपरिभाषाफलं बोध्यम्। न च जातबहिरङ्गासिद्धत्वेन परयणोऽसिद्धत्वाद्वल्परत्वाभावेन वलिलोपो नेति वाच्यम्; अज्निष्ठान्यानन्तर्यनिमित्तकपूर्वयण्रूपान्तरङ्गकार्यप्रवृत्त्युत्तरप्रवर्तमानपूर्वयलोपकार्यस्य सत्त्वेन द्वितीयार्थक-'नाजानन्तर्य' इति निषेधेन जातबहिरङ्गासिद्धत्वायोगात्। अत एव 'अक्षद्यूरि'त्यत्र वलिलोपो नेति प्राहुः।

अन्ये तु—'अबिभयमि'त्यत्र 'भी+अम्' इत्यवस्थायां परमपि गुणं बाधित्वा श्लुनिमित्तकद्वित्वस्यान्तरङ्गत्वात्पूर्वं प्रवृत्त्याऽभ्यासे इकारश्रवणसिद्धिः। एवं 'जन्+अती'त्यवस्थायां परमप्युपधालोपं बाधित्वाऽन्तरङ्गत्वात् 'श्लावि'ति द्वित्वे 'जज्ञती'ति रूपसिद्धिः। अन्यथा परत्वात्पूर्वमुपधालोपे धात्ववयवैकाच्त्वाभावेन द्वित्वानापत्त्योक्तरूपासिद्धिः स्यादिति तत्फलमाहुः।

नन्वेवं 'वृश्चती'त्यादौ वलोपे कर्तव्ये सम्प्रसारणस्य तत्कालप्राप्तत्वाभावेन जातत्वाभावेन चोक्तपरिभाषाऽप्राप्त्याऽनया वलोपवारणपरभाष्यासङ्गतिरत आह—पदसंस्कारपक्ष इति। तथा चैतत्पक्षाभिप्रायकं भाष्यमिति न तद्विरोध इति भावः। आदिना 'पट्व्या, मृद्व्ये'त्यस्य सङ्ग्रहः।

एतेनेति। एतत्परिभाषयैव जातसमकालप्राप्तिकबहिरङ्गयोरसिद्धत्वबोधनात् 'वृश्चती'त्यादौ वारणेनेत्यर्थः। आद्यांशे ऊठ्ग्रहणं द्वितीयांशे चाङ्ग्रहणं मानम्, परिभाषा त्वंशद्वयवत्येकैव, न तु समकालप्राप्तिकबहिरङ्गस्यासिद्धत्वबोधक'मन्तरङ्गं

---

रङ्गकिन्निमित्तके शत्वे कर्तव्ये बहिरङ्गणिज्निमित्तकटिलोपस्यासिद्धत्वात्। स्थानिवद्भावस्तु अज्झलादेशत्वात्, क्वौ विधिं प्रति तन्निषेधाच्च न भवतीत्यलं पल्लवितेन।

अन्तरङ्गशास्त्रत्वमस्या लिङ्गम् ।

इयं च त्रिपाद्यां न प्रवर्तते, त्रिपाद्या असिद्धत्वात् । अस्याश्च 'वाह ऊठ्' सूत्रस्थमूड्ग्रहणं ज्ञापकमित्येषा सपादसप्ताध्यायीस्था । अन्यथा सम्प्रसारण-

---

बहिरङ्गाद् बलीय' इति परिभाषान्तरमिति भावः ।

अन्तरङ्गशास्त्रत्वमस्या लिङ्गमिति । तथा चान्तरङ्गशास्त्रत्वेन रूपेण त्रैपादिकान्तरङ्गस्य 'पूर्वत्रासिद्धमि'त्यनेनैतत्परिभाषादृष्ट्याऽसिद्धत्वबोधनादनया बहिरङ्गस्य त्रैपादिकान्तरङ्गशास्त्रदृष्ट्या नासिद्धत्वम् । अन्तरङ्गत्वस्यैतदुद्देश्यतावच्छेदकत्वे तु 'पूर्वत्रासिद्धमि'त्यनेन शास्त्रत्वेन रूपेणासिद्धत्वप्रतिपादनेऽप्यन्तरङ्गत्वेनासिद्धत्वाभावेनैतत्परिभाषायास्त्रिपाद्यां प्रवृत्तेर्दुर्वारत्वापत्तिः । अत एव 'रोरी'त्यस्य शास्त्रस्य रेफलोपविधायकत्वेन रूपेण 'पूर्वत्रे'त्यनेनासिद्धत्वबोधनेऽपि तत्तच्छब्दत्वादिनाऽसिद्धत्वाभावा'द्धशि चे'त्यादिशास्त्रप्रवृत्तिरिति भावः । बहिरङ्गशास्त्रत्वं तु नास्या लिङ्गमित्यतो 'रोरी'ति सूत्रे शब्देन्दुशेखरे स्पष्टम् ।

यत्तु प्राञ्चः—अन्तरङ्गत्वमेवास्या लिङ्गम्, त्रिपाद्यामेतत्प्रवृत्तिरिष्टैव । अत एव भाष्ये 'नार्कुटः, कार्तिः, सुध्युपास्यः, नार्मत' इत्यादौ बहिरङ्गपरिभाषयैव समाहितम्, एवञ्च 'विसर्जनीयेऽनुत्तरपदे, निष्ठानत्वमवृद्धेः,' 'यणः प्रतिषेधः,' 'नृमतौ वत्वप्रतिषेध' इति वार्तिकचतुष्टयं नाऽऽरम्भणीयमिति महाल्लाघवम् । एवं 'तस्य दोष' इति वार्तिकमपि व्यर्थमेव, 'चक्र्यत्र, निगाल्यते, मापवपनी'त्यादौ संयोगादिलोपादीनां बहिरङ्गपरिभाषयाऽपि वारणसम्भवात् । अत एव 'दौष्कुलिरि'त्यत्र बहिरङ्गत्वेन वृद्धेरसिद्धतयोदुपधत्वेन षत्वसिद्धिरिति । तन्न; तथा सति 'अभिषेणयत्यभिषुणोती'त्यत्र षत्वस्य बहिरङ्गतयाऽसिद्धत्वे णत्वानापत्तेः, 'सर्वेषामि'त्यादौ प्रकृतिप्रत्ययसापेक्षत्वेन सुटो बहिरङ्गासिद्धत्वेन षत्वानापत्तेः, 'राज्ञ' इत्यत्राल्लोपस्यासिद्धत्वेन श्चुत्वानापत्तेश्च । न च प्रत्ययावयवस्य कार्ये बहिरङ्गपरिभाषाऽनित्या, अत एव 'करिष्यती'त्यत्र स्यविकरणस्यानयाऽसिद्धत्वाभावेनेट्सिद्धिरिति वाच्यम्; 'कार्तिर्नार्मत' इत्यादावपि प्रत्ययावयवकार्यत्वेनैतदप्रवृत्त्यापत्त्या वार्तिकारम्भस्य तव मते-

---

बहिरङ्गशास्त्रत्वं तु नास्या लिङ्गमिति । तथा सति सपादसप्ताध्यायीस्थान्तरङ्गदृष्ट्या त्रिपादीस्थबहिरङ्गस्य अनयाऽसिद्धत्वं न स्यात् । न च 'पूर्वत्रासिद्धमि'त्यनेनैवासिद्धत्वे सिद्धे तदर्थोऽयं प्रयासो व्यर्थ इति वाच्यम्; यत्र ज्ञापकादिना त्रिपादिस्थस्यासिद्धत्वाभावस्तदर्थत्वात् । यथा—'आगच्छ पयोद'इत्यत्रोत्वदृष्ट्या प्लुतस्य बहिरङ्गत्वेनानयाऽसिद्धत्वम् । अप्लुतग्रहणसामर्थ्यात् 'पूर्वत्रासिद्धमि'त्यनेनासिद्धत्वं तु न भवति । बहिरङ्गशास्त्रत्वस्य लिङ्गत्वे तु अस्याः षष्ठाध्यायस्थत्वेन तद्दृष्ट्या प्लुतस्यासिद्धत्वेन स्वीयप्रवृत्तौ निमित्तभूतस्य बहिरङ्गशास्त्रत्वेन रूपेण ज्ञानस्याभावादस्या अप्रवृत्तौ परत्वात् प्लुते अनिष्टरूपापत्तिः । अन्तरङ्गशास्त्रत्वमित्युक्तौ तु अन्तरङ्गस्योत्वस्य ज्ञानेन तदपेक्षया यद् बहिरङ्गं तत्सर्वमसिद्धमित्यनया बोधनेन तस्यासिद्धत्वात् पूर्वमुत्वे पश्चात्प्लुते च इष्टरूपसिद्धिरिति । तदेतत्सर्वं शब्देन्दुशेखरे स्पष्टम्; तदाह—शब्देन्दुशेखरे स्पष्टमिति ।

मात्रविधानेन लघूपधगुणे 'वृद्धिरेची'ति वृद्धौ 'विश्वौह' इत्यादिसिद्धेस्तद्वैयर्थ्यं स्पष्टमेव। सत्यां ह्येतस्यां बहिरङ्गसम्प्रसारणस्यासिद्धत्वाल्लघूपधगुणो न

---

ऽप्यावश्यकत्वेन लाघवस्य दुर्वचत्वात्। अनुदात्तादशब्दादाचारक्विबन्तात्तृचि 'एकाच उपदेश' इतीडभावेऽतो लोपे निष्पन्नतृशब्दस्य पुत्रशब्देन समासे तत इञि 'तार्पुत्रिरि'त्यत्र प्रत्ययावयवकार्यत्वेनोक्तपरिभाषाया अप्रवृत्त्या 'विसर्जनीय' इति वार्तिकस्याप्यावश्यकत्वात्। एवं 'शतं दाय्यत्रे'त्यत्राप्युक्तरीत्या वार्तिकावश्यकत्वं बोध्यम्। यद्वा—'कर्तरि चर्षी'त्यादिनिर्देशैः स्वाघटितपदावटकनिमित्तकत्वसम्बन्धेन खर्विशिष्टो यः ऋकारस्थानिकरेफस्तद्भिन्नस्य खरि परे विसर्ग इत्येव ज्ञाप्यते। तथा च 'नार्कुट' इत्यत्र खरघटितपदावटकोऽण् प्रत्ययस्तन्निमित्तकः ऋकारस्थानिकश्चात्र रेफ इति न विसर्गः। एवं 'प्रार्छ्ती'त्यत्रापि न विसर्गप्राप्तिरिति। मम मतेऽपि 'विसर्जनीय' इति वार्तिकमवक्तव्यमेव। 'संयोगान्त'सूत्रे झल इत्यस्य सम्बन्धा'द्यणः प्रतिषेध' इति वार्तिकं व्यर्थमेव त्वन्मत इव मन्मतेऽपि। बहिरङ्गपरिभाषायास्त्रिपाद्यां प्रवृत्तिस्वीकारेऽपि तद्विधातोर्ण्यन्तात्क्विपि 'तगि'त्यादौ संयोगादिलोपस्य, 'प्लायत' इत्यादौ लत्वस्य, 'प्राह्णिोदि'त्यादौ णत्वस्य चान्तरङ्गत्वाभावेनानया वारणासम्भवात् 'तस्य दोष' इति वार्तिकस्याप्यावश्यकत्वम्। एवम्—ऋतशब्दादाचारक्विबन्ताल्लुङि 'आर्तेदि'त्यत्र नत्ववारणाय 'निष्ठानत्वमि'ति वार्तिकमप्यावश्यकमेव। समर्थग्रहणेन कृतसन्धेरेव तद्धितस्योत्पत्त्या 'दौष्कुलिरि'त्यादौ 'इदुदुपधस्ये'ति षत्वरूपसन्धिकार्योत्तरं तद्धितोत्पत्तेर्न निरुक्तदोषावकाशः। किञ्च—'अन्तरङ्ग'परिभाषायास्त्रिपाद्यामप्रवृत्तिस्वीकारादेव 'तद्वानि'त्यत्र वत्वस्य बहिरङ्गत्वेऽपि 'यरोऽनुनासिक' इत्यनुनासिको न। 'कदश्व'इत्यत्र कदादेशस्य बहिरङ्गत्वेऽपि जश्त्वसिद्धिः। 'नद्धमि'त्यत्र झलादिप्रत्ययनिमित्तक'नहो ध' इति धत्वस्य बहिरङ्गत्वेऽपि 'झलां जश् झशी'ति जश्त्वसिद्धिः, 'अक्राष्टामि'त्यत्र 'झलो झली'ति सलोपस्य बहिरङ्गत्वेनासिद्धत्वे 'षढोः कः सी'ति कत्वापत्तिरित्यादि फलान्यूह्यानि। लक्ष्यानुसारेण तत्र तत्र यथोद्देशपक्षस्वीकारस्तु लक्ष्यैकचक्षुष्काणामस्माकमनुचित इति सुधीभिराकलनीयम्।

तद्वैयर्थ्यमिति। न च 'उडिदमि'ति स्वरार्थमूठ्ग्रहणमावश्यकमिति वाच्यम्; ठितो वाहः सम्प्रसारणमित्यर्थक 'वाह ठ्' इति न्यासेन सिद्धेष्ठकारोच्चारणसामर्थ्येन क्यजादिविधौ चित्रङो ङकारोच्चारणसामर्थ्यात् क्यज्विशिष्टचित्रशब्दस्य ङित्वबोधनवदस्यापि सम्प्रसारणविशिष्टस्य ठित्वात् ठिदिदमिति न्यासेन स्वरसिद्धेरूड्ग्रहणवैयर्थ्यस्य सूपपादत्वात्। अत्र न्यासे पदलाघवाभावेऽप्यनेकमात्रालाघवस्य सत्त्वात्।

---

अनेकमात्रालाघवस्य सत्त्वादिति। नन्वेवं 'द्यत्यैधत्यूठ्सु'इत्यत्रापि ठिदित्येव पाठे

स्यात्। न च 'पुगन्ते'ति सूत्रे निमित्तमिको विशेषणम्, अत एव 'भिनत्ती'-त्यादौ न गुणः; एवञ्च 'नाजानन्तर्य' इति निषेधात्कथं परिभाषाप्रवृत्तिरिति

---

केचित्तु—'वाह' इत्यत्र ह्रस्व ऊठ् विधेयः, स्वरविधौ च ठिदिदमिमित्येव वक्तव्यम्, तथा च सार्धमात्राधिक्येन यथाश्रुतगुरुन्यासस्योक्तपरिभाषाज्ञापकत्वम्। न च पदत्रयकरणेनोक्तन्यासे गौरवादुक्तपरिभाषाकल्पनासम्भव इति वाच्यम्, मात्रालाघवस्य सर्वतो बलवत्त्वात्। अत एव भाष्यकृताऽनेकयोगकरणेनेनातोरिकाराकारौ प्रत्याख्यातावित्याहुः। न चैव'मक्षद्युवे'त्यत्रोक्तस्वरापत्तिः, ऊठोऽभावे-'नेठ्युपधे'ति 'वार्तिकस्येदानीमसत्त्वादिति वाच्यम्; ठित्सम्बन्धिनोऽनन्त्यवस्था नि-कोकारवत इति वार्तिककरणेन तद्वारणात्। सिद्धान्ते यथाश्रुतवार्तिकस्य 'अक्ष-द्युवे'त्यत्रोक्तस्वरापत्तिवारणायार्थान्तरकरणस्याऽऽवश्यकत्वमेव।

केचित्तु—'उडिदमि'त्यत्र 'ववित्दमि'ति न्यस्यात्र 'वा ऊ इदमि'ति च्छित्त्वा वकारं च प्रश्लिष्य 'वस्थानिकादूकाराद्वास्थानिकादुकाराच्चोपधाभूतात्परस्ये'-त्येवं तत्सूत्रार्थकरणेन 'विश्वौह' इत्यादौ निरुक्तस्वरसिद्धेर्ज्ञापकं पूर्वोक्तं सम्यगेव। अत्र वस्थानिकत्वमूकारस्य साक्षादेव बोध्यम्, तेन 'यून' इत्यत्र न दोष इति वदन्ति।

अन्ये तु—उडिदमि'त्यत्रोकारः प्रश्लिष्यते, स च साहचर्याद्वकारस्थानिक उपधाभूतो धातुस्थश्च गृह्यते। 'ऊठ्युपधाग्रहणामि'ति वार्तिकस्याप्ययमेवाशयः, तेन 'विश्वौह' इत्यादावुक्तस्वरसिद्ध्योठ्ग्रहणस्य ज्ञापकत्वं युक्तमेवेति वदन्ति।

अपरे तु—'वाह ऊडि'ति सूत्रस्थभाष्यपर्यालोचनया प्रकृतपरिभाषाज्ञापकपर-भाष्यस्वारस्येन च 'विश्वौह' इत्यादा'वूडिदमि'ति स्वराप्रवृत्तिरेव। अत एव भाष्यकृतोठ्ग्रहणाभावे स्वरांशे दोषो नोद्भावितः। स्वरविधायके 'विश्वौह' इत्युदाहरणं तु वृत्तिकारादिग्रन्थस्थं प्रमादादत्र मूले पतितम्, न त्वत्र दीक्षित-सम्मतिः। अत एव नागेशेनोक्तपरिभाषाज्ञापकविवेकावसरे तन्न विचारितम्। तथा चोठग्रहणस्य ज्ञापकता सुस्थिरेति व्यवस्थापयन्ति।

केचित्तु—'वाह ऊठ्'सूत्रे ऊठ्करणापेक्षयैकमात्रालाघवानुरोधेन स्वरप्रकरणे

---

वृद्धौ निर्बाधायां शापितेऽपि स्वांशे चारितार्थ्याभावस्तदवस्थ एवेत्यस्वरसादाह—केचित्त्विति। अत्रापि वृद्धिविधौ ठित्ग्रहणेन स्वांशे चारितार्थ्यं नास्ति। वार्तिककरणेनेति। इदं चिन्त्यम्—ठित्युपधाग्रहणं कर्तव्यमिति करणेनादोषात्। आवश्यकत्वमेवेति। उपधाभूतात् ऊठः परस्या विभक्तेरिति यथाश्रुतार्थबोधनेऽपि दोषाभावादिदमपि चिन्त्यमेव।

वकारस्थानिक इत्यादिः। क्रमेण 'सोमसुत्, अक्षद्युवा, यूनः' फलानि बोध्यानि।

केचित्त्विति। हैमवतीकारा इत्यर्थः, तेन दीक्षितोक्तं 'प्रष्ठौहः' इति, विवरणकारोक्तञ्च 'विश्वौहः' इति स्वरोदाहरणं सङ्गच्छते।

**वाच्यम्; प्रत्ययस्याङ्गांश उत्थिताकाङ्क्षत्वेन तत्रैवान्वयात्, 'पुगन्ते'त्यादौ कर्मधारयाश्रयणेन प्रत्ययपराङ्गावयवलघूपधारूपेको गुण इति 'इको गुणवृद्धी' इति सूत्रभाष्यसम्मतेऽर्थे 'भिनत्ती'त्यादावदोषाच्च ।**

---

ऊहेरधिकस्य ग्रहणेन 'प्रष्ठौह' इत्यादाविष्टस्वरसिद्धयोठ्ग्रहणस्य ज्ञापकत्वं सुस्थम् । न चैवं वहतेः क्विपि शसादेरुक्तस्वरापत्तिरिति वाच्यम्, ज्ञापकपरभाष्यप्रामाण्येन ईदृशानामनभिधानकल्पनेनादोषादिति वदन्ति ।

यत्तु—'वाह' इति सूत्रेण ह्रस्व एवोठ् विधेयः, स्वरविधायकेऽपि ह्रस्वस्यैव ग्रहणं कार्यम्, 'जूर' इत्यत्र स्वरसिद्धयर्थं 'ज्वरत्वरे'त्यनेन ऊ उठिति प्रश्लिष्य ह्रस्व एवोठ् विधेयः । एवं 'च्छ्वोरि'त्यत्र 'एत्येधत्यूठि'त्यत्र च ह्रस्व एवोठ् पाठ्यः, एतेन 'धौतमित्यादौ वृद्धयादिसिद्धिः, एवञ्च दीर्घोठ्ग्रहणं परिभाषायां ज्ञापकमिति । तन्न; स्वांशे चारितार्थ्याभावेन तस्योक्तार्थज्ञापकत्वासम्भवात्, अवतेः क्विपि 'उ उ' इति जाते, 'वार्णे'परिभाषया सवर्णदीर्घं बाधित्वा लघूपधगुणे वृद्धौ च 'अवावि'ति रूपापत्तेश्च । सिद्धान्ते ऊठः सत्त्वे तु गुणस्याप्राप्त्या 'औ' इत्यस्यैवेष्टत्वात् ।

सम्प्रसारणस्यासिद्धत्वादिति । नन्वस्यासिद्धत्वेऽपि पूर्वरूपस्य बहिरङ्गत्वाभावेनासिद्धत्वाभावात् तदुत्तरं लघूपधगुणः स्यात्, बहिरङ्गस्थानिककार्यस्यासिद्धत्वकल्पने तु न मानम्, शिवोच्यं' इत्यादावसिद्धरूस्थानिकोकारे परत 'आद्गुण' इत्यस्यानापत्तेश्चेति चेद्—

अत्र केचित्—'सम्प्रसारणाच्चे'त्यनेन परमात्रनिवृत्तिः क्रियते, तावताऽप्युभयनिवृत्तिः सम्पन्ना, एकसत्त्वेऽपि द्वयं नास्तीतेः प्रतीतेः सम्प्रसारणस्य सत्त्वेऽप्युभयसत्ताऽभावस्य वक्तुं शक्यत्वात् । न चैवं स्थानिवद्भावेन 'विश्वौह' इत्यादावाकारवृत्त्यच्त्वातिदेशादूठो यणापत्तिरिति वाच्यम्; अत्राकारस्थानिकादेशस्य परनिमित्तकत्वाभावेन स्थानिवत्त्वाप्राप्तेः, 'सम्प्रसारणाच्चे'त्यस्य 'इको यणची' त्येतदपवादत्वेनाऽव्यवहितपूर्वसम्प्रसारणेतरत्वेनैकपदार्थे सङ्कोचेन तदप्राप्तेश्च । ईदृशप्रकारस्तु पूर्वरूपादौ प्रातिशाख्ये सुप्रसिद्ध इति प्राहुः ।

अन्ये तु—'हल' इति सूत्रारम्भसामर्थ्येन 'यावता विने'ति न्यायेनोठग्रहणसामर्थ्येन च सम्प्रसारणस्थानिकपूर्वरूपे सम्प्रसारणतुल्यत्वातिदेशेन तद्वृत्तिबहिरङ्गत्वस्य पूर्वरूपेऽपि सत्त्वेन प्रकृतज्ञापकं सुयोजम् । अत एव 'जागृढ' इत्यादौ न रुगादय इति दिक् ।

प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वेनेति । अवध्यंशे नित्यसाकाङ्क्षरूपावच्छिन्नविधेयताश्रयत्वेन तत्त्वमित्यभिमानः ।

---

एवं च्छ्वोरित्यत्रेति । अत्रापि प्रश्लेषेण 'उ उठि'ति विधेयम्; तेन 'अक्षद्यूः' इत्यत्र दीर्घश्रवणं सिद्धम् । इत्यस्यैवेष्टत्वादिति । 'वाह 'उट्' इति पाठेन उडिदमि-

अकारान्तोपसर्गेऽनकारान्ते चोपपदे वहेर्वाहेर्वा ण्विविचावनभिधानान्नस्त एव । वार्यूहेत्यादि तूहतेः क्विपि बोध्यम् । धातूनामनेकार्थत्वान्नार्थासङ्गतिः । 'प्रौह' इत्याद्यसाध्वेव, वृद्धेरप्राप्तेः । अस्योहस्याऽऽनर्थक्यान्न 'प्रादूहोढे'त्यस्यापि प्रवृत्तिः

न च कार्यकालपक्षे त्रिपाद्यामेतत्प्रवृत्तिर्दुर्वारेति वाच्यम्; पूर्वं प्रति

---

वस्तुतः—प्रत्ययत्वस्य सङ्केतसम्बन्धेन प्रत्ययपदरूपतया तस्योत्थिताकाङ्क्षत्वे मानाभावः । किञ्च तस्योत्थिताकाङ्क्षत्वेऽप्यन्यत्रोत्थिताकाङ्क्षे पुत्रत्वादावाकाङ्क्षमाणस्य देवदत्तादेरन्वयस्येवात्राप्याकाङ्क्षमाणाङ्गस्यैव प्रत्ययपदार्थेऽन्वयः स्यात्, न तु प्रत्ययस्याङ्गपदार्थे । तथा चाङ्गसम्बन्धिप्रत्ययपरकेक इत्यर्थे 'नाजानन्तर्ये'परिभाषाप्रवृत्तिर्दुर्वारैव । अङ्गपदार्थस्य प्रत्ययघटितत्वे नोपस्थितत्वात् प्रत्ययस्याङ्गपदार्थेऽन्वय इति तु कथंचिद् युज्येत वक्तुम् ।

वस्तुतस्तु—'येन नाव्यवधानमि'ति न्यायेनैकवर्णव्यवधाने गुणशास्त्रस्य प्रवृत्तिस्वीकारेऽपि 'नाजानन्तर्ये'परिभाषाया व्यवधाने प्रवृत्तिस्वीकारे मानाभाव इति समाधानं वक्तुं युक्तम् ।

वहेर्वाहेरिति । 'वेह्न, वाह्न' इत्यत्र दन्त्योष्ठ्यादी इत्यपरे इत्युक्ततया तस्य वाहेर्ग्रहणमत्र बोध्यम् । णिजन्तस्य वाहेस्तु स्थानिवद्भावात् सम्प्रसारणप्राप्तिरेव । 'विभाषापूर्वाह्णे'ति सूत्रे 'प्रष्ठौह आगताम'ति भाष्यस्थलौकिकप्रयोगेण लोकेऽपि ण्विप्रत्ययानुमानमिति तु न युक्तम्, भाष्येऽपि वाह्नधातुप्रयोगकल्पनेन तदुपपत्तौ लोके ण्व्यन्तप्रयोगकल्पने मानाभावादित्यन्यत्र विस्तरः ।

पूर्वं प्रति = पूर्वबहिरङ्गपरिभाषां प्रति ।

---

त्यत्रापि ह्रस्वपाठेन च स्वरसिद्धेर्निराबाधत्वात् ह्रस्वपाठ एव परिभाषाया ज्ञापक इति अस्मद्गुरुचरणाः । न च 'जूरे'त्यत्र स्वरो न स्यादिति वाच्यम्; 'ज्वरत्वरे'त्यत्र उपधायाश्चोठचेति पाठ्यम् । प्रकृत- उठ् चानुवर्तत एव, तयोः सवर्णदीर्घे परादिवत्त्वेन उट्त्वात् 'उडिदमि'ति स्वरसिद्धेः । न चात्र ह्रस्वोठपाठे न लाघवाभाव इति वाच्यम्; सम्प्रसारणविधौ स्वरविधौ वार्तिके च पाठेन मात्रालाघवस्य सत्त्वात् । च्छ्वोरिति विषये तु उपधात्वाभावादेव स्वरो नैव भवतीति न तत्र यत्नः कार्यः । 'एत्येधत्यूठि'त्यत्र तु ह्रस्वो न पठितुं शक्यते, स्त्रौनाति' इत्यत्र वृद्ध्यभावप्रसङ्गात् । न च भूतिकृदुक्तरीत्या आवयतेः क्विपि 'औरि'त्यत्र फलभेदः । स्योन इति भाष्योदाहरणेनान्तरङ्गत्वाद्यणो गुणबाधकत्वमिष्यत इति 'येन विधिरि'ति सूत्रस्थभाष्यप्रामाण्याच्च ठिन्निमित्तके कार्ये वार्णपरिभाषाया अप्रवृत्तिस्वीकारात् । अन्यथा तत्राप्याङ्गत्वात् पूर्वं गुणे ततो यणि 'सयोन' इति स्यात् । एवञ्च ह्रस्वोठ्ग्रहणे वृद्ध्यनापत्तौ स्वांशे चारितार्थ्येनोक्तार्थज्ञापकत्वं दीर्घोठ्ग्रहणस्येति सर्वं सूपपादमिति दिक् । पूर्वबहिरङ्गपरिभाषां प्रतीति । अत्र बहिरङ्गशास्त्रं प्रतीति युक्तः पाठः; अन्यथा कार्यकालपक्षाश्रयणमसङ्गतं स्यात् । यथोद्देशपक्षे हि परिभाषां प्रत्यन्तरङ्गशास्त्रस्य त्रैपादिकस्यासिद्धत्वं युज्यते वक्तुं नान्यथेति बोध्यम् ।

परस्यासिद्धत्वादन्तरङ्गाभावेन पूर्वस्य तन्निरूपितबहिरङ्गत्वाभावात्तया तस्यासिद्धत्वप्रतिपादनासम्भवात् । न चानया पूर्वस्यासिद्धत्वादभावेन तं प्रति परासिद्धत्वं पूर्वत्रेत्यनेन वक्तुमशक्यमिति वाच्यम्; एवं हि विनिगमनाविरहादुभयोरप्यप्रवृत्त्यापत्तेः । किञ्च 'पूर्वत्रे'त्यस्य प्रत्यक्षत्वेन तेनाऽऽनुमानिक्या अस्या बाध एवोचितः । अतः कार्यकालपक्षेऽपि त्रिपाद्यामस्या अनुपस्थितिरेव ।

अत एव कार्यकालपक्षमेवोपक्रम्योक्तयुक्तीरुक्त्वा "अतोऽयुक्तोऽयं परिहारो न वा बहिरङ्गलक्षणत्वादि"त्युक्तं विसर्जनीयसूत्रे भाष्ये सिद्धान्तिना । त्रिपादीस्थेऽन्तरङ्गे कर्तव्येऽयं परिहारो न युक्त इति तदर्थः । किन्तु वचनमेवाऽऽरब्धव्यमिति तदाशयः ।

अत एव 'निगाल्यत' इत्यादौ लत्वार्थं तस्य दोष इति वचनमेवाऽऽरब्धम्; अन्यथा अन्तरङ्गत्वाण्णिलोपात्पूर्वं वैकल्पिकलत्वे तद्वैयर्थ्यं स्पष्टमेव ।

येऽपि लक्ष्यानुरोधादानुमानिक्याऽप्यन्तरङ्गपरिभाषया प्रत्यक्षसिद्धस्य 'पूर्वत्रे' त्यस्य बाधं वदन्ति; तेऽपि लक्षणैकचक्षुर्भिर्नाऽऽदर्तव्या इति दिक् ।

---

परस्य = त्रैपादिकान्तरङ्गशास्त्रस्य । अन्तरङ्गाभावेन = अन्तरङ्गशास्त्रत्वेन रूपेण ज्ञानाभावेन । पूर्वस्य = सापादिकबहिरङ्गस्य । तया = बहिरङ्गपरिभाषया । न चानयेति । अयम्भावः—पूर्वं बहिरङ्गपरिभाषाप्रवृत्त्या सापादिकबहिरङ्गस्य त्रैपादिकान्तरङ्गदृष्ट्याऽसिद्धत्वेन पश्चात्प्रवर्तमान'पूर्वत्रासिद्ध'शास्त्रघटकपूर्वपदेन तस्य ग्रहणासम्भवात् सापादिकबहिरङ्गदृष्ट्या त्रैपादिकान्तरङ्गस्यासिद्धत्वाभावेन तस्य निष्टङ्कं प्रवृत्त्या त्रिपाद्यामन्तरङ्गपरिभाषाप्रवृत्तिः सुलभेति । उभयोरप्यप्रवृत्त्यापत्तेरिति । तथा चान्तरङ्गपरिभाषायास्त्रिपाद्यामप्रवृत्तिः सिद्धेति भावः । नन्वेवं यत्र त्रैपादिकान्तरङ्गस्य नित्यत्वं तत्र तस्य पूर्वं प्रवृत्त्यापत्तिरित्यरुचेराह—किञ्चेति ।

---

वस्तुतस्तु—मूलोक्तं सर्वमयुक्तमेव, प्रत्यक्षेण शास्त्रेणाऽऽनुमानिक्या परिभाषाया बाधेन पूर्वं 'पूर्वत्रासिद्धमि'त्यनेन पूर्वशास्त्रदृष्ट्या परस्यासिद्धत्वेऽपि परिभाषादृष्ट्या उभयोरपि सिद्धतया अन्तरङ्गशास्त्रस्य तन्निरूपितबहिरङ्गशास्त्रत्वस्यापि ज्ञानेन परिभाषाप्रवृत्तेर्निष्प्रत्यूहत्वात् । तस्मादित्थं समाधेयम्—यथोद्देशं कार्यकालमिति परिभाषा नास्ति, शास्त्रत्वसम्पादकपरिभाषाणां 'तस्मिन्नि'त्यादीनां त्रिपाद्यां प्रवृत्तिर्भवत्येव, तत्प्रवृत्तिं विना त्रैपादिकशास्त्राणां शास्त्रत्वाभावेन 'पूर्वत्रासिद्धमि'त्यनेन शास्त्रत्वेन रूपेणासिद्धत्वबोधनासम्भवात् । शास्त्रत्वावच्छिन्नोद्देश्यताकपरिभाषाणां 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यादीनां तु त्रिपाद्यामप्रवृत्तिरेव, 'पूर्वत्रासिद्धमि'त्यनेनासिद्धत्वबोधनादिति ।

अत एव 'ओमाङोश्चे'त्याङ्ग्रहणं चरितार्थम्। तद्धि 'खट्वा+आ+ऊढे'-त्यत्र परमपि सवर्णदीर्घं बाधित्वाऽन्तरङ्गत्वाद् गुणे कृते वृद्धिप्राप्तौ पररूपार्थम्। साधनबोधकप्रत्ययोत्पत्त्यनन्तरं पूर्वं धातोरुपसर्गयोगे पश्चात् खट्वा-शब्दस्य समुदायेन योगाद् गुणस्यान्तरङ्गत्वमिति 'सम्प्रसारणाच्चे'ति सूत्रे भाष्ये स्पष्टम्। 'एही'त्यनुकरणस्य शिवादिशब्दसम्बन्धे तु नास्य प्रवृत्तिः, ज्ञापकपर'सम्प्रसारणाच्चे'ति सूत्रस्थभाष्यप्रामाण्येनानित्यं प्रकृतिवदनुकरण-मित्यतिदेशमादाय लब्धाङ्गत्वे एतत्प्रवृत्तेः।

यत्तु—पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन उपसर्गेण तत्संज्ञक-शब्देन साधनेन कारकेण तत्प्रयुक्तकार्येण च। अत एव 'अनुभूयत' इत्यादौ

---

अत एव ओमाङोश्चेति। समकालप्राप्तबहिरङ्गस्यासिद्धत्वस्वीकारादेवेत्यर्थः। परमपि सवर्णदीर्घमिति। न च 'सित+आ+उष्णमि'त्यत्र गुणस्यान्तरङ्गत्वाभावेन परत्वाद्दीर्घे प्राप्ते'ऽनित्यान्नित्यं बलवदि'ति ज्ञापनार्थमाङ्ग्रहणमुपष्टम्भकं स्यात्। किञ्च—'खट्वा+आ+ऊढ' इत्यत्रापि नित्यत्वादेव गुणे कृते वृद्धिबाधनार्थे-माङ्ग्रहणं चरितार्थमिति कथमुक्तार्थे ज्ञापकमिति वाच्यम्; उभयत्र गुणस्य नित्यत्वेऽप्यपवादस्य ततोऽपि बलवत्त्वेन पूर्वं दीर्घे उक्तरूपासिद्धया आङ्ग्रहणवैयर्थ्ये-नोक्तार्थज्ञापने बाधकाभावात्। उक्तार्थे ज्ञापिते 'त्वपवादो यद्यन्यत्र चरितार्थ' इति न्यायेनान्तरङ्गस्यापवादबाधकत्वात् पूर्वं गुणे वृद्धिबाधनार्थमाङ्ग्रहणं स्वांशे चरितार्थम्। एहीति। 'ए, ही'त्यनुकरणद्वयं न त्वेकमनुकरणमिति भावः। एतेन 'प्रकृतिवदि'ति न्यायेन प्रकृतिपर्याप्तधर्मस्यैवातिदेशेन एकार आङ्त्वातिदेशासम्भ-वादयुक्तोऽयं ग्रन्थ इत्यपास्तम्।

केचित्तु—'अस्य वामीयमि'त्यादावनुकरणैकदेशेऽपि सुप्त्वात् प्राप्तलुकः प्रकृति-वदनुकरणमित्यस्यानित्यत्वेन भाष्यकृता वारणादनेन न्यायेन प्रकृतिघटकवृत्ति-धर्मस्यानुकरणैकदेशेऽप्यतिदेशकल्पनान्नात्र दोषः। अत एव 'जहिजोड' इत्यादौ समुदायानुकरणेऽप्यवयवस्य सुप्त्वात्तल्लोपः सिद्ध्यतीति वदन्ति।

---

स्वांशे चरितार्थमिति। ननु 'आ+ऊढ' इत्यत्र गुणे ततः खट्वाशब्देन योगे 'खट्वा+ओढ' इति स्थिते, वृद्धि बाधित्वा पररूपार्थमाङ्ग्रहणं चरितार्थमिति कथं परिभाषायां ज्ञापकमिति वाच्यम्; 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः' इति सूत्रस्वारस्येन शास्त्रे वाक्यसंस्कारपक्षाश्रयणेन ज्ञापकपरभाष्यप्रामाण्यात् आङ्विषये वाक्यसंस्कारपक्षस्यैवाऽऽ-श्रयणेनादोषात्।

मूले—एहीत्यनुकरणस्येति। अनुकार्य एव तु नोक्तम्, वाक्यसंस्कारपक्षाश्रयणेन तादृशस्थितेर्दुर्लभत्वात्।

सकर्मकत्वात् कर्मणि लकारसिद्धिरिति । तन्न ; क्रियायाः साध्यत्वेन बोधात् साध्यस्य च साधनाकाङ्क्षतया तत्सम्बन्धोत्तरमेव निश्चितक्रियाबोधेन साधनकार्यप्रवृत्त्युत्तरमेव क्रियायोगनिमित्तोपसर्गसंज्ञकस्य सम्बन्धौचित्यात् । अत एव 'सुट्कात्पूर्व'इति सूत्रे 'पूर्वं धातुरुपसर्गेणे'त्युक्त्वा नैतत्सारम् ; पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेत्युक्त्वोक्तयुक्त्याऽस्यैव युक्तत्वमुक्तं 'साधनं हि क्रियां निर्वर्तयती'त्यादिना भाष्ये । उपसर्गद्योत्यार्थान्तर्भावेण धातुनैवार्थाभिधानादुक्तेषु कर्मणि लकारादिसिद्धिः । पश्चाच्छ्रोतृबोधाय द्योतकोपसर्गसम्बन्धः ।

एवं चान्तरङ्गतरार्थकोपसर्गनिमित्तः सुट् संकृतीत्यवस्थायां द्वित्वादितः पूर्वं प्रवर्तते, ततो द्वित्वादि ।

---

क्रियायाः साध्यत्वेनेति । अयम्भावः—साध्यत्वेन क्रिया प्रथममुपतिष्ठते, तस्याः साधनांशे नित्यसाकाङ्क्षत्वेन ततः साधनत्वेन साधनमुपतिष्ठते, ततस्साध्यविशेषः, ततः साधनविशेषः, ततस्तदवान्तरसाध्यसाधनोपस्थितिः, एतदुपस्थितिक्रमेणैव तत्तच्छब्दप्रादुर्भावः । तथा चापसर्गप्रादुर्भावप्रयोजकानुभवादिरूपसाध्यविशेषोपस्थितितः पूर्वमेव लकारप्रादुर्भावप्रयोजकसाधनोपस्थितिरूपैकनिमित्तस्य पूर्वं सत्त्वेनोपसर्गप्रादुर्भावात् पूर्वमेव कर्मलकारप्रादुर्भावः । 'संचस्कारे'त्यादौ तु द्वित्वस्य शब्दमात्रनिमित्तकत्वेन ततः प्रागेव सुण्निमित्तकस्य भूषणाद्यर्थस्योपस्थित्या अन्तरङ्गत्वाद् द्वित्वात्पूर्वमेव सुट् । एतदेव "यदुपसर्गनिमित्तकं कार्यमि"त्यादिना स्पष्टं वक्ष्यतीति दिक् । इत्यादिनेति । तथा च सुट्कात्पूर्वं इत्यत्र भाष्ये, "धातूपसर्गयोः कार्यमन्तरङ्गम् । कुत एतत् ? पूर्वं धातुरुपसर्गेण युज्यते, पश्चात्साधनेनेत्युक्त्या नैतत्सारं ; पूर्वं धातुः साधनेन युज्यते, पश्चादुपसर्गेण, साधनं हि क्रियां निर्वर्तयति, तामुपसर्गो विशिनष्टीति, 'उपपदमतिङ्गतिर्गतावि'त्यादिसूत्रेषु भाष्येऽप्ययमर्थः परिशीलित इति बोध्यम् । उपसर्गद्योत्यार्थान्तर्भावेणेति । अयम्भावः—उपसर्गाणां द्योतकत्वेन विशिष्टार्थे धातूनामेव शक्तिरिति विशिष्टैव क्रिया साधनेन साध्यते, न तु साधनादवाप्तरूपैपाऽन्यतो विशेषं लभते। तदुक्तं भाष्ये—"यस्त्वसौ धातूपसर्गयोरभिसम्बन्धस्तमभ्यन्तरं कृत्वा धातुस्साधनेन युज्यते । अवश्यं चैतदेवं विज्ञेयम् । यो हि मन्यते पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति । आस्यते गुरुणेत्यकर्मकः । उपास्यते गुरुरिति केन सकर्मकः स्यादि"ति । अत्र भाष्ये तमभ्यन्तरमित्यस्योपसर्गद्योत्यमर्थमन्तर्भाव्येत्यर्थः ।

यो हीति । यदि साधनादवाप्तरूपा सा उपसर्गेण विशेषशालिनीत्यर्थः, तदा च 'नदी वहति, भारं वहती'तिवदेवात्राकर्मकत्वादिव्यवस्थेत्यर्थः ।

अत एव 'प्रणिदापयती'त्यादौ णत्वं 'यदागमा' इति न्यायेन समाहितं भाष्ये।

अत एव प्रत्येति प्रत्यय इत्यादिसिद्धिः; अन्यथाऽन्तरङ्गत्वात् सवर्णदीर्घे रूपासिद्धिः।

यदुपसर्गनिमित्तकं कार्यमुपसर्गार्थाश्रितं विशिष्टोपसर्गनिमित्तत्वात्तदन्तरङ्गम्। यत्तु न तथा, तत्र पूर्वागतसाधननिमित्तकमेवान्तरङ्गम्। अत एव 'न धात्वि'ति सूत्रं 'प्रेद्ध' इत्यत्र गुणो बहिरङ्ग इति भाष्ये उक्तम्।

किञ्च पूर्वमुपसर्गयोगे धातूपसर्गयोः समासे ऐकस्वर्याद्यापत्तिरि'त्युपपदमतिङि'ति सूत्रे भाष्ये स्पष्टम्।

भावार्थप्रत्ययस्यापि पूर्वमेवोत्पत्तिः। अत एव 'णेरध्ययने' इति निर्देशः सङ्गच्छते। इदं च सामान्यापेक्षज्ञापकं, भावतिङोऽपि पूर्वमुत्पत्तेः, अन्यथा तत्र समासापत्तिः। तिङि त्वतिङिति निषेधान्न तत्र दोषो यदि भावतिङ्युपसर्गयोगोऽस्तीत्यलम्।

यत्तु—विशेषापेक्षात् सामान्यापेक्षमन्तरङ्गं, विशेषापेक्षे विशेषधर्मस्याधिकस्य निमित्तत्वात्। यथा 'रुदादिभ्यः सार्वधातुके' इत्यत्र रुदादित्वं सार्वधातु-

---

णत्वमिति। पूर्वमुपसर्गयोगेऽप्यासिद्धशास्त्रेति न्यायेन त्रैपादिकस्याप्रवृत्तेः, दीक्षितमतेऽप्यकृतेति परिभाषया पूर्वं णत्वं युक्तमेवेति प्रागुक्तमनुसन्धेयम्। प्रत्यय इति। वाणपरिभाषया सवर्णदीर्घं बाधित्वा पूर्वमेव गुणप्रवृत्तेरिदं मन्दप्रयोजनम्।

किं च पूर्वमुपसर्गयोग इति। उपसर्गसंज्ञकशब्देन प्रत्ययोत्पत्तेः प्राक् सम्बन्धे इत्यर्थः। ऐकस्वर्याद्यापत्तिरिति। आदिना'ऽन्वभवदि'त्यादावभीष्टस्य शाकलप्रकृतिभावस्य 'न समासे' इति निषेधापत्तिसङ्ग्रहः। राद्धान्ते तु पूर्वं तिङुत्पत्त्या 'ऽतिङि'ति निषेधेन समासाप्राप्त्योक्तनिषेधानवसरः। अतिङ्ग्रहणसामर्थ्याच्च तदन्तेन तद्घटकेन वा न समास इति दिक्।

भावार्थकप्रत्ययस्यापीति। तस्य साधनत्वाभावेऽप्युपसर्गप्रादुर्भावनिमित्तान पूर्वमेव तन्निमित्तस्योपस्थित्या भावार्थकप्रत्ययस्यापि पूर्वं प्रादुर्भावः। अत्रैवोपोद्बलकमाह—अत एवेति। यदीति। 'विक्रियत' इत्यादौ भावतिङ्स्थलेऽपि विकाररूपार्थबोधनायोपसर्गसम्बन्धस्याऽऽवश्यकत्वाद्बहुशस्तादृशप्रयोगाणामुपलम्भाच्चेदमयुक्तमिति बोध्यम्।

यत्त्विति। यत्र कार्ये विशेषधर्मस्तत्सामान्यधर्मश्चेत्युभयं निमित्तं, तदपेक्षया तत्सामान्यधर्ममात्रनिमित्तकमल्पापेक्षत्वादन्तरङ्गम्। अत एव 'रुद्यादि'त्यादाविडादिविधौ सार्वधातुकत्वज्ञानाय धातुत्वज्ञानाय धातुत्वरूपसामान्यज्ञानस्याऽऽवश्यकत्वेन तत्सामान्यविशेषोभयनिमित्तकत्वेनेटो बहिरङ्गत्वम्। यासुटो धात्वधिकारीयतया

कत्वं च। तत्र सार्वधातुकत्वज्ञानाय प्रकृतेर्धातुत्वज्ञानं प्रत्ययस्य प्रत्ययत्वज्ञानं चाऽऽवश्यकमिति यासुडन्तरङ्गः। एतेन—'यदनुदात्तङित' इति सूत्रे कैयटेनोक्त 'लमात्रापेक्षयाऽन्तरङ्गास्तिबादयो लकारविशेषापेक्षत्वाद् बहिरङ्गाः स्यादय' इति, तत्परास्तम्, विशेषापेक्षत्वेऽपि तस्य सामान्यधर्मनिमित्तकत्वाभावेन तत्त्वस्य दुरुपपादत्वात्, परनिमित्तकत्वेन स्यादीनां बहिरङ्गत्वाच्चेति। तन्न, विशेषस्य व्याप्यत्वेन व्यापकस्यानुमानेनोपस्थितावपि तस्य निमित्तत्वे मानाभावेनाधिकधर्मनिमित्तकत्वानुपपादनात्, भाष्ये एवंविधान्तरङ्गबहिरङ्गभावस्य क्वाप्यनुल्लेखाच्च।

यत्तु—मतुप्सूत्रे भाष्ये 'पञ्च गावो यस्य सन्ति, स पञ्चगुरि'त्यत्र मतुप्प्राप्तिमाशङ्क्य प्रत्येकमसामर्थ्यात् समुदायादप्रातिपदिकत्वात् समासात् समासेनोक्तत्वादिति सिद्धान्तिनोक्ते "नैतत्सारमुक्तेऽपि हि प्रत्ययार्थे उत्पद्यते द्विगोस्तद्धितो यथा 'पाञ्चनापितिरि"ति पूर्वपक्ष्युक्तिर्भाष्ये। द्विगोर्लुगनपत्ये' इति लुग्विधानात्तद्धितार्थे द्विगोस्तद्धितो भवति पञ्चगुशब्दश्च द्विगुरिति तदाशयं कैयटः। ततो द्वैमातुरः, पाञ्चनापितिः, पञ्चसु कपालेषु संस्कृत' इत्यादौ सावकाशद्विगोर्बहुव्रीहिणा प्रकृते परत्वाद् बाध इत्याशयेन नैष द्विगुः, कस्तर्हि बहुव्रीहिरिति सिद्धान्तिनोक्ते तमवकाशमजानानोऽपवादत्वाद् द्विगुः प्राप्नोतीति पूर्वपक्षी। अन्यपदार्थे सुबन्तमात्रस्य विधीयमानबहुव्रीहेः संख्यायास्तद्धितार्थे विधीयमानो द्विगुर्विशेषविहितत्वाद् बाधकः प्राप्नोतीति कैयटः। ततः सिद्धान्त्येकदेश्याह—'अन्तरङ्गत्वाद् बहुव्रीहिः। काऽन्तरङ्गता? अन्यपदार्थे बहुव्रीहिर्विशिष्टेऽन्यपदार्थे द्विगुस्तस्मिंश्चास्य तद्धितेऽस्तिग्रहणं क्रियत' इति। अधिकास्त्यर्थापेक्षमत्वर्थनिमित्तो द्विगुर्बहिरङ्ग इति कैयट इति। नैषा सिद्धान्त्युक्तिः, एतावताप्यपवादत्वाहानेः। अच्सामान्यापेक्षयणो विशिष्टसवर्णाजपेक्षदीर्घेण बाधदर्शनात्। किञ्चोक्तरीत्या परत्वेन बाधसिद्धेः। किं चात्राधिकापेक्षत्वेनैव बहिरङ्गत्वम्। न केवलविशेषापेक्षत्वेनेति नैतद्भाष्यारूढं विशेषा-

---

धातुमात्रनिमित्तिकत्वेनान्तरङ्गत्वमिति बोध्यम्। एतेनेति। सामान्यविशेषोभयनिमित्तकस्यैव बहिरङ्गत्वमित्यस्य स्वीकारेणेत्यर्थः। सामान्यधर्मनिमित्तकत्वाभावेनेति। न च स्यादिविधेर्लुडादिनिमित्तकत्वेन तत्र लृत्वादिव्यापकलत्वादेरपि निमित्तत्वेन तदुभयनिमित्तकत्वाद्बहिरङ्गत्वं सुवचमिति वाच्यम्; फलाभावेन लत्वस्य स्यादिविधावनिमित्तत्वेनादोषात्। ननु 'रुदादिभ्य' इत्यत्रापि धातुत्वादेर्निमित्तत्वे फलाभावस्तुल्य इत्यरुचेराह—परनिमित्तकत्वेनेति।

तस्मिंश्चास्येति। अस्य द्विगोरर्थद्वारा निमित्तभूते तस्मिन् मतुप्यस्तिग्रहणं

पेक्षस्य बहिरङ्गत्वम् । अत एव सुबन्तसामान्यापेक्षो बहुव्रीहिस्तद्विशेषापेक्षो द्विगुरिति नोक्तं भाष्ये ।

न चार्थकृतबहिरङ्गत्वस्यानाश्रयणादिदमयुक्तम्, एकदेश्युक्तित्वेनादोषात् । अत एवास्तिग्रहणं नोपाध्यर्थं, किं त्वस्तिशब्दान्मतुबर्थमिति त्वदभिमतं बहिरङ्गत्वमपि द्विगोर्नास्तीति प्रतिपाद्य सिद्धान्तिना मत्वर्थे द्विगोः प्रतिषेधो वक्तव्य इति वचनेनैतत्सिद्धमित्युक्तम् । अत एव 'तदोः सः सावि'ति सूत्रेऽनन्त्ययोरिति चरितार्थम्, अन्यथा प्रत्ययसामान्यापेक्षत्वेनान्तरङ्गत्वादन्त्यस्यात्वेऽनन्त्यस्यैव सत्त्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेव ।

'पादः पदि'ति सूत्रे भाष्यकैयटयोरप्येतदन्तरङ्गत्वाभाव एव सूचित इति सुधियो विभावयन्तु ।

नन्वेव'मसुस्रुवदि'त्यत्र लघूपधगुणादुवङोऽल्पनिमित्तत्वाभावादुवङ् न

---

क्रियेत इत्यर्थ. । नोपाध्यर्थमिति । शब्दशक्तिस्वभावादेव बहुव्रीहिवन्मतुपोऽप्यस्त्यर्थविषयतासम्भवादिति भावः । तद्वैयर्थ्यं स्पष्टमेवेति । वस्तुतः—सत्वं प्रतिपदोक्ततरत्वेन त्यदाद्यत्वबाधकं स्यादतोऽऽनन्त्यग्रहणमावश्यकमिति बोध्यम् ।

पादः पदिति सूत्रे भाष्यकैयटयोरिति । तत्र "ह्मरुदितमरदित'त्यत्रेडपेक्षयाऽन्तरङ्गास्तांतंताम" इत्युक्तं भाष्ये । कैयटे च प्राग् लादेशेभ्यो धात्वविकारात्तामादीनामन्तरङ्गत्वमुक्तम् । एवंविधान्तरङ्गबहिरङ्गभावसत्त्वे तु तेषां विशेषापेक्षत्वेन बहिरङ्गत्वादन्तरङ्गत्वप्रतिपादनमसङ्गतं स्यादिति भावः ।

वस्तुतः—तामादीनां प्रत्ययविशेषापेक्षत्वेऽपीटः प्रकृतिविशेषापेक्षत्वेन समत्वान्न प्राचां 'पादः पदि'ति सूत्रस्थभाष्यविरोध इति बोध्यम् ।

अल्पनिमित्तकत्वाभावादिति । प्राचीनमतेनाप्यन्तरङ्गत्वालाभ इति बोधनार्थ-

---

प्राचीनमतेनापीति । अपिशब्दात् नवीनमतेनापि अन्तरङ्गत्वालाभ इति सूचितम् । तच्च न सङ्गच्छते; पूर्वोक्तस्य घटकमात्रनिमित्तकत्वरूपान्तरङ्गत्वस्य उवङ्विधायके सत्त्वेन उभयमतेनापि 'नन्वेवमि'ति शङ्कापरग्रन्थोत्थापनासम्भवात् व्याख्याकृतन्मतेऽपि परिष्कृतस्यान्तरङ्गत्वस्यैव "एव'मसुस्रुवदि'त्यत्रापीदमेवान्तरङ्गत्वमि"त्यादिना ग्रन्थेन पूर्वं स्वीकृतत्वाच्चेति चेत्—सत्यम् । अत्रायमभिसन्धिः—पूर्वम् 'अन्तर्भूतानि निमित्तानि यस्य' इत्यादिना सामान्येनान्तरङ्गत्वलक्षणमुक्तम, ततः 'ऊनशब्दमाश्रित्योदिभाष्येण' इत्यादि वदता ग्रन्थकृता परिभाषायामङ्गपदेनेति सामान्योक्त्या परिभाषाघटकबहिरङ्गान्तरङ्गोभयपदघटकाङ्गपदेन सप्तम्याद्यन्ततयोपात्त शब्दरूपं निमित्तमेव गृह्यत इति विशेषरूपेण बोधनात् निमित्तपदेन षष्ठ्याद्यन्ततयोपात्तस्य ग्रहणं न भवति । एवञ्च 'असुस्रुवत्' इत्यदौ उवङोऽन्तरङ्गत्वं न स्यात्; ( तथा हि—बहिरङ्गशास्त्र 'पुगन्तलघूपधस्य च' इति, तदीयसप्तम्यन्तपदप्रयोज्या विषयता—सार्वधातुकत्वावच्छिन्ना, तत्पर्याप्त्यधिकरणम्—तु इति तद्घटकपर्याप्तविषयताप्रयोजकसप्तम्यन्तपञ्चम्यन्तान्यतरपदघटितत्वमुवङ्विधेर्नास्ति । ) तथा च कथमन्तरङ्गत्वादुवङ् स्यात् । तदेतन्मनसि निधाय शङ्कते, मूले—नन्वेवमिति ।

स्यादिति चेन्न । तत्रान्तःकार्यत्वरूपान्तरङ्गत्वसत्त्वात् । अन्तःकार्यत्वं च पूर्वोपस्थितनिमित्तकत्वम् ; अङ्गशब्दस्य निमित्तपरत्वात् ।

इदमन्तरङ्गत्वं लोकन्यायसिद्धमिति मनुष्योऽयं प्रातरुत्थाय शरीरकार्याणि करोति, ततः सुहृदाम्, ततः सम्बन्धिनाम् । अर्थानामपि जातिव्यक्तिलिङ्गसङ्ख्याकारकाणां बोधक्रमः शास्त्रकृत्कल्पिततत्क्रमेणैव च तद्बोधकशब्दप्रादुर्भावः कल्पित इति तत्क्रमेणैव तत्कार्याणीति 'पट्व्ये'त्यादावन्तरङ्गत्वात् पूर्वं पूर्वयणादेशः परयणादेशस्य बहिरङ्गतयाऽसिद्धत्वादित्यनेन 'अचः परस्मिन्नि'ति सूत्रे भाष्ये स्पष्टम् ।

तदपि युगपत्प्राप्तौ पूर्वप्रवृत्तिनियामकमेव । यथा 'पट्व्ये'त्यत्र पदस्य विभज्यान्वाख्याने, न तु जातस्य बहिरङ्गस्य तादृशेऽन्तरङ्गेऽसिद्धतानियामकं प्रागुक्तलोकन्यायेन तथैव लाभादिति 'वाह ऊठ्'सूत्रे कैयटे स्पष्टम् । अत एव 'वाय्वोरि'त्यादौ वलिलोपो यणः स्थानिवत्त्वेन वारितोऽचः परस्मिन्नि'त्यत्र भाष्यकृता । क्रमेणान्वाख्याने तु उक्तोदाहरणे पूर्वप्रवृत्तिकत्वमन्तरङ्गत्वं बहिरङ्गस्यासिद्धत्वमपि निमित्ताभावादप्राप्तिरूपं बोध्यम् ।

---

मिदमिति भावः । अन्तःकार्यत्वरूपेति । यदीयसप्तम्यन्तनिमित्तात्पूर्वं यदीयसप्तम्यन्तं तदन्तरङ्गमित्यर्थः । नन्वत्र सार्वेति गुणात्पूर्वं नित्यत्वाच्चङि 'स्नुअदि'ति स्थिते 'द्विर्वचनेऽची'ति निषेधादुवङोऽप्राप्तौ द्वित्वात्परत्वादोणॄदित्करणेनोपधाकार्यमात्रस्य प्राबल्यबोधनाच्च पुगन्तेति गुणो दुर्वार इति चेन्न । द्वित्वस्य पूर्वोक्तपारिष्कृतान्तरङ्गत्वेन गुणात्पूर्वं प्रवृत्त्या दोषाभावात्, ज्ञापकसाजात्यादृदित्करणेनापि चङ्निमित्तकोपधाकार्यस्यैव प्राबल्यबोधनेनात्र तद्विषयाभावाच्च । 'पट्व्या मृद्व्ये'त्यत्रापि परयण्निमित्तात्पूर्वं पूर्वयण्निमित्तस्य सत्त्वेनान्तरङ्गत्वमूह्यम् । ईदृशान्तरङ्गत्वस्यासिद्धतानियामकत्वे मानं च प्रकृतलोकन्यायादिकं बोध्यमित्यन्यत्र विस्तरः ।

अन्तःकार्यत्वं चानेकविधम्, तत्र प्रकृते कीदृशं तद् गृह्यत इत्यत आह—पूर्वोपस्थितेति । अनुपदमेवास्यार्थ उक्तः ।

तदपीति । अन्तःकार्यत्वरूपान्तरङ्गत्वं चेत्यर्थः । अत एवेति । अन्तःकार्यत्वरूपान्तरङ्गत्वस्य समकालप्राप्तबहिरङ्गासिद्धत्वनियामकत्वादेवेत्यर्थः । पदसंस्कारपक्ष उक्तान्तरङ्गत्वमुपपाद्य क्रमिकान्वाख्याने तत्सङ्गमयति । क्रमेणेति । अत्र पक्षे बहिरङ्गत्वाद्युपपादयति—अप्राप्तिरूपमिति ।

---

तत्र "अन्तः कार्यत्वरूपान्तरङ्गत्वादि"त्युत्तरम् । अस्यायमाशयः—अन्तःकार्यत्वरूपमन्तरङ्गत्वं द्विविधम्—दैशिकम्, कालिकञ्चेति भेदात् । तयोर्मध्ये दैशिकं ज्ञापकपरभाष्यप्रमापितं घटकमात्रनिमित्तकत्वरूपम्, तदेव 'असुसुवत्' इत्यादौ द्रष्टव्यम् । सम्प्रति कालिकमन्तरङ्गत्वं प्रपञ्चयति, मूले—अन्तःकार्यत्वञ्च पूर्वोपस्थितनिमित्तकत्वमित्यादिना ॥ ५० ॥

यत्तु एवंरीत्या पूर्वस्थानिकमप्यन्तरङ्गमिति । तच्चिन्त्यम् ; 'स्रजिष्ठ' इत्यादौ विन्मतोर्लुकि टिलोपस्यापवादविन्मतोर्लुक्प्रवृत्त्या जातिपक्षाश्रयणेन वारणप्रयासस्य 'प्रकृत्यैकाजि'ति सूत्रप्रयोजनखण्डनावसरे भाष्यकृत्कृतस्य नैष्फल्यापत्तेः, त्वदुक्तरीत्या विन्मतोर्लुकः बहिरङ्गासिद्धत्वेनानायासतस्तद्वारणात्, भाष्य ईदृशरीत्या बहिरङ्गासिद्धत्वस्य क्वाप्यनाश्रयणाच्च । परिभाषायामङ्गशब्दस्य निमित्तपरत्वाच्च ।

इयं चोत्तरपदाधिकारस्थबहिरङ्गस्य नासिद्धत्वबोधिकेति च 'एकाचोऽमि'ति सूत्रे भाष्ये पूर्वपक्ष्युक्तिरिति, सा नाऽऽदर्तव्या । 'परन्तप' इत्यादावनुस्वारे नासिद्धत्वं मुमस्त्रिपाद्यां तदप्रवृत्तेः ।

---

जातिपक्षाश्रयणेनेति । केचित्तु—विनो लोपस्य तक्रन्यायेन टिलोपापवादत्वात्तदुत्तरं टिलोपाप्राप्ते जातिपक्षाश्रयणरूपप्रयासेनैतद्भाष्यमेकदेश्युक्तिः, उपायस्योपायान्तरादूषकत्वे तु ममापि तुल्यम् । 'पटव्ये'त्यादावप्येतदन्तरङ्गत्वस्यैव भाष्यकृताऽऽश्रयणं कृतमित्यपि शक्यते वक्तुम् । किं च 'विश्वौहः, ग्रामणिनी' इत्यादावपि त्वद्रीत्या कार्यिणो निमित्तत्वाभावात्या बहिरङ्गपरिभाषया वारणासङ्गतिः स्यादिति परिभाषायामङ्गपदस्य कारणमात्रपरत्वेन 'कार्यमनुभवन्हि'ति परिभाषाया विषयाभावात् परिभाषाऽसत्त्वस्य पूर्वमुपपादितत्वाच्चेति प्राहुः ।

नन्वेवं 'परंतप' इत्यत्रानया मुमोऽसिद्धत्वादनुस्वारो 'द्विषंतप' इत्यत्र संयोगान्तलोपश्च न स्यादिति चेन्, तत्राऽऽह—इयं चेति । इच एकाच इति । नन्वेतद्भाष्यबलादुत्तरपदाधिकारे एतदप्रवृत्तिस्वीकारे 'श्रियं मन्यं ब्राह्मणकुलमि'त्यत्रापि 'इच एकाच' इति विहितस्याऽऽमो बहिरङ्गासिद्धत्वाभावात् 'स्वमोरि'ति लुगापत्तिरित्यत आह—पूर्वपक्ष्युक्तिरिति । उत्तरपदाधिकारे एतस्या अप्रवृत्तिपरा भाष्योक्तिः पूर्वपक्ष्युक्तिरित्यर्थः । पूर्वोक्तदूषणोद्धारप्रकारमाह—परंतप इति । तत्र हि भाष्ये "अथेह कथं भवितव्यं श्रियमात्मान मन्यते ब्राह्मणकुलं श्रियं मन्यं श्रिमन्यं वेति प्रश्ने, श्रियं मन्यमिति भवितव्यमित्युक्त्वा 'स्वमोरि'ति लुक् कस्मान्न भवतीति प्रश्ने, 'सुपो धातुे'ति लुग्बाध्यसामान्यचिन्तयाऽप्रविधिसामर्थ्याद्बाध्यते स इत्युत्तरिते बाध्यविशेषचिन्तामाश्रित्य 'सुपो धातु'ति लुको नाप्राप्तावपि 'स्वमोरि'त्यस्य पुंस्यप्राप्त्या नाप्राप्त्यभावात्कथं तेन बाध इति पूर्वपक्षिणा पृष्टे, एवं तर्ह्यन्तरङ्गे लुकि बहिरङ्गस्यामोऽसिद्धत्वान्न स्वमोरिति लुगिति सिद्धान्तिनोक्ते नैषा परिभाषोत्तरपदाधिकारे शक्या विज्ञातुम् । इह हि दोषः स्यात्परंतपः, तस्माच्छ्रिमन्यमित्येव भवितव्यमि"त्युक्तम् । न्यायाप्रवृत्तिप्रयोजनान्यथासिद्ध्या चास्याः पूर्वपक्ष्युक्तित्वं स्फुटमेव । अत्र विषये श्रीशब्दो ब्राह्मणकुले स्वलिङ्गपरित्यागेन वर्तते, यथा—गोपादयः पुंयोगात् स्त्रियां वर्तमानाः स्वलिङ्गमपहाय स्त्रीलिङ्गमुपाददत इति 'स्वमोरि'त्यस्य प्राप्तिरिति कैयटः ।

नव्यमतेऽपि यथोद्देशपक्षाश्रयणेनान्यथासिद्धोदाहरणदानेन तस्य तदुक्तित्वमावश्यकमित्याहुः । आभीयेऽन्तरङ्गे आभीयस्य बहिरङ्गस्य समानाश्रयस्य नानेनासिद्धत्वमसिद्धत्वादित्यसिद्धवत्सूत्रे भाष्ये स्पष्टम् ।

एवं सिचि वृद्धेर्येन नाप्राप्तिन्यायेनान्तरङ्गबाधकत्वमूलकं न सिच्यन्तरङ्गमस्तीति 'इको गुणे'ति सूत्रे भाष्ये स्पष्टम् ॥ ५० ॥

---

ननु भाष्यकारवचनप्रामाण्याविशेषात् 'एवं तर्ह्यन्तरङ्गे लुकी'त्यस्यैव कुतो नैकदेश्युक्तित्वमुरीक्रियत इति चेत् तत्राऽऽह – नव्यमतेऽपीति । दीक्षितादिमतेऽपीत्यर्थः ।

केचित्तु—'श्रियं मन्यमि'त्यत्रामृविधिसामर्थ्याद् बाध्यसामान्यचिन्ताश्रयणेन स्वमोरिति लुको बाधः । 'एवं तर्ह्यन्तरङ्गे लुकी'ति भाष्यमेवैकदेश्युक्तिः, एवं तर्हीत्यभ्युपगमवादेन तत्प्रवृत्तेः । 'इयमुत्तरपदाधिकारे न प्रवर्तेत' इत्येव सिद्धान्त्युक्तिः । 'परंतप' इत्यादौ त्रिपाद्यामेतदप्रवृत्त्या दोषवारणेऽपि 'महाब्राह्मणोऽष्टकपालं परस्मैपदं सर्वेषां पुत्र' इत्यादावात्वालुकामसिद्धत्वेन सवर्णदीर्घस्मायाद्यनापत्तेरिति वदन्ति ।

नन्वेवमपि 'पपुष' इत्यादावनया सम्प्रसारणस्यासिद्धत्वेन 'आतो लोप इटि चे'त्यादेरनापत्तिरत आह—आभीयेऽन्तरङ्ग इति । अस्या 'वाह ऊठ्'सूत्रस्थत्वेनाऽऽभीयतयाऽऽभीयान्तरङ्गस्याऽऽतो लोपादे'रसिद्धवदत्रा'ति सूत्रेण 'पूर्वत्रासिद्धमि'त्यनेन त्रिपाद्या इवासिद्धत्वेनान्तरङ्गशास्त्रत्वेन रूपेण तेषां ज्ञानाभावेनासिद्धत्वप्रतिपादनासम्भवात् । परिभाषाणां विधिनिमित्तानिमित्तकत्वादस्या अन्तरङ्गाऽऽतो लोपादिसमानाश्रयत्वं बोध्यम् । असिद्धवत्सूत्रप्रत्याख्याने तु 'नाजानन्तर्ये' इति निषेधेनानित्यत्वाद्वा उक्तपरिभाषाया अप्रवृत्तिरिति दिक् ।

ननु 'अचिरायीदजिरायीदि'त्यत्रान्तरङ्गत्वाद् गुणेऽयादेशे च यान्तत्वाद् वृद्धिनिषेधः स्यादतस्तद्वारणार्थं न सिच्यन्तरङ्गमस्तीत्यन्तरङ्गपरिभाषाया निषेधरूपवचनान्तरं वक्तव्यम् । अत्र ज्ञापकं च 'ह्मयन्ते'ति सूत्रे श्विग्रहणम् । अन्यथा 'अश्वयीदि'त्यत्र गुणायादेशयोः कृतयोर्यान्तत्वादेव निषेधसिद्धेः किं तेन । तेन 'अनैषीदचैषीदि'त्यादौ न गुण इति केषाञ्चिदुक्तिः, सा निष्फलेति वक्तुमुपक्रमते—एवं सिचीति । अन्तरङ्गेति । गुणरूपेत्यर्थः । बाधकत्वमूलकमिति । 'अचैषीदि'त्यत्र लघूपधगुणस्यापि बाध्यसामान्यचिन्ताश्रयणेन वृद्ध्या बाधसम्भवेनादोष इति बोध्यम् । इको गुणेति सूत्रे भाष्य इति । तत्र हि "वृद्धिविधौ स्थान्यनिर्देशात् सिचिवृद्धेरिग्लक्षणत्वसम्पादनद्वारा क्ङितीति निषेधप्रवर्तनाय वृद्धिग्रहणम् । न्यधुवीत् । नैतदस्ति । अन्तरङ्गत्वादुवङि कृतेऽनन्त्यत्वाद् वृद्धिर्न प्राप्नोति । एवं तर्हि न सिच्यन्तरङ्गमस्ति । यदयं 'ह्मयन्ते'त्यत्र णिश्विग्रहणं करोति" इत्युक्तम् ॥ ५० ॥

नन्वेवम् 'अक्षद्यूरि'त्यादौ बहिरङ्गस्योठोऽसिद्धत्वादन्तरङ्गो यण् न स्यादत आह—

## नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः ॥ ५१ ॥

अत्र 'पत्वतुकोरिति सूत्रस्थं तुग्ग्रहणं ज्ञापकम्; अन्यथा 'अधीत्य, प्रेत्ये'-त्यादौ समासोत्तरं ल्यप्प्रवृत्त्या पूर्वं समासे जाते तत्र संहिताया नित्यत्वाद् [illegible] संहितयाऽवस्थानासम्भवेनैकादेशे ल्यपि तुगपेक्षया पदद्वय-सम्बन्धिवर्णद्वयापेक्षैकादेशस्य बहिरङ्गतयाऽसिद्धत्वेन तद्वैयर्थ्यं स्पष्टमेव। पद-द्वयसम्बन्धिवर्णद्वयापेक्षं बहिरङ्गमिति 'प्रेद्ध' इत्यादौ गुणो बहिरङ्ग इति ग्रन्थेन 'न धातुलोप' इति सूत्रे 'संयोगान्तस्य लोप' इति सूत्रे च भाष्ये स्पष्टम्।

---

नन्वेवमिति। अत्र ह्यूठो घटकत्वं स्थानिद्वारा बोध्यम्। तुग्ग्रहणं ज्ञापकमिति। ननु 'वृत्ते [illegible]मि'त्यत्र 'छे चे'ति नित्यतुगर्थं तदावश्यकम्, अन्यथा 'पदान्ताद्वे'ति विकल्पापत्तिः। न च तेन सूत्रेण पदान्तपदाद्योरेकादेशस्यैवासिद्धत्वबोधनात् सप्तम्यन्ते तदभावेन तुग्ग्रहणं व्यर्थमेवेति वाच्यम्; वृत्तशब्देन इशब्दस्य समासेन निष्पन्ने 'वृत्ते' इति रूपे तच्चरितार्थ्यमित्याशयादिति चेन्न। 'न चैङः पदान्तात्परो रु-रस्ती'ति भाष्येण ज्ञापकपरप्रकृतभाष्येण चैषामनभिधानात्, पत्वसाहचर्याद्वैक-ल्पिकतुगविषये एव तत्प्रवृत्तेः स्वीकाराच्च। न च 'अन्तरङ्गानपि विधीन् बहि-रङ्गो ल्यब्बाधते' इति वक्ष्यमाणवचनेनात्रैकादेशात्पूर्वं ल्यपस्तत्प्रयोजकसमासादीनां च प्रवृत्त्या 'अधि+इ+य' इति स्थिते अन्तरङ्गत्वात्तुकि स्वांशे चारितार्थ्याभावेन तुग्ग्रहणस्य परिभाषाज्ञापकत्वासम्भव इति वाच्यम्; 'ल्यब्बाधते' इति परिभाषया ज्ञापकसाजात्यात् अन्तरङ्गनिमित्तविनाशकल्यप एव प्राबल्यबोधनेन तस्य अत्रा-प्रवृत्तेर्ज्ञापकस्य सुस्थत्वात्। अत एव 'निरेष्य, दुरेष्ये'ति भाष्यप्रयोगोपपत्तिः; अन्यथा लघूपधगुणात्पूर्वं ल्यपि णेरयादेशे च 'निरेषय्ये'त्यादिप्रयोगापत्तिः।

---

मूले—अक्षद्यूरित्यादाविति। आदिना 'हरये, भानवे' इत्यत्रायादेशादेः सङ्ग्रहः।

स्थानिद्वारेति। अन्ये तु—ऊठ्शास्त्रीयषष्ठ्यन्तपदप्रयोज्यविषयताश्रयरूपनिमित्तसमु-दाये यण्शास्त्रीयषष्ठ्यन्तपदप्रयोज्यविषयताश्रयरूपस्येकोऽन्तर्भूतत्वेन यणोऽन्तरङ्गत्वमिति वदन्ति।

ज्ञापकपरभाष्येण चेति। एतेन—'वृक्षश्च अश्व, वृक्षाच्छत्रमि'त्यत्र चरितार्थमित्य-पास्तम्। स्वीकाराच्चेति। यद्वा—षसाहचर्यात् वर्णत्वव्याप्यधर्मावच्छिन्नमुख्यविशेष्यता-श्रयीभूतसप्तम्यन्तपदानिमित्तस्तुक् गृह्यते। एवंविधश्च 'ह्रस्वस्य' इति विहित एव। एतादृशसाहचर्ये मानन्तु ज्ञापकपरभाष्यमेवेति भावः। पूर्वं ल्यपीति। गुणं बाधित्वा प्रतिपदोक्तत्वादिति शेषः।

यत्तु—षत्वग्रहणमपि ज्ञापकम्, अन्यथा 'कोऽसिचदि'त्यादौ पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन बहिरङ्गस्यैकादेशस्यासिद्धत्वेन षत्वाप्रवृत्तौ किं तेनेति । तन्न; इणः पूर्वपदसम्बन्धित्वेन षत्वस्यापि पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेनोभयोः समत्वात् । एकादेशस्य परादित्वेन 'औसिचदि'त्यस्य पदत्वेन पदादित्वाभावान्न सात्पदाद्योरित्यनेन निषेधः । त्रैपादिकेऽन्तरङ्गे कार्यकालपक्षेऽपि बहिरङ्गपरिभाषाया अप्रवृत्तेः पूर्वमुपपादितत्वाच्च ।

---

अत्र—अन्तरङ्गनिमित्तविनाशकत्वं च परम्परयाऽपि बोध्यम्, तेन 'पराजग्ध्ये'त्यत्र ल्यपः साक्षात्सवर्णदीर्घनिमित्तविनाशकत्वाभावेऽपि जग्ध्यादेशप्रवृत्तिद्वारा सवर्णाच्परकत्वरूपनिमित्तविनाशकत्वेन पूर्वं ल्यपि जग्ध्यादेशे तत्सिद्धिः अन्यथोक्तरीत्या पूर्वं सवर्णदीर्घे परादिवद्भावेनाद्शब्दस्योक्तादेशे 'पजेग्ध्ये'ति रूपापत्तिरिति दिक् ।

यत्त्विति । अत एव भाष्ये 'यदयं षत्वतुकोरसिद्ध इत्याहे'त्युक्तमिति तदाशयः । तन्नेति । षत्वग्रहणं समासनिर्दिष्टत्वादुक्तं न तु ज्ञापकमिति भावः ।

वस्तुतस्तु—'कोसिचदि'त्यत्र पूर्वान्तवद्भावेन को इत्यस्य पदत्वे 'उभयत आश्रयण' इति निषेधेन परादिवद्भावाभावेन 'ओसिचदि'त्यस्य पदत्वाभावात् पदादादिरिति पञ्चमीसमासे 'सात्पदाद्योरि'ति निषेधेन षत्वाभावासिद्धेर्नैतत् षत्वग्रहणप्रयोजनम्, किन्तु 'अङ्गुलेरिः अङ्गुलीस्तस्य सङ्गः अङ्गुलीसङ्ग' इत्यत्र षत्वे कर्तव्ये सवर्णदीर्घस्यासिद्धत्वेन सङ्गस्याङ्गुलेः परत्वाभावान्न षत्वम् ।

---

परम्परयेति । स्वेन स्वप्रवृत्तिद्वारा वाऽन्तरङ्गनिमित्तविनाशकल्यपः प्राबल्यं बोध्यत इति तदर्थः । ल्यप्प्रवृत्त्युत्तरं जग्ध्यैकादेशयोः प्राप्तौ प्रतिपदविधित्वेन जग्ध्यादेशस्यैव प्राप्त्याऽस्ति स्वप्रवृत्तिद्वारा ल्यपोऽन्तरङ्गैकादेशनिमित्तविनाशकत्वमिति भावः ।

ननु पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वं पदविशिष्टत्वम्; वैशिष्ट्यञ्च—स्वघटकनिमित्तकत्वस्वघटकाघटितपदघटकनिमित्तकत्वैतदुभयसम्बन्धेन । एवञ्च पदम्—को इति, तद्घटकौकारनिमित्तकत्वेऽपि स्वघटकाघटितं पदम्—ओसिचदिति नास्तीति कृत्वा उक्तबहिरङ्गत्वाभावादस्यैव षग्रहणस्य ज्ञापकत्वमत आह—मूले—त्रैपादिक इति ।

अङ्गुलीसङ्ग इति । अत्र पदद्वयापेक्षत्वेन पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन षत्वस्यापि बहिरङ्गत्वम् । एवं बहु उङ्खतीति । उखि गतौ इत्यस्मात् क्विपि बहूङ्ख् इत्यस्माद्भावार्थकत्वप्रत्यये खकारस्य संयोगान्तलोपे 'नश्छव्यप्रशान्' इति रुत्वे 'अत्रानुनासिकः पूर्वस्य तु वा' इति अनुनासिकत्वे विसर्गे 'विसर्जनीयस्य सः' इति सत्वे तस्य 'ह्रस्वात्तादौ तद्धिते' इति षत्वसिद्धये एकादेशस्यासिद्धत्वाय षत्वग्रहणं चरितार्थम्, तत्र षत्वविधौ तदाद्यंशोपस्थित्या अस्यैव बहिरङ्गत्वं बोध्यम् । खण्डयन्नितीति । 'अन्तरङ्गे वहिरङ्गे वा' इत्युभयोरुपादाने 'पचावेदम्' इति लक्ष्यासिद्धिः, 'अचोरानन्तर्यमि'त्युक्तौ धर्मिग्राहकमानविरोधश्चेति भावः ।

परिभाषार्थस्तु—अचोऽन्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्तव्ये जातस्य बहिरङ्गस्य बहिष्ट्वप्रक्लृप्तिः। बहिष्पदेन बहिरङ्गम्, तस्य भावो बहिरङ्गत्वम्। [illegible] न प्रक्लृप्तिः न प्राप्तिरिति। असिद्धं बहिरङ्गमित्युक्त्वा 'नाजानन्तर्य' इति वक्ष्यामीति भाष्योक्त्या तत्रत्यस्यान्तरङ्ग इत्यस्यानुवृत्तिसूचनात्। तेन 'पचावेदमि'त्यादौ न दोषः। अन्तरङ्गस्याच्स्थानिककार्यस्यैतस्यान्यानन्तर्यनिमित्तकत्वाभावात्।

जातस्य बहिरङ्गस्येत्युक्त्या 'अयजे इन्द्रं धियती'त्यादौ बहिरङ्गदीर्घगुणादेरसिद्धत्वं सिद्धम्। अत एव 'इण्ङशीनामादुगुणः सवर्णदीर्घत्वाच्छ चङन्तस्यान्तरङ्गलक्षणत्वादित्यादि सङ्गच्छते। अत एव 'ओमाङोश्चे'त्याङ्ग्रहणं चरितार्थम्। तद्धि 'शिव + आ + इही'ति स्थिते परमपि सवर्णदीर्घं बाधित्वा धातूपसर्गकार्यत्वेनान्तरङ्गत्वाद् गुणे वृद्धिबाधनार्थम्।

न च 'अक्षद्युरि'त्यत्र यणि कृते ऊठोऽसिद्धत्वाद्वलिलोपापत्तिरिति वाच्यम्; अचोऽन्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्तव्ये कृते च तस्मिन् यदन्तरङ्गं प्राप्नोति तत्र च कर्तव्ये नासिद्धत्वमिति तदर्थात्। असिद्धपरिभाषाया अनित्यत्वेन तद्वारणे त्वस्या वैयर्थ्यं तेनैव सिद्धेः।

अत एव 'नलोपः सुबि'ति सूत्रे कृति तुग्ग्रहणं चरितार्थम्; अन्यथा

---

अन्तरङ्गे बहिरङ्गे वा यत्र अचोरानन्तर्यं तत्रानेन निषेध इति प्राचीनव्याख्यां खण्डयन्नाह—परिभाषार्थस्त्विति। अनुवृत्तिसूचनादिति। अन्तरङ्गपरिभाषाया 'वाह ऊठ्'-सूत्रदेशस्थत्वेन 'नाजानन्तर्ये' इति वचनस्य षत्वतुकोरिति देशस्थत्वेनानुवृत्त्यसम्भव इति भावः।

वस्तुतस्तु—अनुवृत्तौ पूर्वपाठस्य निमित्तत्वम्, न तु पूर्वदेशीयत्वस्य। अत एव कार्यकालपक्षे संज्ञापरिभाषयोर्विधिदेशीयत्वेऽपि तत्तत्पूर्वपठितसूत्रीयपदानां तत्र तत्रानुवृत्तिः सिद्ध्यति। यद्वा बहिष्ट्वपदार्थस्य नित्यसाकाङ्क्षतयोपस्थितत्वात्तादृशाजानन्तर्यनिरूपितस्यैव तस्य ग्रहणेनान्तरङ्गेत्यस्य लाभसम्भवात्। अत एवेति। जातबहिरङ्गस्थले एव निषेधस्वीकारादित्यर्थः। एवमेवोत्तरात एवेत्यस्यार्थो बोध्यः।

नासिद्धत्वमितीति। प्राङ्नये तु 'वलिलोप' इति निषेधेन तत्सिद्धिः।

---

मूले—अचोऽन्यानन्तर्यमिति। अजनिष्ठमन्यनिरूपितमानन्तर्यमिति तदर्थः। अन्यश्च षष्ठ्यन्ततया पञ्चम्यन्ततया वा उपात्तपदबोध्यो ग्राह्यः।

मूले—अभावादिति। 'धातोरि'त्यनुवृत्तस्य विहितविशेषणत्वादिति भावः।

'वृत्रहभ्यामि'त्यादौ बहिर्भूतभ्याम्निमित्तकपदत्वाश्रयत्वेन बहिरङ्गतया नलोपस्यासिद्धत्वेन सिद्धेस्तद्वैयर्थ्यं स्पष्टमेव। मम तु तुक्यजानन्तर्यसत्त्वान्न दोषः।

न चैवं सति 'ह्रस्वस्य पिती'ति सूत्रस्थभाष्यविरोधः, तत्र हि 'ग्रामणिपुत्र' इत्यत्र 'इको ह्रस्वोऽङ्य' इति ह्रस्वे कृते तुकमाशङ्क्य ह्रस्वस्य बहिरङ्गासिद्धत्वेन समाहितम्, 'नाजानन्तर्य' इत्यस्य सत्त्वे तत्र तदप्राप्तेरसङ्गतिः स्पष्टैवेति वाच्यम्; तेन भाष्येणास्या अनित्यत्वबोधनात्। एतज्ज्ञापकेनान्तरङ्गपरिभाषाया अनित्यत्वबोधनस्यैव न्याय्यत्वात्।

अत एव 'अचः परस्मिन्नि'ति सूत्रे भाष्ये 'पटु+ई+आ' इत्यत्र परयणादेशस्यानयाऽसिद्धत्वात् पूर्वयणादेशः साधितः। अत एवैषा भाष्ये "पुनः क्वापि नोल्लिखिता। अत एवान्तरङ्गपरिभाषामुपक्रम्य विप्रतिषेधसूत्रेऽस्या बहूनि प्रयोजनानि सन्ति, तदर्थमेषा परिभाषा कर्तव्या प्रतिविधेयं च दोषेष्वि"त्युक्तं 'सम्प्रसारणाच्चे'ति सूत्रे भाष्ये। प्रतिविधानं च परिभाषाविषयेऽनित्यत्वाश्रयणमेवेति ध्वनितमित्यलम्॥ ५१॥

---

साधित इति। न चात्र जातस्येति निवेशात् एतदप्राप्तिरिति वाच्यम्; तन्निवेशस्याप्यनित्यत्वमूलकत्वेनादोषात्। पुनः क्वापीति। सिद्धान्तिनेति शेषः। यद्वा—'षत्वतुकोरि'त्यस्याग्रे पुनः क्वापि नोक्तेत्यर्थः। एतेन—विप्रतिषेधसूत्रे पूर्वपक्षिणा भाष्यकृताऽस्याः कण्ठत उक्तत्वेनैतच्चिन्त्यमित्यपास्तम्। ध्वनितमिति। तत्र 'नाजानन्तर्य' इत्यादिना पृथक् प्रतिविधानमनुक्त्वा तथाकथनात् प्रतिविधेयशब्दस्यैकवचनान्तत्वात् दोषशब्दस्य बहुवचनान्तत्वाच्च बहूनां दोषाणां परिभाषाऽनित्यत्वरूपमेकं प्रतिविधानमिति भाष्यकारो मन्यते। किञ्च—'नाजानन्तर्य' इति प्रतिविधानं विप्रतिषेधसूत्रप्रतिपादितं सिद्धान्ती यद्यावश्यकत्वेनाभिप्रैष्यत्, तदा तत्र प्रतिविधानमप्युक्तमित्येवावक्ष्यत्।

अलमिति। वस्तुतः—अननुगतानित्यत्वकल्पनापेक्षया वचनारम्भ एव साधीयान्। किञ्च—एवं वक्ष्यमाणपरिभाषाणामप्यनावश्यकत्वापत्तिः, अन्तरङ्गपरिभाषाया अनित्यत्वकल्पनया तत्तज्ज्ञापकोपपत्तेरिति दिक्॥ ५१॥

---

वचनारम्भ एव साधीयानिति। 'ह्रस्वस्य पिति कृति तुक्' इति सूत्रस्थभाष्यविरोधस्तु न, सन्निपातपरिभाषायां स्वेनैव तस्यैकदेशियुक्तित्वोपवर्णनात्। ननु—'एधस्वेदन' इत्यत्र 'सवाभ्यां वामौ' इत्यमादेशापत्तिः, तत्सूत्रे अवाऽन्यानन्तर्यसत्त्वेन 'नाजानन्तर्य' इति निषेधात् अन्तरङ्गपरिभाषाया अप्राप्तेः। एवं 'औजिढत्' इत्यत्र 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति दीर्घापत्तिः, 'अम्बाऽत्र' इत्यत्र ह्रस्वापत्तिश्च। आद्ये द्वित्वासिद्धस्य अन्त्ये च दीर्घासिद्धत्वस्य 'नाजानन्तर्य' इति

नन्वेवं 'गोमत्प्रिय' इत्यादौ पदद्वयनिमित्तकसमासाश्रितत्वेन बहिरङ्गं लुकं बाधित्वाऽन्तरङ्गत्वाद्धल्ङ्यादिलोपे नुमादयः स्युरत आह—

## अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते ॥ ५२ ॥

अत्र च 'प्रत्ययोत्तरपदयोश्चे'ति सूत्रं ज्ञापकम् । 'त्वत्कृतमि'त्यादौ लुगपेक्षयाऽन्तरङ्गत्वाद्विभक्तिनिमित्तकेन 'त्वमावेकवचने' इत्यनेन सिद्ध इदं व्यर्थं सत्तज्ज्ञापकम् ।

---

हल्ङ्यादिलोपे नुमादयः स्युरिति । परत्वान्नित्यत्वाच्च दीर्घं बाधित्वेत्यर्थः । न च पूर्वं नुमि उपधायामचोऽभावात्सूत्रारम्भसामर्थ्येन पूर्वं दीर्घ एव स्यादिति वाच्यम; उपधाग्रहणस्य तत्र पूर्वमात्रोपलक्षकत्वेन सामर्थ्याभावात् पूर्वं दीर्घाप्रवृत्तेः । न चैवमपि हल्ङ्यादिलोपं नुमं च तक्रन्यायेन दीर्घो बाधेतेति सर्वथाऽवतरणासङ्गतिरिति वाच्यम्; हल्ङ्यादिलोपविषये तक्रन्यायाप्रवृत्तेर्वक्ष्यमाणत्वादापाद्यमानेऽर्थे न्यायानादराच्चेत्याशयात् ।

अन्तरङ्गानपीति । अपिना परादिसङ्ग्रहः, तेन 'ह्यः श्वः' इत्याद्यव्ययेषु हल्ङ्यादिलोपं परमपि बाधित्वाः 'अव्ययादाप्सुप' इति लुक्सिद्धिः अन्यथा हल्ङ्यादिलोपेऽसन्तत्वाद्दीर्घापत्तिरिति भावः ।

नन्वेवं 'त्वं कुलमि'त्यादौ 'ङेः प्रथमयोरि'त्यमं बाधित्वा 'स्वमोरि'ति लुक् स्यात्, 'भवतादि'त्यत्र तातङं बाधित्वा हेर्लुक् च स्यात्, 'तत्कुलमि'त्यत्र परमप्यत्वं बाधित्वा 'स्वमोरि'ति लुकि 'त्यदादिभ्यश्चे'ति वार्तिकासङ्गतिश्चेति चेन्न । आद्ये 'शिशीनुम्लुग्विधी'ति वार्तिकारम्भसामर्थ्येनैतदप्रवृत्तेर्युष्मदस्मदोरलिङ्गत्वेन लुकोऽप्राप्तेश्च । 'भवतादि'त्यत्र त्वस्या ज्ञापकसिद्धत्वेनासार्वत्रिकत्वादिति शेखरोक्तसमाधानस्य त्वयाऽप्याश्रयणत्वात् । अत्रापिशब्दाभावेऽपि तातङोऽनैमित्तिक-

---

निषेधात् । 'नाजानन्तर्यं' इति परिभाषाया अनित्यत्वाभयणे तु 'षत्वतुकोरसिद्धः' इति तुक्ग्रहणेन 'अन्तरङ्ग'परिभाषाया एवानित्यत्वज्ञापनमुचितमिति चेन्न। 'अन्तरङ्ग'परिभाषाखण्डनावसरे पूर्वोक्तदोषाणामुद्धृतत्वात् ॥ ५१ ॥

अपिना परादिसङ्ग्रह इति । अपिरत्र 'दण्डापूपिक'न्यायद्योतनार्थः, न तु 'कैमुतिक'-न्यायद्योतनार्थं इति भावः । कैमुतिकन्याये हि अन्यार्थे तात्पर्यं पर्यवसीयते, स्वार्थे निषेधश्च भवति । यथा—'दोषा वाच्या गुरोरपि' इत्यत्र गुरोस्तु दोषा नैव वाच्याः, तथा सति छात्रत्वभङ्गापत्तेः, किन्तु अन्येषां सर्वेषामपि वाच्या इत्यर्थः । दण्डापूपिकन्याये तु 'केसरिणमपि हन्यात्' इत्यादौ केसरिहन्तृत्वम्, अन्येषामपि सत्त्वानाञ्च हन्तृत्वं लभ्यते । तथैव प्रकृते नित्यादपि बलीयान् परादपि बलीयानित्यर्थः । एवञ्च परिभाषायां बहिरङ्गत्वमुपलक्षणमात्रमिति तत्त्वम् ।

**ननु 'तव पुत्रस्त्वत्पुत्र' इत्यादौ तवममादिबाधनार्थं तदावश्यकमिति चेत्—एवं तर्ह्यत्रत्यमपर्यन्तग्रहणानुवृत्तिस्तज्ज्ञापिकेति भाष्यकृतः ।**

---

त्वेनान्तरङ्गत्वाल्लुगापत्तिवारणे गत्यन्तराभावात्, 'यश्चोभयोः समो दोषः परिहारस्तयोः सम' इति न्यायेनापिशब्दनिवेशे दोषदानस्यानुचितत्वाच्च। 'तत्कुलमि'त्यत्र परिभाषायामपिशब्देन लुको 'दण्डापूपिक'न्यायेन पराद्यन्तरङ्गान्तशास्त्रबाधकत्वबोधनेऽप्यपवादशास्त्रबाधकत्वे मानाभावात् 'उपसञ्जनिष्यमाण'न्यायेन 'अतोऽमि'त्यस्य विषये लुकोऽप्रवृत्तेर्वार्त्तिकस्यामादेशबाधनायाऽऽवश्यकत्वात् ।

केचित्तु—'भवतादि'त्यत्र लुकोऽप्रवृत्तये 'तुह्योरि'ति सूत्रे तुहि इति पृथक् पदं लुप्तषष्ठ्यन्तम्, ओसिति पञ्चम्यन्तम् । 'अश्च उश्चे'ति समाहारद्वन्द्वः । अकारोकाराभ्यां परयोस्तुह्योस्तातङिति विशिष्य पुनर्विधानसामर्थ्या'दतोहेरुतश्चे'त्येतयोर्बाधः । तुह्योरिति वाक्येनान्यत्र तातङ्सिद्धिरिति वदन्ति ।

किञ्च—'सुपथि वनमि'त्यत्रान्तर्वर्तिनं समासोत्तरभवं वा सुप्रत्ययमादाय नात्वादीति बोध्यम् । त्वन्मते तु लुकः पराद्यबाधकत्वेन परत्वात् प्रतिपदोक्तत्वाच्च लुकः पूर्वमात्वापत्तिर्दुर्वारैव । किञ्च—'ब्रह्मिष्ठ' इत्यत्र 'ब्रह्मन्+अस्+इष्ठ' इति स्थिते परत्वात्प्रतिपदोक्तत्वाद्वा प्राप्तटिलोपं बाधित्वाऽनया विभक्तेर्लुक् । अन्यथा विभक्तेष्टेर्लोप आभीयतया पुनष्टिलोपाप्राप्त्याऽनः श्रवणापत्तिः । आदित इत्यादा'व-व्ययादि'ति लुकः पूर्वं'मत्वसन्तस्ये'ति दीर्घापत्तिर्बोध्येत्यन्यत्र विस्तरः ।

मपर्यन्तग्रहणानुवृत्तिरिति । 'उत्सर्गसमानदेशा'इति न्यायेन मपर्यन्तस्यैवाऽऽदेशे

---

उपसञ्जनिष्यमाणन्यायेनेति । यद्यत्र लुक् न स्यात्तर्हि 'त्यदादीनामः' इत्यत्वे 'अतोऽमि'ति प्रसज्येतेति सम्भावनायाः सत्त्वादिति भावः ।

ननु 'श्वः श्व' इत्यत्रापिघटितपाठस्य न फलम्, 'अत्वसन्तस्य चाधातोः' इति सूत्रे अतुसाहचर्यात असोऽप्यव्ययीभावातिरिक्ताव्ययानवयस्य ग्रहणेनादोषात् 'उपभवत्' इत्यत्रातोरव्ययावयवत्वात् अव्ययीभावातिरिक्तेति विशेषणम् । अन्यथा 'अव्ययानवयवस्ये'त्युक्तौ प्रतियोगिनि तादृशधर्मानिश्चयात् साहचर्यं वक्तुमशक्यं स्यात्; अत आह—किञ्चेति । **दुर्वारैवेति ।** आत्वस्य प्रतिपदोक्ततया प्रतिपदोक्तस्यापि शीघ्रोपस्थितिकतया अन्तरङ्गत्वमूलिकैव पूर्वं प्रवृत्तिरिति तस्यान्तरङ्गे एवान्तर्भावेण अप्यघटितपाठेऽपि बाधसिद्धिः प्रतिपदोक्तत्वेनाधिकबलवत्त्वे परत्वादित्यसङ्गतमत आह—किञ्चेति । आदित इत्यादाविति । पूर्वोक्तरीत्या साहचर्यात् दीर्घस्य प्रतिपदोक्ततयाऽन्तरङ्गत्वादेव तद्बाधसिद्धेश्चेदं फलं चिन्त्यम् ।

मूले—तवममादिबाधनार्थं तदावश्यकमितीति । ननु 'तवममे'त्यत्रापि 'ङसिप्रत्ययोत्तरपदयोः' इत्यस्य प्राप्त्या 'प्रत्ययोत्तरपदयोश्च' इत्यनेन तवममादिबाधः स्यादिति चेन्न । 'त्वमावेकवचने' इत्यस्योत्तरत्र आवश्यकत्वेऽपि योगविभागारम्भसामर्थ्यात् 'प्रत्ययोत्तरपदयोश्च' इति सूत्रे प्रत्ययपदेन विभक्तीतरस्य ग्रहणेन उत्तरपदसाहचर्याद् वृत्तिचरमावयवस्यैव वा ग्रहणेन तत्र तदप्राप्तेः ।

नन्वेवं 'तवममादिबाधनार्थमिति' ग्रन्थासङ्गतिः, 'तव पुत्रः, त्वत्पुत्रः' इत्यादौ सामासिकलुगुत्तरमेवोत्तरपदपरतायाः सम्भवेन 'अन्तरङ्गानपी'त्यस्याभावेन प्रागेव तवममादिप्रवृत्त्या

सिद्धे तदनुवृत्तिर्व्यर्था सत्येतज्ज्ञापिकेति भावः। ननु मपर्यन्तानुवृत्त्यभावे सर्वादेश-विधानाय सूत्रस्य चरितार्थत्वेन वार्तिककारमते तक्रन्यायासत्त्वेनापवादत्वाभावाद् भाष्यमते तक्रन्यायेनापवादत्वेऽप्युत्सर्गेति नियमाभावाज्ज्ञापकासम्भवः। अत एव द्वितीयद्विर्वचने प्रथमद्विर्वचनबाध इति चेन्न। भाष्यमते यत्रापवादशास्त्रीय-

---

'प्रत्ययोत्तरपदयोश्च' इत्यस्याप्राप्तेः। न च तवममादेशोत्तरं स्थानिवद्भावेन युष्मच्छब्दत्वमादाय तत्प्राप्तिरिति वाच्यम्; तत्रापि मपर्यन्तस्यानुवृत्त्या तस्य चाल्मात्रवृत्तिधर्मघटिततया स्थानिवद्भावाप्राप्तेरिति चेत्—सत्यम्। 'उपसञ्जनिष्यमाण'न्यायेन तवाद्यादेशबाधकत्वसिद्धेः। यदि पूर्वं तवममौ न स्याताम्, तर्हि सामसिकलुकि उत्तरपदपरत्वसम्भावनया तत्प्राप्तिसम्भावनायाः सत्त्वादिति भावः।

ननु उत्सर्गशास्त्रप्रवृत्त्यसम्भावनायां द्वित्वोत्तरं 'दधती'त्यादौ एककालावच्छेदेन उत्सर्गापवादयोः प्राप्तौ सत्यां तदप्राप्तियोग्येऽनारितार्थ्यरूपबाधबीजसत्त्वेन तत्र 'उपसञ्जनिष्यमाण'न्यायेन बाधोऽस्तु, प्रकृते तु 'युष्मद्+ङस्, पुत्र+सु' इत्यस्यामवस्थायामुत्तरपदस्य ङसा व्यवधानात् 'प्रत्ययोत्तरपदयोश्च' इत्यस्याप्राप्त्या तदप्राप्तियोग्यस्थले अचारितार्थ्यरूपबाधबीजस्याभावात् कथं बाधकत्वमिति चेत्—सत्यम्। 'तदप्राप्तियोग्येऽचारितार्थ्यमि'त्यत्र प्राप्तिपदेन प्राप्ति प्रवृत्त्येतदन्यतरस्य ग्रहणात्। प्राप्तिश्च—उद्देश्यतावच्छेदकक्रान्तिः, प्रवृत्तिश्च—विधेयतावच्छेदकसम्बन्धेन विधेयवैशिष्ट्यम्। तथा च 'युष्मद्+ङस्, पुत्र+सु' इत्यत्र 'तवममौ ङसि' इत्यस्य प्राप्तिः लुगुत्तरञ्च 'प्रत्ययोत्तरपदयोश्च' इत्यस्य प्राप्तिरित्येकलक्ष्यावच्छेदेन उभयोः प्राप्तिरस्त्येव। 'उभयोरेककालावच्छेदेन प्राप्तौ सत्यामेव बाधकता' इति नियमो नाङ्गीक्रियते। उत्सर्गशास्त्रीयप्राप्तिप्रवृत्त्यन्यतरानाक्रान्तेऽचारितार्थ्यमात्रमपेक्षितम्। 'त्वत्पुत्रः' इत्यादौ लुकः प्राक् 'तवममौ ङसि' इत्येतत्प्राप्तिसत्त्वात् न तदप्राप्तियोग्यता वर्तते तत्रेति बाधकत्वं युक्तमेवेति बोध्यम्।

नन्वेवं सति अनडुह्शब्दस्थकौमुदीग्रन्थो विरुद्ध्येत, लक्ष्यासिद्धिश्च स्यात्। तथा हि—"आदित्यधिकारात् अवर्णात्परोऽयं नुम्। अतो विशेषविहितेनापि नुमा आम् न बाध्यते, अमा च नुम् न बाध्यते" इति तत्रोक्तम्। एतेन—आम्नुमोरेककालावच्छेदेन प्राप्तिर्वारिता, एककाले प्राप्तौ सत्यामेव बाध्यबाधकत्वमिति तदाशयात्। सम्प्रति आदित्यधिकारेऽपि समानकालिकप्राप्तावेव बाधकत्वमिति नियमाभावेन नुमा आम्बाधः स्यात्, 'अनड्वान्' इति च न स्यादिति चेत्—

अत्राहुः—तत्राऽऽदित्यधिकारसामर्थ्याद् बाधाभावः। उपजीव्यविरोधाच्च आकारमुपजीव्य जायमानो नुम् कथं तद्बाधकः स्यात्। एवञ्च सामर्थ्यादत्र 'तक्रकौण्डिन्य'न्यायाप्रवृत्त्या न विरोधो नापि लक्ष्यविसंवादश्चेति तत्त्वम्।

**वार्तिककारमत इति।** तन्मते तदप्राप्तियोग्येऽचारितार्थ्ये सति कृतेऽप्यचारितार्थ्यरूपसर्वथा निरवकाशत्वे एव बाधकत्वमिति भावः। **उत्सर्गेति नियमाभावादिति।** भाष्यमते कृते चारितार्थ्येऽपि विषयभेदेऽपि बाधसम्भवेन तत्र 'उत्सर्गे'ति न्यायाविषयत्वादिति भावः। तक्रन्यायाविषये 'उत्सर्गसमाने'ति न्यायः प्रवर्तते न वा? आद्ये—एकाचो द्विर्वचनस्य द्वितीयद्विर्वचनेन बाधकत्वं भाष्ये उक्तं न सङ्गच्छेत। द्वितीये—मपर्यन्तानुवृत्तिवैयर्थ्याभावात् ज्ञापकपरभाष्यविरोधः। यस्मात् भाष्याविरोधाय ज्ञापकत्वघटनाय चास्य न्यायस्यानुगतरूपेण प्रवृत्तिलक्ष्यमुच्यते—**भाष्यमत इति।** अत्रापवादशास्त्रीयावच्छेदकता च पर्याप्त्या ग्राह्या, अन्यथा एकाच्त्वस्य उभयावच्छेदकत्वेनानिष्टं स्यात्।

स्थानितावच्छेदकमुत्सर्गशास्त्रीयस्थानितायाः साक्षात्परम्परया वाऽवच्छेदकं तत्रोत्सर्गसमानेति नियमस्यावश्यप्रवृत्तेः स्वीकारात्प्रकृते चापवादप्रत्ययोत्तरपदयोरित्येतच्छास्त्रीयस्थानितावच्छेदकस्य युष्मच्छब्दत्वस्योत्सर्गशास्त्रीयस्थानितायाः परम्परयाऽवच्छेदकत्वेनोत्सर्गेति न्यायेन मपर्यन्तस्यैवाऽऽदेशसिद्धेस्तदनुवृत्तेर्ज्ञापकत्वस्य सुस्थत्वादिति केचित् ।

यत्तु—मपर्यन्तानुवृत्त्यभावेऽपि 'प्रत्ययोत्तरपदयोश्चे'त्यस्य 'द्वन्द्वश्च प्राणी'त्यस्य समाहारसिद्धैकत्वानुवादकत्ववद् लाघवात् 'त्वमावेकवचन'इत्येतदनुवादत्वकल्पनेनास्यापि मपर्यन्त एव प्रवृत्त्या तद्वैयर्थ्येनैतत्परिभाषानुमानमिति । तन्न; 'द्वन्द्वश्च प्राणी'त्यादेः समाहार एकत्वस्य सिद्धत्वेनेतरेतरयोगेऽपूर्वतद्विधायकत्वकल्पनापेक्षया लाघवात्तदनुवादकत्वकल्पनेऽप्यस्य कस्मिन्नप्यंशेऽनुवादकत्वासम्भवेन त्वदुक्तकल्पनया ज्ञापकत्वयोजनस्याशक्यत्वात् ।

अन्ये तु—उक्तसूत्रे तदनुवृत्तावन्तरङ्गत्वात् त्वादेशे मपर्यन्तासम्भवेनैतत्सामर्थ्येनोक्तपरिभाषा कल्प्यत इति वदन्ति ।

अन्ये तु—'प्रत्यय'इत्यधिकारे कर्तव्ये'ऽङ्गस्ये'त्यधिकारकरणमस्यां ज्ञापकम्, तत्फलं—'पञ्चक्रोष्टृ'ति । अत्र हि पञ्चभिः क्रोष्टृभिः क्रीतमित्यर्थे तद्धितस्त्रीप्रत्यययोर्लुक्यपि प्रत्ययलक्षणेनाङ्गसंज्ञायां 'स्त्रियां चे'ति तृज्वत्त्वं भवति । 'प्रत्यय'इत्यधिकारे तु न लुमताङ्गस्येति प्रत्ययलक्षणनिषेधेन प्रत्ययपरत्वाभावात्तृज्वत्त्वानापत्तिः, एतत्परिभाषाभावे तु 'प्रत्यय' इत्यधिकारेऽप्यन्तरङ्गत्वात् पूर्वमेव तृज्वत्त्वे'ऽङ्गस्ये'त्यस्य वैयर्थ्यं स्पष्टमेवेति वदन्ति ।

केचित्तु—'त्वमावेकवचन'इति सूत्रे विभक्तावित्यनुवृत्तिरेतज्ज्ञापिका । तत्फ-

---

इति केचिदिति । इदं चिन्त्यम्—'छन्दसि वनमेके' इत्यत्रायं नाऽऽदेशापवादस्तेन, 'उत्सर्गसमाने'ति न्यायात् तकारस्यैवेति शेखरग्रन्थविरोधात्, लक्ष्यासिद्धेश्च । तत्रापवादशास्त्रीयस्थानितावच्छेदकम्—असितशब्दत्वं, तेनोत्सर्गशास्त्रीया स्थानिता कालत्रयेऽप्यनवच्छिन्नैव इति 'उत्सर्गसमाने'त्यस्याप्रवृत्तेः ।

वस्तुतस्तु—यथा श्वभकजादिषु मित्त्वादिना न्यायबाधः, एवम्—अजादेर्द्वितीयस्येत्यत्रापि द्वितीयग्रहणेन बाध एव वाच्यः 'उत्सर्गसमाने'ति न्यायस्य । एवञ्चास्य प्रवृत्तिः कुत्रेति चिन्ताया नैवावकाशः इति तत्त्वम् । यद्वा—अपवादशास्त्रीयोद्देश्यतापर्याप्त्यधिकरणवृत्त्युद्देश्यताकत्वं यत्रोत्सर्गशास्त्रस्य, तत्रायं न्यायः प्रवर्तते । असितशब्दवृत्त्युद्देश्यता वर्णादनुदात्तेत्येतच्छास्त्रीयाऽस्त्येव, तस्य वर्णवाचकत्वात् । द्वितीयैकाज्निष्ठा च उद्देश्यता नैकाच इति शास्त्रीयेति न दोषः ।

अन्ये त्विति । वस्तुतः—इदं ज्ञापकं 'वार्तिकरीत्या' इत्यादिग्रन्थेन स्फुटीभविष्यति । अङ्गस्येत्यधिकारकरणमिति । ननु 'प्रत्यय' इत्यधिकारे मात्राधिक्येन गौरवात् कथमिदमुपपद्यत इति चेन्न । 'यस्मात् प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गम्' इति संज्ञासूत्राकरणेन लाघवात् निरुतं दुरुतमित्यत्र च 'प्रत्यये' इत्यनेनाऽऽक्षिप्ततदादिघटकस्यैव हलो ग्रहणमिति न दोष इति बोध्यम् ।

विभक्तावित्यनुवृत्तिरिति । तदनुवृत्तौ च 'प्रत्ययोत्तरपदयोश्च' इति सूत्रमेव ज्ञापकम् ।

युष्मदादिभ्य आचारक्विप् तु न सम्पूर्णसूत्रस्य ज्ञापकतापरभाष्यप्रामाण्या-
'ह्रस्वनद्याप' इति नुड्विधायकसूत्रस्थभाष्यप्रामाण्येन हलन्तेभ्य आचारक्विब-

---

न्तन्तु 'युष्मत्सुन्दरपुत्र' इत्यत्रैतदप्रवृत्तिरेव। एतत्परिभाषाऽसत्त्वे तु विभक्तिपदानुवृत्तेः सत्त्वासत्त्वयोरपि त्वमयोर्दुर्वारतया तदसङ्गतिः स्पष्टैवेति प्राहुः।

अन्ये तु—त्वमेति सिद्धे 'प्रत्ययोत्तरपदयोश्चे'त्यस्य वैयर्थ्येन सामर्थ्यात्तवममादिशास्त्रबाधकल्पनापेक्षयाऽन्तरङ्गपरिभाषाऽप्रवृत्तिबोधकैतत्परिभाषाज्ञापकत्वस्यैवौचित्यमिति वदन्ति।

परे तु—तवममौ ङस्यलुकीति न्यासेनालुकीत्यस्य 'तुभ्यमह्याविं'त्यत्र सम्बन्धेन च 'त्वत्पुत्र' इत्यादौ तवममादिव्यावृत्त्या 'तव पुत्र' इत्यादावलुक्समासे व्यासे च तवादिसिद्धया प्रत्ययोत्तरेति सूत्रमेवोक्तार्थे ज्ञापकम्। ज्ञापिते त्वस्मिन्वचने 'त्वदीयस्त्वत्पुत्र' इत्यादौ 'त्वमावेकवचन'इत्यस्य विभक्तिपरत्वाभावेनाप्राप्त्या त्वाद्यादेशार्थं सूत्रं तच्चरितार्थमिति प्राहुः।

'ह्रस्वनद्याप'इति नुड्विधायकसूत्रस्थभाष्येति। तत्र हि 'अथास्य कस्मान्न भवती'त्यादिना 'कास्प्रत्यया'दिति विहितस्यामो नुटमाशङ्क्य, "सानुबन्धकत्वेन समाधायोक्तं, स तर्ह्येवमर्थमनुबन्धः कर्तव्यः। ननु चावश्यमित्संज्ञापरित्राणार्थमनुबन्धः कर्तव्यः। नार्थ इत्संज्ञापरित्राणार्थेन। इत्संज्ञाकार्याभावादित्संज्ञा न भविष्यति। इदमस्तीत्कार्यं 'मिदचोन्त्यात्पर' इति। प्रत्ययान्तादयं विधीयते तत्र नास्ति विशेषः। 'मिदचोन्त्यात्पर' इति वा परत्वे परश्चेति वे"ति।

अत्र कैयटः—"हलन्तेभ्य आचारक्विबन्तेभ्य आम्यस्त्येव विशेषः। नैतदस्ति,

---

ज्ञापकत्वस्यैवौचित्यमितीति। वस्तुतस्तु—अनैयायिकबाधकल्पनापेक्षया नैयायिकबाधकल्पनाया एवौचित्येन प्रकृते 'येन नाप्राप्ति'न्यायमूलकनैयायिकतवममादिबाधकल्पनामनादृत्य परिभाषाकल्पनाद्वारा तवममादिबाधकल्पनाया अनैयायिक्या अनौचित्यमेव। अत एव 'अकः सवर्णे दीर्घः' इत्यनेन निरवकाशमूलक'येन नाप्राप्ति'न्यायेन 'इको यणचि, आद्गुणः' इत्यनयोर्बाधसिद्धिः; अन्यथा 'अकः सवर्णे दीर्घः' इत्यनेन शास्त्रद्वयबाधकल्पनापेक्षया सामर्थ्यात् 'तस्मिन्नि'ति परिभाषोपस्थिताव्यवहिताशत्यागकल्पनेनैव 'देवदत्तः' इत्यादौ दकारेण व्यवधानेऽपि वकाराकार दकाराकारयोर्दीर्घविधानेन चारितार्थे 'इको यणचि, आद्गुणः' इत्यनयोर्बाधो न स्यात्।

प्राहुरिति। न च 'तव पुत्रः प्रियो यस्य' इति त्रिपदबहुव्रीहौ मध्यमपदेन व्यवधानात् उत्तरपदपरत्वाभावेन सूत्राप्राप्त्या परिभाषाया इदानीमभावेन तवादेशप्रवृत्तिः, अलुकि तु नेति फलभेदापत्तिरिति वाच्यम्; व्यधिकरणपदबहुव्रीहिकल्पनापेक्षया परिभाषाज्ञापकत्वस्यैवोचितत्वादिति भावः।

ननु युष्मदस्मच्छब्दाभ्यामाचारक्विपि विभक्तिपरकत्वाभावेन 'त्वमावेकवचने' इत्यस्य प्राप्त्यभावेन 'प्रत्ययोत्तरपदयोश्च' इत्यस्य चारितार्थ्यसद्भावेन 'तवममादिबाधनार्थमि'त्युक्तिरसङ्गतैव, सति फलान्तरे बाधकबाधनार्थत्वोक्तेरयुक्तत्वादत आह—मूले—युष्मदादिभ्य आचारेति।

अत्र कैयट इति। अस्य 'इत्याह' इत्यग्रिमेण साकमन्वयः।

भावाच्च । एवमेवैकार्थकाभ्यां प्रातिपदिकाभ्यां प्रातिपदिकणिचोऽप्यनभिधानं बोध्यम् । एतेन तत्राऽऽदेशार्थं प्रत्ययग्रहणं चरितार्थमित्यपास्तम् ।

---

हलन्तेभ्य आचारक्विबभावोऽनभिधानादित्याह । प्रातिपदिकणिचोऽप्यनभिधानमिति ।

---

नन्वेवमपि युष्मदस्मच्छब्दाभ्यां णिचि सूत्रस्य सावकाशत्वे कथं ज्ञापकत्वमत आह—मूले—एवमेवेति । ज्ञापकपरभाष्यप्रामाण्यात् तस्याप्यनभिधानमिति भावः ।

ननु युष्मदस्मच्छब्दप्रकरणे शेखरे 'मपर्यन्तस्य किमि'ति प्रतीकमुपादाय, 'मान्तस्यस्येत्येवोच्यतां किं परिग्रहणेन' इत्याशङ्क्य, परिग्रहणेनाग्रे किञ्चित्सत्ताप्रतीतेर्युष्मयत्यादेः क्विपि आदेशाभावार्थं तदुक्तम् । अत एव भाष्येऽवधिद्योतनार्थं परिग्रहणं कर्तव्यं मान्तस्येत्युच्यमाने "यत्र मान्ते युष्मदस्मदी, तत्रैवाऽऽदेशाः स्युः, क्व च मान्ते युष्मदस्मदी युष्मयते अस्मयतेश्चाप्रत्यये युष्म् अस्म्" इत्युक्तम्। प्रकृते मपर्यन्ताधिकारसत्त्वे णिजन्तात् प्राप्तेरेवाभावेन अनभिधानमुक्तवतो नागेशस्य स्वग्रन्थविरोधः स्पष्ट एवेति चेद्--

अत्र केचित्—टिलोपात् प्रागेव 'प्रत्ययोत्तरपदयोश्च' इत्यनेन प्रतिपदोक्तत्वात् त्वाद्यादेशे विरोधाभाव ऊचुः । तन्न मनोरमम् ; 'युष्मयतेरप्रत्यय' इति भाष्येण टिलोपस्यैव पूर्वं प्रवृत्तेर्बोधितत्वेन तदभावात् । न च यदि पूर्वं टिलोपो न स्यात्तर्हि त्वाद्यादेशे 'अतो गुणे' च कृते 'प्रकृत्यैकाजि'ति प्रवर्तेतेति सम्भावनायाम् 'उपसञ्जनिष्यमाण'न्यायेन टिलोपः पूर्वं न प्रवर्ततेति वाच्यम्; एकशास्त्रान्तराले तस्य प्रवृत्त्या चारितार्थ्येन पररूपत्वाद्यादेशविधायकशास्त्रद्वयान्तरालवर्ति प्रकृते तत्प्रवृत्तौ मानाभावात्। न च 'अपि घटितपाठे त्यदादिभ्यश्च' इति वार्तिकविरोधविघटनायायं न्यायः प्रवर्तितो भवद्भिः, तत्रापि त्यदाद्यत्वादेशपररूपविधायकशास्त्रद्वयान्तरालमेवेति वाच्यम् ; त्यदाद्यत्वे कृतेऽपि 'अतोऽम्' इति सम्भावनायास्तत्र सत्त्वात् । 'शास्त्रद्वयान्तराले न प्रवर्तते' इत्यत्र किं मानमिति चेत्—'युष्मयतेरप्रत्यय' इति भाष्यमेवावेहि ; कथमन्यथा तत्र टिलोप इत्यवधार्यताम् ।

वस्तुतस्तु—प्रतिपदोक्तरूपान्तरङ्गत्वादित्युक्तो युक्तः समाधिः 'युष्मयतेरप्रत्ययः' इति भाष्यन्तु द्वित्ववाचकयुष्मच्छब्दात् णिजिति योजनीयम् , 'प्रत्ययोत्तरपदयोश्च' इत्यत्र 'एकवचन' इत्यनुवृत्तिसत्त्वेन त्वाद्यादेशानामप्राप्तेः । युवावौ तु न, तत्र 'विभक्तौ' इत्यनुवृत्त्या प्रातिपदिकाण्णिजुत्पत्तेर्विभक्तिपरत्वाभावादिति शेखरमतम् ।

अस्मद्गुरुचरणास्तु—अनभिधानं नाभिधेयमिति प्राहुः । तथा हि—'प्रत्ययोत्तरपदयोश्च' इत्यत्र 'विभक्तौ' इत्यनुवर्त्तते न वा ? स्वीकृते सम्बन्धे प्रत्ययोत्तरपदाव्यवहितपूर्वत्वविशिष्टविभक्त्यव्यवहितपूर्वयोरेकत्ववाचिनोर्युष्मदस्मदोर्मपर्यन्तस्येत्यादिरर्थः । अस्वीकृते तु प्रत्ययाव्यवहितपूर्वयोरेकत्ववाचिनोरित्याद्यर्थः । तत्र तावन्नान्त्यः—विभक्तेरपि प्रत्ययत्वादनेनैव सिद्धे त्वमेत्यस्य वैयर्थ्यापत्ते । आद्ये—प्रत्ययाव्यवहितपूर्वविभक्तेरभावेन प्रत्ययेत्यस्याप्राप्त्या न त्वमेत्यस्य वैयर्थ्यम् । न च 'त्वदीयः' इत्यादावपि विभक्तेर्लुका लुप्तत्वेन प्रत्ययलक्षणाभावात् तदभाव इति वाच्यम् ; ज्ञापकात् पूर्वं परिभाषाया अभावेन लुकः प्रागेवान्तरङ्गत्वाद्यादेशप्रवृत्तेः सूपपादत्वात् । एवञ्च प्रातिपदिकात् णिजुत्पत्तेः प्रत्ययात् पूर्वविभक्तेरेवाभावेन 'प्रत्ययोत्तरपदयोश्च' इत्यस्य

ननु मपर्यन्तानुवृत्तिरपि सर्वादेशत्ववारणाय चरितार्था । न 'चोत्सर्गसमानदेशा अपवादा' इति न्यायेनासिद्धवत्सूत्रस्थभाष्यसम्मतेन मपर्यन्तस्यैवाऽऽदेशे सिद्धे तदनुवृत्तिर्व्यर्थेति वाच्यम्; तस्य श्नमक्जादौ व्यभिचारादिति चेन्न । श्नमि मित्त्वेन बहुचि पुरस्ताद् ग्रहणेनाकचि प्राक्टेर्ग्रहणेन तस्य बाधेऽप्यत्रोत्सर्गस्य त्यागे मानाभावात् ।

अत एव तस्मिन्नणि चेत्यनेन युष्माकाद्यादेशविधानं चरितार्थम्, अन्यथाऽऽकङादेशमेव विदध्यात् । आकङि तवकाद्यादेशयोरेतदपवादयोरुक्तन्यायेना-

---

वस्तुतस्तु—'त्वमावेकवचन'इति योगविभागसामर्थ्येन प्रत्ययोत्तरपदेति सूत्रे सिद्धान्तेऽपि विभक्तावित्यस्यानुवृत्त्याऽत्र प्रत्ययपरकविभक्त्यभावादेवैतदप्राप्तेर्णिजादेरनभिधाने न मानम् ।

असिद्धवत्सूत्रस्थभाष्येति । तत्र हि भाष्ये 'एधी'त्यस्य तत्सूत्रोदाहरणत्वखण्डनावसरे उक्तम्—"एत्वं लोपापवादो विज्ञास्यते, न च सकारस्य लोपः प्राप्नोती"त्युक्तम् । उक्तन्यायानाश्रयणे एत्वस्य लोपस्थान्यकारस्थानिकत्वासम्भवेन तदसङ्गतिरेवेति भावः ।

अन्यथाऽऽकङादेशमेवेति । ननु युष्माकाद्यादेशस्य साकच्कापहारकत्वेन त्रिपथगाकारमते युष्मकद्शब्दादेर्निर्दिश्यमानत्वाभावेन युष्माकाद्यादेशाप्राप्त्याऽऽकङ्पक्षे तस्य साकच्कानपहारकत्वेन तस्य निर्दिश्यमानत्वेनाऽऽकङादेशप्राप्त्या साकच्कस्थले फलभेदः । नागेशमतेऽप्यकच्विशिष्टस्य युष्माकादेशे 'यौष्माकीण' इति, आकङादेशे तु 'यौष्मकाकीण' इति फलभेद इति तस्योक्तार्थज्ञापकत्वासङ्गतिरिति चेन्न । आद्यमते यत्र ङित्त्वाभावे सर्वादेशप्रसक्तिस्तत्रैव 'ङिच्चे'त्वस्य प्रवृत्तेस्तैः स्वीकृतत्वेनाऽऽकङो ङकाराभावे आकशब्दस्य साकच्कापहारकत्वसम्भावनया युष्मकद्शब्दे निर्दिश्यमानत्वाभावेनात्राऽऽकङादेशाप्रसक्त्या फलभेदाभावात् । नागेशमते'ऽप्यनाप्यक'

---

प्राप्तेरेवाभावान्न भाष्यविरोधः । अत एव 'तवममादिबाधनार्थं तच्चरितार्थमि'ति ग्रन्थः स्वरसतः सङ्गच्छते; अन्यथा तवममादिबाधकत्वे स्वीकृते तवममेत्यत्रापि त्वाद्यादेशापत्तिः स्यात् । स्वन्मते 'त्वमावेकवचने' इत्यारम्भात् प्रत्ययपदेन विभक्तीतरस्य वृत्तिचरमावयवस्यैव वा ग्रहणेन 'उपसङ्क्रनिष्यमाण'न्यायेन च बाधकत्वाङ्गीकारे दोषाभावेऽपि लक्षणाश्रयणमनभिधानकल्पनं, प्रक्रान्तस्यात्राननुवृत्तौ उत्तरत्र मण्डूकानुवृत्तिकल्पनञ्चेति गौरवमस्त्येवेत्याशयेनाऽऽह—वस्तुत इति । योगविभागसामर्थ्येन चेति ।

यत्र ङित्त्वाभावे सर्वादेशप्रसक्तिस्तत्रैवेति । अयम्भावः—तत्तत्सूत्रेषु ङित्त्वसामर्थ्यादेव अन्त्यस्याऽऽदेशे सिद्धे तत्सामर्थ्यात् पूर्वस्याऽऽदेशो मा भूत्, किन्तु अन्त्यस्यैवेत्यत्र तात्पर्यग्राहकं 'ङिच्च' इति सूत्रम् । एवं स्थिते यत्र 'ङिच्च' इति सूत्रप्रवृत्त्यभावसम्भावनाप्रयोज्या- 'ऽनेकाल्'ि ति शास्त्रप्रवृत्त्युत्तरं ङित्वस्य वैयर्थ्यं, तत्र 'ङिच्च' इति सूत्रं प्रवर्तते, यत्र न तथा

इत्यादावक इत्यस्य निर्दिश्यमानावयवत्वमुपलक्षणमित्यत्र तात्पर्यग्राहकत्वेनेदकम्-शब्दावयवेद्भागस्याकचः प्राङ् निर्दिश्यमानावयवत्वेन प्राप्ततत्तदादेशवारणाय चरि-तार्थत्वेनाकज्विशिष्टे निर्दिश्यमानत्वाभावेन युष्मकच्छब्दे फलभेदाभावात् । तस्मि-न्नणि च मादाक इति न्यासेन युष्मदाद्यवयवमवर्णादवशिष्टयुष्मादाद्यवयवस्यादेश इत्यर्थकेन साकचि फलभेदाभावेनेष्टसिद्धेर्युष्माकाद्यादेशस्योक्तार्थज्ञापकत्वे बाधका-भावाच्च । नन्वेवमप्यन्तरङ्गानपीति न्यायसत्त्व एव युष्माकाद्यादेशानां वैयर्थ्यम् ; अन्यथा युवयोरयमित्यर्थे खञि 'युष्मद् + ओस् + ईन' इति स्थितेऽन्तरङ्गत्वाद् युवादेशे लुकि आकञि 'यौवाकीन' इति युवद्शब्दस्य युष्मकाद्यादेशे तु 'यौष्मा-कीण' इति फलभेदात्तज्ज्ञापकत्वमेव न सम्भवति । एवञ्च 'अन्तरङ्गे' न्यायसत्त्व एव युष्माकाद्यादेशवैयर्थ्यम् , तद्वैयर्थ्ये हि 'उत्सर्गे'ति न्यायसिद्धिः, तत्सिद्धौ मपर्यन्तानुवृत्तिवैयर्थ्यम् ; तद्वैयर्थ्ये'ऽन्तरङ्गानि'ति न्याय इति चक्रकापत्तिरिति चेन्न । घकालतनेति ज्ञापकेन तद्धितव्यवधायकविभक्तेरलुग्विधानात्प्राक् लुगलुगेतदितर-शास्त्रदृष्ट्याऽविद्यमानवद्भावकल्पनादोसोऽविद्यमानतया युवाद्यादेशाप्राप्तेश्चक्रका-भावात् ।

केचित्तु—घकालेति ज्ञापकेन तद्धिताधिकारीयकार्ये कर्तव्ये विभक्तेरविद्यमा-नत्वकल्पनेन 'युष्मद् + ओस् + ईने'त्यवस्थायामुभयोः प्राप्त्या तक्रन्यायेन बाध्यसा-मान्यचिन्तयाऽऽकञादेशेन युवाद्यादेशानां बाधेन चक्रकासम्भवादिति प्राहुः ।

---

तत्र न प्रवर्तते । यथा—तातङि 'ङिच्च' इत्यस्याप्रवृत्तौ सर्वादेशेऽपि तदुत्तर सम्प्रसारणाद्यर्थतया ङित्त्वस्य वैयर्थ्याभावात् 'ङिच्च' इत्यस्याप्रवृत्तिः । एवं प्रकृते 'ङिच्च' इत्यस्याप्रवृत्तावपि साकच्के निर्दिश्यमानत्वाभावेन 'अनेकालि'त्यस्य प्रवृत्तिरेव नास्ति, यथा सर्वादेशे तदुत्तरं ङित्त्ववैयर्थ्यं स्यात् । एवञ्च 'ङिच्च' इत्यस्याप्रवृत्त्याऽन्त्यस्य नात्राऽऽदेशप्रसक्तिः । साकच्का-पहारकतया अकज्विशिष्टे निर्दिश्यमानत्वाभावेन न सर्वादेशस्यापि प्रसक्तिरिति आदेशतानिया-मकशास्त्राप्रवृत्त्या 'यौष्माकदीनः, आस्माकदीनः' इत्येव रूपे भवतः इति न वैषम्यम् । यद्वा—एतन्मते तस्मिन्नणि चाकञ्कोरिति न्यासेन फलभेदो वारणीय इति ।

उभयमतसाधारण्येनोत्तरमाह—मादाक इति ।

युवयोरयमित्यर्थ इति । न च वृत्तौ उपसर्जनानामेकत्वसंख्या औत्सर्गिकी, द्वित्वादि-कन्तु यत्नलभ्यमिति अभियुक्तोक्त्या, इदमसङ्गतमिति वाच्यम् ; वृत्तौ एकत्वप्रतीतिरौत्सर्गिकीति तदर्थात् । अत एव 'कुमार्योरगारं कुमार्यगारमि'ति भाष्यविरोधो न ।

अलुक्विधानात् प्रागिति । तदुत्तरमादेशसिद्धये इदम् । लुक्प्रवृत्त्यै अलुक्-सिद्धये च भेदनिवेशः ।

चक्रकाभावादिति । नन्विदमसङ्गतम्, प्रकृतसूत्रे मपर्यन्तानुवृत्तेर्ज्ञापकोक्तिपरभाष्य-विरुद्धत्वात् । 'त्वदीय' इत्यादौ 'युष्मद् + अम् + ईय्' इत्यवस्थायां विभक्तेरविद्यमानतया त्वाद्या-देशाप्राप्त्या 'प्रत्ययोत्तरपदयोश्च' इत्यस्य तदपवादत्वाभावेन त्वमादेशयोः 'उत्सर्गसमानदेशा' इत्यनेन मपर्यन्तस्याऽऽदेशासिद्धौ मपर्यन्तानुवृत्तेश्चारितार्थ्यादित्यरुचेराह—केचित्त्विति ।

न्त्यादेशत्वापत्तिः, अतस्तद्विधानम् ; इदमेव च तज्ज्ञापकम् । यद्यपि विरोधे बाधकत्वमिति वार्तिकमतेऽयं न्यायो, भाष्यकारस्तु विनाऽपि विरोधं सत्यपि सम्भवे बाधकत्वमिच्छतीत्यनभिहितसूत्रस्थकैयटरीत्या नायं नियमः ; तथापि युष्माकाद्यादेशविधानज्ञापित उत्सर्गः स्वीक्रियत एवेति प्रकृते न दोषः । एतद्भाष्यमपि तत्स्वीकारे मानम् ।

एवं च मपर्यन्तानुवृत्ति 'स्त्वत्कृतमि'त्यादौ मपर्यन्तस्याऽऽदेशविधानार्था । तत्र चान्तरङ्गत्वात्त्वमावित्येव सिद्धे व्यर्था सैतज्ज्ञापिका। ज्ञापिते त्वस्मिन्नेतद्विषये तवादीनामप्राप्त्या तदपवादत्वाभावेन मपर्यन्तस्यैवाऽऽदेशार्थं सा चरितार्थेति तदाशयः ।

---

अन्ये तु—उक्तज्ञापकेन तद्धितनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकरूपावच्छिन्नोद्देश्यताके कार्ये तद्धितपरत्वेन सम्भावितविभक्तेरविद्यमानवद्भाव इति कल्पनया प्रकृते तद्धितोद्देश्यतावच्छेदकयुष्मच्छब्दत्वावच्छिन्नोद्देश्यताकयुवादेशे विभक्तेरविद्यमानत्वेन युवादेशाप्राप्त्या नोक्तज्ञापकताहानिरिति वदन्ति ।

विरोधे बाधकत्वमिति । उत्सर्गापवादयोः समानदेशत्व एव बाधकत्वमित्यर्थः । एतेन भाष्यकृन्मयेऽपि विरोधे एव बाधकत्वेनेदमयुक्तमित्यपास्तम् । वार्तिकमताद् भाष्यमते विशेषमाह—विनापि विरोधमिति । उत्सर्गापवादयोः समानदेशत्वाभावेऽपीत्यर्थः । अत एव 'भवेदि'त्यादावियादेशेन दीर्घबाधसिद्धिः । सत्यपि सम्भव इति । कृते चारितार्थ्येऽपीत्यर्थः । अत एव 'सर्वेषामि'त्यत्र सुटा नुटो बाधः सिद्ध्यति । नायं नियम इति । उत्सर्गापवादयोः समानदेशत्वमिति नियमो नेत्यर्थः । उत्सर्गः स्वीक्रियत एवेति । प्रायिकोऽयमुत्सर्गसमानदेशा इत्यर्थो'ऽत्रान्तरङ्गानि'ति परिभाषाज्ञापनाय स्वीक्रियते । 'भवेदि'त्यादिलक्ष्यसिद्धये परित्यज्यत इति भावः । एतद्भाष्यमिति । 'अन्तरङ्गानि'ति परिभाषाज्ञापनपरं भाष्य'मुत्सर्गे'ति वचनस्वीकारे मानम् , अपिशब्दाद् युष्माकाद्यादेशविधानसङ्ग्रहः । उत्सर्गेति न्यायास्वीकारे मपर्यन्तानुवृत्तिज्ञापकतापरोक्तभाष्यासङ्गतिः स्पष्टैवेति भावः ।

त्वमावित्येव सिद्ध इति । अस्य 'त्वत्पुत्र' इत्यादौ तु त्वमाविति बाधित्वा प्राप्तस्य 'तवममौ ङसी'ति सूत्रस्य बाधनाय कृते 'प्रत्ययोत्तरपदयोश्चे'ति सूत्रे त्वपवादत्वादेवोक्तन्यायेन मपर्यन्तस्ये'त्यर्थस्य सिद्धेरि'ति शेषः । अत एव 'तवादीनामप्राप्त्ये'त्याद्युत्तरग्रन्थसङ्गतिः ।

उत्सर्गेति न्यायस्वीकारमन्तरैव भाष्योक्तमपर्यन्तानुवृत्तेरुक्तपरिभाषाज्ञापकत्वसम्भवे कथमेतद्भाष्य'मुत्सर्गे'ति न्यायस्वीकारे मानम् । अत एव भाष्य उत्सर्गेति

---

अन्ये त्विति । अत्रापि कल्पे प्रथमकल्पवद् भाष्यविरोधो दुर्वार एवेति बोध्यम् ।

यत्तु—हरदत्तेनान्तरङ्गप्रवृत्तौ प्रत्यय उत्तरपदे च मपर्यन्तासम्भवेन तदनुवृत्तिः व्यर्था सती ज्ञापिकेत्युक्तम्। तन्न, अन्तरङ्गाणामप्यपवादबाध्यत्वेन तद्विषये तदप्रवृत्तेः ।

वस्तुतस्तु—इदं ज्ञापकं वार्तिकरीत्यैव, भाष्यरीत्या तु वाचनिक एवायमर्थ इत्याहुः ।

इयं 'सुपो धात्वि'ति लुग्विषयैवेति केचित्। 'एङ् ह्रस्वात् सम्बुद्धेः, न यासयोरि'ति सूत्रस्थाकरप्रामाण्येन लुग्मात्रविषया। आद्ये 'हे त्रपु' इत्यादावनेन

---

न्यायो नोक्त इत्याक्षिपतो हरदत्तस्य मतं खण्डयितुमनुवदति—यत्त्विति । मपर्यन्तासम्भवेति । न च 'मदीय' इत्यत्र ममादेशे तत्सम्भव इति वाच्यम्; तवादेशे तदसम्भवेन तदंशे वैयर्थ्यमित्याशयात्। व्यर्थेति । विरुद्धार्थिकाऽसम्भवदुक्तिकेत्यर्थः । तथा च सूत्रमेव व्यर्थमिति तद्भावः ।

ननु युष्माकाद्यादेशस्योत्सर्गेति वचनज्ञापकत्वासम्भवः, सिद्धान्तेऽपि तस्मिन्नणि च तवकममकौ आकङ्नेकवचने इति न्यासेन सिद्ध्या युष्माकाद्यादेशस्य स्वांशे चारिताथ्याभावात्, तथा चेदृशन्यायालम्बनेन कथं परिभाषाज्ञापकत्वमत आह—वस्तुतस्त्विति । तथा च वार्तिकमते तदर्थस्य स्वारसिकत्वेन नोक्तपरिभाषाज्ञापकत्वं युज्यते वक्तुमिति भावः। अयमर्थ इति । 'अन्तरङ्गानि'ति परिभाषारूप इत्यर्थः ।

केचित्तु—वार्तिकक्रमयेऽसम्भव एवापवादत्वेन मपर्यन्तानुवृत्तावेव 'प्रत्ययोत्तरपदयोश्चे'त्यस्य वैयर्थ्येनापवादत्वं कल्प्यमुत परिभाषेति विचारणायामपवादत्वं यद्यपि न्यायप्राप्तम्; तथापि यद्यपवादत्वं स्यात्तदोत्सर्गसमानदेश इति न्यायेनैव मपर्यन्तस्याऽऽदेशे सिद्धेऽपवादत्वे उपजीव्याया मपर्यन्तानुवृत्तेर्वैयर्थ्यं स्यादित्युपजीव्यविरोधेन परिभाषाज्ञापनस्यैव युक्तत्वम्। 'परिभाषायां ज्ञापितायां तु विभक्तिलुकि 'त्वमावेकवचन' इत्याद्यप्राप्त्या सर्वादेशबाधनाय मपर्यन्तानुवृत्तिरित्युपजीव्यविरोधाभावः स्पष्ट एव; तदेतन्मनसि निधायाह—वस्तुतस्त्विति । इदं ज्ञापकमिति । हरदत्तोक्तं ज्ञापकमित्यर्थः । वार्तिकरीत्येति । भाष्यरीत्या तु मपर्यन्तानुवृत्तिं विनाऽपि तक्रन्यायेनैवापवादत्वं सुघटमित्यपवादत्वेऽनुपजीव्याया मपर्यन्तानुवृत्तेस्तन्नये उत्सर्गेति न्यायाभावेन सर्वादेशाभावायाऽऽवश्यकत्वात्; तदेतदाह—वाचनिक एवायमर्थ इति, इत्येवं ग्रन्थार्थमाहुः ।

आकरेति । भाष्यकैयटेत्यर्थः । अनेन न्याये लोपं बाधित्वेति । न च लुकः प्रतिपदोक्तत्वेनैतन्न्यायानवसर इति वाच्यम्; एतत्फलस्यान्यथासिद्धत्वेऽप्यत्रोक्तन्याय-

---

एतत्फलस्येति । सुपो लुकि प्रत्ययलक्षणाप्राप्त्या गुणाप्रवृत्तिलक्षणस्येत्यर्थः ।

न्यायेन लोपं बाधित्वा लुग्भवतीति भाष्ये उक्तम्। अन्त्येऽन्तरङ्गांश्च विधीन् सर्वोऽपि लुग्बाधते, न तु सुब्लुगेव। अत एव 'सनीस्रंस' इत्यादौ नलोपो न भवति। 'पञ्चभिः खट्वाभिः क्रीतः पञ्चखट्व' इत्यादावेकादेशात्प्रागेव टापो लुक्। अन्यथा कृतैकादेशस्य लुक्यकारश्रवणं न स्यादिति कैयटे उक्तम्। एत-द्विरोधात् 'यत्तद्राजस्ये'ति सूत्रे कैयटेनोक्त'मङ्गानतिक्रान्तोऽत्यङ्ग' इत्यत्र सुपो लुकि बहुवचनपरत्वाभावात्तद्राजस्येति लुग्न स्यादिति शङ्कापरभाष्यव्याख्यावसरे अन्तरङ्गानपीति न्यायेनायं लुक् सुब्लुको बाधकः स्यादित्याशङ्क्य सुब्लुक एवानेन बलवत्त्वं बोध्यत इति तत्प्रौढ्येति द्रष्टव्यम्। लुगपेक्षया लुको बल-वत्त्वस्य वक्तुमशक्यत्वादिति तदाशङ्कासमाधानं वक्तुं युक्तम्।

---

भ्रान्तिस्वीकारे बाधकाभावेन भाष्यविरोधस्य दुष्परिहरत्वात्। अपिशब्दघटितपाठे एतद् भाष्यमपि मानम्। अपिनाऽत्र लाक्षणिकस्य सङ्ग्रहः। लुग् न स्यादिति। तद्राज-सूत्रे बहुष्वित्यस्य बहुवचने परे इत्यर्थः, 'अति+अंग+अ+अस्+स्' इत्यव-स्थायां सामासिकशसो लुकि 'न लुमते'ति निषेधात्प्रत्ययलक्षणाभावेन बहुवचन-परत्वाभाव इति शङ्काशयः।

केचित्तु—'आशंक्ये'त्यस्याग्रे 'लुगपेक्षये'त्यादि वक्तुं युक्तमित्यन्तं ग्रन्थं संयोज्य, 'परं तदनुक्त्वा यदि'ति शेषं प्रपूर्य, सुब्लुक् इति योजयन्ति। तथा च इत्याशङ्क्य लुगपेक्षया लुको बलवत्त्वस्य वक्तुमशक्यत्वादिति तदाशङ्कासमाधानं वक्तुं युक्तम्, परं तदनुक्त्वा यद् सुब्लुक एवानेन बलवत्त्वं बोध्यत इत्युक्तं तत्प्रौढ्येति द्रष्टव्यमिति योजना; तत्र बीजमाह—अनेनेति। तथा चात्र सुब्लुक एवान्तरङ्गनिमित्त-विनाशकत्वेन प्राबल्यम्, न तु तद्राजलुकस्तस्यान्तरङ्गनिमित्तविनाशकत्वाभावादिति ग्रन्थरहस्यमाहुः।

एतत्फलमर्णुहीति। 'उतश्चे'ति लुकोऽन्तरङ्गगुणनिमित्तविनाशकत्वाभावेन बलवत्त्वाभावादन्तरङ्गत्वाल्लघूपधगुणे संयोगपूर्वकोकारात् परत्वेन न हेर्लुक्।

---

मूले—सनीस्रंस इत्यादाविति। स्रंसेर्यङ्लुगन्ताद्विचि सनीस्रंस् इत्यस्मात् ङसि रूपमिदम्, न तु यङन्तात् पचाद्यचि यङो लुकि रूपम्। एतेन—'न धातुलोपः' इति सूत्रस्या-रम्भप्रत्याख्यानयोः फलभेदाभावाय तादृशलक्ष्याणामनभिधानात् कैयटश्चिन्त्य एवेति परास्तम्।

नहेर्लुगिति। नन्वत्र 'उपसञ्जनिष्यमाण'न्यायेन लुकोऽप्राप्तिः। अस्ति चात्र सम्भा-वना—"यदि पूर्वं लुक् न स्यात्, तर्हि गुणे कृते 'असंयोगादि'ति निषेधः प्रवर्तेत" इत्याकारिका अवश्यञ्चैतादृशनिषेधस्थलेऽप्युक्तन्यायप्रवृत्तिरभ्युपेया। अन्यथा 'ऋदुपधेभ्यः' इति वार्तिकं व्यर्थ-मेव स्यात्। तद्धि 'ववृके' इत्यत्र परत्वात् प्राप्तस्य गुणस्य निषेधाय। तत्र "यद्यत्र गुणो न स्यात् तर्हि कित्त्वं स्यादि"ति सम्भावनया पूर्वं गुणाभावेन तद् व्यर्थं स्यात्। मम तु "यद्यत्र गुणो न

अनेन न्यायेनान्तरङ्गनिमित्तविनाशकलुकस्तत्प्रयोजकसमासादीनां च प्राबल्यं बोध्यम् इत्यन्यत्र विस्तरः ॥ ५२ ॥

नन्वेवं सौऐन्द्रेऽन्तरङ्गत्वादादुगुणे पूर्वपदात्परेन्द्रशब्दाभावेन 'नेन्द्रस्य परस्ये'ति वृद्धिनिषेधो व्यर्थः । अन्तादिवद्भावस्तूभयत आश्रयणे निषिद्धः ।

किञ्च वृद्धिरप्यत्र न प्राप्नोत्यन्तादिवत्त्वोभयाभावेऽपि पूर्वान्तवत्त्वेनैकादेशविशिष्टे पूर्वपदत्वेन इन्द्रशब्दस्यैकदेशविकृतन्यायेन 'उभयत आश्रयणे नान्तादिवत्' इत्यस्याभावेन तदाश्रयणेन वोत्तरपदत्वेऽपि तस्यानच्कत्वादेकस्यैकादेशेन परस्य नित्येन यस्येति लोपेनापहारात् ।

---

तथा सर्वस्तोमादिबहुव्रीहौ सर्वस्य सुपीत्याद्युदात्तं बाधित्वा सामासिकलुकि सर्वशब्दस्योञ्छादित्वादन्तोदात्ते बहुव्रीहौ प्रकृत्येत्यन्तोदात्तपूर्वपदकत्वापत्तिर्न । किन्तु सौवरीणां सप्तमानां तदन्तसप्तमीत्वेन कृतेऽपि सामासिकलुकि 'सर्वस्य सुपी'त्यस्य प्रवृत्तिसम्भवेन तस्यान्तरङ्गनिमित्तविनाशकत्वाभावेन पूर्वमप्रवृत्त्या 'सर्वस्य सुपी'त्याद्युदात्ते कृते 'बहुव्रीहावि'ति प्रकृतिस्वरे आद्युदात्तपूर्वपदकत्वमेव सिद्ध्यति ।

तत्प्रयोजकसमासेति । आदिना प्रातिपदिकसंज्ञादिसङ्ग्रहः । अत एव 'राजपुत्री'त्यत्र लुकः समासस्यान्तरङ्गनिमित्तविनाशकत्वाभावेन पुत्रशब्दान्ङीनि नित्वादाद्युदात्ते कृते ततः समासे समासस्येत्यन्तोदात्तत्वं सिद्ध्यति । अन्यथा पूर्वं समासे ङानि नित्स्वरसमासस्वरयोः प्राप्तावन्तरङ्गत्वात्समासस्वरं बाधित्वा नित्स्वरेऽनिष्टस्वरापत्तिरिति दिक् ॥ ५२ ॥

अन्तादिवत्त्वोभयाभावेऽपीति । केचित्तु—अपिस्त्वर्थे । तथा चान्तादिवत्त्वोभयाभावे तु 'उभयत आश्रयणे नान्तादिवदि'ति निषेधाभावेन पूर्वान्तवत्त्वेनैकादेशविशिष्टे पूर्वपदत्वेन एकदेशविकृतन्यायेन तदाश्रयणेन उत्तरपदत्वातिदेशेन इन्द्रशब्दस्य चोत्तरपदत्वेऽपि तस्यानच्कत्वात् वृद्धिरप्यत्र न प्राप्नोतीत्येतदन्वयमाहुः ।

अन्ये तु—उभयत आश्रयणे नान्तादिवदित्यस्य निषेधस्याभावेन वस्तुतोऽस्वीकारेणेत्यर्थः । प्रकारान्तरमाह—तदाश्रयणेन वेति । उभयत आश्रयणे इति वचनस्याऽऽश्रयणेन वा अन्तादिवत्त्वोभयाभावेऽपि अन्तादिवत्त्वोभयस्यातिदेशाभावेऽपीत्यर्थः । ततो यथाश्रुतमन्वयमाहुः ।

वस्तुतस्तु—उभयत आश्रयणे नान्तादिवदित्यस्याभावेन तदाश्रयणेन वेत्यन्तग्रन्थोऽत्र प्रक्षिप्तो बोध्यः ।

---

स्यात्तर्हि कित्त्वं स्यात्, यदि च कित्त्वं न स्यात्तर्हि गुणे कृते "'असंयोगादि'ति निषेधः स्यादि"ति परस्परं सम्भावनाद्वयसत्त्वेन 'सुन्दोपसुन्द'न्यायेन 'उपसञ्जनिष्यमाण'न्यायाप्रवृत्त्या परत्वात् गुणे प्राप्ते तदावश्यकमिति नेदं फलमित्यत आह—तथा सर्वस्तोमेति ॥ ५२ ॥

न च परादिवत्भावेनैकादेशविशिष्टस्योत्तरपदत्वमेवास्त्विति तत्सम्भ इति वाच्यम् ; उत्तरपदाद्यच्स्थानिकत्वाद् वृद्धेस्तदभावेनाप्राप्तेस्ताद्रूप्या तिदेशात्। अन्यथा 'खट्वाभिरि'त्यादावपि पूर्वान्तवत्त्वेनादन्तत्वे भिस ऐस पत्तिरिति भाष्ये स्पष्टम्। अत एव 'पूर्वैषुकामशम' इत्यादावन्तरङ्गत्वाद् गु वृद्धिर्न स्यादित्याशङ्कितम्। तदेकदेशमात्रस्य विकाराभावाच्च।

---

ताद्रूप्यानतिदेशादिति। ननु 'चीरपेणे'त्यत्रैकाजुत्तरपदत्वस्यातिदेशाय स्ववृत्ति स्वस्थानिकादेशावृत्तित्वोभयसम्बन्धेन अन्तादिवर्णविशिष्टस्यैवाल्मात्रवृत्तिधर्मस्य ता रूप्यपदेन ग्राह्यतया सोमेन्द्रेऽतिदेष्टव्यस्याच्त्वरूपस्याल्मात्रवृत्तिधर्मस्य स्वस्थानिकैक रूपादेशवृत्तित्वेन तत्त्वाभावान्निषेधाप्रवृत्तिः। किञ्च एन्द्रघटक एकारे अच्त्व सिद्धतया उत्तरपदत्वस्यातिदेष्टव्यस्य च निषेधाविषयत्वेनोक्तसमाधेरसम्भवश्चे चेन्न। 'अन्तादिवच्चे'त्यनेन शास्त्रीयधर्मस्यैवातिदेशेनोत्तरपदत्वमात्रधर्मस्याशास्त्रीयर नातिदेशासम्भवात्। ताद्रूप्यपरिष्कारे निरुक्तसम्बन्धद्वयेन स्वविशिष्टाल्मात्रवृत्तिध स्य विशेषणदलप्रविष्टयावत्पदार्थसङ्कुचितस्यैव ग्रहणादच्त्वस्योक्तताद्रूप्याभावेऽप त्तरपदादित्वरूपविशेषणदलप्रविष्टधर्मेण सङ्कुचितस्य तादृशस्योत्तरपदाद्यच्त्वस स्वस्थानिकादेशावृत्तित्वेन स्ववृत्तित्वेन चोक्तरूपतया न वा ताद्रूप्यादिति निषे विषयत्वस्य सुवचत्वात्। उत्तरपदाद्यच्त्वरूपशास्त्रीयधर्मघटितत्वेन शास्त्रीयत्वाच्चतेः अत एव 'प्रपठ्ये'त्यत्र वल्त्वरूपशास्त्रीयधर्मघटितत्वेन वलादित्वस्य शास्त्रीयत स्थानिवत्त्वेनातिदेशमाशङ्क्य विशेषणतया अलाश्रयणादनल्विधाविति निषे इत्युक्तमाकरे।

अत एवेति। ताद्रूप्यस्यानतिदेशादेवेत्यर्थः। पूर्वैषुकामशम इति। पूर्वा चास विषुकामशमी च तस्यां भवेत्यर्थेऽणि प्राचां ग्रामनगराणामिति वृद्धिर्बहिरङ्गतयाऽन्त रङ्गत्वादाद्गुणे उत्तरपदाद्यच्त्वाभावाद् वृद्धिर्न स्यादिति भावः। ननु ऐन्द्रशब्दस्यैव देशविकृतन्यायेनोत्तरपदत्वं तेनैव सोमिति मान्ते इत्येकारान्ते वपूर्वपदत्वं चास्तु तावता च न पूर्वोक्तदोषावकाश इति शङ्कां मनसि निधायाऽऽह—तदेकदेशेति। अस न्यायस्य लौकिकत्वेन लोके तत्रैव प्रवृत्तिदर्शनेनात्र तद्विषयाभावात्।

ग्रन्थरहस्यविदस्तु—किञ्च वृद्धिरप्यत्र न प्राप्नोति, अन्तादिवत्त्वोभयाभावेऽपी त्यन्तमेकं वाक्यम्। अत्रापिरर्थे। यथोभयत आश्रयणेऽन्तादिवद्भावनिषेधात वृद्धिनिषेधो न प्राप्नोति, एवम् अन्तवत्त्वादिवत्त्वोभयस्यातिदेशाभावे वृद्धिरपि न प्राप्नोतीत्यस्यार्थः। वृद्धिप्राप्ति प्रकारद्वयेनोद्भावयति—पूर्वान्तवत्त्वेनेति। पूर्वान्त वत्त्वेनैकादेशविशिष्टे सोमे शब्दे पूर्वपदत्वे इन्द्रशब्दस्यैकदेशविकृतन्यायेन उत्तर पदत्वे उभयत आश्रयणेति निषेधाभावेन वृद्धिर्न प्राप्नोतीति सम्बन्धः। द्वितीय वृद्धिप्राप्तिप्रकारमाह—तदाश्रयणेनेति। तदाश्रयणेन = एकदेशविकृतन्यायाश्रयणेन सोमिति मान्ते पूर्वपदत्वे ऐन्द्रशब्दे उत्तरपदत्वे उभयत आश्रयणे नान्तादिव-

तदुक्तं भाष्ये—'इन्द्रे द्वावचावेको यस्येति लोपेनापहृतोऽपर एकादेशेन ततोऽनच्क इन्द्रशब्दः सम्पन्नस्तत्र कः प्रसङ्गो वृद्धेरि'ति ।

मरुदादिभिरिन्द्रस्य द्वन्द्वे इन्द्रस्यैव पूर्वनिपातोऽत आह—

## पूर्वोत्तरपदनिमित्तकार्यात् पूर्वमन्तरङ्गोऽप्येकादेशो न ॥५३॥

अत्र च नेन्द्रस्येति निषेध एव ज्ञापक इति 'अन्तादिवच्च विप्रतिषेधे परमि'ति सूत्रयोर्भाष्ये स्पष्टम् ॥ ५३ ॥

नन्वेवमपि 'प्रधाय, प्रस्थाये'त्यादावन्तरङ्गत्वाद्धित्वादिषु कृतेषु ल्यप् स्यादत आह—

## अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते ॥ ५४ ॥

'अदो जग्धिरि'ति सूत्रे ति कितीत्येव सिद्धे ल्यब्ग्रहणमस्या ज्ञापकमिति 'अदो जग्धिरि'त्यत्र भाष्ये स्पष्टम् ॥ ५४ ॥

---

दित्यस्याभावेन वृद्धिर्न प्राप्नोतीति सम्बन्धः । आद्यस्योत्तरमाह—तस्यानच्कत्वादिति । द्वितीयस्योत्तरमाह—तदेकदेशमात्रस्येति । पूर्वकल्पेषु एतद्विषयकशङ्कामकृत्वैवं समादधानस्य ग्रन्थकर्तुः शून्यहृदयत्वमापद्येतेत्याहुः ।

मरुदादिभिरिति । न च विष्ण्वादिशब्दैरिन्द्रशब्दस्य समासे निषेधस्य चारितार्थ्यम्, न 'चाभ्यर्हितं चे'त्यपेक्षयाऽजाद्यदन्तमित्यस्य प्राबल्यमिति वाच्यम्, तथा सति 'वासुदेवार्जुनाभ्यां वुन्' इति सौत्रनिर्देशानुपपत्तेरिति वाच्यम्; ज्ञापकपरोक्तभाष्यप्रामाण्येन प्रसिद्धसाहचर्यैकदेवताद्वन्द्वे एव विधिनिषेधयोः प्रवृत्तिकल्पनेनादोषात्, विष्णोरिन्द्रावरजत्वेनेन्द्रस्यैवाभ्यर्हितत्वाच्च । सोमस्य तु अमृतरूपान्नदातृत्वेन पितृसमत्वात् महाप्रलयपर्यन्तस्थायित्वात् शिवशिरोधृतत्वाच्चाभ्यर्हितत्वेन पूर्वनिपातः ।

पूर्वोत्तरपदनिमित्तकार्यादिति । अत्र पूर्वोत्तरपदयोर्निमित्तता च पूर्वपदत्वेनोत्तरपदत्वेनेति नाग्रहः । अत एव 'परमाहमि'त्यादौ सवर्णदीर्घात्पूर्वमनया परिभाषया मपर्यन्तस्याऽऽदेशसमर्थनपरम् 'अदस औ सुलोपश्चे'ति सूत्रस्थं भाष्यं सङ्गच्छते; अन्यथा 'त्वाहौसावि'त्यादौ पूर्वोत्तरपदत्वयोरनिमित्तत्वेन तदसङ्गतिरेव स्यादिति बोध्यम् । एकादेशो नेति । अयं सन्धिकार्यस्योपलक्षणम्, तेन 'रात्रिमट' इत्यादौ रात्रेः कृती'ति मुमः पूर्वमन्तरङ्गो यणादेशो नेति सिद्धम् ।

ल्यब्ग्रहणमस्या ज्ञापकमिति । ननु ल्यब्ग्रहणेन प्रकृतिप्रत्ययोभयमात्रनिमित्तकान्तरङ्गकार्याणां ल्यब्विषये अप्रवृत्तिरित्येव ज्ञाप्यतां 'नल्यपी'ति सूत्रं च न

नन्वेव'मपीयाये'त्यादौ द्वित्वे कृतेऽन्तरङ्गत्वात् सवर्णदीर्घत्वे तदसिद्धिरत आह—

**धात्वर्थादाङ्गं बलीयो भवति ॥ ५५ ॥**

तेनान्तरङ्गमपि सवर्णदीर्घं बाधित्वा वृद्धिरिति तत्सिद्धिः।

'अभ्यासस्यासवर्णे' इतीयङ्विधायकसूत्रस्थमसवर्णग्रहणमस्या ज्ञापकम्, तद्धि 'ईषतुरि'त्यादावियङादिव्यावृत्त्यर्थम्। एतत्परिभाषाभावे तु 'ईषतुरि'त्यादावन्तरङ्गेण सवर्णदीर्घेण बाधात्तद्वैयर्थ्यम्। इयङुवङौ ह्यभ्यासम्बन्धनिमि-

---

कार्यमिति चेन्न। 'अधीत्ये'त्यादौ तुकादेरप्यप्रवृत्तिप्रसङ्गात्। क्त्वाश्रयानुबन्धकार्याणां ल्यब्विषये प्रवृत्त्यभावस्तूक्तज्ञापकेन कल्पयितुमशक्यः, 'प्रलूये'त्यादौ गुणनिषेधानापत्तेः, 'प्रोह्य गत' इत्यत्र सम्प्रसारणस्य, 'प्रमथ्ये'त्यादौ नलोपादेश्चानापत्तेरित्यन्यत्र विस्तरः ॥ ५४ ॥

सवर्णदीर्घत्व इति। ननु द्वित्वस्यापि बहिरङ्गत्वेनासिद्धत्वाद्दीर्घाप्राप्तिः। न च नाजानन्तर्य इति निषेधः, तस्या असत्त्वादिति चेन्न। तदसत्त्वेऽपि तद्विषये बहिरङ्गपरिभाषायाः प्रमाणसत्त्व एव प्रवृत्त्याऽत्र प्रवृत्तौ प्रमाणाभावात्। अत एव 'ऊखतुरि'त्यत्र दीर्घसिद्धिः, प्रकृतपरिभाषाज्ञापनपरभाष्यञ्च सङ्गच्छते। अभ्यासम्बन्धनिमित्तकत्वादिति। द्वित्वप्रयोज्यसंज्ञावन्निमित्तककार्यविधायके द्वित्वप्रयोजक इत्यस्याध्याहारादित्यर्थः। अत्र च 'ह्वः सम्प्रसारणमि'ति सूत्रमेव मानम्। अन्यथा 'अजूहवदि'त्यत्र 'अभ्यस्तस्य चे'त्यनेनैव सम्प्रसारणसिद्धौ तद्वैयर्थ्यापत्तिः। मम तु 'अभ्यस्तस्य चे'त्यत्र द्वित्वप्रयोजक इत्यस्य सत्त्वे'नाजूहवदि'त्यत्र णिचा व्यवधानात्तदप्राप्त्या 'ह्वः सम्प्रसारणमि'त्यस्य सार्थक्यं स्पष्टमेव। अत एव 'प्रजिह्वायकीयिपती'त्यत्र 'अभ्यस्तस्य

---

मूले—अन्तरङ्गत्वादिति। वृद्ध्यपेक्षयेति भावः। ननु द्वित्वस्यापि बहिरङ्गत्वेनेति। इदं चिन्त्यम—अन्तरङ्गशास्त्रस्य सवर्णदीर्घस्य प्रवृत्तौ निमित्तत्वेनाऽऽश्रीयमाणसमुदायस्य 'इ इ' इत्यस्य द्वित्वविधौ निमित्तत्वेनाऽऽश्रयणाभावात् द्वित्वशास्त्रस्य अन्तरङ्गशास्त्रीयनिमित्तसमुदायनिमित्तकत्वे सति तदितरनिमित्तकत्वरूपबहिरङ्गत्वाभावात्। नापि—स्थानिद्वाराघटकमात्रनिमित्तकत्वमन्तरङ्गत्वम्; दीर्घविधेः षाष्ठद्वित्वस्य स्थाने द्विर्वचनाभावाभ्युपगमात्। नापि च बहिरङ्गशास्त्रीयेण येन केनचित् प्रथमान्तभिन्नेन पदेन 'धातोरि'त्यनेनाऽऽश्रीयमाणेकारपर्यन्तनिमित्तताप्रयोजकसमम्यन्तपदघटितत्वरूपमन्तरङ्गत्वं सवर्णदीर्घस्य, अन्ते सन्निविष्टस्याऽऽगन्तुकस्य 'धातोः' इत्यनेनाऽऽश्रयणाभावात्। नापि यदीयसप्तम्यन्तनिमित्तात् पूर्वं यदीयसप्तम्यन्तनिमित्तं तदन्तरङ्गमिति अन्तःकार्यत्वरूपान्तरङ्गत्वं दीर्घस्य, तादृशान्तरङ्गत्वसत्त्वेऽपि तस्य समकालप्राप्तबहिरङ्गासिद्धत्वनियामकत्वेन अकिञ्चित्करत्वात्।

त्तकत्वाद् बहिरङ्गौ । न चेयङादिरपवादो, 'येन नाप्राप्ति'न्याये'नेयर्ती'त्यादि सकललक्ष्यप्राप्तयणपवादत्वस्यैव निर्णयादिति प्राञ्चः ।

परे तु—एतत्परिभाषाभावे'अभ्यासस्ये'ति सूत्रमेव व्यर्थम् । न च 'इयाय इयेषे'त्यादौ चरितार्थम्, तयोरपि पूर्वप्रवृत्तगुणस्य पूर्वप्रवृत्तवृद्धेश्च द्विर्वचनेऽचीति रूपातिदेशेनापहारे द्वित्वे कृते पुनः प्राप्ते गुणवृद्धी बाधित्वाऽन्तरङ्गत्वात्सवर्ण-

---

चे'ति सम्प्रसारणं न । अत एव 'चोरदि'त्यत्र प्रत्यय इत्यस्याध्याहाराद् 'वव्रश्चे'-त्यस्य सिद्धिरिति मूल एव स्पष्टम् ।

सकललक्ष्यप्राप्तेति । न च तक्रन्यायेन इत्वेन यणो बाधादित्वोत्तरं यणप्राप्त्या कथं तस्य सकललक्ष्यप्राप्तत्वमिति वाच्यम्; अभ्यासविकारेषु बाध्यानां पूर्वं प्रवृत्ते-रित्वं बाधित्वोरदत्वे हलादिः शेषे इत्वे च यण्प्राप्त्या इत्वस्य यणपवादत्वासम्भ-वेन सकललक्ष्यप्राप्तत्वस्य सूपपादत्वात् ।

नन्वेवं सति ऋ + ऋ + ति' इत्यवस्थायां 'सार्वधातुके'ति गुणं बाधित्वा लघु-पधगुणः प्राप्तः, तं च बाधित्वाऽपवादत्वाद्दीर्घः, प्राप्तः, तं बाधित्वेत्वं प्राप्तं, तच्च 'अभ्यासविकार' इत्यनेन बाधित्वोरदत्वं प्राप्तं, तद् बाधित्वा ह्रस्वः प्राप्तः, तं च बाधित्वा पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वात् 'सार्वधातुके'ति गुणः प्राप्त इति चक्रकापत्तिरिति चेन्न । पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वाद् द्वित्वादेः पूर्वमेव सार्वेति गुणप्राप्त्या चक्रकासम्भवात् । नन्वेवमिकारांशे यणः सकललक्ष्यप्राप्तत्वेऽ-प्युकारांशे तत्त्वाभावाद् 'ऊखतुरि'त्यादावपवादत्वान् सवर्णदीर्घं बाधित्वा प्राप्तस्यो-वङो वारणायासवर्णग्रहणस्य चारितार्थ्यमिति वाच्यम्; उकारांशमात्रफलकत्वे अनावित्येव वक्तव्येऽसवर्णग्रहणस्योक्तार्थज्ञापकत्वे बाधकाभावात् ।

---

सूपपादत्वादिति । न च अन्यतरत्वेन व्यापकतामादाय यण्दीर्घयोरुभयोरप्यपवादत्व-मिति वाच्यम्; अन्यतरस्य व्यापकत्वेऽन्यतरत्वेन व्यापकतां ग्रहीतुमशक्यत्वात् । निरूपयिष्यते चेदं 'येन नाप्राप्ति'न्यायनिरूपणावसरे ।

द्वित्वादेः पूर्वमिति । अन्ये तु—'ऋ + ति' इति स्थिते शब्गुणयोः प्राप्तौ नित्यत्वस्यो-भयोस्तुल्यत्वेन परत्वाद् गुणे पश्चाच्छपि तस्य श्लौ ततो द्वित्वमिति रीत्या चक्रकापत्तिं वारयन्ति । तन्न सम्यक्; शब्दमात्रनिमित्तकत्वेन गुणात् पूर्वं शब्निमित्तकस्य कर्तृरूपार्थस्य उपस्थित्याऽन्त-रङ्गत्वाद् गुणात् पूर्वं शपि तस्य प्रतिपदोक्तत्वात् पूर्वं श्लौ ततोऽन्तर्भूतनिमित्तकत्वेनान्तरङ्गत्वाद् द्वित्वे प्राप्ते पूर्वोपस्थितनिमित्तकत्वेन च गुणे प्राप्ते उभयोरन्तरङ्गत्वात् परत्वाद् गुणे ततो'ऽरि'-त्यस्य द्वित्वमित्येतस्य न्याय्यत्वात् ।

यत्तु—प्रतिपदोक्तत्वाद् द्वित्वोत्तरं सर्वतः पूर्वमपरनिमित्तकत्वेनान्तरङ्गत्वात् पूर्वमुरदत्व-मिति । तन्न; उरदत्वस्य अभ्याससम्बन्धनिमित्तकत्वेन तस्य द्वित्वप्रयोजकप्रत्ययनिमित्तत्वात्, अपरनिमित्तकत्वरूपान्तरङ्गत्वाभावात्, 'श्लौ' इत्यस्य प्रतिपदोक्तत्वाभावाच्च ।

दीर्घापत्तेः। न 'चेयर्ती'त्यादौ तच्चरितार्थम्, तावन्मात्रप्रयोजनकत्वे उरित्येव ब्रूयात्। य्वोरित्यनुवर्तते। 'इणो यणि'ति साहचर्याद्व्याख्यानाच्च ऋधातोरेव ग्रहणम्। अर्तेरिवर्णस्येयङित्यर्थः। अभ्यासस्यार्ताविति अभ्यासस्यार्तेरिति वा गुरुत्वान्न युक्तम्।

न च 'ए ऐ ओ औ' शब्देभ्य आचारक्विबन्तेभ्यो लिटीयङाद्यर्थं तत्सूत्रमावश्यकम्, तथा ओणृधातोण्वुलन्तादिच्छाक्यजन्तात् सनि 'उवोणकीयिषती'त्याद्यर्थमावश्यकमिति वाच्यम्; षाष्ठप्रथमाह्निकान्तस्थभाष्यप्रामाण्येन

---

उरित्येव ब्रूयादिति। न च इधातोर्लिटि थलि द्विर्वचनाद् गुणवृद्धी 'भवतो विप्रतिषेधेने'ति वार्तिकादिप्रामाण्ये गुणोत्तरं द्वित्वेऽभ्यासह्रस्वे 'इ+एथे'त्यत्राभ्यासेकारस्य स्थानिभूतानचः पूर्वत्वेन दृष्टत्वाभावेन स्थानिवद्भावाप्राप्त्याऽसवर्णाच्परकत्वेनेयङर्थमुक्तसूत्रस्य चारितार्थ्यमिति वाच्यम्; 'ए+एथे'त्यवस्थायां ह्रस्वं बाधित्वाऽन्तरङ्गत्वेनायादेशस्यैव प्रवृत्त्याऽत्र चारितार्थ्यस्य दुरुपपादत्वात्।

षाष्ठेति। 'दाश्वानि'ति सूत्रस्थेत्यर्थः। तत्र हि मूलोक्तरीत्या वार्णपरिभाषाया 'अभ्यासस्ये'त्यस्य ज्ञापकत्वोपपादनावसरेऽर्त्यर्थमेतत्स्यादित्यनेन ऋधातावेव चारितार्थ्यमुक्तं न तु एऐशब्दादिषु, तेन तेषामनभिधानमित्यर्थः। 'वदव्रजे'ति सूत्रस्थभाष्यप्रामाण्यादप्येषामनभिधानं बोध्यम्। तत्र हि "अतो ल्रान्तस्ये'ति सूत्राददग्रहणमनुवर्त्य वदव्रज्योरकारस्याचश्च वृद्धिरित्येव सिद्धे हल्ग्रहणं जातिग्रहणार्थं, ते'नारांक्षीदि'त्यादिसिद्धिरित्युक्त्वा, तत्राजन्तस्येत्यर्थवारणाय हल्ग्रहणमित्याशङ्क्य, अदन्ते लोपेन दीर्घान्ते फलाभावेनेगन्ते 'सिचिवृद्धिरि'त्यनेन सिद्धत्वेन सन्ध्यक्षरान्तस्य धातोरभावेन च फलाभावादजन्तस्येति नार्थ" इत्युक्तम्। अन्यथा 'ए' इत्यादिभ्य आचारक्विपि तत्र फलसत्त्वेन भाष्यासङ्गत्यापत्तेः।

---

उरित्येव ब्रूयादितीति। 'ऋवर्णान्तस्याङ्गस्य' इत्यर्थेन 'आरे'त्यादौ इयङापत्तिवारणाय 'य्वोरि'त्यनुवर्तते। 'ऋस्थानिकेवर्णस्य इयङ्'इत्यर्थे 'इयर्ति अरिप्रियाद्' इत्यादौ न स्यादत आह, मूले—इणो यणिति साहचर्यादिति। सूत्रान्तरस्थसाहचर्यस्य खण्डितत्वादाह, मूले—व्याख्यानादिति। ज्ञापकपरभाष्यप्रामाण्यादिति तदर्थः।

वस्तुतस्तु—एवं रीत्या व्याख्यानाश्रयणापेक्षया 'अर्तेरि'त्येव वक्तुमुचितम्। तत्र द्वित्वाभावस्तु 'अर्ति, पिपर्त्योरि'तिवद् बोध्यः; तद्ध्वनयन्नाह—अर्तेरिवर्णस्येयङित्यर्थ इति। ऋधातुसम्बन्धिन इवर्णस्येत्यर्थः। ननु 'भृञामिदि'त्यत्र 'भृञामियङ्, 'अर्तिपिपर्त्योश्च' इत्येव सूत्र्यताम्, 'बिभर्ति' इत्यादावियङि 'लोपोऽव्योर्वलि' इति लोपेनेष्टसिद्धिः, किं पृथङ् न्यासेनेति चेन्मैवम्, 'अर्तिपिपर्त्योश्च' इत्यत्र श्लावित्यनुवर्तते न वा? अनुवर्तते चेत्, 'अरियर्ति' इत्यत्र यङ्लुकि श्लुपरत्वाभावादियङनापत्तेः। अननुवृत्तौ तु 'आरे'त्यादौ लिट्यपि तदापत्तिः। तस्मात् 'अर्तेरि'त्येव सूत्रयितुमुचितमिति तत्त्वम्।

ंधानात् । अन्त्ये द्वितीयद्विर्वचनस्यैव सत्त्वेन त्वदुक्तप्रयोगस्यैव
त् । एवञ्च सम्पूर्णसूत्रस्य ज्ञापकता युक्ता ।

ापि भाष्ये 'यदयमभ्यासस्यासवर्णं इत्यसवर्णग्रहणं करोती'ति ग्रन्थे-
ग्रहणस्यैव ज्ञापकता लभ्यते; तथापि 'न ह्यन्तरेण गुणवृद्धी असवर्ण-
ो भवती'ति तदुपपादनग्रन्थेन सम्पूर्णसूत्रस्यैव ज्ञापकता लभ्यते ।
'नैतदस्ति ज्ञापकमत्यर्थमेतत्स्यादि'त्यनेन सूत्रसार्थक्यमेव दर्शितम् ।
ग्रहणस्यैव ज्ञापकत्वे तु तद्व्यावर्त्यप्रदर्शनेन तत्सार्थक्यमेव दर्शितं स्यात् ।

'नाकृतव्यूह'परिभाषया 'इयेषे'त्यादौ सवर्णदीर्घप्राप्तिर्यदि दीर्घो न
् गुणः स्यादिति सम्भावनायाः सत्त्वेन परिभाषाप्रवृत्तेः सूपपादत्वा-
र्थं सम्पूर्णसूत्रस्य ज्ञापकतेति वाच्यम्; तस्या असत्त्वात् । सत्त्वे
ष्यप्रामाण्येन यत्रान्तरङ्गकार्यप्रवृत्तियोग्यकालोत्तरमेव तन्निमित्तविनाश-
ङ्गविधेः प्राप्तिस्तत्रैव तत्परिभाषाप्रवृत्तिस्वीकाराच्च ।

---

वस्तुतस्तु—नव्यमते सन्ध्यक्षरेभ्यो लिटि 'कास्प्रत्ययादि'त्यामः प्रवृत्त्या द्वित्वा-
त्वात् पूर्वमन्तरङ्गत्वाद्यादेशादेः प्रवृत्तेश्च नात्र सूत्रस्य चारितार्थ्यमित्य-
ास्तरः ।

द्वितीयद्विर्वचनस्यैवेति । यथेष्टं नामधातुष्वित्यनेनापि अनजादेरेव प्रथमस्य
स्य तृतीयस्यैकाचो द्वित्वेनोक्तरूपे णाकृशब्दादेरेव द्वित्वप्राप्त्योक्तदूषणासम्भव
ावः । एतेन—'मनस ओणको, मनश्रोणकः' तस्मात्क्यजन्तात्सनि 'मन-
ोयिषति' एवम् 'एधी'त्यस्य द्वित्वे ऽह्रस्वप्रकृतिभावे ततो रूपपि 'एधि+
रूपे'ति जाते तस्मात्क्विबन्तात्सनि एधूशब्दस्य द्वित्वे 'इयेधिएधिरूपिषि-
ादौ इयङाद्यर्थं सूत्रं चरितार्थमित्यपास्तम् ।

इयेषेति । ननु 'यदि गुणो न स्यात्तर्हि दीर्घः स्यात्, ततश्च लघूपधत्वाभावाद्
न स्यादि'ति सम्भावनायाः सत्त्वेन 'अकृतव्यूह'परिभाषया गुणस्याप्यप्राप्त्या
च्परकत्वेनोक्तसूत्रस्य चारितार्थ्यासम्भव इत्यत आह—आदावपि । तेन
'त्यत्र यदि गुणादिर्न स्यात्तर्हि दीर्घः स्यात्तर्ह्यपीगन्तत्वादेः सत्त्वाद् गुणादिः
ति सम्भावनायाः सत्त्वे'नाकृते'ति परिभाषाया गुणादिविषये प्रवृत्त्यभावेऽपि
या दीर्घस्य तया वारणेन गुणादौ कृते सूत्रं चरितार्थमिति भावः ।

---

अनजादेरेवेति । अजादीतरस्य प्रथमस्य द्वितीयस्य वा एकाच इति तदर्थः ।
नरभाष्यप्रामाण्यात् । अजादेस्त्वाद्येतरस्येति तु फलितार्थपरतया नेयम् । यद्वा—आद्येतर-
अजादीतरत्वेन सङ्कोचेऽजादीतराद्येतरस्य द्वित्वं भवतीत्यर्थः ।

न चान्तरङ्गत्वाद्दीर्घेऽपि 'इयाये'त्यादौ पूर्वान्तवत्त्वेनाभ्यासत्वाद्विवर्णत्वाच्च णल्यसवर्ण इयङ्विधानेन सूत्रं चरितार्थम् । न 'चाचिशिन्व'त्यनेन सिद्धिः, वृद्धिबाधनार्थत्वादिति वाच्यम्; प्रत्यासत्त्याऽसवर्णपदेनाभ्यासोत्तरखण्डसम्बन्ध्यसवर्णाच एव ग्रहणाच्छास्त्रबाधकल्पनापेक्षया परिभाषाज्ञापकत्वस्यैवौचित्याच्चेत्याहुः ।

**साचेयं धर्मिग्राहकमानादाङ्गवार्णयोः समानकार्यित्व एव ।**

---

वस्तुतस्तु—गुणस्यान्तरङ्गत्वाभावेन यदि गुणो न स्यात्तदा दीर्घः स्यादिति सम्भावनाया 'अकृते'ति परिभाषाप्रवृत्तिप्रयोजकत्वाभावात् । अन्तरङ्गशास्त्रप्रवृत्त्यभावसम्भावनाप्रयोज्याया बहिरङ्गेणान्तरङ्गनिमित्तविनाशसम्भावनाया एव तत्प्रवृत्तिप्रयोजकत्वा'दियेषे'त्यत्रापि दोपदानमुचितम् ।

प्रत्यासत्येति । द्वित्वशास्त्रीयविधेयताश्रयावधिकपूर्वस्याभ्यासत्वेनासवर्णाच्पदेनापि तादृशविधेयताश्रयघटकस्याच एव ग्रहणौचित्यादिति भावः । नन्वेतादृशप्रत्यासत्त्याश्रयणेन सूत्रवैयर्थ्योपपादनमयुक्तमित्यत आह—शास्त्रबाधेति ।

समानकार्यित्वेति । समानस्थानिकत्वे एवैषा प्रवर्तते, न तु समानोद्देश्यत्वे समाननिमित्तकत्वे वेत्यर्थः । समानोद्देश्यत्वे एतत्प्रवृत्तिस्वीकारे तु 'चच्छात्रि'त्यत्र

---

दोपदानमुचितमिति । वस्तुतस्तु—'वार्णादाङ्गमि'त्यादिः 'अकृतव्यूहाः' इत्यस्या एव प्रपञ्चः । तथा च अनयैव तत्तत्परिभाषान्यथासिद्धौ अस्यामपूर्वनिवेशे मानाभावात् मूले 'न चाकृतव्यूहे'त्यादिशङ्कासमाधानयोरुभयोरपि निर्दलत्वं बोध्यम् ।

सूत्रवैयर्थ्येति । 'अभ्यासस्य' इति सूत्रेत्यर्थः ।

शास्त्रबाधेतीति । वृद्धिशास्त्रबाधेति तदर्थः । अयम्भावः—यद्यपि शास्त्रबाधकल्पना नैयायिकी; तथापि सा अनैयायिकी, प्रत्यासत्तिन्यायत्यागकल्पनापूर्वकत्वात् । एवञ्च अनैयायिकप्रत्यासत्तिन्यायत्यागपूर्वकनैयायिकशास्त्रबाधकल्पनापेक्षया अनैयायिकपरिभाषाकल्पनायामेव लाघवमिति ।

एतेन—'अन्तरङ्गानपी'ति परिभाषाव्याख्यानावसरे नैयायिकबाधकल्पनापेक्षया परिभाषाज्ञापनमयुक्तमिति तवममादिबाधनार्थं सूत्रसार्थक्यं प्रदर्शितम्, प्रकृते तु विपरीतमित्ययुक्तोऽयं ग्रन्थ इति वदन्तः परास्ताः ।

समानस्थानिकत्वे एवैषा प्रवर्तत इति । समानस्थानिताकत्वञ्च वार्णशास्त्रीयस्थानितावच्छेदकधर्मप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूतस्थानिताकत्वम् । निष्कृष्टार्थस्तु—वार्णशास्त्रीयस्थानितावच्छेदकधर्मप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकीभूतधर्मः आङ्गशास्त्रीयस्थानितावच्छेदकधर्मप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकधर्मश्च एको यत्र, तत्र समानस्थानिकत्वमिति (यथा—'इयाय' इत्यत्र वार्णशास्त्रम्—'अकः सवर्णे दीर्घः' इति, तदीया स्थानिता पूर्वपरोभयेति त्रितयनिष्ठा, स्थानितावच्छेदकीभूतो धर्मः—यथा पूर्वत्वं

यत्तु—समाननिमित्तकत्वरूपसमानाश्रयत्व एवैपेति। तन्न; ज्ञापितेऽपि 'इयायेयेषे'त्याद्यसिद्धेः सूत्रवैयर्थ्यस्य तदवस्थत्वाच्च। स्योन इत्यत्र तु वक्ष्यमाणरीत्याऽस्या अनित्यत्वादप्रवृत्तौ गुणादन्तरङ्गत्वाद्यणादेशः।

---

'छाछा+अ' इति स्थितेऽन्तरङ्गत्वात्तुकि ह्रस्वो न प्राप्नोतीत्याशङ्क्याभ्यासविकारे वैयधिकरण्यान्वयेन समाधानपरभाष्यासङ्गत्यापत्तेः। तव मते तुग्ह्रस्वत्वयोः समानोद्देश्यत्वेन वार्णपरिभाषया पूर्वमेव ह्रस्वत्वे वैयधिकरण्येन ह्रस्वविधानं भाष्योक्तमसङ्गतमेव स्यात्। उछधातोर्लटि तिपि शपि 'उछ+अती'ति स्थिते तुग्गुणयोः समानोद्देश्यकत्वेन वार्णपरिभाषया पूर्वं गुणे 'उच्छती'ति रूपानापत्तिः। एवं 'गा+अ+आन' इति स्थिते मुग्दीर्घयोः समानोद्देश्यत्वेन वार्णपरिभाषया पूर्वं मुकि 'गामान' इति गाधातोरदादित्वे तु 'गान' इति रूपयोर्विलक्षणत्वेन "गाधातुरादादिकः, फले तु न भेद" इति मूलग्रन्थासङ्गतिश्च स्यादिति बोध्यम्।

समाननिमित्तत्वे एतत्प्रवृत्तिस्वीकारे दूषणमाह—ज्ञापितेऽपीति।

केचित्तु—वार्णशास्त्रीयेण सप्तम्यन्तेन पञ्चम्यन्तेन वा या व्यक्तिर्गृह्यते साऽऽङ्गशास्त्रीयेन केनचित्पदेन स्वप्रयोज्योपस्थितीयमुख्यविशेष्यतया गृह्यते तदा वार्णादाङ्गमित्यस्य विषयः। 'इयाये'त्यत्र दीर्घरूपवार्णशास्त्रीयेणाचीति सप्तम्यन्तपदेनानभ्यासेकाररूपव्यक्तिर्गृह्यते, सैव 'अचो ञ्णिती'ति शास्त्रीयनिर्दिश्यमानपदेनोपस्थितीयमुख्यविशेष्यतया गृह्यते इति तयोः समाननिमित्तकत्वम्। 'स्योन' इत्यत्र-वार्णशास्त्र 'इको यणची'त्यत्राचीत्यनेन सप्तम्यन्तेन 'ऊन' इति गृह्यते, तच्चाङ्गशास्त्रस्थेन केनापि पदेन न गृह्यते इति न तत्र तत्त्वम्। एवम् 'उच्छती'त्यत्रापि बोध्यम्। इत्थञ्च वार्णशास्त्रीयसप्तम्यन्तपञ्चम्यन्तान्यतरपदप्रयोज्यविषयतापर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूतोपस्थितीयमुख्यविशेष्यताप्रयोजकपदघटितत्वं वार्णसमाननिमित्तकत्वमाङ्गशास्त्रस्य परिष्कृतं पर्यवसितम्। 'गा+अ+आते' इत्यत्र 'अकः सवर्णे' इति वार्णशास्त्रीयसप्तम्यन्ताच्पदप्रयोज्यविषयतापर्याप्त्यनुयोगितावच्छेदकधर्मः शब्वृत्तितद्व्यक्तित्वम्, 'आतो ङित' एतच्छास्त्रीयात

---

द्वित्वञ्च तथा परत्वमपि, तादृशपरत्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकीभूतो धर्मः—इकारवृत्तितद्व्यक्तित्वरूपः, तद्धर्मावच्छिन्नानुयोगिताकपर्याप्तिः—अच्त्वप्रतियोगिताकपर्याप्तिः, तादृशपर्याप्तिप्रतियोगिभूतो धर्मः—अच्त्वम्, तद्धर्मावच्छिन्नस्थानिताकत्वम्—'अचोऽञ्णिति' इत्यत्र लक्षणसमन्वयः), न तु वार्णशास्त्रीयस्थानितापर्याप्त्यधिकरणपर्याप्तस्थानिकताकत्वं तत्, ज्ञापकपरभाष्यविरोधात्। 'अल्लोपोऽनः' इत्यस्य अकारावच्छेदेन अन एव लोप इति समानस्थानिताकत्वाभावेन 'शुन' इत्यत्र सम्प्रसारणात् पूर्वमल्लोपो न; अन्यथा अल्लोपस्य स्थानिवद्भावेन उकारस्य स्थाने यणापत्तिः स्यात्। ज्ञापकसाजात्यात् भावकार्ये एव परिभाषाप्रवृत्त्यङ्गीकारे तु नात्र दोष इति तत्त्वम्।

**न चैवमपीयायेत्यादावियङ् दुर्लभः; तत्र कर्तव्ये वृद्ध्यादेः स्थानिवत्त्वेनासवर्ण इति प्रतिषेधादिति वाच्यम्; सूत्रारम्भसामर्थ्यादेव स्थानिवत्त्वाप्रवृत्तेः।**

---

इत्यस्यादन्तादित्यर्थेन तत्प्रयोज्योपस्थितीयमुख्यविशेष्यताया 'गा अ' इत्यदन्ते सत्त्वेन तादृशधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिभूतोपस्थितीयात्वावच्छिन्नविषयताया अदन्तनिष्ठविशेष्यतानिरूपितप्रकारतासमानाधिकरणत्वेन मुख्यत्वाभावात्। अदन्तत्वावच्छिन्नोपस्थितीयमुख्यविशेष्यतायाश्च तादृशधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वाभावेनोक्तसमानिमित्तकत्वाभावेन 'आतो ङित' इत्यस्य पूर्वमप्रवृत्त्या नोक्तदोषावकाशः। एवं 'गान' इत्यत्राप्यूह्यम्।

वृद्ध्यादेः स्थानिवत्त्वेनेति। न 'चेयाये'त्यादौ ऐकारे स्थानिवत्त्वे सवर्णत्वमानीयायादेशे पुनः स्थानिवत्त्वेन तदानयनं दुर्लभं, लक्ष्ये लक्षणन्यायेनात्र लक्ष्ये द्विवारं स्थानिवद्भावाप्रसक्तेरिति वाच्यम्; यूनिस्तिरि'ति निर्देशेन स्थानिवद्भावविषये लक्ष्ये लक्षणन्यायाप्रवृत्तेर्ज्ञापनेनादोषात्। अन्यथा 'यून' इत्यत्र पूर्वरूपस्याचः परस्मिन्नित्यनेन सम्प्रसारणत्वेऽपि सवर्णदीर्घे कृते लक्ष्ये लक्षणन्यायेन पुनः स्थानिवत्त्वाप्राप्त्या दीर्घस्य सम्प्रसारणत्वाभावेन 'न सम्प्रसारण' इति निषेधाप्राप्त्योक्तनिर्देशासङ्गतिः स्पष्टैव। किञ्चात्र पूर्वं स्थानिवद्भावेन ऐकारो न जातः इकारो न निवृत्त इति बुद्धिः क्रियेत तर्हि द्वितीयस्थानिवद्भावेन आय्शब्दो न जात ऐकारो न निवृत्त इति बुद्धिः कर्तुमशक्या, द्वितीयस्थानिवद्भावप्रवृत्तिकाले ऐकाराभावात्। किन्त्वायादेशो न जात ऐकारो न निवृत्त इत्येवं बुद्धिः पूर्वं करणीया, तत ऐकारो न जात इकारो न निवृत्त इत्येवं बुद्धिः। तथा च स्थानिवत्सूत्रस्य प्राथमिकप्रवृत्तिकाले उद्देश्यत्वेनाऽऽश्रीयमाणः आय्शब्दः स्वाघटकत्वस्वघटकमात्रोद्देश्यकविकारेतरत्वोभयसम्बन्धेन तद्विशिष्ट ऐकारस्तद्घटितत्वेन तद्घटितत्वरूपतल्लक्ष्यत्वस्यैकारेऽभावेन लक्ष्ये लक्षणन्यायाप्रवृत्तेः। पूर्वरीत्या आयादेशे सवर्णत्वबुद्धावप्याकाररूपासवर्णमादायेयादेशस्य दुर्वारत्वाच्च।

नन्वेवमपि 'इयतीयेथे'त्यादौ सूत्रं चरितार्थम्। न 'चाभ्यासस्याय्वोरि'ति न्यासेनेकारोकारभिन्नेऽचि परत इयङादिविधानादुक्तरूपसिद्धेरनेकमात्रागुरुभूतोक्तसूत्रारम्भसामर्थ्येनोक्तार्थज्ञापने बाधकाभाव इति वाच्यम्; सिद्धान्तेऽप्येतादृशन्यासस्य लाघवेनाऽऽदरणीयतया स्वांशे चारितार्थ्याभावेनोक्तार्थज्ञापनासम्भवादिति चेन्न। 'अभ्यासस्यानावि'ति न्यासेनेकारभिन्नेऽचीयङ्भवतीत्यर्थकेनोक्त-

---

तादृशधर्मावच्छिन्नेति। गावृत्तितद्व्यक्तित्वावच्छिन्नेति तदर्थः। एवमग्रेऽपि तादृशधर्मपदेन उक्तधर्मो ग्राह्यः। प्रतियोगिकत्वाभावेनेति। अपि तु 'गा अ' इत्येतद्वृत्तितद्व्यक्तित्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकत्वमिति भावः।

सूत्रं चरितार्थमिति। स्थानिभूतादचः पूर्वत्वाभावेन तत्र स्थानिवद्भावाप्राप्तेरिति भावः। इयङ् भवतीत्यर्थकेनेति। नन्वेवं 'ऊखतुः' इत्यत्र 'उ+उख+अतुस्' इत्यवस्थायां

तच्च सामान्यापेक्षमभ्यासकार्ये तदुत्तरखण्डादेशस्य तत्कार्यप्रतिबन्धकीभूत-स्थानिवत्त्वं नेति । अत एव 'आवृती'त्यादौ यणादेशस्य स्थानिवत्त्वादभ्यासस्य 'ढ्रलोप' इति दीर्घो दुर्लभ इत्यपास्तम् । दीर्घविधौ तन्निषेधाच्च । 'अरियियादि'त्यत्र तु स्थानिवत्त्वेनेयङ् भवत्येव, तस्य स्थानिवत्त्वस्याभ्यासकार्य-प्रतिबन्धकत्वाभावात् ।

---

स्थलेष्वियङ्सिद्धेर्यथाश्रुतन्यासस्योक्तार्थज्ञापकत्वमिति तदाशयकल्पनेनादोषात् । न च उधातोस्थलि 'उवोथे'त्यत्रोवङर्थं तदावश्यकमिति वाच्यम्; उधातोर्ङित्त्वेन तत-स्थलोसम्भवात्, उशब्दादाचारक्विबन्तालिटि तु नव्यमते प्रत्ययान्तत्वेनाऽऽमो दुर्वारत्वाच्च ।

अभ्यासकार्ये इति । तेन 'निन्य' इत्यादौ 'अनिदितामि'ति नलोपो न। तदुत्तरखण्डेति । तेन 'वव्रश्चे'त्यत्रोरदत्वस्य स्थानिवद्भावे कृते 'न सम्प्रसारण'इति निषेधसिद्धिः । प्रतिबन्धकीभूतेति । चिन्त्यमेतत्—फलाभावात् 'अरियरियादि'त्यत्र त्वन्तरङ्गत्वाद्रिङादेशात् प्रागेवेयङादेशप्रवृत्तेः । इधातोर्लिटि 'इयतुरि'-त्यत्र यणः स्थानिवत्त्वेनाभ्यासेकारस्य 'इको यणची'ति यणापत्तेः, इयाये'त्यत्राप्याया-यादेशस्य स्थानिवत्त्वेन लघूपधत्वादभ्यासेकारस्य गुणापत्तेश्च । किञ्च 'अरियियादि'-त्यत्र पूर्वं रिङादेशे यलोपापत्तिः । स्थानिवत्त्वं तु न, पूर्वत्वेन दृष्टत्वाभावात् । नापि रिङो बहिरङ्गासिद्धत्वम्, 'अचद्यूरि'त्यत्रेव द्वितीयार्थकेन 'नाजानन्तर्ये' इत्यनेन तन्निषेधात् । 'अभ्यासकार्ये' इति वचनफलन्तु 'अचीकमते'ति; अन्यथोपधाह्रस्वस्य स्थानिवत्त्वे काशब्दाकारस्य लघुत्वाभावेन सन्वद्भावाप्रवृत्त्यापत्तिरिति बोध्यम् । न च 'दीर्घो लघोरि'ति सूत्रारम्भसामर्थ्येन न स्थानिवत्त्वमिति वाच्यम्; पत-

---

सवर्णदीर्घं बाधित्वा आङ्गत्वादनेन इयङ् स्यात्, य्वोरित्यनुवृत्तौ तु उवङ् स्यादिति चेत्— सत्यम् । 'अभ्यासस्यासवर्णे, श्रियाः, वाऽमृशसोः, एरनेकाचोऽसंयोगपूर्वस्य' इति सूत्रचतुष्टयी-स्थाने 'एरभ्यासस्यानौ श्रियाः वाऽमृशसोः अनेकाचोऽसंयोगपूर्वस्य' इति चतुष्टयीकरणे तात्पर्येणादोषात् । न च 'उवोख' इत्यादौ उवङर्थं यथास्थितन्यासस्याऽऽवश्यकत्वमिति वाच्यम्; स्थानिवद्भावेन सवर्णपरत्वेन सिद्धान्तेऽपि तदप्राप्तेः । स्थानिवद्भावज्ञापने तु अत्रैव उवङ्सिद्धये तथान्यासः कर्तुमशक्य इति स्वांशे चारितार्थ्यं सूपपादम् ।

नलोपो नेति । न च यणि कृतेऽसंयोगपूर्वत्वाभावात् 'न कित्संज्ञे'ति न नकारलोप इति वाच्यम्; ततः पूर्वमेव तस्य प्रवृत्त्या कित्संज्ञाया अक्षतेः । न च पूर्वं कित्त्वं न स्यात्तर्हि यणि कृते संयोगपूर्वकत्वादसंयोग इति निषेधः स्यादिति सम्भावनायाः सत्त्वात् 'उपसञ्जनिष्यमाण'न्यायेन पूर्वमेव कित्त्वं नेति वाच्यम्; यणुपजीव्यत्वात् कित्त्वस्य तादृशसम्भावनां कर्तुमशक्यत्वात् । कित्त्वाभावे गुणप्रसक्तेः । इधातोरिति । 'इट किट कटी'त्यत्र प्रश्लिष्टस्य ह्रस्वस्य इधातोरित्यर्थः, न तु 'इण् गतौ' इत्यस्य ग्रहणम्, तत्र दीर्घइणः क्रितीत्यनेन यणो बाधात् ।

शब्दादाचारक्विबन्तात् कर्तरि क्विपि अल्लोपे ततः प्रातिपदिकणिचि चङि 'अपी पतदि'त्यत्र तच्चारितार्थ्यात्। अत्राल्लोपस्य स्थानिवत्त्वान्नोपधाकार्यम्। दीर्घे त्वल्लोपस्य स्थानिवत्त्वेऽप्यभ्यासस्य लघुपरत्वात्ततेर्दीर्घविधौ तन्निषेधाच्च 'दीर्घो लघोरि'त्यस्य चारितार्थ्यसम्भवात्। णिनिमित्तकाल्लोपाभावेन 'अनग्लोप' इत्यस्यापि विषयाभावादिति बोध्यम्।

नन्वेवं 'विव्यतुरि'त्यत्रानेन निषेधात् स्थानिवद्भावाप्राप्त्या 'उपधायां चे'ति दीर्घापत्तिरिति चेन्न। एतद्वचनस्य 'अभ्यासस्ये'ति सूत्रदेशस्थत्वेन सापादिकतया त्रैपादिकोपधादीर्घेऽप्रवृत्तेः। न 'चौननदि'त्यादावनेन निषेधात् स्थानिवद्भावाप्राप्त्यो-पधावृद्ध्यापत्तिरिति वाच्यम्; उत्तरखण्डस्यार्थवतो ग्रहणेनात्रोत्तरखण्डस्य नेत्य-स्यान्[illegible]निषेधानङ्गीकारात्[illegible]; 'औनिनदि'त्यस्यैव साधुत्वेन ग्रन्थकृतामभिप्रेत-त्वाच्च। नचैवं वारणेऽपि 'दधावि'त्यत्र स्थानिवत्त्वनिषेधादुपधावृद्ध्यापत्तिर्दुर्वारेति वाच्यम्; उत्तरखण्डमात्राजादेशस्येत्यर्थेनादोषात्। अत एवेति। स्थानिवत्त्वनिषेध कैतद्वचनस्वीकारादेवेत्यर्थः।

वस्तुतः—अत्र निषेधस्य नोपयोगः। 'शिवोऽर्च्य' इत्यादौ रुशब्दाभावेऽपि 'अतो-रोरि'ति शास्त्रं प्रवृत्तमिति जानन्नपि 'आद्गुण' इति शास्त्रं स्वीयोद्देश्यतावच्छेदका-क्रान्ति दृष्ट्वा यथा प्रवर्तते, तथैवात्र ऋकारे परेऽपि 'रोरी'ति शास्त्रं प्रवृत्तमिति जानन् मदीयनिमित्तस्य रेफलोपप्रयोजकस्य ऋकारस्य सत्त्वेन रेफलोपप्रयोजकवर्ण-मात्रनिमित्तकं 'ढ्लोप'इति शास्त्र'मारती'त्यत्र प्रवर्तेत। 'ढ्लोप'सूत्रे ढरयोरित्यस्या-नुवृत्त्यभावेन तयोस्तेन रूपेण निमित्तत्वाभावात्। अत एव तत्र वृत्तौ 'अर्थात् ढकाररेफात्मके' इत्युक्तम्। दीर्घविधाविति समाधानमप्ययुक्तमेव। स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवदित्युक्तेः। न चात्र दीर्घग्रहणस्य फलाभावः। 'जनावि'-त्यत्रोपधादीर्घवारणाय तस्यावश्यकत्वात्।

---

औनिनदित्यस्यैव साधुत्वेनेति। शेखरकृन्मते णिच्यच आदेशो न द्वित्वे कर्तव्ये इत्यस्य 'ओः पुयण्जि'ति सूत्रेण ज्ञापितत्वात् ज्ञापकसाजात्यात् 'उवर्णरूपाजादेशो न' इत्यर्थेनात्रा-भावः। उद्योते शेखरे च स्पष्टमेतत्।

दीर्घग्रहणस्येति। त्रैपादिकातिरिक्तस्य दीर्घग्रहणस्येति तदर्थः। तस्याऽऽवश्यक-त्वादिति। अन्ये तु—'स्वरदीर्घयलोपे'त्यत्र दीर्घपदेन त्रैपादिक एव गृह्यते; अन्यथा 'विव्यतुः, किर्योः, गिर्योः' इत्यत्र तन्नियमेन प्राप्तेऽपि स्थानिवत्त्वे पूर्वत्रासिद्धे न स्थानिवदिति निषेधस्य दुर्वा-रतया पूर्वत्र दीर्घो दुर्वार एव स्यात्। मन्मते तु 'स्वरदीर्घे'त्यत्र दीर्घेत्यस्य पूर्वत्रासिद्धेत्यस्य च समानविषयतया 'स्वरदीर्घे'त्यनेन बाधात् तद्विषये पूर्वत्रासिद्धेत्यस्याप्रवृत्तिरिति न 'विव्यतुरि'त्यादौ दोषः। नचैवं 'जनौ' इत्यत्र दीर्घः स्यात्; स्वरदीर्घे'त्यत्र तु त्रिपादीविहितस्यैव दीर्घस्यैव ग्रह-णेऽपि सूत्रे सामान्येन उपात्तदीर्घग्रहणेन स्थानिवत्त्वनिषेधात्। न च दीर्घग्रहणं प्रत्याख्यातम्; 'वार्यकोटौ दीर्घोऽप्युपलक्षणीय' इति सिद्धान्तितत्वादिति वाच्यम्; नान्ताद्विहिते सर्वनामस्थाने परे दीर्घविधानेनात्र तदप्राप्तेः। 'शतानि, सहस्राणि' इत्यत्र तु नुम्विधायके विषयसप्तमीस्वीकारेण विभक्त्युत्पत्तेः प्रागेव नुमागम इति मूलाभिप्रायं वर्णयन्ति।

**इयं चाङ्गसम्बन्धिन्याङ्ग एवेति 'स्वरितो वे'ति सूत्रे भाष्ये । तत्र हि 'कुमार्यै' इत्यादौ यणुत्तरमाडुक्तः । इयं चानित्या, 'छ्वोरिति' सतुग्निर्देशात् । अन्यथा अन्तरङ्गत्वात् पूर्वं तुकः शादेशे तुकोऽप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेत्यन्यत्र विस्तरः ॥ ५५ ॥**

---

ननु वार्णाङ्गयोः समानस्थानित्व एवैतत्प्रवृत्तिस्वीकारे 'वारि+ई' इत्यवस्थाया-मुक्तयुक्त्या वार्णपरिभाषाया अप्रवृत्त्याऽन्तरङ्गत्वात् सवर्णदीर्घापत्तिः । न च नुमो दीर्घापवादत्वम् । सकललक्ष्यप्राप्तत्वेन यणपवादत्वस्यैव न्याय्यत्वात् । समाननिमि-त्तकत्व एवैतत्प्रवृत्तिस्वीकारे तु कारक इत्यत्र यण्वृद्ध्योरुक्तसमाननिमित्तत्वाभावे-नान्तरङ्गत्वाद्यणापत्तिश्चेत्यत आह—अङ्गसम्बन्धीति । अङ्गावयवसम्बन्धीत्यर्थः, तेन न धर्मिग्राहकमानविरोधः । तथा च समाननिमित्तकेति समानस्थानिकेति चानुक्त्वै-तदेव वक्तव्यमिति भावः । नन्वेवं 'छ्वोरि'ति सूत्रे सतुक्निर्देशो व्यर्थः, वार्णपरि-भाषया तुकं बाधित्वा पूर्वमेव शादेशप्रवृत्तेरित्यत आह—इयं चानित्येति । न चात्र वार्णाङ्गयोरेककाले प्रवृत्त्यभावेनैतदप्रवृत्त्या अन्तरङ्गत्वाच्छादेशात् पूर्वं तुकः प्रवृत्तेस्तद-भावार्थं सतुक्निर्देशस्याऽऽवश्यकत्वमिति वाच्यम्; अङ्गकार्यप्रवृत्तिसम्भावना-यामपि वार्णपरिभाषाप्रवृत्तेः स्वीकारेणादोषात् । अत एव 'अध्यैयातामि'त्यत्र लाव-स्थायामस्त्यपीयङ्रूपाङ्गकार्यप्रवृत्तिसम्भावनायां पूर्वं'माटश्चे'ति वृद्ध्यभावः; अन्य-थाऽन्तरङ्गत्वा'दाटश्चे'ति वृद्ध्युत्तरमियङ्प्राप्त्याऽऽयादेश उपसर्गस्य यणि 'अध्या-यातामि'त्यस्यापत्तेः ।

केचित्तु—धर्मिग्राहकमानाद्वार्णाङ्गयोः समानस्थानिकत्वे समाननिमित्तकत्वे वैत-त्प्रवृत्तिस्वीकारेण तुक्शत्वयोस्तथात्वाभावादेतदप्रवृत्त्याऽन्तरङ्गत्वात्तुकि तन्निवृत्तये सतु[illegible]निर्देशावश्यकत्वे तस्य तदनित्यत्वे ज्ञापकत्वासम्भवः, फलाभावश्च । न च 'मघोन' इत्यादौ सम्प्रसारणे मघ+उ+अन्+अस्' इति स्थिते पूर्वरूपं बाधि-त्वाऽऽद्गुणत्वा'दल्लोपो न' इत्यल्लोपे विभक्तेरुदात्तनिवृत्तिस्वरापत्तिः, एतदनित्यत्वेना-न्त[illegible] त्विप्रत्स्वरः सिद्ध्यतीति वाच्यम्; ज्ञापकसाजात्यादस्याः भाव-कार्य[illegible]कत्वकल्पनेनादोषात् । वार्णशास्त्रीयेण सप्तम्यन्तपञ्चम्यन्तान्यतरपदेन या व[illegible] गृह्यते तदादिसमुदायो यत्राङ्गशास्त्रीयपदेन स्वप्रयोज्यपस्थितीयमुख्यविशेष्यतया

---

केचित्तु—'[illegible]'त्यत्र दीर्घपदेन उपधादीर्घ एव गृह्यते इति वदन्ति ।

नन्, '[illegible]ङ्ग एव' इति ग्रन्थासङ्गतिः, एवं 'इयञ्चानित्ये'ति वक्ष्यमाण-[illegible] । यणादेः समानस्थानिकत्वाभावेन परिभाषाप्राप्त्यभावादित्यतोऽवतरणमुखेन [illegible]—नन्विति ।

अ[illegible]न्धीत्यर्थ इति । वस्तुतः—अङ्गसम्बन्धिनीति मूलं चिन्त्यमेव, 'ज्ञाने ज्ञानानि' [illegible] '[illegible]' इति श्यादेशात् पूर्वं वृद्धिसवर्णदीर्घयोरापत्तेः । न च श्यादेश-[illegible]; [illegible] चारितार्थ्यादितः सिद्धान्तं प्रतिपादयन्नाह—केचित्त्विति ॥ ५५ ॥

नन्वेवं 'सेदुष' इत्यादौ क्वसोरन्तरङ्गत्वादिटि ततः संप्रसारणेऽपीटः श्रवणापत्तिरिति चेत्, अत्र केचित्—

## अकृतव्यूहाः पाणिनीयाः ॥ ५६ ॥

न कृतो विशिष्ट ऊहो = निश्चयः, शास्त्रप्रवृत्तिविषयो यैरित्यर्थः। भाविनिमित्तविनाश इत्यध्याहारः। बहिरङ्गेणान्तरङ्गस्य निमित्तविनाशे पश्चात् सम्भाविते ऽन्तरङ्गं नेति यावत्।

अत्र च ज्ञापकं 'समर्थानां प्रथमाद्'िति सूत्रे समर्थानामिति। तद्धि सूत्थितादिभ्यः कृतदीर्घेभ्यः प्रत्ययोत्पत्त्यर्थम्, अन्यथाऽन्तरङ्गत्वाद्दीर्घे कृत एव प्रत्ययप्राप्त्या तद्व्यर्थता स्पष्टैव। तत्र हि भाविन्यादिवृद्ध्या सवर्णाच्त्वविनाशः स्पष्ट एव।

न चात्रैकादेशप्रवृत्तिसमये वृद्ध्यप्राप्त्येकादेशे कृत आदेशे वृद्धेः प्राप्ता-

---

गृह्यते इत्येतादृशसमाननिमित्तत्वपरिष्कारेण 'कारक' इत्यत्र 'इको यणची'ति शास्त्रीयाच्पदेनाकसम्बन्ध्यकारो गृह्यते तदादिरकशब्दो वृद्धिविधायकशास्त्रीयपदेन स्वप्रयोज्योपस्थितीयमुख्यविशेष्यतया गृह्यत इति तयोः समाननिमित्तकत्वेनानया पूर्वं वृद्धिसिद्धिः। समानस्थानिकत्व एतत्प्रवृत्तिस्वीकर्तृमतेऽपि 'वारिणी'त्यादौ नुमा बाध्यसामान्यचिन्तया दीर्घस्यापि बाधकल्पनान्न दोषः। अत एव 'राजन्य' इत्यत्र 'यचि भमि'त्यनेन 'सुप्तिङन्तमि'ति पदसंज्ञाया अपि बाधेन नलोप इति प्राहुः ॥ ५५ ॥

एवम् = लौकिकान्तरङ्गपरिभाषास्वीकारे। अन्तरङ्गत्वादिटीति। 'सेदुष' इत्यादाविट्प्रवृत्तिकाले सम्प्रसारणस्याप्राप्तिरूपबहिरङ्गत्वेनासिद्धत्वाल्लौकिकान्तरङ्गपरिभाषया पूर्वमिटीत्यर्थः।

---

सम्प्रसारणस्याप्राप्तिरूपेति। क्रमिकान्वाख्यानपक्षाभ्युपगमादिति भावः।

मूले—इटः श्रवणापत्तिरितीति। न च सम्प्रसारणोत्तरं यण् भविष्यति, सम्प्रसारणस्यासिद्धत्वन्तु न 'नाजानन्तर्ये' इति निषेधात्, तथा च तस्य वलिलोपे कर्तव्ये सम्प्रसारणस्यासिद्धत्वेन लोपे कृते 'सेदुष' सिद्धमिति वाच्यम्; प्राचां मते वलिलोपे 'अन्तरङ्ग'परिभाषाया अप्रवृत्तेः, नवीनमतेऽपि अजानन्तर्यनिमित्तके अन्तरङ्गे कर्तव्ये कृते च तस्मिन् यदन्तरङ्गं प्राप्नोतीत्यर्थेन 'नाजानन्तर्ये' इत्यनेन निषेधाच्च। नन्वेवमपि यणः श्रवणापत्तिरिति वक्तव्यमिति चेन्न। मूलकारमते 'नाजानन्तर्ये' इति परिभाषाया असत्त्वात्, इट इत्यस्य तत्स्थानिकयण इत्यर्थेनादोषाच्च।

वपि तन्निमित्तविनाशाभाव इति वाच्यम्; तद्द्वारैव तन्निमित्तविनाशसत्त्वेनाक्षतेः । न च सौत्थितौ बहिरङ्गतया वृद्धेरसिद्धत्वान्न तन्निमित्तविनाश इति वाच्यम्; समर्थग्रहणेनैतद्विषये तस्या अप्रवृत्तेरपि ज्ञापनात् ।

यत्तु—समर्थग्रहणेनान्तरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यत इति । तन्न; असिद्धपरिभाषया समकालप्राप्तबहिरङ्गस्य पूर्वं जातबहिरङ्गस्य चान्तरङ्गे कर्तव्येऽसिद्धत्वं बोध्यते न तु जातेऽन्तरङ्गे तस्य तत्त्वं बोध्यते, मानाभावात् फला-

---

तन्निमित्तविनाशाभाव इति । सवर्णदीर्घेणैव तन्निमित्तविनाशस्य कृतत्वाद् वृद्धया सवर्णदीर्घनिमित्तविनाशाभाव इत्यर्थः । तद्द्वारैवेति । वृद्धयाऽऽदेशविनाशेनाशेनाऽऽदेशाविनाशप्रयुक्त औपचारिकः सवर्णदीर्घनिमित्तविनाश इति भावः । तथा च बहिरङ्गेणान्तरङ्गनिमित्तविनाशे तत्स्थानिकादेशविनाशे पश्चात्सम्भाविते सति पूर्वमन्तरङ्गं न प्रवर्तत इति परिभाषार्थः । अत्र पश्चात्पदोपादानं तु यत्रान्तरङ्गप्रवृत्तियोग्यकालोत्तरमेवान्तरङ्गनिमित्तविनाशकबहिरङ्गप्राप्तिरिति पूर्वोक्तार्थं बोधयितुम् । न तन्निमित्तविनाश इति । 'अकृतव्यूह'परिभाषारूपेऽन्तरङ्गे कर्तव्ये वृद्धेरसिद्धत्वान्नान्तरङ्गनिमित्तविनाशज्ञानमकृतव्यूहेति परिभाषाया इति नात्र प्रकृतपरिभाषाप्रवृत्त्यवकाशः । एतस्या अन्तरङ्गत्वन्तु सवर्णदीर्घरूपान्तरङ्गनिमित्तनिमित्तकत्वाद् बोध्यमिति भावः । समर्थेति । एतत्परिभाषाविषये निरुक्तरीत्याऽन्तरङ्गपरिभाषाप्रवृत्तिस्वीकारे तु समर्थग्रहणवैयर्थ्यापत्त्याऽकृतव्यूहपरिभाषारूपान्तरङ्गे कर्तव्येऽन्तरङ्गपरिभाषाया अप्रवृत्तिकल्पनादिति भावः ।

यत्त्विति । अन्तरङ्गपरिभाषाया अनित्यत्वेनान्तरङ्गत्वात् इडाद्यप्राप्तिरित्यकृत-

---

अकृतव्यूहपरिभाषारूपेऽन्तरङ्ग इति । अयम्भावः—'अकृतव्यूह'परिभाषाज्ञापनोत्तरं 'सौत्थितिः' इत्यत्र सवर्णदीर्घप्रतिबन्धाय प्रकृतपरिभाषाप्रवृत्तिसमये बहिरङ्गेण दीर्घनिमित्तविनाशसम्भावना अस्ति न वेति पर्यालोचनाया तन्नाशकवृद्धेरुपस्थित्या समकालस्यासिद्धत्वबोधनेन निमित्तविनाशासम्भावनया दीर्घप्रवृत्तौ व्यर्थीभूतसमर्थग्रहणेन तदप्रवृत्तिरपि ज्ञाप्यत इति ।

एतेन—एतदग्रे एव "असिद्ध'परिभाषया समकालप्राप्तबहिरङ्गस्य जातबहिरङ्गस्य अन्तरङ्गे कर्तव्ये असिद्धत्वं बोध्यते, न तु अन्तरङ्गे जाते बहिरङ्गस्यासिद्धत्वं बोध्यते, मानाभावात् फलाभावाच्च" इति ग्रन्थः एतद्ग्रन्थविरुद्ध इति वदन्तः परास्ताः । 'अकृतव्यूह'परिभाषाज्ञापनं विना तत्समकालमप्राप्त्या वृद्धेरसिद्धत्वबोधने नैष्फल्यात् ।

वस्तुतस्तु—'अकृतव्यूह'परिभाषया अन्तरङ्गशास्त्रस्य निमित्तकोटौ भाविनिमित्तविनाशाभावोऽपि निमित्तमिति बोध्यत इति तत्प्रवृत्तिवेलायां तत्पर्यालोचने तन्नाशकवृद्धेरुपस्थिततयाऽस्ति दीर्घप्राप्तिसमकालिकत्वं वृद्धिशास्त्रस्येति अन्तरङ्गनिमित्तनिमित्तकत्वेन परिभाषाया एवान्तरङ्गत्वकल्पनाप्रयासो व्यर्थ एवेति तत्त्वविदो वदन्ति ।

भावाच्च । एवञ्च सुत्थितादावेकादेशस्य परिभाषासाध्यत्वाभावेन तदनित्यत्वज्ञापनासम्भवात् ।

'अन्तरङ्गानपि विधीनि'त्यादेरप्यस्यामेवान्तर्भावः । एतत्प्रवृत्तौ च निमित्तविनाशसम्भावनाऽपि निमित्तम् । अत एव 'गोमद्दण्डी'त्यादौ हल्ङ्यादिलोपो न ; अन्यथा हल्ङ्यादिलोपकाले सामासिकलुकोऽप्राप्त्या तदुत्तरं चापद्दोर्याभावादप्राप्त्या लोपस्यैवाऽऽपत्तेः । अस्ति चात्रापि यदि लोपो न स्यात्तर्हि लुक् स्यादिति सम्भावना । 'अल्लोपोऽनः'इति सूत्रस्थतपरकरणन्तु परिभाषानित्यत्वज्ञापनेन चरितार्थम् । तद्धि 'आन' इत्यादौ लोपवारणाय ; अन्यथा दीर्घाभावे लोपसम्भावनयैतत्परिभाषाबलाद्दीर्घाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेवेत्याहुः ।

'समर्थानामि'ति सूत्रे कैयटस्तु समर्थवचनेनेयं परिभाषा ज्ञाप्यते—अकृतव्यूहाः पाणिनीया इति, तेन 'पपुष' इत्यादावन्तरङ्गत्वात्पूर्वं कृतोऽपीडागमो निवर्तत इति वदन् न कृतो व्यूहो विशिष्टस्तर्को निमित्तकारणविनाशेऽपि कार्यस्थितिरूपो यैरित्यर्थमभिप्रैति । निमित्तापाये नैमित्तिकस्याप्यपाय इति

---

व्यूहपरिभाषावैयर्थ्यमेवेति भावः । परिभाषासाध्यत्वाभावेनेति । पूर्वोक्तज्ञापकसिद्धान्तरङ्गपरिभाषाया अप्राप्त्या तदनित्यत्वज्ञापनासम्भवादित्यर्थः ।

केचित्तु—लौकिकान्तरङ्गपरिभाषाया अत्र समर्थग्रहणेनाप्रवृत्तिकल्पनायां पूर्वमिडादेरप्राप्त्या 'सेदुष' इत्यादौ दोषाभावेन परिभाषैषा व्यर्थेति वदन्ति ।

निमित्तविनाशसम्भावनाऽपीति । इयञ्च सम्भावनाऽन्तरङ्गशास्त्रप्रवृत्त्यभावसम्भावनाप्रयोज्या बोध्या, न त्वन्तरङ्गशास्त्रप्रवृत्तिसम्भावनाप्रयोज्या ; अन्यथा भाविनिमित्तविनाश इत्यध्याहारेणैवैतदर्थलाभे एतत्कथनवैयर्थ्यापत्तेः । अत एवाग्रे "अस्ति चात्रापि यदि लोपो न स्यात्" इत्यादिना तथैवोपपादितम् । तथा च स्वप्रवृत्त्यभावसम्भावनाप्रयोज्या यत्र बहिरङ्गेण स्वनिमित्तविनाशसम्भावना तत्र स्वमन्तरङ्गं पूर्वं न प्रवर्तत इति प्राचीनाभिप्रेतो निरुक्तपरिभाषाया मुख्यार्थः । एतावत्पर्यन्तं परिभाषाविषयपरिशीलनन्तु प्राचीनोक्तमतिक्रम्यति परान् बोधयितुमिति दिक् ।

अनित्यत्वज्ञापनेन चरितार्थमिति । दानशान्भ्यां क्विपि 'दान' इत्यादौ लोपवारणन्तु न तत्फलम्, अर्थविशेषे सनः प्रवृत्त्याऽर्थान्तरे तु नित्यण्यन्तत्वेन च तत्राल्लोपाप्राप्तेः । आहुरिति । दीक्षितप्रभृतय इत्यर्थः ।

---

मुख्यार्थ इति । एवञ्च निमित्तविनाशसम्भावनाऽपि निमित्तमित्यत्र अपिशब्दोऽवधारणार्थे, अन्तरङ्गशास्त्रप्रवृत्त्यभावसम्भावनाप्रयोज्यनिमित्तविनाशसम्भावनैव निमित्तमिति तदर्थः । तथा च 'सौत्थितिः' इत्यादौ निमित्तविनाशे आदेशपरम्परा न ग्राह्या भवति ।

यावत्। सूत्थितादिति वृद्धौ दीर्घनिवृत्तौ सावुत्थितिर्मा भूदिति समर्थानामिति।

लोकन्यायसिद्धश्चायमर्थः। तथा हि लोके निमित्तं द्विविधं दृष्टम्—कार्यस्थितौ नियामकं तदनियामकञ्च। आद्यं यथा—न्यायनयेऽपेक्षाबुद्धिः, तन्नाशे द्वित्वनाशाभ्युपगमात्, वेदान्तिनये प्रारब्धस्य विक्षेपस्थितिनियामकत्वं च प्रसिद्धमेव। द्वितीयं यथा—दण्डादि, तन्नाशेऽपि घटनाशादर्शनात्। शास्त्रे लक्ष्यानुरोधाद् व्यवस्था।

---

सावुत्थितिर्मा भूदिति। सवर्णदीर्घेण स्थानिनिवृत्तिः क्रियते। तथा च 'सौत्थिति-रि'त्यत्रोकारद्वयनिवृत्तिनिमित्तस्य सवर्णदीर्घरूपाकारस्याऽऽदिवृद्ध्याऽपाये जाते स्थानि-रूपोकारद्वयनिवृत्तिरूपस्य नैमित्तिकस्यापायोऽर्थादुकारद्वयसत्ता सम्पन्ना। तत्राऽऽद्यो-कारस्य निवृत्तिपूर्वकमौकारे विहिते 'सौ+उत्थित+इ' इति दशायामावादेशे सावु-त्थितिर्मा भूदिति समर्थग्रहणमिति भावः।

लोकन्यायसिद्धश्चेति। वस्तुतस्तु—अपेक्षाबुद्धिप्रारब्धयोर्द्वित्वविक्षेपस्थितिनिया-मकत्वस्य तन्नाशयोस्तन्नाशनियामकत्वस्य च प्रमाणसिद्धत्वेऽपि निमित्तनाशमात्रस्य कार्यनाशनियामकत्वे प्रमाणाभावात् दृष्टान्तासिद्धिरत्र बोध्या। दीक्षितमते तु 'प्रक्षालनाद्धि पङ्कस्ये'ति न्यायो लाघवमूलको लुकानुवर्त्तिरिवेति दृष्टान्तश्च मूल-मित्यवेहि। विक्षेपेति। विक्षेपस्य संसारस्य स्थितेर्नियामकेत्यर्थः।

---

सावुत्थितिर्मा भूदितीति। ननु दीर्घनिवृत्तिरि'त्यस्य 'उकारद्वयस्य स्थितिरि'त्यर्थे-नौकारस्योकारद्वयस्य च स्थितौ सावूत्थितिरिति स्यादिति कथं सावुत्थितिरिति मा भूदिति कैयटोक्तिः सङ्गच्छत इत्याशङ्कायां समाधत्ते—सवर्णदीर्घेणेत्यादि। अयम्भावः—स्थानिनिवृत्ति-रादेशसिद्धिरिति व्यापारद्वयं शास्त्रस्य। तत्राऽऽद्येन व्यापारेण दीर्घनिवृत्तौ उकारद्वयस्य सत्ता सम्पन्ना। तत आद्योकारनिवृत्तिपूर्वकमौकारे जाते सावुत्थितिरिति भवति। आदेशस्थितौ कर्तव्यायां द्विवारं स्थानिनिवृत्तिर्जायते, आदेरचो निवृत्तिं विनाऽऽदेशस्थितेरसम्भवादिति तात्पर्यम्।

मूले—अपेक्षाबुद्धेरिति। 'अयमेकोऽयमेकः, इमौ द्वौ' इत्येवंरूपाऽपेक्षाबुद्धिः। तत्रा-ऽऽद्यक्षणे तदुत्पत्तिः, द्वितीयक्षणे द्वित्वं प्रति कारणता, तृतीयक्षणे द्वित्वोत्पत्तिः, चतुर्थक्षणेऽपेक्षा-बुद्धिनाशो द्वित्वस्थितिश्च, ततो द्वित्वस्यापि नाशः। उत्पत्तिक्षणे एव द्वित्वकारणता तु न सम्भवति, तस्यैव कार्यतादशायामितरकारणताया असम्भवात्। एवञ्च अगत्या क्षणत्रयावस्थायित्वं तस्या अभ्युपेयम्।

मूले—वेदान्तिनय इति। अयम्भावः—श्रेष्ठिनो यथा सञ्चितद्रव्यपूरितमञ्जूषातो व्ययं कुर्वन्तस्तत्क्षये एव सञ्चीयमानद्रव्यपूरितमञ्जूषातो व्ययं कुर्वन्ति नान्यथा, एवं प्रारब्धविषयेऽपि पूर्वजन्मार्जितपुण्यपापादितोऽस्य संसारस्य स्थितिर्भवति, एतज्जन्मार्जितञ्चादृष्टं द्वितीयजन्मनिबन्ध-नाय भवति। एवञ्च पूर्वोपार्जितप्रारब्धस्य क्षये एतज्जन्मोपार्जितस्य च तस्य संसारनियामकत्वं व्यक्तमेवेति बोध्यम्। गृहीतव्याप्तिको न्यायः, अगृहीतव्याप्तिकश्च दृष्टान्त इति भेदेनोपादानम्।

भाविनिमित्तविनाशे पूर्वमनुत्पत्तौ तु न कश्चिन्न्यायो नापि सम्प्रतिपन्नो दृष्टान्तः। समर्थानामित्यस्यापि लोकसिद्धार्थज्ञापनेन चारितार्थ्यसम्भवे लोकासिद्धापूर्वतादृशार्थज्ञापकत्वे मानाभाव इति तदाशय इति बोध्यम्।

परे तु—'सेदुष' इत्यादौ पदावधिकेऽन्वाख्याने 'सेद्वस् + अस्' इति स्थिते इट्सम्प्रसारणयोः प्राप्तौ प्रतिपदविधित्वात्पूर्वं सम्प्रसारणे वलादित्वाभावादिटः प्राप्तिरेव नेति तत्सिद्धिरिति स्पष्टं 'समर्थानामि'ति सूत्रे कैयटे, 'असिद्धवत्' सूत्रे कैयटे च स्पष्टमेतत्। यद्यपि प्रतिपदविधित्वमनवकाशत्वे सत्येव बाधकत्वे बीजम्; तथापि पूर्वप्रवृत्तौ सावकाशत्वेऽपि नियामकं भवत्येवेति तदाशयः। निरूपितं चैतद् बहुशः शब्देन्दुशेखरादौ।

---

प्रतिपदविधित्वादिति। न चेटोऽपि वसुशब्दमुच्चार्य विहितत्वेन प्रतिपदविधित्वं सममिति वाच्यम्; प्राप्तावित्यस्याग्रे 'पूर्वं किं कर्तव्यमिति विचारः परं तु' इति ग्रन्थशेषं प्रपूर्य 'सद्+वस्+अस्' इति दशायां कृतद्विर्वचनैकाचोऽभावेन 'वस्वेकाजि'ति शास्त्रस्याप्राप्त्या द्वित्वादितः पूर्वमेव प्रतिपदोक्तत्वेन सम्प्रसारणे इति ग्रन्थयोजनेनादोषात्।

केचित्तु—'वस्वेकाजि'ति सूत्रे वलीत्यनुवृत्त्या तत्सामर्थ्येन सम्प्रसारणप्रवृत्तिसम्भावनायामिटोऽप्राप्तिः। अत एव वलादित्वाभावादिति मूलोक्तिः सङ्गच्छत इति वदन्ति।

अन्ये तु—प्रतिपदविधित्वादित्यस्येट्सम्प्रसारणयोः प्राप्तावित्यत्रान्वयः। पूर्वं सम्प्रसारण इत्यावर्तते। पूर्वं सम्प्रसारणे वलादित्वाभावादिटः प्राप्तिरेव नेति ग्रन्थेनेटो नित्यत्वमुपवर्णितम्। इतीत्यस्य नित्यत्वादित्यर्थः। तथा च पदावधिकेऽन्वाख्याने 'सेद्+वस्+असि'ति स्थिते प्रतिपदविधित्वादिट्सम्प्रसारणयोः प्राप्तौ पूर्वं सम्प्रसारणे वलादित्वाभावादिटः प्राप्तिरेव नेतीटोऽनित्यत्वेन नित्यत्वात्पूर्वं सम्प्रसारणे तत्सिद्धिरिति यथाश्रुतमेव ग्रन्थं योजयन्ति।

निरूपितं चेति। चान्निरूपयिष्यते चापवादप्रकरणे मूलेऽपीत्यर्थः।

---

मूले—पदाधिकेऽन्वाख्यान इति। पदस्य विभज्यान्वाख्याने इत्यर्थः, पदसंस्कार इति यावत्। पदसञ्ज्ञाप्रयोजकप्रत्ययोत्पत्त्यनन्तरं संस्कार इति फलितार्थः।

तत्सामर्थ्येनेति। वसुप्रत्ययस्य वलादित्वाव्यभिचारेण तत्सामर्थ्यात् वलादेरेव, न तु तदभाववत्त्वेन सम्भावितस्यापि ग्रहणमिति भावः।

वस्तुतस्तु—वलीत्यस्यानुवृत्तिरेव माऽस्त्विति यत्किञ्चिदेतत्।

योजयन्तीति। यद्यपि प्रतिपदविधित्वमित्युत्तरग्रन्थविरोधादयमपि पक्षोऽयुक्तः।

'समर्थानामि'ति सूत्रस्थसमर्थग्रहणन्तु 'विषुण' इत्यादावकृतसन्धेः प्रत्यय-दर्शनेन सर्वत्र तथा भ्रमवारणाय न्यायसिद्धार्थानुवाद एव ।

ध्वनितं चेदं विप्रतिषेधसूत्रे भाष्ये । तत्र हि 'वैक्षमाणिरि'त्यन्तरङ्गपरि-भाषोदाहरणमुक्तम् । किञ्च विभज्यान्वाख्याने 'सु + उत्थित + अस् + इ' इति स्थिते वार्णादाङ्गं बलीय इति प्राप्तवृद्धिवारणाय समर्थग्रहणमित्यत्रैव कैयटे स्पष्टम् ।

अत एवासिद्धवत्सूत्रे "वसुसम्प्रसारणमज्विधौ सिद्धं वक्तव्यं 'पपुष' इत्यादौ वसोः सम्प्रसारणे कृते आतो लोपो यथा स्यादि"ति भाष्ये उक्तम् । पदस्य विभज्यान्वाख्याने पूर्वोक्तकैयटरीत्या पूर्वं सम्प्रसारणे इटोऽप्राप्तावुस्निमित्तक एवाऽऽतो लोप इति तदाशयः; अन्यथाऽन्तरङ्गत्वादिटि तन्निमित्तक एवाऽऽतो लोप इति तदसङ्गतिः ।

अत एव 'चौ प्रत्यङ्गस्य प्रतिषेध' इति वचनं वार्तिककृताऽऽरब्धं भाष्य-

---

ननु उक्तपरिभाषाऽनभ्युपगमेऽन्तरङ्गत्वादेव कृतसन्धेस्तद्धितोत्पत्तौ समर्थ-वैयर्थ्यमित्यत आह— भ्रमवारणायेति ।

वैक्षमाणिरिति । सिद्धान्ते समर्थग्रहणेन तद्धितविधावकृतेति परिभाषाया अप्र-वृत्तेरन्तरङ्गत्वादेव 'वैक्षमाणिरि'त्यत्र सवर्णदीर्घप्रवृत्तियुक्तेत्यरुचेराह—किञ्चेति ।

वार्णादाङ्गमिति परिभाषाया अकृतेति परिभाषारूपतया समर्थग्रहणसार्थ-क्योपपादनं नास्माकं प्रतिकूलमित्यरुचेराह— अत एवेति । दीक्षितमते पूर्वमिटो-ऽप्राप्त्याऽजादित्वाभावेनाऽऽतो लोपाप्राप्तिरिति वसुसम्प्रसारणमित्यस्याऽऽवश्यकतया न भाष्यविरोधः ।

वस्तुत.—कैयटमतेऽपि अन्तरङ्गत्वाज्जातस्येटो निमित्तापाय इति परिभा-षया सम्प्रसारणोत्तरं निवृत्त्या इड्निमित्तकातो लोपाप्राप्त्या उस्निमित्तक एव तल्लोपो वाच्यस्तस्यासिद्धत्वेन लोपाप्राप्त्या वार्तिकावश्यकत्वेन न भाष्यासङ्गतिरित्य-रुचेराह—अत एव चौ प्रत्यङ्गस्येति ।

---

मूले—सु+उत्थित+अस्+इ इति स्थित इति । अत्र 'अस्+इति स्थिते' इति पाठस्तु प्रामादिकः, यतः पदसंस्कारपक्षेऽपि अस्प्रत्ययेनैव पदत्वसिद्धौ तद्धितोत्पत्तिपर्यन्तमनु-धावनवैयर्थ्यात्, तत्पर्यन्तं दीर्घप्राप्तौ मानाभावाच्च । किञ्चैवं पाठे पदसंस्कारपक्षोऽत्रेति पदत्वाय इस् इत्यपि वक्तुमुचितम् । नचैवं 'प्राप्तवृद्धिवारणाय' इत्युत्तरग्रन्थासङ्गतिरिति वाच्यम्; 'अध्यैया-ताम्' इत्येतत्सिद्ध्यर्थं 'वार्णादाङ्गमि'त्यस्य अङ्गशास्त्रप्रवृत्तिसम्भावनायां वार्णशास्त्रं न प्रवर्तत इत्यर्थस्य प्राचीनैरङ्गीकृतत्वेनादोषात् । अस्ति चात्र यदि दीर्घो न स्यात् तर्हि वृद्धिः स्यादिति सम्भावना । एवञ्च "'वार्णादाङ्गमि'त्यनेन वृद्धिः प्राप्ता, तद्वारणाय समर्थग्रहमि"ति कैयटोक्तं सूपपादमिति भावः ।

कृता न च प्रत्याख्यातम्। प्रत्यङ्गमन्तरङ्गम्। अस्यां परिभाषायां सत
तद्वैयर्थ्यं स्पष्टमेव।

अत एव 'च्छ्वोरि'ति सूत्रे "अवश्यमत्र तुगभावार्थो यत्नः कार्यो
रङ्गत्वाद्धि तुक् प्राप्नोती"ति भाष्ये उक्तम्। एतत्सत्त्वे तु तुकोऽप्राप्त्या य
वश्यकत्वकथनमसङ्गतमिति स्पष्टमेव। न चैतदनित्यत्वज्ञापनार्थमेव त
तदाशयः। अवश्यमत्रेत्यक्षरस्वारस्यभङ्गापत्तेः।

किञ्चानयैव 'प्रत्ययोत्तरपदयोश्च, अदो जग्धिर्ल्यप्ति किती'त्यनयोश्च
तार्थ्येन तज्ज्ञापकवशाल्लुग्ल्यपोरन्तरङ्गबाधकता भाष्योक्ता भज्येत।

किञ्चैषा भाष्ये न दृश्यते। तदुक्त'मसिद्धवत्'सूत्रे कैयटेन "निमित्त
नैमित्तिकस्याप्यपाय इति परिभाषाया भाष्यकृताऽनाश्रयणादि"ति।

---

न प्रत्याख्यातमिति। 'अकृतव्यूह'परिभाषारूपत्वादन्तरङ्गानपीति न्याया
देतन्न प्रत्याख्यातमित्यरुचेराह—अत एव च्छ्वोरिति। वस्तुतस्तु—'प्रतीच' इ
यणादिवारणाय वार्तिककृताऽऽरब्धस्यैतद्वचनस्य चाविति दीर्घारम्भसाम
यणाद्यभावं प्रतिपाद्य भगवता एतद्वचनं प्रत्याख्यातमेव। तदुक्तं भाष्ये—"इ
आचार्याश्चौ प्रत्यङ्गस्य प्रतिषेधमाहुस्तदिहापि साध्यम्। नैष दोषः। एतदेव
यत्याचार्यो न चौ प्रत्यङ्गं भवतीति। यदयं चौ दीर्घत्वं शास्ती"ति। न च प्र
परिभाषया सिद्धे ज्ञापकाश्रयणं निष्फलमिति वाच्यम्; तज्ज्ञापकेनांशिकैत
भाषार्थज्ञापनस्यैव सत्त्वेन तत्सिद्धिरित्याशयात। अत एव ज्ञापयतीत्युक्त
अन्यथा दीर्घविधानसामर्थ्यादित्येव वदेदिति बोध्यम्।

अक्षरस्वारस्यभङ्गापत्तेरिति। अत्राक्षरस्वारस्यरसमास्वादयद्भिर्ग्रन्थकृद्भि
परिभाषाया अनित्यत्वनिरूपणावसरे कथमक्षरस्वारस्यभङ्गोऽङ्गीकृत इति तु
एव प्रष्टव्याः। किञ्च—प्रकृतिप्रत्यापत्तिवचनादिनाऽस्या अनित्यत्वेन तुको नि
यत्नावश्यकत्वकथनं युक्तम्। किञ्च—वाञ्छतेः क्विपि शादेशाप्रवृत्तये सतुक्का
शस्याऽऽवश्यकत्वमित्यरुचेराह—किञ्चानयेति।

तत्तज्ज्ञापकैरंशत एतत्परिभाषाया एव ज्ञापनेन न भाष्योक्तोक्तज्ञापकता
इत्यरुचेराह—किं चैषेति। अन्तरङ्गानपीत्यादेरेतद्वचनरूपतया तद्रूपेणैवेतद्व
स्यापि सत्त्वेन न दृश्यत इति कथनं साहसमात्रमित्यरुचेराह—तदुक्तमिति। निमि
पाय इति परिभाषा भाष्यानुक्ता कथं कैयटेनाऽऽश्रितेति स एव प्रष्टव्यः। दीक्षिते
तु साऽन्तरङ्गानपीत्यादिशब्दैर्भाष्यकृताऽऽश्रितैवेति बोध्यम्।

वस्तुतस्तु—निमित्तापाय इत्यादिशब्दैरेषा भाष्येनाऽऽश्रितेति तदर्थेन कै
स्यापि नोक्तविरोध इति तत्त्वम्।

पदसंस्कारपक्षे 'हरिरि'त्यादौ विसर्गे कृते ततो गच्छतीत्यादिसम्बन्धे गच्छती'त्याद्येव साधु । तद्विषये पदसंस्कारपक्षानाश्रयणं वेति दिक् ।

---

प्राचीनोक्तं परिभाषाफलमन्यथयति—पदसंस्कारेति । ननु 'विसर्जनीयस्य स' इति सूत्रस्थभाष्यप्रामाण्येनात्र पदसंस्कारपक्षाश्रयणमशक्यम् । तत्र हि खरीत्यस्यानुवृत्त्यभावेऽपि खर्येव विसर्ग इति प्रतिपादनाय "खरवसानयोर्विसर्गं विधाय तस्यानेन सत्वविधानादन्यतरस्मिन् सत्वं, यदि च खरवसानयोरुभयोरपि सत्वं स्यात्तर्हि विसर्गविधानं व्यर्थं स्यादित्युपक्रम्य शर्परे विसर्जनीय इति ज्ञापकात्खर्येव 'विसर्जनीयस्य स' इत्यस्य प्रवृत्तिः; विपर्यये तु खरि विसर्जनीयस्य सिद्धतया पुनर्विधानमनर्थकं स्यादि"त्युक्तम् । यद्यवसाननिमित्तकस्य विसर्जनीयस्य पदान्तरसमभिहारेणावसानभङ्गसम्भावनायामपि विसर्जनीयस्य पूर्वं प्रवृत्तिः, प्रवृत्तस्य निमित्तविनाशे निवृत्त्यभावस्तदा तादृशविसर्गघटिते 'कःत्सरुरि'त्यादौ सत्वनिवृत्तये विसर्जनीयविधानेन सार्थकस्य शर्परे इत्यस्य भाष्यकारोक्ता ज्ञापकता भज्येत । तस्मादिह विसर्जनीयरहितस्य 'हरिर्गच्छती'त्यादेरेव साधुत्वं, तच्च परिभाषैकसाध्यमित्यवश्यं पदसंस्कारेऽपि सा स्वीकार्या परिभाषेत्यरुचेराह—तद्विषयेति । अनाश्रयणमिति । तथा चोक्तपक्षयोर्व्यवस्थिततया 'सेदुष' इत्यत्र पदसंस्कारपक्षाश्रयणमुक्तस्थले वाक्यसंस्कारपक्षाश्रयणमिति सर्वेष्टसिद्ध्योक्तपरिभाषाश्रयणं निष्फलमिति भावः । 'हरिः ओमि'त्यत्र तु वैदिकसम्प्रदाय एव शरणम् । 'वागाशीर्दत्तो वाचिक' इत्यादौ तु सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतायां त्रैपादिकस्य पूर्वमप्रवृत्त्या कुत्वाद्यभावः । 'वृक्षो वृक्षः सिच्यत' इत्यत्र वृक्षस् इति सान्तस्यैव द्वित्वं, न तु विसर्गान्तस्य । पूर्वत्रासिद्धमद्वित्व इति त्वनित्यं, तेन विसर्गात्प्राक् द्वित्वेन रुत्वेन रुत्वादिसिद्धेर्न तदप्युक्तपरिभाषाफलम् । एवं छागतिनिवृत्तावित्यत्र सूत्रे ष्टुत्वेऽपि 'त्रेधाय' इत्यादौ त्रिशब्दवत् 'ष्था' इत्यस्यैव नकाराजाविर्त्यभियुक्तोक्त्या बोधकत्वावगमेन स्थानमित्यादिलक्ष्येषु न टवर्गश्रवणमित्येवं सर्वत्रोक्तपरिभाषासाध्यफलानामन्यथासिद्ध्यैषा निष्फलेति नागेशानुयायिनः ।

वस्तुतस्तु—अन्तरङ्गानपीत्याद्यनेकवचनकल्पनापेक्षयाऽनुगतैतत्परिभाषारूपवचन-

---

अनर्थकं स्यादिति । न च 'कुप्वोः ≍क ≍पौ च' इति साधनार्थं भविष्यतीति वाच्यम्; तादृशप्रयोजनकत्वे 'कुप्वोः ≍क ≍पौ च इत्यत्र 'अशरी'त्येव ब्रूयादिति भावः ।

नागेशानुयायिन इति । अत्रेदं विचारणीयम्—दीक्षितेन निमित्तं विनाशोन्मुखनिमित्तार्थं स्वीकृत्य परिभाषात्रयस्यान्तर्भाविका एका परिभाषा स्वीकृतेति महल्लाघवम्, कैयटेन च 'निमित्तापाये' इत्याद्युक्त्वा जातनिवृत्तिरङ्गीकृतेति पूर्वापेक्षया गौरवम् । नागेशेन च तदनुयायिमतानुकूलेन तं प्रत्याख्याय विभिन्नमेव परिभाषात्रयमङ्गीकृतमिति तस्य द्वितीयपक्षादपि गौरवम् । तस्मात् मतत्रयेऽपि दीक्षितमतं युक्ततमम् । किञ्च—नवीनमते प्रयोगानुपपत्तिश्चेत्यभिप्रायेणाह—वस्तुतस्त्वति ।

# अन्तरङ्गादप्यपवादो बलवान् ॥ ५७ ॥

तत्रापवादपदार्थमाह —

---

कल्पनमेव युक्तम् । अत एव 'वैभाजित्रमि'ति सिद्ध्यति ; अन्यथाऽन्तरङ्गत्वाण्णेर्गुणायादेशयोर्विभाजयितुर्णिलोप'श्चाप् च वक्तव्य' इत्यनेनान्त्यस्य यकारमात्रस्य लोपापत्तेः । मम त्वकृतेति परिभाषया गुणायादेशाप्राप्त्या णिरूपेकारलोपेनेष्टसिद्धिः । न च विभाजयितुर्यलोप इति वक्तव्ये णिलोपकथनं सर्वादेशार्थमिति वाच्यम् ; विभाजीति प्रादिपदिकादाचारक्विबन्तात्तृचि निष्पन्नविभाजयितृशब्दे यलोपापत्त्या तादृशस्य कर्तुमशक्यत्वात् । एवं 'घटसेदुषोरि'त्यत्र प्रथमान्तानामेव द्वन्द्वविधानात् घट+स् सद्+वस्+स्+ओसि'ति स्थितेऽन्तरङ्गत्वात् समासात्प्रागेवैत्वाभ्यासलोपयोरिटि तच्छ्रवणापत्तिः । न चान्तरङ्गानपीति न्यायेन पूर्वं सम्प्रसारणे दोषाभाव इति वाच्यम् ; ज्ञापकसाजात्याल्लुक्स्थानिभूतप्रत्ययनिमित्तकान्तरङ्गस्थले तत्प्रवृत्त्याऽत्रान्तरङ्गस्येटस्तादृशप्रत्ययनिमित्तकत्वाभावेनात्र तदप्रवृत्तेः । अत एव गतिकारकोपपदानामिति परिभाषाया व्याघ्री कच्छपीत्यवतरणसङ्गति ; अन्यथा अन्तरङ्गानपीति परिभाषया टापा लुक्स्थानिभूतसुब्निमित्तकत्वाभावेऽपि पूर्वं समाससुब्लुकोः कृतयोरपवादत्वादेव ङीषा टापो बाधसिद्धेस्तदसङ्गतिः स्पष्टैवेति दिक् ॥ ५६ ॥

पूर्वपरेति सङ्ग्राहकवाक्येन बोधितं चरममर्थमनुमानेन प्रमाणयति — अन्तरङ्गादिति । 'अपवादः अन्तरङ्गान्तशास्त्रेभ्यो बलवान् अपवादत्वात्' इत्यनुमानप्रयोगः । सर्वथा प्रतिबद्धावकाशस्य सर्वतो बलवत्त्वदर्शनान्न विपरीतशङ्कावकाश इति लोकन्यायसिद्धोऽयमर्थ इति बोध्यम् ॥ ५७ ॥

तत्रेति । घटकत्वं सप्तम्यर्थः । अन्तरङ्गादप्यपवादो बलवानित्येतद्घटकेत्यर्थः । 'येन नाप्राप्ते यो विधिरारभ्यते स एतदन्तोऽपवादपदार्थः लोके सति विरोधे बलीयसा दुर्बलस्य बाधदर्शनादुच्यते तस्य बाधक इति । 'नाप्राप्त' इत्यत्र निषेधार्थक-

---

प्रथमान्तानामेव द्वन्द्वविधानादिति । 'चार्थे द्वन्द्वः' इति सूत्रे 'अनेकमन्यपदार्थे' इत्यस्य 'शेष' इत्यस्य चानुवृत्त्या चार्थेऽन्यपदार्थे वर्तमानमनेकं प्रथमान्तं समस्यते स द्वन्द्व इति तदर्थेन द्वन्द्वोऽपि प्रथमान्तस्यैवेति भावः । अत एव "चैत्रमैत्राभ्यां कृतमित्यस्य चैत्रो मैत्रश्च ताभ्यां कृतमित्यस्यैव विग्रहवाक्यत्वं न तु चैत्रेण मैत्रेण च कृतमित्यस्य, समाससमानार्थत्वाभावादि"त्यादि शेखरे स्पष्टम् ॥ ५६ ॥

निषेधार्थकनशब्दस्येति । वस्तुतो निषेधार्थकनिरनुबन्धकनशब्दो नास्त्येव । अत एव 'नगोऽप्राणिष्वन्यतरस्याम्' इति चरितार्थम् ; अन्यथा नशब्देन समासे नगा इति नञा समासे 'अगा' इति रूपद्वयसिद्धौ तद्वैयर्थ्यं स्पष्टमेव । न चाप्राणिष्वेवेति नियमार्थं तत् ; अप्रामाणिकं

## येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति ॥५८॥

**प्राप्त इति भावे क्तः, 'येन नाप्राप्त' इत्यस्य यत्कर्तृकावश्यप्राप्तावित्यर्थः, नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात् । एवञ्च विशेषशास्त्रोद्देश्यविशेषधर्मावच्छिन्नवृत्तिसामान्यधर्मावच्छिन्नोद्देश्यकशास्त्रस्य विशेषशास्त्रेण बाधः ।**

---

नशब्दस्य 'अप्राप्त' इत्यनेन 'सुप्सुपे'ति समासः । नञो नलोपाभावः पृषोदरादित्वाद्वा बोध्यः ।

अवश्यप्राप्ताविति । न चात्र 'लुम्पेदवश्यमः कृत्ये' इत्यस्याप्राप्त्या कथं मलोप इति वाच्यम्; अवश्यमिति मान्ताव्ययसमानार्थकावश्यशब्देनात्र समासेनादोषात् । अत एवाऽऽवश्य'काधमर्ण्ययोरि'ति सौत्रनिर्देशसङ्गतिः; अन्यथाऽवश्यंशब्दस्य योपधत्वाभावेन वुञोऽप्राप्त्या तदसङ्गतिः स्पष्टैव ।

विशेषशास्त्रेति । विशेषशास्त्रोद्देश्यो यो विशेषधर्मावच्छिन्नः, तद्वृत्तिर्यः सामान्यधर्मस्तदवच्छिन्नोद्देश्यताकशास्त्रस्य, विशेषशास्त्रेण = विशेषधर्मावच्छिन्नोद्देश्यताकशास्त्रेण बाध इत्यर्थः । सामान्यत्वं—व्यापकत्वम् । विशेषत्वं—व्याप्यत्वम् । ननु सामान्यधर्मे विशेषशास्त्रोद्देश्यविशेषधर्मावच्छिन्नवृत्तित्वरूपं विशेषणं व्यर्थं, सामान्यधर्मे विशेषशास्त्रोद्देश्यविशेषधर्मावच्छिन्नवृत्तित्वासत्त्वे तस्य सामान्यत्वासम्भवादिति चेन्न । उद्देश्यतावच्छेदकतावच्छेदसम्बन्ध एव व्यापकतावच्छेदको ग्राह्य इति भ्रमवारणायात्र तत्सार्थक्यात् । अत एव प्रथमैकाच्त्वद्वितीयैकाच्त्वयोरुक्तसम्बन्धे सामानाधिकरण्याभावेऽपि स्वाश्रयोत्तरत्वादिना सामानाधिकरण्यमादाय व्याप्यव्यापकभावात् 'एकाचो द्वे' इत्यस्य 'अजादेर्द्वितीयस्ये'त्यनेन बाधः सिद्ध्यति ।

नन्वत्र साक्षादुद्देश्यतावच्छेदकधर्मयोर्व्याप्यव्यापकभावो बाधप्रयोजक उत साक्षात्परम्परासाधारण्येनोद्देश्यतावच्छेदकयोः ? नाऽऽद्यः—"नेमौ रहौ कार्यिणौ

---

निपातं स्वीकृत्य नियामकत्वकल्पनापेक्षया विधित्वस्यैव न्याय्यत्वात् । किञ्च 'अभावे न ह्यनो नापि' इति कोशप्रामाण्येन निषेधार्थकनाशब्देन अप्राप्तिपदस्य समासः । 'नैकधे'त्यादावप्येवमेवोपपत्तिः । एवञ्च पृषोदरादित्वकल्पनमपि व्यर्थमेवेति बोध्यम् ।

मूले—नञ्द्वयस्येति । मूलस्यास्य नञ्द्वयार्थकस्येत्यर्थः, तेन एकस्य नञोऽपरस्य नाशब्दस्य चेति यावत् । यथाश्रुतानुरोधेन तु व्याख्याकृता तथा व्याख्यातम् ।

भ्रमवारणायेति । अन्यथा उद्देश्यतावच्छेदकावच्छेदकसम्बन्धेनेत्युपादीयेत । सम्बन्धानुल्लेखपूर्वकं तादृशविशेषणमात्रोपादानेन कालिकातिरिक्तेन येन केनापि सम्बन्धेन वृत्तिता विवक्षितेति तात्पर्यं सूचितमिति भावः ।

"किं तर्हि निमित्तं द्विर्वचनस्य" इति भाष्यविरोधापत्तेः । तत्र हि 'अचोरहाभ्यामि'-
स्येतच्छास्त्रीयोद्देश्यतावच्छेदकतावच्छेदकरत्वस्य 'अनचि चे'ति शास्त्रीयसाक्षा-
दुद्देश्यतावच्छेदकयत्वापेक्षया व्याप्यत्वेन अपवादत्वात्तद्बाधेन रेफस्य द्वित्वाभावः
साधितः । नाप्यन्त्यः—अनुशक्तिकादिषु पुष्करसच्छब्दपाठसामर्थ्येनाऽऽदिवृद्धिरन्त्यो-
पधावृद्धी बाधत इत्यर्थज्ञापकपरभाष्यविरोधापत्तेः । परम्परया उद्देश्यतावच्छेदक-
योर्ञ्णित्प्रत्ययत्वञ्णित्तद्धितत्वयोर्व्याप्यव्यापकभावेन 'तद्धितेष्वचामि'ति शास्त्रेण
'अचोञ्णिति' 'अत उपधाया' इति शास्त्रयोर्बाधादेवोक्तार्थसिद्धेर्निरुक्तभाष्य-
विरोधः स्पष्ट एवेति चेन्न । व्याप्यव्यापकधर्मयोः साक्षात्परम्परया वा तत्तदुद्देश्यता-
वच्छेदकयोर्विशेष्यविशेषणदलप्रविष्टयावत्पदार्थसङ्कुचितयोरेव ग्रहणेन 'तद्धितेष्व-

---

भाष्यविरोधापत्तेरिति । परम्परया ग्रहणे तु न दोषः, विशेषधर्मोऽजुत्तररेफत्वहत्त्व-रूपः, तदवच्छिन्नः परम्परया यर् , तद्वृत्तिस्सामान्यधर्मः—स्वाश्रयाव्यवहितोत्तरत्वसम्बन्धेन अजु-त्तरयत्र्वरूपः, तदवच्छिन्नोद्देश्यता'कानचि च' इत्यस्य बाधेनेष्टसिद्धेः । न च साक्षादवच्छेदकत्व-ग्रहणेऽपि विशेषधर्मः—तादृशयत्वम् , तद्वृत्तिस्सामान्यधर्मः—स्वाश्रयाव्यवहितोत्तरत्वसम्बन्धेन अजव्यवहितपरत्वसमानाधिकरणयत्वरूप इति वाच्यम्; व्याप्यव्यापकधर्मयोः सामानाधिकरण्या-नापत्तेः । वृत्तितायाः येन केनापि सम्बन्धेन ग्रहणेऽपि व्याप्यत्वस्य व्यापकत्वस्य च तेन सम्बन्धेना-ग्रहणात् विशेषधर्मो रेफोत्तरयरि सामान्यधर्मस्तु रेफे इति सामानाधिकरण्याभावात् विशेषत्वस्य सामान्यत्वस्य च दुर्वचत्वात् ।

स्यादेतत्—एवं सामानाधिकरण्यग्रहणे प्रथमैकाच्त्व-द्वितीयैकाच्त्वयोरपि तत्त्वाभावेन व्याप्यव्यापकत्वाभावादनिष्टापत्तिरिति तदर्थं सामानाधिकरण्याभावेऽपि व्याप्यत्वेन व्यापकत्वेन च विवक्षितत्वमेव व्याप्यत्वं व्यापकत्वं चेति वाच्यमिति प्रकृतेऽपि सामानाधिकरण्याभावेऽपि तत्त्वेन विवक्षया साक्षादवच्छेदकताया ग्रहणेऽपि अदोषः । न च विवक्षाया अप्रतिबन्ध्यत्वेन न प्रथमैकाच्त्वस्य व्याप्यत्वे द्वितीयैकाच्त्वस्य व्यापकत्वे विपरीतबाधापत्तिरिति वाच्यम्; धर्मयो-र्व्याप्यव्यापकभाववैपरीत्येऽपि शास्त्रे सामान्यत्वं तदप्राप्तियोग्ये चारितार्थ्यं विशेषत्वञ्च तदप्राप्ति-योग्यस्थले अचारितार्थ्यरूपमिति शास्त्रस्यैव बाधकतया वैपरीत्यस्य सुपरिहरत्वात् । एवं स्थिते साक्षादवच्छेदकताया ग्रहणेऽप्यदोष इति चेत्—

मैवम्; अजव्यवहितोत्तररेफहकाराव्यवहितोत्तरत्वसमानाधिकरणयत्वस्य विशेषधर्मत्वे येन धर्मेण व्यापकता तद्धर्मावच्छिन्नातिरिक्तत्वेन व्यापकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचात् 'ह्यनुभवः' इत्यत्र तादृशयर्—यकारस्तदतिरिक्तत्वात् रेफस्य तस्य 'अनचि च' इति शास्त्रेण द्वित्वापत्तेः । न च तादृशयत्वाश्रयावधिकपूर्वातिरिक्तत्वेन सङ्कोचः 'अनचि च' इत्येतद्घटकयर्पदार्थे क्रियत इति न दोष इति वाच्यम्; 'अर्हेण' इत्यत्र हकारस्य यत्वाभावात् यरव्यवहितपूर्वातिरिक्तस्यैव रेफे सत्त्वेन द्वित्वापत्तेः । किञ्च—'येन नाप्राप्त' इत्यादेरेवार्थस्य विशेषशास्त्रेत्यादि विवरणम् । तद्विवरणे च तदप्राप्तियोग्येऽचारितार्थ्यपदार्थानुप्रवेशे आत्माश्रयापत्तिरिति न कथमपि पूर्वोक्तं वक्तुं शक्यत इति साक्षादवच्छेदकता न गृहीतुं शक्यत इत्यलम् ।

विशेष्यविशेषणदलप्रविष्टेति । अयम्भावः—अत्रावच्छेदकता न स्वरूपसम्बन्ध-विशेषः किन्तु अनतिरिक्तवृत्तित्वरूपा, स्वव्यापकत्वरूपेति यावत् । तदर्थश्च—स्वव्यापिका

चामादेरि'ति शास्त्रीयतादृशोद्देश्यतावच्छेदकस्य 'अच्घटिताङ्गावधिकपरत्वविशिष्ट-ञ्णित्तद्धितत्वस्याऽऽदुपधावधिकपरत्वविशिष्टञ्णित्प्रत्ययत्वाजन्ताङ्गावधिकपरत्वविशिष्ट-ञ्णित्प्रत्ययत्वरूपतदुभयशास्त्रीयोद्देश्यतावच्छेदकाभाववति मारुतशब्दघटकतद्धिते वर्त-मानत्वेन तस्य व्याप्यत्वाभावादनेन न्यायेनाऽऽदिवृद्धेरन्त्योपधावृद्धिबाधकत्वा-सम्भवेनोक्तज्ञापकपरभाष्यविरोधाभावात् । 'अचोरहाभ्यामि'त्यत्राजव्यवहितपरत्वयर-व्यवहितपूर्वत्वधर्माभ्यां सङ्कुचितस्य रत्वस्य अजव्यवहितपरत्वाजव्यवहितपूर्वत्वा-भावरूपधर्मसङ्कुचितस्य 'अनचि च'ति शास्त्रीयोद्देश्यतावच्छेदकयत्वस्यापेक्षया व्याप्यत्वेन 'नेमौ रहावि'ति भाष्यसङ्गतिश्च । यद्वा—अत्रोद्देश्यतापदेनोद्देश्य-दलप्रविष्टशाब्दबोधीयविषयतामात्रं गृह्यते । सा च सङ्कुचितैवास्तीति न विशेष्य-विशेषणदलप्रविष्टयावत्पदार्थसङ्कुचितेति निवेशस्योपयोगः । इत्थञ्च प्रकारद्वयेऽपि वृत्त्यन्तविशेषणदानं निष्फलमेव । 'एकाच' इति शास्त्रीयोद्देश्यतावच्छेदक-धातुत्वस्य तादृशधातुत्वावच्छिन्नविषयतायाश्चाजादेरिति शास्त्रीयोद्देश्यतावच्छेदक-तादृशधातुत्वतादृशधातुत्वावच्छिन्नविषयतयोश्चापेक्षया व्यापकत्वेन तद्बाधसिद्धेरिति बोध्यम् ।

अत्र च विषयतयोर्व्याप्यव्यापकभावस्तद्विषयतामात्रवृत्तितद्व्यक्तित्वादिनैवेति नाऽऽग्रहः, किन्त्वन्यतरत्वादिनाऽपि । अत एव 'इको यणची'त्येतच्छास्त्रीयेव्पद-प्रयोज्यविषयताया 'दैत्यारिरि'त्यत्रासत्त्वेन 'आद्गुण' इत्येतच्छास्त्रीयापदप्रयोज्य-विषयतायाश्च 'श्रीश' इत्यत्रासत्त्वेन प्रत्येकवृत्तिधर्मपुरस्कारेण तयोर्व्यापकत्वविरहे-ऽप्यन्यतरत्वेन तयोर्विषयतयोर्व्यापकत्वमादाय 'अकः सवर्णे' इत्यनेन 'इको यणचि', 'आद्गुण' इत्येतयोर्द्वयोरपि बाधः सिद्ध्यति ।

नन्वेवं 'कुप्वोरि'ति शास्त्रेण 'विसर्जनीयस्य सः, शर्परे विसर्जनीयः' इत्येतच्छास्त्रीयविसर्जनीयपदप्रयोज्यविषयताद्वयस्याप्यन्यतरत्वेन स्वघटकविसर्जनीयपद-प्रयोज्यविषयताव्यापकत्वेन तयोर्द्वयोरपि बाधापत्तिः । न च स्वव्यापकतावच्छेद-कत्व-स्वव्यापकतावच्छेदकाव्यापकत्वोभयसम्बन्धेन स्वघटकपदप्रयोज्यविषयता-

---

उद्देश्यतावच्छेदकताव्यापिका सा उद्देश्यता यस्य तत् स्वव्यापकः, तत्क इति । एवञ्च उद्देश्यताख्य-विषयतारहितस्थले तादृशावच्छेदकधर्माभावश्चेत् स धर्मस्तदवच्छेदकः स्यात् । उद्देश्यतानिरूपितं व्यापकत्वं धर्मेऽपि विवक्षितमिति फलितम् । एवं स्थिते प्रकृते केवलञ्णित्तद्धितत्वस्य 'तद्धितेष्व-चामादेः' इत्येतच्छास्त्रीयोद्देश्यतावच्छेदकत्वं दुर्वचम् । तथा 'ञ्णित्प्रत्ययत्वस्य, अचो ञ्णिति, अत उप-धायाः' इत्येतच्छास्त्रीयोद्देश्यतावच्छेदकत्वं दुर्वचमित्येतन्मूलकमेव—विशेष्यविशेषणदलप्रविष्टेत्यादि ।

निष्फलमेवेति । उद्देश्यतावच्छेदकावच्छेदकस्वरूपसम्बन्धेन व्याप्यव्यापकभावाभ्युप-गमेऽपि दोषाभावादिति भावः ।

स्वव्यापकतावच्छेदकाव्यापकत्वेति । अस्य स्वव्यापकतावच्छेदकविशिष्टभिन्नत्व-मित्यर्थः । वै०—स्वव्यापकत्व-स्वभिन्नत्वोभयसम्बन्धेन, तेन स्वव्यापकत्वमादाय न दोषः । 'रमायाम्' इत्यत्र तु तद्व्यक्तित्वेन व्यापकविषयतामादाय स्वातन्त्र्येण 'आद्गुणः' इत्यस्य 'याडापः'

विशिष्टधर्मावच्छिन्नव्यापकतावद्विषयताकशास्त्रस्य स्वेन बाध इत्यर्थकल्पनेन निरुक्त-विषयताद्वयवृत्त्यन्यतरत्वे 'कुप्वोरि'ति शास्त्रीयविसर्जनीयपदप्रयोज्यविषयताया आद्यसम्बन्धेन वैशिष्ट्येऽपि स्वव्यापकतावच्छेदक'विसर्जनीयस्य स' इत्येतच्छास्त्रीय-विसर्जनीयपदप्रयोज्यविषयतावृत्तितद्व्यक्तित्वव्यापकत्वेन द्वितीयसम्बन्धेन तदभावाद्-बाध्यत्वप्रयोजकोक्तरूपाभावेन नोक्तशास्त्रद्वयबाध इति वाच्यम्; 'उरृदि'ति शास्त्रीयऋपदप्रयोज्यविषयताया अपि 'उपधाया, मृजे, पुगन्त' इत्येतच्छास्त्रत्रयीय-ऋपदैकपदप्रयोज्यविषयतात्रयवृत्त्यन्यतमत्वे स्वव्यापकतावच्छेदकीभूतं 'यदुपधाया' इति पुगन्तेति शास्त्रद्वयीयोद्देश्यताख्यविषयताद्वयवृत्त्यन्यतरत्वं तद्व्यापकत्वस्यैव सत्त्वेन स्वव्यापकतावच्छेदकाव्यापकत्वरूपसम्बन्धेन वैशिष्ट्याभावेनोरृदिति शास्त्रस्येररारामपवादत्वानापत्तेरिति चेन्न। निरुक्तद्वितीयसम्बन्धघटकव्यापकता-वच्छेदकपदेन पुगन्तेति शास्त्रीयैकपदप्रयोज्यविषयता उपधायाश्चेति शास्त्रीया ऋपदप्रयोज्यविषयता चेत्येतद्द्वयावृत्तिनो ग्रहणेन सर्वत्र दोषाभावात्।

न चैवमपि 'यचि भमि'ति शास्त्रेण बाध्यसामान्यचिन्तया 'सुप्तिङन्तं, स्वादिष्वि'ति शास्त्रद्वयबाधानापत्तिः, तदुभयशास्त्रीयविषयताद्वयवृत्त्यन्यतरत्वस्य स्वव्यापकतावच्छेदक'स्वादिष्वि'ति शास्त्रीयविषयतावृत्तितद्व्यक्तित्वव्यापकत्वात्, तथा च 'राजन्य' इत्यत्र 'सुप्तिङन्तमि'ति पदत्वेन नलोपापत्तिरिति वाच्यम्; स्वव्यापकतावच्छेदकाव्यापकत्वेति द्वितीयसम्बन्धस्थाने स्वव्यापकत्व-स्वाश्रयविष-यताऽव्याप्यविषयताऽवृत्तित्वोभयसम्बन्धेन स्वव्यापकतावच्छेदकविशिष्टभिन्नत्व-मित्यस्य निवेशेनोक्तान्यतरत्वस्य स्वव्यापकतावच्छेदकस्वादिष्विति शास्त्रीयविष-यतावृत्तितद्व्यक्तित्वव्यापकत्वेऽपि तत्तद्व्यक्तित्वाश्रयविषयताभाववति 'राम' इति सुबन्ते सुप्तिङन्तमिति शास्त्रीयविषयतायाः सत्त्वेन तस्या व्याप्यत्वाभावात्, स्वाश्रय-विषयताऽव्याप्यविषयताऽवृत्तित्वरूपद्वितीयसम्बन्धाभावेन एकसत्त्वेऽपि द्वयं नास्ती'ति न्यायेनोभयसम्बन्धेन स्वविशिष्टभिन्नत्वस्य सत्त्वेनोभयशास्त्रबाधकत्वस्य

---

इत्यस्य च 'ङेराम् नद्याम्नीभ्यः' इत्यनेन बाधः। एवं 'अकः सवर्णे दीर्घः' इत्यस्य यण्गुणयोरेवाप-वादत्वम्, न तु अन्यतमत्वेन व्याप्यव्यापकविषयतामादाय 'एरनेकाचोऽसंयोगपूर्वस्य' इत्यस्यापि, तेन 'वातप्रमी' इत्यत्र नेरनेकाजित्यस्य दीर्घेण बाधः। एवं 'अतो गुणे' इत्यस्य न दीर्घेण बाधः। एवं 'सर्वेषाम्' इत्यत्र सुटा नेत्वबाधः; अन्यथा एकस्य व्यापकत्वे अन्यतरस्यापि व्यापकत्वमेवेति सुड्विधायकशास्त्रीयव्याप्यविषयतानिरूपितव्यापकत्वस्य सुड्विधायक'बहुवचने झल्येत्' इत्येत्व-विधायकशास्त्रीयान्यतरविषयतायामपि सत्त्वात् सुटा नुडेत्वोभयबाध एव स्यात्।

विषयताद्वयवृत्त्यन्यतरत्वस्येति। यथा अन्यतमविषयताया व्यापकत्वम्, एवम्—अन्यतरविषयताया अपि व्यापकत्वमेव, 'अमीमृजत्' इत्यत्रापि 'पुगन्तलघूपधस्य' इति शास्त्रीय-विषयतायाः सत्त्वात्।

अवृत्तित्वोभयसम्बन्धेनेति। ननु यत्र तद्व्यक्तित्वेनैव विषयताव्यापकत्वमादाय बाध्य-बाधकभावस्तत्र स्वस्य स्वव्यापकतामादाय दोषः स्यादतः 'स्वभिन्नत्वमि'ति तृतीयसम्बन्धोऽप्यत्र देयः।

सुवचत्वात्, 'उत्तरपदत्वे चे'त्यस्य प्रत्याख्याने 'यचि भमि'त्यत्र सुबित्यनुवृत्त्या सुबन्तस्य भसंज्ञाविधानेन स्वातन्त्र्येण 'यचि भमि'त्यस्य 'सुप्तिङन्तमि'त्येतद्बाधकत्वस्य दुर्वारत्वाच्च । 'अचिर ऋत' इत्यादौ तु अच्पदादेस्तत्तद्विभक्तिघटकाच्त्वादिना बोधकतया न दोष इति दिक् ।

सामान्यधर्मावच्छिन्नोद्देश्यकताकशास्त्रत्वं बाध्यत्वे बीजमुपवर्ण्य विशेषधर्मावच्छिन्नोद्देश्यताकशास्त्रत्वं बाधकत्वे बीजमित्युपवर्णयितुं सामान्यतस्तत्स्वरूपमाह—

---

सुवचत्वादिति । ननु "इयर्ति इत्यादिसकललक्ष्यप्रामयणपवादत्वस्यैव निर्णयात्" इति प्राचीनग्रन्थविरोधः, तत्र भवदुक्तरीत्या अन्यतरत्वेन व्यापकत्वमादाय उभयोरपि यण्दीर्घयोर्बाधस्य प्राप्तेः । व्यापकतावच्छेदकम्—यण्शास्त्रीयविषयतावृत्तितद्व्यक्तित्वम् तद्व्यापकत्वस्य अन्यतरत्वे सत्त्वेऽपि द्वितीयसम्बन्धाभावात् ( तथाहि—स्वाश्रयविषयता—'इको यणचि' इत्येतद्विषयता, तदव्याप्यविषयता—'अकः सवर्णे दीर्घः' इत्यस्य विषयता, तद्वृत्तित्वम्—अन्यतरत्वस्य न तु अवृत्तित्वमिति व्यापकतावच्छेदकविशिष्टभिन्नत्वस्य सत्त्वे अन्यतरत्वावच्छिन्नव्यापकतामादाय उभयोरपि बाधापत्त्या प्राचीनग्रन्थविरोधः स्पष्ट एव । ) इत्यस्वरसात् समाधानान्तरमाह— उत्तरपदत्वे चेति ।

अचिर ऋत इत्यादाविति । ननु 'अचिर ऋतः' इत्यस्य गुणदीर्घोत्त्वानामपवादत्वं न स्यात्, 'जसि च, ऋतो ङि, प्रथमयोः पूर्वसवर्णः, ऋत उत्' इति सूत्रचतुष्टयीघटकपदप्रयोज्यविषयतानामन्यतमत्वेन व्यापकत्वाभावात् । 'ओसि टापां ङयि' कस्यापि बाध्यविषयताया असत्त्वात् एतद्विषयतायाश्च सत्त्वात् अत आह—अचिर ऋत इत्यादाविति । तत्तद्विभक्तीति । बाध्यशास्त्रीयप्रवृत्तौ निमित्तभूतेत्यर्थः । एवञ्च प्रागुक्तटादिविभक्तौ 'अचिर ऋतः' इत्येतद्विषयतैव नास्तीति भावः ; अन्यथा यणैव सिद्धे बाधकबाधनार्थं प्रवृत्तस्यास्य वैयर्थ्यमेव स्यादिति तत्त्वम् । एवं 'अकः सवर्णे दीर्घः' इत्यनेन 'इको यणचि, आद्गुणः, अतो गुणे' इति त्रितयानां न बाधः ।

अन्ये तु—स्वाश्रयविषयत्वाव्याप्यविषयताऽवृत्तित्वमित्यस्य स्थाने स्वाश्रयविषयत्वाव्याप्यविषयतावृत्तित्वमिति निवेश्य 'उर्ऋत्' इत्यस्येररारामपवादत्वं सुघटयन्ति । 'यचि भम्' इत्यस्य प्रागुक्तरीत्या स्वातन्त्र्येणैवोभयोर्बाधकत्वम् । यद्यपि एवंरीत्या 'अकः सवर्णे दीर्घः' इत्यस्य 'अतो गुणे' इत्यस्यापि बाधकताप्राप्त्या त्रितयशास्त्रीयविषयतावृत्त्यन्यतमत्वस्य स्वव्यापकतावच्छेदकत्वात्, स्वव्यापकतावच्छेदकान्यतरत्वरूपधर्मविशिष्टभिन्नत्वाच्च ; तथापि—तत्र 'अतो गुणे' इति शास्त्रे गुणग्रहणसामर्थ्यात् 'न सवर्णदीर्घेण भवन्ति' इत्यत्र 'अतो गुणे' इत्यस्य बाधः । न च एकारांशे 'एधे' इत्यत्र चारितार्थ्यम्, ओकारांशेऽपि 'तितउ' शब्दस्य सम्बुद्धौ गुणे 'तित+ओ' इति जाते, ततः 'अतो गुणे' इति 'तो' इत्यत्र चारितार्थ्यमिति वाच्यम् ; तावन्मात्रप्रयोजनकत्वे 'एङि'त्येव वक्तव्ये गुणग्रहणस्य तथापि वैयर्थ्यात् । 'कुप्वोः ≍क ≍पौ च' इत्यस्य उभयबाधप्राप्तावपि एकशास्त्रेण एकवाक्यतापन्नपूर्वत्रासिद्धबाधेन चारितार्थ्ये शास्त्रद्वयेनैकवाक्यतापन्नपूर्वत्रासिद्धबाधे मानाभाव इत्येकस्यैव तेन बाधः । न च वैपरीत्यम् ; बाधे सत्यपि पुनस्तद्विषये सत्वविधेरप्राप्ततया तद्बाधं विना चारितार्थ्याभावादिति न कुत्रापि दोष इति वदन्ति ॥ ५८ ॥

**तदप्राप्तियोग्येऽचारितार्थं ह्येतस्य बाधकत्वे बीजम् ।**

---

तदप्राप्तीति । तच्च चतुर्विधम् — ( १ ) तदप्राप्तियोग्येऽचारितार्थम् , ( २ ) तदप्राप्तियोग्येऽचारितार्थे सति कृते चारितार्थ्यम् , ( ३ ) तदप्राप्तियोग्येऽचारितार्थे सति कृतेऽचारितार्थ्यम् , ( ४ ) तदप्राप्तियोग्येऽचारितार्थ्ये सति अपवादशास्त्रप्रवृत्त्युत्तरमुत्सर्गशास्त्रप्रवृत्तावपवादशास्त्रप्रणयनवैयर्थ्यसम्भावना चेति । अत्र तदप्राप्तियोग्यं च तद्विधेयाघटितं बोध्यम्, तेन तद्विधेयघटिते तदप्राप्तियोग्येऽपवादत्वेन जिघृक्षितशास्त्रस्य चारितार्थ्येऽपि न क्षतिः । तत्राऽऽद्येन बाधबीजेनोत्सर्गस्य पूर्वमप्रवृत्तिरित्येव बाधः । तथा चोत्सर्गशास्त्रे योद्देश्यतावच्छेदकावच्छिन्नेऽपवादशास्त्रप्रवृत्तियोग्यलक्ष्यघटकातिरिक्तत्वेन सङ्कोचः ; यथा—'सम्बुद्धौ चे'त्यस्य हल्ङ्यादिसूत्राप्राप्तियोग्येऽचारितार्थ्येनैतत्प्रवृत्तियोग्यलक्ष्यघटकातिरिक्तत्वेन हल्ङ्यादिशास्त्रीयसुपदार्थे सङ्कोचात् 'रमा + स्' इत्यत्र हल्ङ्यादिसूत्राप्राप्त्याऽनेनैत्वे 'एङ्ह्रस्वादि'ति सुलोपसिद्धिरिति भाष्ये स्पष्टम् । न चात्र द्वितीयबाधबीजेन निर्वाहः ; तस्य बीजस्य हल्ङ्यादिसूत्रविषयेऽप्रवृत्तिस्वीकारात् । अत एव 'अनड्वानि'त्यत्र सुलोपसिद्धिः ; अन्यथा 'सावनडुहः' इत्यनेन हल्ङ्यादिलोपस्य द्वितीयबाधबीजेन बाधापत्त्या नुमुत्तरं हल्ङ्यादिलोपानापत्तेः । 'आमि सर्वनाम्नः सुडि'त्यस्य नुडप्राप्तियोग्येऽचारितार्थ्यात्कृतेऽपि नुटि 'यदागम'न्यायेन चारितार्थ्याच्च द्वितीयबाधबीजेन सुटा नुटो बाधसिद्धिः । एतद्बाधश्चोत्सर्गशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने स्वविहितकार्याश्रयातिरिक्तत्वेन सङ्कोचरूपः, तथा च 'ह्रस्वनद्याप' इत्यत्राऽऽम्पदार्थे 'आमि सर्वे'ति शास्त्रविहितसुडाश्रयातिरिक्तत्वेन सङ्कोचात् 'सर्वेषामि'त्यत्र सुडुत्तरं न नुट् । एवमत्र प्रथमबाधबीजस्य सत्त्वेन सुट्प्रवृत्तियोग्यलक्ष्यघटकातिरिक्तत्वेनाऽऽम्पदार्थे सङ्कोचात् सुटः पूर्वमपि न नुडिति बोध्यम् । एतदेव तक्रकौण्डिन्यन्यायस्वरूपम् । तृतीयबाधबीजेन तु प्रथमबाधबीजप्रयोज्यसङ्कोचरूपघटकस्वप्रवृत्तियोग्यार्थे स्वीयोद्देश्यतावच्छेदकावच्छिन्नेति विशेषणदानरूपसङ्कोचः क्रियते । तथा च 'ङेराम्' इति शास्त्रस्य 'याडापः' इति शास्त्राप्राप्तियोग्येऽचारितार्थ्येन कृते याटि निर्दिश्यमानस्य याटा व्यवधानादचारितार्थ्येन च 'याडापः' इति शास्त्रीयङिद्वचनपदार्थे आम्विधायकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नो य आम्शास्त्रप्रवृत्तियोग्यस्तदतिरिक्तत्वेन सङ्कोचात् याटः पूर्वमाम्सिद्धिः, कृते त्वामि सङ्कुचितोद्देश्यतावच्छेदकस्य 'रमा + आम्' इत्यत्र सत्त्वेन 'याडापः' इत्यस्य प्रवृत्तिः सुलभैव । यद्यप्यत्र प्रथमबाधबीजेन निर्वाहः ; तथापि 'अयज + इ + इन्द्रमि'त्यत्र 'आद्गुणः' इत्यस्य प्रवृत्तये एतस्याऽऽवश्यकत्वम् । अन्यथा इटः इकारस्य 'अकः सवर्णे' इति शास्त्रप्रवृत्तियोग्यत्वेन गुणस्याप्रवृत्त्याऽऽपत्तेः । मन्मते तु 'आद्गुणः' इत्यत्र 'अकः सवर्णे' इति शास्त्रीयसवर्णाज्व्यवहितपूर्वत्वविशिष्टाक्त्वरूपोद्देश्यतावच्छेदकावच्छिन्नो यः स्वप्रवृत्तियोग्यस्तदतिरिक्तादवर्णादगव्यवहितपरसवर्णाज्रूपस्वप्रवृत्तियोग्यातिरिक्ते अचीत्येवंरूपस्यैव वा सङ्कोचस्य प्राप्त्या 'अयज + इ' इत्यत्र 'आद्गुणः' इत्यस्य दुर्वारत्वेन

नोक्तदोषः। तत्र मते त्वच्पदार्थे 'अकः सवर्णे' इति शास्त्रप्रवृत्तियोग्यातिरिक्तत्वेन सङ्कोचेनात्रेट इकारस्य दीर्घप्रवृत्तियोग्यत्वेन गुणानापत्तिरुद्धरैव स्यादिति दिक्।

'अतोऽमि'त्यस्य लुगप्राप्तियोग्येऽचारितार्थ्येनाऽमुत्तरं लुकि तु 'अतोऽम्'-त्यस्य प्रणयनवैयर्थ्येन चतुर्थबाधबीजेन द्वितीयस्त्वविहितकार्याश्रयातिरिक्तत्वेनैव 'स्वमोरि'त्यत्र सङ्कोचः, तेनाऽमुत्तरं न लुक् प्रथमबाधबीजेन बाधाभावः प्रागपि न लुगिति बोध्यम्।

केचित्तु—द्वितीयबाधबीजेनैव स्वप्रवृत्तियोग्यातिरिक्तत्वेन स्वविहितकार्याश्रयातिरिक्तत्वेन चोत्सर्गशास्त्रे सङ्कोचः। 'रमे' इत्यत्राप्यनेनैव बाध इति प्रथमबाधबीजस्य नोपयोगः। हल्ङ्यादिलोपविषये तद्प्रवृत्तिस्वीकारे तु न मानम्, नापि फलम्, 'अनड्वानि'त्यत्र पुनः पुनः संयोगान्तलोपेन निर्वाहः। 'सावपि पदं भवती'-त्यस्य सर्वाभिमतत्वेन 'अनड्वान + ह् + स्' इति दशायामेकविभक्तिरूपेण काले 'संयोगान्ते'-ति सूत्रस्य वर्णद्वये प्राप्त्या 'लक्ष्ये लक्षण'न्यायस्य विषयाभावात्। एवमेव तृतीय-चतुर्थाभ्यामपि बाधबीजाभ्यां प्रथमबाधबीजप्रयोज्यसङ्कोचोऽपि स्वीकरणीय इति सर्वेष्टसिद्धिरिति वदन्ति।

अन्ये तु - प्रथमबाधबीजेनैव सर्वत्र निर्वाहेऽन्यानि त्रीणि बाधबीजानि निष्फलत्वान्नाङ्गीकार्याणि। 'आमि सर्वनाम्न' इत्यत्र आ आमीत्याकारप्रश्लेषेणाऽऽकारादौ आमि सुड्नुटोः प्रवृत्त्या प्रथमबाधबीजेन पूर्वं सुटि आकाराद्यामपरकत्वाभावेन नुटोऽप्राप्तिः। 'अजादेर्द्वितीयस्ये'त्यनेन 'एकाच' इत्यस्य परत्वाद् बाधेन 'सकृद्-गति'न्यायान्न पुनरेकाच इत्यस्य प्रवृत्तिः। यद्वा—प्रथमबाधबीजेन 'एकाच' इत्यस्य बाधेनानभ्यासग्रहणेन तत्प्रत्याख्यानप्रकारेण वा न पुनस्तत्प्राप्तिः। किञ्च 'तक्रकौ-ण्डिन्य'न्यायेन द्वितीयबाधबीजेन बाधस्वीकारे 'इग्यणः, हन्तेर्हिंसायामि'त्यादिभि-र्द्वित्वबाधापत्तिः, 'तदोः, अनाप्यक' इति सूत्राभ्यां त्यदाद्यत्वबाधापत्तिः, तवकाद्या-देशेनाऽऽदिवृद्धिबाधापत्तिः, स्यतासिभ्यां तिबादिबाधापत्तिः 'पचो व' इत्यादिना कुत्वादिबाधापत्तिश्च। एतदादिषु बहुषु लक्ष्येष्वननुगततदनित्यत्वस्वीकारापेक्षया शास्त्रे तदनाश्रयणमेव वरम्। अत एव 'इदमो म' इति सूत्रं चारितार्थम्; अन्यथा 'इदोऽय् पुंसि' 'यस्सावि'त्याभ्यामपवादत्वादेव बाधे सिद्धे तद्वैयर्थ्यं स्पष्टमेव। न चैतद-स्वीकारे 'नेमौ रहाभ्या'मिति भाष्यासङ्गतिः, 'हर्यनुभव' इत्यादौ रेफस्य द्वित्वापत्तिश्च, मम तु तक्रन्यायेन अनचीत्यत्र यर्पदार्थे रेफातिरिक्तत्वेन सङ्कोचात्तदप्राप्तिरिति वाच्यम्; अत्र तक्रन्यायेन सङ्कोचेनेष्टसिद्धेरयोगात्। तक्रन्यायेन हि विशेष्य-विशेषणदलप्रविष्टयावत्पदार्थसङ्कुचितव्याप्यतावच्छेदकरूपावच्छिन्नातिरिक्तत्वेन सङ्कोच आवश्यकः; अन्यथा 'ह्रस्वनद्याप' इत्यत्राऽऽम्पदार्थेऽवर्णावधिकपरामतिरिक्तत्वेन सङ्कोचापत्तौ 'रामाणामि'त्यत्र नुडनापत्तेः, एव'मेकाचो द्वे' इत्यत्राजादिधात्वतिरिक्तत्वेन सङ्कोचे 'आटे'त्यत्र द्वित्वानापत्तेश्च। एव'मनचि चे'त्यत्रापि यरवधिकपूर्वत्ववद-जवधिकपरत्ववद्रेफातिरिक्तत्वेन सङ्कोचः स्यादिति 'अर्हेणे'त्यत्र तादृशरेफातिरिक्तयरः सत्त्वेन रेफस्यानचीति द्वित्वापत्तेः। तादृशसङ्कुचितयर्पदस्य सूत्रवार्तिकयोः सम्बन्धेऽपि 'मद्रह्रदो, धात्रंश' इत्यादौ रेफस्य द्वित्वापत्तेर्दुर्वारत्वाच्च। किञ्च अनची-

**१. अत एव 'आयादय' इति सूत्रे 'गोपायिष्यती'त्यादावायादीन्बाधित्वा परत्वात् स्यादयः प्राप्नुवन्तीत्याशङ्क्य, "अनवकाशा आयादयः। 'गोपायती'-त्यादावपि शप् स्यादिः प्राप्नोति। न च सति शप्यसति वा न विशेषः। अन्यदिदानीमिदमुच्यते नास्ति विशेष इति। यदुक्तमायादीनां स्यादिभि-रव्याप्तोऽवकाश इति स नास्त्यवकाश" इति भाष्ये उक्तम्।**

---

त्यस्य वैकल्पिकत्वेन 'शेषाद्विभाषे'ति सूत्रस्थभाष्यरीत्या रपदप्रयोज्यनिमित्तताख्यशाब्द-विषयतायास्तदप्राप्तियोग्येऽचारितार्थ्यमपि दुर्वचमेव। तस्मादत्र तक्रन्यायादन्येन 'माठरपरिवेषण'न्यायेनैव बाध्यबाधकभावः। अत एव तत्र सूत्रे भाष्ये 'माठर-परिवेषण'न्याय एतदुपष्टम्भकतया प्रतिपादितः। शेखरकृता हि 'माठरपरिवेषण'-न्याये तक्रन्यायादभिन्नं मत्वा तक्रन्यायेनेत्युक्तम्, तदयुक्तमेव; 'सर्वे ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविष्टामि'ति हि तन्न्यायस्वरूपम्। अनेन चैककार्यविनियो-गोद्देशेन प्रवृत्तवाक्यकदम्बघटकव्यापकपदार्थे तत्प्रकरणघटकव्याप्यपदार्थातिरिक्तत्वेन सङ्कोचः क्रियते। अत एव 'ष्णान्ता षडि'ति टान्तषट्शब्दनिर्देश उपपद्यते; अन्यथा षष्शब्दे तक्रन्यायेन जश्त्वं बाधित्वा चर्त्वेन पकारे तदभावे जश्त्वेन डकारेऽपि टान्तनिर्देशासङ्गतिः। मम तु मते 'वाऽवसान' इत्यत्रैव व्याप्यचर्पदार्था-तिरिक्तत्वेन तच्छास्त्रीयव्यापकफलपदार्थे सङ्कोचेन 'वाऽवसान' इत्यस्याप्राप्त्या पूर्वं जश्त्वेन डकारे तस्यैव चर्त्वेन टकारे उक्तनिर्देश उपपद्यते। अत एव 'इको यणची'त्यत्रानेन बाधमाशङ्क्य 'तस्मादित्युत्तरस्ये'ति निर्देशान्न बाध्यत इति कैयट आह—पाणिनेर्हि वर्णद्वित्वं वक्ष्यामीतीच्छायाः सत्त्वेन तादृशद्वित्वप्रकरणीय-व्यापकपदार्थे यरात्मके यणात्मके च रेफरूपव्याप्यपदार्थातिरिक्तत्वेन सङ्कोचात् 'अर्हेण, मद्ध्रदः, धात्रंश' इत्यादौ 'अनचि च, अचोरहाभ्यां, यणोमयो द्वे' इत्यादिभि-र्द्वित्वं नेति सङ्क्षेपः। अत एव वार्तिककृताऽप्यसम्भव एवापवादत्वं विरोधस्य तद्बीजत्वादित्यादिनाऽनन्यथासिद्धफलाभावेन च तदनङ्गीकार आदृतः। 'रमायामि'त्यत्र तु प्रथमबाधबीजेनैव निर्वाहात्तृतीयस्य नैतत्फलमिति पूर्वमुपपादितमेव। 'अयजे इन्द्रमि'त्यत्र त्वपवादो यद्यन्यत्र चरितार्थ इत्यनेन दीर्घात् पूर्वमाद्गुणप्रवृत्तिरिति तत्रैवोपपादयिष्यत इति तृतीयस्यापि बाधबीजस्य नासाधारणफलानि। "कुलमि'त्यादौ प्रथमबाधबीजेन 'स्वमोरि'त्यस्य बाधेन पूर्वमप्रवृत्त्याऽऽमुत्तरं च 'अतोऽमि'ति सूत्रारम्भ-सामर्थ्यादेव तद्बाधसिद्धिरित्याहुः।

उक्तचत्वारि बाधबीजानि सप्रपञ्चं निरूपयन्नाद्यं तावत्प्रस्तौति—अत एवेति। तदप्राप्तियोग्येऽचारितार्थ्यरूपाऽऽद्यबाधबीजस्वीकारादेवेत्यर्थः। अनवकाशा इति। न च लिडादावनवकाशः, तत्र कस्यापि विकरणस्याप्राप्तेरिति वाच्यम्; आयादयो वा सार्वधातुके नित्यमिति न्यासमुपक्रम्योक्तभाष्यप्रवृत्त्या सार्वधातुके आयादेर्निरवकाश-त्वस्य दुर्वारत्वात्। शप्स्यादिरिति। स्याद्यन्यतमत्वेन शपो व्यापकत्वमिति भावः।

एवमत्र तत्प्रवृत्त्युत्तरं चारितार्थ्येऽपि तदन्याप्तोऽवकाशो नास्तीति सम्यमेव ।

किञ्चानेन न्यायेन तत्प्रवृत्त्युत्तरमपि चारितार्थ्ये तद्बाधबोधनम्; अन्यथाऽनवकाशत्वेनैव बाधे सिद्धे एतत्कथनवैयर्थ्यापत्तेस्तक्रकौण्डिन्यन्यायप्रदर्शनस्यापि वैयर्थ्यापत्तेश्च । तथा प्रथमद्विर्वचनस्य तदुत्तरं सावकाशेनापि द्वितीयद्विर्वचनेन बाधः । यथा वाऽऽदेरपि प्रवृत्त्या चरितार्थेन 'आदेः परस्ये'त्यनेन 'अलोऽन्त्यस्ये'त्यस्य बाधः ।

तदुक्तं 'मिदचोऽन्त्यादि'ति सूत्रे भाष्ये "सत्यपि सम्भवे बाधनं भवती"ति। अन्यथा 'ब्राह्मणेभ्यो दधि दीयतां, तक्रं कौण्डिन्याये'त्यत्र तक्रदानेन दधिदानस्य बाधो न स्यात्तद्दानोत्तरं तत्पूर्वं वा तद्दानस्य चारितार्थ्यसम्भवात् ।

अत एव विषयभेदेऽप्यपवादत्वम् ।

---

ननु शबादिप्रवृत्त्युत्तरमायादीनां चारितार्थ्येनानवकाशत्वप्रदर्शनमयुक्तमत आह—एव मिति । यथा सति शप्यसति वा विशेषाभावेऽपि तदप्राप्तिमात्रेणाऽऽयादीनामनवकाशत्वमेवं तत्प्रवृत्त्युत्तरं चारितार्थ्येऽपि तदप्राप्तियोग्येऽचारितार्थ्यं निर्बाधमेवेति तस्य प्रथमबाधबीजेन बाधकत्वं सुवचमिति भावः ।

द्वितीयबाधबीजं निरूपयति—किञ्चेति । एतत्फलमाह—यथा प्रथमेति । इदं चानभ्यासग्रहणं प्रत्याचक्षाणस्य भगवतो भाष्यकारस्य मतेन बोध्यम् ।

वस्तुतः—अस्त्वत्र प्रथमबाधबीजेनैव निर्वाह इत्युक्तं प्राक्; इत एव वाऽस्चेराह—यथा वेति । अप्रधानानुरोधेन प्रधानवृत्तेरसत्त्वेन 'उदः स्थे'त्यादौ पूर्वं 'अलोऽन्त्यस्ये'त्यस्य प्रवृत्तावाकाङ्क्षायाः शान्तत्वेन 'आदेः परस्ये'त्यनेन सहैकवाक्यतया पुनरन्वयबोधासम्भवेन कृते चारितार्थ्यस्य दुर्निरूपत्वादत्रापि निरवकाशत्वादेव बाध उचित इतीदमप्युदाहरणं चिन्त्यमेव ।

मिदचोऽन्त्यादिति सूत्रे भाष्य इति । तत्र हि 'पयांसि, यशांसी'त्यादौ लक्षणनुमागमस्यान्त्याजवधिकपरत्वान्त्यव्यञ्जननिवर्तकत्वयोर्यौगपद्येन सम्भवान्निरवकाशत्वरूपविरोधहेत्वभावेनान्त्याचः परत्वेन स्थाने योगत्वस्य बाधो न स्यादित्याशङ्क्य, "नैवेश्वर आज्ञापयति, नापि धर्मसूत्रकाराः पठन्ति, अपवादैरुत्सर्गा बाध्यन्तामिति । किं तर्हि ? लौकिकोऽयं दृष्टान्तः, सत्यपि सम्भवे बाधनं भवतीति । तद्यथा सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेति सत्यपि सम्भवे तक्रदानं दधिदानस्य निवर्तकं भवती"त्युक्तम् ।

अत एवेति । विषयभेदेऽपि प्रकृतन्यायप्रदर्शनपर'मिदचोऽन्त्यादि'ति सूत्रस्थभाष्यप्रामाण्यादेवेत्यर्थः । न चैवं विषयभेदेऽपि बाधकत्वस्वीकारे दधिदानेन कम्बलदानबाधापत्तिः, सुटा यासुटो बाधापत्तिश्चेति वाच्यम्; सजातीयबाधकत्वस्यैव लोकव्यवहारेण कल्पनात् कम्बलस्य दधिसजातीयत्वाभावेन बाधायोगात्

अत एवाचिरादेशेन नुटोऽप्यपवादत्वाद् बाधमाशङ्क्य 'न तिसृ'ति ज्ञापकेन समाहितं तृज्वत्सूत्रे भाष्ये, तेन विषयभेदेऽपवादत्वाभाव एव बोध्यते इति कश्चित्। तन्न; विन्मतोर्लुका टिलोपमात्रस्य बाधानापत्तेः।

यत्तु—'द्यतेर्दिगी'ति सूत्रे द्वित्वोत्तरं दिग्यादेशस्य चारितार्थ्यं कैयटेनोक्तं, तत् प्रौढ्या। ध्वनितं च तेनापि तस्य तथात्वं तदुत्तरग्रन्थेन।

असम्भव एव बाधकत्वं विरोधस्य तद्बीजत्वादिति वार्तिकमतन्तु भाष्यकृता दूषितत्वान्न लक्ष्यसिद्ध्युपयोगि।

तक्रकौण्डिन्यन्यायोऽपि तदप्राप्तियोग्येऽचरितार्थविषयो विधेयविषय एव

---

'यासुड्विषये सीयुटः प्रतिषेधो वक्तव्य' इति वचनेनात्र प्रकरणे बाध्यबाधकभावाभावज्ञापनेनादोषात्। अत एव 'भेजुंसा यासुड्बाधो ने'ति तत्रैव सूत्रे शब्देन्दुशेखरे स्पष्टम्।

वस्तुतस्तु—तक्रन्यायस्यानित्यत्वादसत्त्वाच्च तत्र प्रथमबाधबीजेनानवकाशत्वात् बाधेन तदुत्तरं यासुट्सिद्धिरिति दिक्।

उक्तमर्थं प्रमाणान्तरेण द्रढयति—अत एवाचिरेति। विषयभेदे 'येन नाप्राप्ति'-न्यायस्वीकारादेवेत्यर्थः। नुटोऽप्यपवादत्वादिति। आमो नुट्, रादेशस्तु प्रकृतेरिति विषयभेदः स्पष्ट एवेति भावः। ननु नुटि कृते रादेशस्य चारितार्थ्याभावेन कथमेतन्न्यायविषयतेति चेन्न। तक्रन्यायस्यात्र विषयाभावेऽपि सर्वविधस्य 'येन नाप्राप्ति'न्यायस्य विषयभेदे प्रवृत्तिरित्यत्र प्रमाणदानायैतद्ग्रन्थप्रवृत्तेरदोषात्, नुटि कृतेऽपि यदागमन्यायेन तद्विशिष्टस्याजादित्वेन कृते चारितार्थ्यस्य सुवचत्वाच्च।

केचित्तु—यदागमन्यायेन नामोऽजादित्वेऽपि नुडुद्देश्यतावच्छेदकस्य स्वातन्त्र्येण व्यापकत्वाभावेनान्यतमत्वेनैव तत्त्वस्य वक्तव्यतयाऽन्यतमत्वावच्छिन्ने कृते रादेशस्य चारितार्थ्याभावेन तक्रन्यायस्यात्र दुरुपपादत्वमिति वदन्ति।

तदुत्तरग्रन्थेनेति। तत्र हि दिग्यादेशमुपक्रम्य "नैवमनवकाशः। कृते द्विर्वचने प्रवृत्त्यविघातात्। अथ पुनरेवमप्यनवकाशं मन्यसे, तदा लक्ष्यदोषप्रसङ्ग" इत्युक्तम्।

तत्राथपुनरित्याद्युक्तग्रन्थेन चारितार्थ्यप्रतिपादनपरस्य पूर्वग्रन्थस्यारुचिग्रस्तत्वमुपाध्यायो मन्यते। न लक्ष्यसिद्ध्युपयोगीति। यथोत्तरं मुनीनां प्रामाण्यादिति भावः।

विधेयविषय इति। विभिन्नविधेयतानिरूपितोद्देश्यतयोर्व्याप्यव्यापकभावस्तद्विषय इत्यर्थः। अत एव 'शेषो घ्यसखी'त्यत्रानेन न्यायेनेदन्ते घिशब्दातिरिक्तत्वेन सङ्कोचाभावेन 'घेर्ङिती'त्यत्र घेरिति गुणघटितनिर्देशोपपत्तिः। यद्वा—विधेयेन विधेयान्तरस्य व्याप्यव्यापकभावाद् बाध इत्यर्थः। अत एवापवादो नुग्दीर्घत्वस्य सुटा नुटो बाधः इत्यादिव्यवहारोपपत्तिरिति दिक्।

चेति 'तद्धितेष्वचामादेः' 'धातोरेकाच' इत्यादिसूत्रेषु भाष्ये स्पष्टम् ॥ ५८ ॥

क्वचित्तु सर्वथाऽनवकाशत्वादेव बाधकत्वं, यथा ङेरामो याडादिबाधकत्वम्। न हि याडादिषु कृतेषु ङेराम् प्राप्नोति, निर्दिश्यमानस्य व्यवधानात्। तत्र स्वस्य पूर्वं प्रवृत्तिरित्येव तेषां बाधः। तत्र बाधके प्रवृत्ते यद्युत्सर्गप्राप्तिर्भवति तदा भवत्येव, यथा तत्रैव याडादयः। अप्राप्तौ तु न, यथा—'पचेयुरि'त्यादौ दीर्घबाधके निरवकाश इयादेशे दीर्घाभावः।

तदेतत्पठ्यते—

**क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति ॥ ५९ ॥**

---

अपवादशब्दोऽत्र बाधकपरः।

---

भाष्ये स्पष्टमिति। अनवकाशविपयत्वं 'तद्धितेष्वचामि'त्यत्र विधेयविपयत्वं तु 'धातोरेकाच' इत्यत्रास्य न्यायस्य प्रतिपादितमित्यर्थः। आद्ये 'कौष्ट्रो जागत' इत्यादावन्त्योपधावृद्ध्योर्निषेधमुक्त्वोक्तन्यायेन तयोरादिवृद्ध्या बाधमाशङ्क्य 'सौश्रुत' इत्यादावन्त्योपधावृद्ध्योरप्राप्तिविपये आदिवृद्धेश्चारितार्थ्येनानवकाशत्वाभाव इत्यभिप्रायेण भाष्यकृतेह तदभाव इत्युक्तम्। सामान्यविशेषभावो बाधहेतुः, स चेह नास्तीति कैयटस्तदाशयमाह—धातोरेकाच इत्यादिष्वितिपदेऽतद्गुणसंविज्ञानबहुव्रीहिणा 'नित्यं कौटिल्य' इत्यादेः सङ्ग्रहः। अत्र हि "अथैतेभ्यः क्रियासमभिहारे यङ्‌ भवितव्यम्रिति प्रश्ने उत्तरयोर्विग्रहेण विशेषासम्प्रत्ययान्नित्यग्रहणानर्थक्यं क्रियासमभिहारे च नैतेभ्यो यङ्‌ भवितव्यमि"ति भाष्यकृतोक्तम्। द्वितीयवार्तिके चकारेण विशेषासम्प्रत्ययादित्यस्यानुकर्षणाय चकारः कृतः। क्रियासमभिहारे यत्र यङ्‌ तत्र तदन्ताद्विशेपस्य भृशं जपतीत्याद्यर्थविशेपस्याप्रतीतिरिरिति स न भवति। यद्यनुवादेऽप्येतन्न्यायसञ्चारः स्यात्तदा न्यायेनैव 'धातोरेकाच' इत्यस्य बाधासिद्धेर्विशेषासम्प्रत्ययादित्यनुकर्षकचकारोपादानवैयर्थ्यापत्तिरिति भावः ॥ ५८ ॥

तृतीयं बाधबीजं प्रपञ्चयति—क्वचित्त्विति। सर्वथेति। कृतेऽप्यचारितार्थ्ये सतीति भावः। चतुर्थन्तु सूत्रारम्भसामर्थ्यरूपं तत्समानमूलकत्वेनास्यैव प्रपञ्चभूतत्वादत्र पृथक् नोक्तमपि प्रागुक्तमवगन्तव्यम्।

क्वचिदपवादविषयेऽपीति। कृतेऽचारितार्थेऽपवाद इत्यर्थः।

अत्रेति। अस्मिन् प्रकरणे इत्यर्थः।

---

मूले—तदेतदिति। बाधकोत्तरप्राप्तिमदुत्सर्गकर्तृकं भवनमिति तदर्थः।

उत्सर्गशास्त्राप्राप्तौ न तद्भवतीत्यत उक्तम्, मूले—क्वचिदिति। मूले—बाधकशब्दः सर्वथा निरवकाशत्वमूलकबाधकत्वावच्छिन्नपरः।

तदुक्तं 'गुणो यङ्लुकोरि'त्यत्र भाष्ये—"अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्ते। अजीगणत्। अत्र गणेरीत्वमपवादत्वाद्धलादिःशेषं बाधते। न गणेरीत्वमपवादत्वाद्धलादिःशेषं बाधते। किं तर्हि? अनवकाशत्वा"ति ग्रन्थेन। गणरूपाभ्यासान्त्यणस्येत्वमित्यर्थे हलादिःशेषेण तन्निवृत्तौ तदनवकाशमीत्वे तु कृते न तस्य प्राप्तिरन्त्यहलोऽभावात् अभ्यासविकारेषु बाध्यबाधकभावाभावेन च साधितम्। तस्मिंश्च सति लोपे कृते सामर्थ्याच्छिष्टस्यान्त्यस्येत्वमिति न दोषः। न च 'येन नाप्राप्ति'न्यायेनापवादत्वमप्यस्य सुवचम्; तस्य चरितार्थविषयताया उक्तत्वात्।

'इको झलि'त्यत्र भाष्येऽपि ध्वनितमेतत्। तत्र हि 'अज्झने'ति दीर्घेण गुणोत्तरं फलाभावेनानवकाशत्वाद् गुणे बाधिते दीर्घोत्तरं गुणः स्यात्, दीर्घविधानं तु मिनोतेर्दीर्घे कृते सनि 'मीमे'त्यत्र मीग्रहणेन ग्रहणे-

---

केचित्तु—अत्रापवादशब्दस्य बाधकपरत्वेऽप्यन्यत्रापवादशब्दः तक्रकौण्डिन्यन्यायरूप'येन नाप्राप्ते'ति न्यायपर एव। अत एवाग्रे 'न च येनेति न्यायेनास्यापवादत्वं सुवचं तस्य चरितार्थविषयताया उक्तत्वात्' इत्युक्तं मूले। किञ्च येनेति न्यायं प्रदर्श्य तत्र प्रमाणमुपदर्शयितुं तक्रन्यायो भाष्यकृता प्रदर्शितः। येनेति न्यायस्य निरवकाशादिबोधकत्वे तु तत्प्रामाण्यबोधनाय तक्रन्यायप्रदर्शनमसङ्गतमेव स्यादिति वदन्ति। तन्न शोभनम्; अपवादशब्दस्य बाधके कृते चारितार्थ्यविशिष्टेऽपवादविशेषे च लक्षणायां मानाभावात्, फलाभावाच्च। भाष्ये तु तत्तच्छास्त्राणां निरवकाशत्वमात्रेण पूर्वं प्रवृत्तिस्वीकारेऽपि कृते चरितार्थानामपवादविशेषाणां स्वप्रवृत्त्युत्तरमप्युत्सर्गशास्त्राप्रवृत्तौ प्रमाणमुपदर्शयितुं तक्रन्यायप्रदर्शनस्याऽऽवश्यकत्वम्। मूले 'तस्य चरितार्थविषयताया' इत्यस्य द्वितीयबाधबीजरूपस्य तस्य न्यायस्य कृते चारितार्थ्यरूपत्वेनात्र विषयाभावादित्यर्थकत्वेन तद्विरोधाभावात्। अत एव भाष्ये सर्वत्रापवादशब्दस्तदप्राप्तियोग्येऽचरितार्थपर एवेति दिक्।

दीर्घविधानं त्विति। अन्यथा चतुर्थबाधबीजेन बाधापत्त्या दीर्घोत्तरं गुणानापत्त्या भाष्यासङ्गत्यापत्तिरिति भावः। मीग्रहणेनेति। न च मीग्रहणेन ग्रहणाभावेऽपि 'मीनातिमिनोती'त्यात्वे गामादाग्रहणेष्वविशेषान्माग्रहणेन ग्रहणस्य दुर्वारत्वाद्भाष्यासङ्गतिरिति वाच्यम्; एज्निमित्तत्वं निमित्तीकृत्य प्रवर्तमानस्याऽऽत्वस्यैज्-

---

मूले—भाष्येऽपि ध्वनितमेतदिति। 'येन नाप्राप्ति'न्यायस्य उत्सर्गे कृते चारितार्थ्यरूपापवादविषयकत्वमित्येतदित्यर्थः। मूले—तत्र हीति। भाष्ये इति तदर्थः; तस्य उक्तमित्यनेन साकमन्वयः। मूले—गुणः स्यादिति। 'इको झल्' इति सूत्राभावे 'चिचीषति' इत्यादाविति भावः।

ऽर्थवत्तत्र पश्चात् प्राप्तगुणबाधनार्थ'मिको झलि'ति कित्त्वमित्युक्तम् । अन्यथाऽपवादत्वेन बाधे तद्विषये उत्सर्गाप्रवृत्तेर्भाष्यस्य सूत्रस्य चासङ्गतिरिति स्पष्टमेव ।

यत्तु—'काञ्चनी'त्यादावपत्यादृत्सर्गतः सिद्धेऽप्यण् भवति, 'क्वचिदपवादविषयेऽपी'ति न्यायादिति । तन्न; 'अण् कर्मणि चे'ति सूत्रस्थभाष्यविरोधात् । तत्र ह्यणः पुनर्वचनमपवादविषयेऽनिवृत्त्यर्थं 'गोदायो व्रजती'त्याद्युक्तम् । 'काञ्चनी'त्यादौ काञ्चनेन निर्मितेत्यर्थे शैषिकोऽण् बोध्यः ।

अत्रेदं बोध्यम्—'येन नाप्राप्ते'त्यत्र येनेत्यस्य यदि स्वेतरेणेत्यर्थस्तदा स्वविषये स्वेतरद्यद्यत् प्राप्नोति तद्बाध्यं, विध्यन्तराप्राप्तविषयाभावात् । इयमेव बाध्यसामान्यचिन्तेति व्यवहृयते । अनवकाशत्वेन बाधेऽप्येषा वक्तुं शक्या यद्युदाहरणमस्ति, विनिगमनाविरहात् ।

यदि तु येनेत्यस्य लक्षणेनेत्यर्थः,कार्येणेत्यर्थो वा, तदा बाध्यविशेषचिन्ता । अनवकाशत्वेन बाधेऽप्येतद्बाधेन सार्थक्यमुत तद्बाधेनेत्येवं विशेषचिन्ता सम्भवति यद्युदाहरणमस्ति ॥ ५९ ॥

---

निमित्तत्वविघातक'हलन्ताच्चे'ति कित्त्वसम्पादकमिसादेशं प्रति निमित्तत्वासम्भवात् ।

शैषिकोऽणिति । 'शेषे' इति लक्षणसूत्रेण निर्मितेऽर्थेऽण्प्रत्यय इत्यर्थः । अस्याणस्तु 'वृद्धाच्छो' न बाधकः, 'तत्र भव' इत्याद्यधिकरसूत्रेषु 'वृद्धाच्छ' इत्यस्यानुवृत्त्या तत्तदधिकारभवप्रत्ययानामेव 'वृद्धाच्छ' इत्यनेन बाधात् ।

स्वेतरेणेति । अत्र स्वेत्यधिकम् । इतरेणेत्येतावतैवेष्टसिद्धेः । विध्यन्तरेति । तदप्राप्तियोग्येऽचारितार्थ्यादित्यर्थः । यद्युदाहरणमस्तीति । एतस्योदाहरणं तु 'अकः सवर्णे' इत्यनेन 'इको यणचि' 'आद्गुणः' इत्येतयोर्बाधः ।

यद्युदाहरणमस्तीति । एतस्योदाहरणं 'कुप्वोः' इत्यनेन 'विसर्जनीयस्य स' इत्यस्यैव बाधः । 'शर्परे' इत्यस्य बाधेन न चारितार्थ्यमिति भावः ।

वस्तुतस्तु—तक्रन्यायेन बाधे यद्युदाहरणमस्तीति वक्तुं युक्तम् ॥ ५९ ॥

---

निमित्तत्वासम्भवादिति । न चैवमपि अस्य लाक्षणिकत्वेन मीग्रहणेन ग्रहणं न भविष्यतीति वाच्यम्; गामादाग्रहणेष्वविशेषात् माशब्दे तदप्रवृत्त्या तत्साहचर्यात् मीशब्दांशेऽपि तदप्रवृत्तेः ।

मूले—अर्थवदिति । ननु 'अज्झनगमां सनि' इत्यत्राज्ग्रहणस्यैतावन्मात्रफलकत्वे हनिगम्योरिव मिनोतेरपि मिहनिगमामिति स्वरूपग्रहणमेवास्तु, किमज्ग्रहणेनेति चेन्न । कुटादेर्गुधातोः सनि ङित्त्वाद् गुणाप्राप्त्या 'जुगूषति' इत्यत्राज्ग्रहणस्याऽऽवश्यकत्वात् । मूले—तत्रेति । 'चिचीषति' इत्यादावित्यर्थः । 'मित्सति' इत्यादौ तु दीर्घे कृते प्रतिपदोक्ततया गुणं बाधित्वा इसादेशे 'हलन्ताच्च' इति कित्त्वेन लघूपधगुणो नेति न दोषः । मूले—अन्यथेति । सर्वथाऽनवकाशस्थलेऽपि 'येन नाप्राप्ति'न्यायेन बाधाङ्गीकारे इति तदर्थः ॥ ५९ ॥

तत्र कार्येणेत्यर्थे पररूपत्वावच्छिन्ने कार्ये आरभ्यमाणाया वृद्धेस्तद्-बाधकत्वे निर्णीते किं शास्त्रविहितस्येत्येवं तद्विशेषचिन्तायामाह—

**पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरान् ॥ ६० ॥**

अवश्यं स्वपरस्मिन् बाधनीये प्रथमोपस्थितानन्तरबाधेन चारितार्थ्ये पश्चादुपस्थितस्य ततः परस्य बाधे मानाभाव आकाङ्क्षाया निवृत्तेर्विप्रतिषेधशास्त्र-बाधे मानाभावाच्चेत्येतस्य बीजम् ॥ ६० ॥

'नासिकोदरौष्ठजङ्घादन्ते'त्यस्य औष्ठाद्यंशे ङीप्निषेधत्वावच्छिन्नबाधकत्वे निर्णीते किं विहितस्येत्याकाङ्क्षायामाह—

**मध्येऽपवादाः पूर्वान्विधीन् बाधन्ते नोत्तरान् ॥ ६१ ॥**

तेन औष्ठादिषु पञ्चस्वसंयोगोपधादिति प्रतिषेध एव बाध्यते, न तु सहनञ्विद्यमानलक्षण इति 'नासिकोदरे'त्यत्र भाष्ये स्पष्टम् ।

पूर्वोपस्थितबाधेन नैराकाङ्क्ष्यमस्या बीजम् ॥ ६१ ॥

ननु 'वा छन्दसी'त्यनेन 'सेर्ह्यपिच्चे'त्यनन्तरस्यापित्त्वस्येव हेरपि विकल्पः स्यात्, तथा 'नेटी'ति निषेधोऽनन्तरहलन्तलक्षणाया इव सिचिवृद्धिमृजिवृद्ध्यो-

---

बाध्यसामान्यचिन्तायामनुगतं बाध्यत्वे बीजमुपपाद्य बाध्यविशेषचिन्तायामनुगतं बीजमुपवर्णयितुं तावदाह—पुरस्तादिति । अनन्तरान् = बाध्यव्यवधानशून्यान् ।

स्वपरस्मिन्निति । अत्र स्वेत्यधिकम् ॥ ६० ॥

असंयोगोपधादिति प्रतिषेध इति । प्रसज्यप्रतिषेध एवायं न, तु पर्युदास इति भाष्यस्वरसः । एवम् 'ऋष्यन्धके'त्यण् इञ एवापवादो, न तु ढकः । अत एव 'आत्रेय' इत्यत्र परत्वाड्ढक् सिद्धिरिति दिक् ॥ ६१ ॥

हेरपि विकल्प इति । न च सेर्हिङित्येव सिद्धेऽपिद्ग्रहणात् तावत एवोत्तरत्रानुवृत्त्याऽपित्त्वस्यैव विकल्पो, न हेरिति वाच्यम्; सिपोऽनुदात्तत्वेनान्तरतम्याद्ध्यादेशस्यानुदात्तत्वापत्तेः, तद्वारणायापित्त्वविधानस्याऽऽवश्यकत्वेन तावन्मात्रस्यो-

---

अस्याः परिभाषाया विप्रतिषेधशास्त्रबाधे मानाभावादिति मूलकृदुक्तं बीजं वस्तुत उत्तर परिभाषाया अस्ति, उत्तरपरिभाषायाश्च बीजं पूर्वोपस्थित बाधे नैराकाङ्क्ष्यरूपमवगन्तव्यमित्यस्मद्गुरुचरणाः । तथा मूलपाठस्तु प्रामादिक इति बोध्यम् ॥ ६० ॥

रपि स्यात्, अत उक्तन्यायमूलकमेवाऽऽह—

**अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति ॥ ६२ ॥**

अत एव 'संख्याऽव्ययादेरि'ति ङीब्ग्रहणं चरितार्थम्। तद्ध्यनन्तरस्य ङीपो विध्यभावाय। 'न क्तिची'ति सूत्रे दीर्घग्रहणञ्च चरितार्थम्। तद्ध्यनन्तरस्यानुदात्तोपदेशेत्यस्यैव निषेधाभावाय।

मध्येऽपवादन्यायाद्यपेक्षया 'अनन्तरस्ये'ति न्यायः प्रबल इति 'अष्टाभ्य'

---

त्तरत्रानुवृत्तौ प्रमाणाभावात्। उक्तन्यायमूलकमिति। उक्तन्यायमूलं प्रथमोपस्थितत्व-रूपं मूलं यस्येत्यर्थः।

ङीपो विध्यभावायेति। न चान्तरस्य ङीपोऽनुवृत्तावुक्तसूत्रवैयर्थ्येन सामर्थ्याद्व्यवहितस्यापि ङीपोऽनुवृत्तिसिद्धौ तस्य स्वांशे चारितार्थ्याभाव इति वाच्यम्; ङीपोऽनुवृत्तावपि परिच्छेदकादेश्चेत्संख्यादेरेव असत्त्ववाचकादेश्चेदव्ययादेरेवेति नियमार्थतया 'आढकोघ्नी, अश्वेवणोघ्नी'त्यादौ ङीपभावायोक्तसूत्रस्य सार्थक्येन वैयर्थ्य-मूलकोक्तकल्पनाया असम्भवदुक्तिकतया स्वांशे चारितार्थ्यस्य सूपपादत्वात्। परि-भाषाघटकस्यानन्तरस्य विधिर्भवतीत्यंशस्य 'संख्याव्ययादेरि'ति ज्ञापकमुपन्यस्य अन-न्तरस्य प्रतिषेधो भवतीति द्वितीयांशस्य ज्ञापकमाह—न क्तिचीति।

अष्टाभ्य इति। तत्र हि "औशद्यावस्तु लुक् तत्र षड्भ्योऽप्येवं प्रसज्यते। अप-वादो यस्य विषये यो वा तस्मादनन्तरः, इति 'अष्टपुत्र' इत्यादौ उत्तरपदपरत्वावस्थायां सामासिकलुग्बाधकतया प्रसक्तस्यौशादेशस्य वारणाय प्रवृत्तस्य भाष्यकारोपवर्णि-तस्य श्लोकवार्तिकस्य व्याख्यावसरे 'यो वा तस्मादि'ति प्रतीकमुपादाय कैयटे-नोक्तम्। ननु मध्येऽपवादन्यायेन द्वितीयाध्यायविहितसमासिकलुक एव बाधः प्राप्नोति। नैष दोषः। यत्र हि द्वावपि व्यवहितौ पूर्वोत्तरौ तत्र पूर्वानुभवाहित-संस्कारोपजनितस्मृत्युपारूढस्य पूर्वस्य बाधो युक्तः। इहत्वनेकाध्यायव्यवहितो द्वि-तीयाध्यायविहितः सामासिको लुक् महता प्रयत्नेन स्मरणीयः। अनन्तरस्त्वनुभव-

---

'अष्टपुत्रः' इत्यत्र मा भूत्, अस्तु तत्रौश् लुग् भविष्यति, अत आह—षड्भ्योऽप्येवं प्रसज्यत इति। 'अष्टौ इत्यत्रापि 'षड्भ्यो लुक्' इति लुक् स्यादिति भावः। अपवादत्वादौश् लुको बाधको भविष्यति, तदाऽऽह—अपवाद इति। न चैवम्, 'अष्टपुत्रः' इत्यत्रापि बाध-कत्वादौश् भविष्यति, अत आह—यस्य विषय इति। यस्य लुको विषये औश्त्वे तस्यैवापवादो 'येन नाप्राप्त'न्यायेनेत्यर्थः। अथवाऽनन्तरस्य लुको बाधको भविष्यति, इत्याशयेनाऽऽह—यो वा तस्मादनन्त इति। श्लोकवार्तिकस्येति। अस्यार्थः—द्युरिति उत्तरपदस्य प्राचां संज्ञा। अष्टौ अनुत्तरपदे औश् भवतीति वक्तव्यम् ॥ ६२ ॥

इति सूत्रे कैयटः ।

प्रत्यासत्तिमूलकोऽयम् । लक्ष्यानुरोधाच्च व्यवस्थेत्यपि पक्षान्तरम् । तत्र तत्र क्वचित् स्वरितत्वप्रतिज्ञानात् सामर्थ्येन वा बाध्यतेऽयं न्यायः । यथा 'टिड्ढे'ति सूत्रेण डापा व्यवहितस्यापि ङीपो विधिः । न षडित्यादिना द्वयोरपि टाबङीपो प्रतिषेधः । इयञ्च 'शि सर्वनामस्थानमि'त्यादौ भाष्ये स्पष्टेत्यन्यत्र विस्तरः ॥ ६२ ॥]

ननु 'दधती'त्यादावन्तरङ्गत्वादन्तादेशेऽल्विधौ स्थानिवत्त्वाभावाददादेशो न स्यादिति तद्वैयर्थ्यापत्तिरत आह—

## पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः ॥ ६३ ॥

लक्षणैकचक्षुष्को ह्यपवादविषयं पर्यालोच्य तद्विषयत्वाभावनिश्चय उत्सर्गेण तत्तल्लक्ष्यं संस्करोति ; अन्यथा विकल्पापत्तिरित्यर्थः । अभिनिविशन्त

विषय इति स एव बाध्यत" इत्युक्तम् । एवं च मध्येऽपवादन्यायादस्य प्राबल्यं स्पष्टमेव तेनाभिहितमिति भावः ; तदाह—कैयट इति ।

पक्षान्तरमिति । अत्र कैयट एवाऽऽहेति शेषः । ङीपो विधिरिति । डाप एव विधाने त्वदन्तत्वाट्टापैव सिद्धे सूत्रमेव व्यर्थं स्यादिति बोध्यम् । भाष्ये स्पष्टेति । तत्र हि 'अनपुंसकस्ये'ति प्रसज्यप्रतिषेध इति 'शि सर्वनामस्थानमि'त्यस्यापि प्रतिषेधः स्यादित्याशङ्क्यानेन न्यायेन समाहितमिति द्रष्टव्यम् ॥ ६२ ॥

तद्वैयर्थ्यापत्तिरिति । ननु 'जक्षती'त्यत्र धातुसंज्ञासमकालमेवाभ्यस्तसंज्ञाप्रवृत्त्या एककाल एव द्वयोः प्राप्तावन्तादेशबाधेनादादेशस्य चारितार्थ्यमिति चेन्न । 'झोऽन्त' इत्यत्रोपदेशिवद्वचनेनात्रापि पूर्वमेवान्तादेशप्रवृत्त्या तद्वैयर्थ्यस्य सूपपादत्वात् । 'अदभ्यस्तादि'त्यत्र त्वभ्यस्तात्परत्वस्योपदेशेऽसम्भवेनोपदेशिवद्भावस्य न प्रवृत्तिः । किञ्च 'आयन्ना'दिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थमिति वार्तिके स्वरसिद्धिरूपप्रयोजनोपन्यासेनाभ्यस्तविषयेऽभ्यस्तानामादिरिति स्वरस्यैव प्रवृत्त्याऽऽद्युदात्तस्वरनिवृत्तिरूपप्रयोजनाभावेन तद्वार्तिकाप्रवृत्तिरिति बोध्यम् ।

लक्षणैकचक्षुष्क इति । लक्षणेनैव यस्य लक्ष्यसाधुत्वपरिज्ञानं स इत्यर्थः । विकल्पापत्तिरिति । पर्यायापत्तिरित्यर्थः । विकल्पस्तु न सम्भवति, पूर्वमुत्सर्गशास्त्रप्रवृत्तावपवादशास्त्रप्रवृत्तेर्दुर्घटत्वात् ॥ ६३ ॥

पर्यायापत्तिरित्यर्थ इति । स्मृतिद्वयप्रामाण्यात् तृजादिवदन्यतरत्वेन व्यापकत्वादिति भावः । विकल्पस्त्विति । समुच्चय इति तदर्थः ॥ ६३ ॥

इत्यस्य बुद्ध्याऽऽरूढा भवन्तीत्यर्थः। 'अपवादो यद्यन्यत्र चरितार्थ' इति न्यायस्य तु नात्र प्राप्तिरन्तादेशाप्राप्तिविषये चारितार्थ्याभावात् ॥ ६३ ॥

लक्ष्यैकचक्षुष्कस्तु तच्छास्त्रपर्यालोचनं विनाऽप्यपवादविषयं परित्यज्योत्सर्गेण लक्ष्यं संस्करोति, तस्यापि शास्त्रप्रक्रियास्मरणपूर्वकप्रयोग एव धर्मोत्पत्तेः ; तदाऽऽह—

**प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते ॥ ६४ ॥**

तत इत्यस्यापवादशास्त्रपर्यालोचनात् प्रागपीत्यर्थः। प्रकल्प्येत्यस्य परित्यज्येत्यर्थः। अत एव प्रातिपदिकार्थसूत्रे भाष्ये 'इदं द्वयमप्युक्त्वा न कदाचित्तावदुत्सर्गो भवत्यपवादं तावत्प्रतीक्षत' इत्यर्थकमुक्तम् ॥ ६४ ॥

एतन्मूलकमेव नवीनाः पठन्ति—

**उपसञ्जनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधत इति ॥ ६५ ॥**

यत्तु—अभ्यस्तसंज्ञासूत्रे कैयटेन प्रकल्प्य चेति प्रतीकमुपादाय यथा न

---

उत्तरपरिभाषां लक्ष्यैकचक्षुष्कपरतया योजयितुमवतारयति—लक्ष्यैकचक्षुष्क इति। लक्षणज्ञानमन्तराऽपि यस्य लक्ष्यसाधुत्वपरिज्ञानं स इत्यर्थः। धर्मोत्पत्तेरिति। "एकः शब्दः सम्यक् ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग् भवती'ति श्रुतिप्रामाण्यादित्यर्थः।

अत एवेति। अधिकारिभेदेन द्वयोः परिभाषयोर्व्यवस्थापनादेवेत्यर्थः। प्रातिपदिकार्थसूत्रे भाष्य इति। 'देवदत्तः पचती'त्यत्र अपवादभूतयोः शतृशानचोः प्रवृत्तिविषयतया तिङाऽनुत्पत्तौ तिङाऽभिधानाभावेन 'अभिहिते प्रथमे'त्यस्य विषयाभावात् प्रथमाया अनुत्पत्तिप्रसङ्ग इति शङ्कां समर्थयितुं "न चापवादविषये उत्सर्गोऽभिनिविशते, पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः। प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते। न तावदत्र कदाचित्तिङादेशा भवन्त्यपवादौ शतृशानचौ तावन् प्रतीक्षत" इत्युक्तम् ॥ ६५ ॥

नवीना इति। दीक्षितादय इत्यर्थः। उपसञ्जनिष्यमाणेति। उत्सर्गशास्त्रप्रवृत्त्यभावसम्भावनाप्रयोज्या यत्रापवादप्रवृत्तिसम्भावना, तत्र पूर्वमुत्सर्गो न प्रवर्तते इत्यर्थः। अनेन च न्यायेन भविष्यदपवादविषयातिरिक्तत्वेनोत्सर्गशास्त्रे सङ्कोचः, तेन 'दधती'त्यत्र भविष्यदपवादविषयसत्त्वेन 'झोऽन्त' इत्यस्याप्रवृत्तिरिति बोध्यम्।

**सम्प्रसारण इति परस्य यणः पूर्वं सम्प्रसारणं, पूर्वस्य तु तन्निमित्तकः प्रतिषेध**

---

केचित्तु—अत्रापवादपदं निषेधपर्युदासयोरुपलक्षणम्, तेन 'ररन्धतुरि'त्यत्र नुमः पूर्वं कित्त्वं न; अन्यथा नलोपः स्यात्। मम तु यद्यत्र 'लिट् किदि'ति कित्त्वं न प्रवर्तेत, तर्हि नुमि कृते'ऽसंयोगादि'ति प्रवर्तेतेति सम्भावनायाः सत्त्वेन कित्त्वाप्रवृत्त्या नलोपो न। यदि त्वत्र प्रतिपदोक्तत्वात्कित्त्वात् पूर्वमेव नुमित्युच्यते, तदा-लिप्धातोरनुपसर्गा'ल्लिम्पविन्दे'ति शप्रत्ययं कृत्वोपसर्गयोगे 'प्रलिम्प' इत्यस्याऽऽपत्तिः। मम तु यदि शप्रत्ययो न स्यात्तदोपसर्गयोगे'ऽनुपसर्गादि'ति निषेधविषयः स्यादिति सम्भावनया शप्रत्ययानुत्पत्त्या 'प्रलिप' इत्येवेति प्राहुः। तन्न; निषेध्य-पर्युदस्यमानयोः प्रवृत्त्यभावस्य निषेधपर्युदासप्रवृत्त्यभिन्नत्वेन निषेधपर्युदास-प्रवृत्तेस्तत्प्रवृत्त्यभावसम्भावनाप्रयोज्यत्वासम्भवात्। यथा 'ररन्धतुरि'त्यत्र लिट् किदि'ति कित्त्वं न स्यात्तदा'ऽसंयोगादि'ति कित्त्वं न स्यादित्युभाभ्यामपि कित्त्वं न स्यादित्यस्यैव विधानेन स्वस्य स्वप्रयोज्यत्वासम्भवः। यथा वा'ऽहन्' इत्यत्रार्थव-दिति प्रातिपदिकत्वं न स्यात्तदा'ऽधातुरि'ति प्रातिपदिकत्वं न स्यादित्युभयोरैक्ये-नैतदसम्भवो बोध्यः।

न चैवम् 'ऋदुपधेभ्यो लिटः कित्त्वमि'ति वार्तिकासङ्गतिः, 'ववृध' इत्यादौ प्रतिपदोक्तत्वेन गुणात्पूर्वं कित्त्वेन तदभावसिद्धेः। मम तु यदि कित्त्वं न स्यात्तदा गुणे कृते'ऽसंयोगादि'ति निषेधः स्यादिति सम्भावनयाऽनेन पूर्वं कित्त्वाप्राप्त्या गुणा-पत्तेर्वार्तिकमावश्यकमिति वाच्यम्; 'ववृध' इत्यादौ यदि कित्त्वं न स्यात्तर्हि गुणे कृते स्वनिमित्तस्यासंयोगात्परत्वस्य विनाशः स्यादिति सम्भावनया 'अकृतव्यूह' परिभाषया कित्त्वाप्रवृत्त्या गुणबाधनार्थं वार्तिकस्याऽऽवश्यकत्वात्, ययोरुत्सर्गा-पवादयोः समकालं प्राप्तिर्न सम्भवति तत्रैवैतन्न्यायस्य प्रवृत्तेः स्वीकारेण कित्त्व-विषये तत्प्राप्तेरसम्भवाच्च। अत एव 'गवि, युधिभ्यामि'त्यत्र गवीति वचनादेवा-लुगिति भाष्यं सङ्गच्छते; अन्यथा 'गविष्ठिर' इत्यत्र यदि लुङ् न स्यात्तदाऽवा-देशे हलन्तात्परत्वेनालुग् स्यादिति सम्भावनायाः सत्त्वेनानेनैव सिद्धेस्तदसङ्गतिः स्यात्। मम तु मते 'दृषदिमाषक' इत्यत्र द्वयोः समकालप्राप्तिकत्वेनैतन्न्यायाविषय-त्वाद् भाष्योक्तं सामर्थ्योपवर्णनं सङ्गच्छते। न च 'कण्ठेकाल' इत्यत्राप्युक्तरीत्या हलन्तत्वेन सिद्धावदन्तग्रहणसामर्थ्याद्धलन्ताद्विहितसप्तम्यामेव तत्प्रवृत्त्या 'गवी'-त्यत्र तदभावेन भाष्यसङ्गतेरुक्तार्थे मानाभाव इति वाच्यम्; 'कण्ठे काल' इत्यत्र पूर्वोत्तरपदनिमित्तकार्यादलुकः पूर्वमेकादेशाप्रवृत्त्या हलन्तात्परत्वाभावेनालुगर्थं तदा-वश्यकत्वेन विहितविशेषणे प्रमाणाभावादिति दिक्।

---

प्रयोज्यत्वासम्भवादिति। नन्वेवं 'पूर्वं धातुः साधनेन युज्यते' इति न्यायेन पूर्वं शप्रत्यये कृते पश्चादुपसर्गयोगे 'प्रलिम्प' इत्येव स्यादिति चेन्न। एवं सति 'अनुपसर्गात्' इति पर्युदासो व्यर्थ एव स्यादिति तत्सामर्थ्यात् 'अनुपसर्गादि'त्यस्य उपसर्गात्परत्वेनासम्भावितादित्यर्थ-करणेन दोषाभावात्॥ ६५॥

इत्युक्तम्, तत्तु तत उत्सर्ग इत्याद्यक्षरार्थाननुगुणम् ।

यत्तु—अपवादवाक्यार्थं विना नोत्सर्गवाक्यार्थ इति तदर्थ इति । तन्न; अभिनिविशतेऽपवादविषयमित्यादिपदस्वारस्यभङ्गापत्तेः पदजन्यपदार्थोपस्थितौ वाक्यार्थबोधाभावे कारणाभावाच्च । यत्र त्वपवादो निषिद्धस्तत्रापवादविषयेऽप्युत्सर्गः प्रवर्तत एव । यथा 'वृक्षावि'त्यत्र 'नादिची'ति पूर्वसवर्णदीर्घनिषेधादप्रवर्तमानस्य वृद्धिबाधकत्वाभावाद् वृद्धिः प्रवर्तते । अत एव 'तौ सदि'त्यादि सङ्गच्छते । अत एव निर्देशाद् अष्टावसरन्यायस्यात्र शास्त्रेऽनाश्रयणम् । ध्वनितं चेद'मिको गुणे'ति सूत्रे भाष्य इति भाष्यप्रदीपोद्योते निरूपितम् ।

अत्र देवदत्तस्य हन्तरि हते देवदत्तस्योन्मज्जनं नेति न्यायस्य विषय एव नास्ति । हते देवदत्त उन्मज्जन न देवदत्तहननोद्यतस्य, हनने तु भवत्येवोन्मज्जनम् । प्रकृतेऽपि न पूर्वसवर्णदीर्घेण वृद्धेर्हननं किन्तु हननोद्यमसजातीयं प्रसक्तिमात्रं, प्रसक्तस्यैव निषेधात् ।

प्रतिपदोक्तत्वमपि निरवकाशत्वे सत्येव बाधप्रयोजकम् । स्पष्टं चेदं 'शेषाद्विभाषे'ति सूत्रे भाष्ये । तत्र हि 'शेषग्रहणमनर्थकं ये प्रतिपदं विधीयन्ते ते बाधका भविष्यन्तीत्याशङ्क्य, 'अनवकाशा हि विधयो बाधका भवन्ति समासान्ताश्च कबभावे सावकाशा' इत्युक्तम् । क्वचिदनवकाशत्वाभावेऽपि परनित्यादिसमवधाने शीघ्रोपस्थितिकत्वेन पूर्वप्रवृत्तिप्रयोजकं बलवत्त्वं प्रतिपदविधित्वेनापि, परनित्यान्तरङ्गप्रतिपद विधियो विरोधिसन्निपाते तेषां मिथः प्रसङ्गे परबलीयस्त्वमिति 'प्रत्ययोत्तरपदयोश्चे'ति सूत्रे कैयटेन पाठात् ।

---

इत्युक्तमिति । 'प्रकल्प्ये'त्यस्य सिद्धं कृत्वेत्यर्थस्य लोके प्रसिद्धत्वेनौचित्यमितिभावः । अननुगुणमिति । तत इत्यस्यानन्तरार्थकत्वेन तस्य ल्यपैवोक्तत्वेनानुगुण्याभावः स्पष्ट एवेति भावः ।

अनाश्रयणमिति । वस्तुतस्तु—अत्रावसरस्योद्देश्यतावच्छेदकाक्रान्तेः सत्त्वेव न्यायस्य विषय एव नेति वक्तुं युक्तम् ।

प्रतिपदोक्तत्वस्यापवादत्वात् पृथग्बाधबीजत्वमङ्गीकुर्वतां कैयटादीनां मतं खण्डयितुमाह—प्रतिपदोक्तत्वमपीति । बाधप्रयोजकमिति । एवञ्च 'येन नाप्राप्ति'न्यायमूलकत्वमेवैतस्येति बोध्यम् । इदं च 'छदिरुपधिबलेर्ढञि'ति सूत्रे मनोरमायां भाष्ये च स्पष्टम् । इत्युक्तमिति । न च निरवकाशत्वमूलकप्रतिपदोक्तत्वेन बाधकत्वासम्भवेऽपि पूर्वोपस्थितनिमित्तकत्वमूलकप्रतिपदोक्तत्वेन बाधः स्यादेवेति शेषग्रहणमनर्थकमिति

अत एव 'रमे' इत्यादौ प्रतिपदोक्तत्वात्पूर्वमेत्व आकारप्रश्लेषाद्धल्ङ्यादिलोपो न प्राप्नोतीत्याशङ्क्य, 'एङ्ह्रस्वादि'ति लोपेन समाहितम् ॥ ६५ ॥

ननु 'अयजे इन्द्रमि'त्यादावन्तरङ्गस्यापि गुणस्यापवादेन सवर्णदीर्घेण बाधः स्यादत आह—

## अपवादो यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते ॥ ६६ ॥

निरवकाशत्वरूपस्य बाधकत्वबीजस्याभावात् । एवञ्च प्रकृतेऽन्तरङ्गेण गुणेन सवर्णदीर्घः समानाश्रये चरितार्थो यणगुणयोरपवादोऽपि बाध्यते ।

---

वाच्यम्; 'द्विमूर्ध' इत्यादौ षजन्तात्कबभावार्थं तस्याऽऽवश्यकत्वात् । अत एवेति । परात्यपेक्षया बलवत्त्वादेवेत्यर्थः ॥ ६५ ॥

बाधकत्वबीजस्याभावादिति । 'आद्गुण' इत्यत्रावर्णे सवर्णाजव्यवहितपूर्वत्ववद्गतिरिक्तत्वेन सङ्कोचेऽच्पदार्थे वागव्यवहितपरत्ववत्सवर्णातिरिक्तत्वेन सङ्कोचेऽपि तत्प्राप्तेः सत्त्वेनाप्रवृत्तौ बीजस्याभावादित्यर्थः । यद्वा—अन्तरङ्गपरिभाषाबाधमकृत्वोत्सर्गशास्त्रमात्रबाधेनापवादस्य चारितार्थ्येऽन्तरङ्गपरिभाषाबाधे मानाभाव इत्येतल्लाघवमूलिकेयं परिभाषेत्येतदाह—समानाश्रये चरितार्थ इति । यणगुणयोरपवाद इति । न चा'ऽऽतीदि'त्यावेकादेशे सिज्लोपस्य सिद्धत्वेऽपि यणि कर्तव्येऽसिद्धत्वेन यणोऽप्राप्त्या दीर्घस्य चारितार्थ्यमिति वाच्यम्; एकादेशविषयेऽन्यदृष्ट्याऽपि सिज्लोपस्य सिद्धत्वबोधनेन यण्दृष्ट्या तस्य सिद्धतया यणो नाप्राप्तत्वेन दीर्घस्य चारितार्थ्याभावात् ।

केचित्तु—यण्दृष्ट्या सिज्लोपस्यासिद्धत्वेऽपि यणशास्त्रीयोद्देश्यतावच्छेदकस्याजव्यवहितपूर्वकत्वस्य तत्र सत्त्वेन दीर्घस्य यणुद्देश्यतावच्छेदकानाक्रान्तविषयाभावेनापवादत्वं सुवचम् । न च 'हर+एही'त्यादौ वृद्ध्यादिवारणाय तत्तच्छास्त्रीयोद्देश्यतावच्छेदके तेन रूपेण ज्ञातत्वस्यापि प्रवेशेना'ऽऽतीदि'त्यत्र तादृशेकत्वेन ज्ञानाभावेन यणुद्देश्यतावच्छेदकाक्रान्तत्वाभावोऽवश्यमेवाऽऽश्रयणीयः, अन्यथा 'हर+एही'त्यत्रापि वृद्धिशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तेः सत्त्वेनोद्देश्यतावच्छेदकव्यापकत्वस्य विधेये तत्संसर्गे वा भानस्य वाक्यमर्यादया क्लृप्तत्वेनात्र वृद्ध्यप्रवृत्तौ तद्भङ्गापत्तिरिति वाच्यम्; तत्तच्छास्त्राणां प्रवृत्तौ तादृशोद्देश्यतावच्छेदकधर्मप्रकारकज्ञानस्योपयोगेऽपि प्राप्तौ तस्योपयुक्तत्वकल्पने मानाभावात्, अपवादत्वलक्षणे तु प्राप्तेः प्रवेशेना'ऽऽतीदि'त्यत्र यणप्राप्तेर्दुर्वारत्वात, ज्ञानस्य तत्तच्छास्त्रीयोद्देश्यतावच्छेदकत्वकल्पने मानाभावाच्च । 'हर+एही'त्यादौ वृद्ध्यभावस्तु वाक्यमर्यादया क्लृप्तव्याप्यव्यापकभावे तत्तदुद्देश्यतावच्छेदकधर्माणां स्वप्रकारकज्ञानविषय-

पूर्वोपस्थितनिमित्तत्वरूपान्तरङ्गत्वविषय इदम् ।

यत्तु—आगमादेशयोर्न बाध्यबाधकभावो भिन्नफलत्वात्, अतएव 'ब्राह्मणेभ्यो दधि दीयतां, कम्बलः कौण्डिन्यायेत्यादौ कम्बलदानेन न दधिदानबाध इति 'च्छ्वोरि'ति सूत्रे कैयटः । तन्न; अपवादो नुग्दीर्घत्वस्येति 'दीर्घोऽकित' इति सूत्रभाष्यविरोधात् ॥ ६६ ॥

ननु 'अजीगणदि'त्यादौ गणेरीत्वं निरवकाशत्वाद्धलादिः शेषं बाधेत; तत्राऽऽह—

---

त्वरूपव्याप्यतावच्छेदकसम्बन्धस्वीकारेण तत्सम्बन्धेनोद्देश्यतावच्छेदकवत्येव तत्तच्छास्त्रप्रवृत्तेः स्वीकारादिति दिक् ।

अन्ये तु—दीर्घस्यापवादत्वाभावेऽपि यण्गुणयोः परत्वात्तेन बाधसिद्धिरित्याहुः ।

नन्वेतत्परिभाषास्वीकारे वशब्दादाचारक्विबन्तात्कर्तरि क्विपि 'ऊरि'त्यत्र समानाश्रये चरितार्थस्योठो'ऽस्त्यूरि'त्यत्रान्तरङ्गत्वाद्धलिलोपापत्तिरिति चेत्तत्राऽऽह—पूर्वोपस्थितनिमित्तत्वेति । "इण्ङ्शीनामादूगुणः सवर्णदीर्घत्वादि'त्यादिवार्तिकानुसारेण तथाकल्पनादिति भावः ॥ ६६ ॥

निरवकाशत्वादिति । गणरूपाभ्यासस्येत्वं स्यादित्यर्थसत्त्वेन हलादिः शेषोत्तरमित्वाप्राप्तेस्तत्त्वम् । एवञ्चेत्वे गुणे'ऽजेगणदि'ति स्यादिति भावः । न च गुणोत्तरमभ्यासह्रस्वे 'दीर्घो लघोरि'ति दीर्घेणेष्टसिद्धिरिति वाच्यम्; अग्लोपित्वेन दीर्घाप्राप्त्योक्तरूपासम्भवात् ।

वस्तुतस्तु—दीर्घविधानसामर्थ्येन विकारमात्रस्य बाधेन 'अज+ई+गणादि'त्यस्याऽऽपत्तिरत्र बोध्येति दिक् ।

---

ईत्वाप्राप्तेरिति । न च स्थानिवत्त्वेन गणरूपाभ्यासत्वं लभ्यमिति वाच्यम्; 'अनल्विधौ' इति तन्निषेधात् । आनुमानिकस्थान्यादेशभावेन तु न लभ्यम्, यस्यार्थवत्त्वेव विश्रान्त्याऽभ्यासस्य अनर्थकत्वात् । 'एकदेशविकृत'न्यायेन तु न लब्धु शक्यम्, अकपरिमाणत्वात् । स्वीकृतायान्तु परिभाषायां गणे रीत्वेन बाधाभावात् पूर्वं हलादिःशेषेण नकारनिवृत्तौ ततो गणे रीत्वे 'अजीगणत्' इत्यस्य सिद्धिः । न च हलादिःशेषोत्तरं गणरूपाभ्यासाभावात् कथमीत्वमिति वाच्यम्; सूत्रारम्भसामर्थ्यान् गुणसम्बन्ध्यभ्यासेकार इत्यर्थे णलोपोत्तरमपि गणसम्बन्ध्यभ्यासस्त्वाक्षतेः । प्रकृतपरिभाषास्वीकारात् प्राक् तु न वैयधिकरण्येनान्वयः सम्भवति, सामानाधिकरण्येनान्वये सम्भवति वैयधिकरण्येनानन्वयात् ।

दीर्घविधानसामर्थ्येनेति । दीर्घेकारविधानेति तदर्थः ।

## अभ्यासविकारेषु बाध्यबाधकभावो नास्ति ॥ ६७ ॥

'दीर्घोऽकित' इत्यकिद्ग्रहणमस्या ज्ञापकम् । अन्यथा 'यंयम्यत' इत्यत्र नुकि कृतेऽनजन्तत्वाद्दीर्घाप्राप्त्या तद्वैयर्थ्यं स्पष्टमेव ।

---

अभ्यासविकारेष्विति । द्वयोरभ्यासत्वावच्छिन्नोद्देश्यताकत्वे इयं प्रवर्तते, तेन 'चच्छावि'त्यत्रान्तरङ्गत्वात्तुकि ह्रस्वत्वं न प्राप्नोतीत्याशङ्क्य वैयधिकरण्यान्वयेन समाधानपरं भाष्यं सङ्गच्छते । एवम्—'ऊखतुरि'त्यत्र पूर्वं यण् न; अन्यथाऽस्याः परान्तरङ्गादिबाधकानामबाधकत्वस्य वक्ष्यमाणत्वेन तुकोऽप्राप्त्या भाष्यासङ्गतिः । द्वितीये दीर्घस्य यणः बाधकत्वानापत्त्या यणापत्तिर्दुर्वारा स्यादिति बोध्यम् ।

अनजन्तत्वाद्दीर्घाप्राप्त्येति । तथा च परिभाषाज्ञापनोत्तरमपि स्वांशे चारिताथ्या- भावेन यावतेति न्यायेनात्र वैयधिकरण्यान्वयोऽपि ज्ञाप्य इति भावः ।

ननु नुकोऽनुस्वारोपलक्षणत्वेन तस्य 'चाच्त्वा दीर्घोऽकित' इत्यस्याजन्ता- भ्यासस्येत्यर्थेऽपि दीर्घप्राप्त्या न वैयर्थ्यम् । 'अयोगवाहा विज्ञेया आश्रयस्थान- भागिन' इति शिक्षोक्तेरत्रानुस्वारस्य कण्ठस्थानत्वेनाकारो दीर्घः स्यात् । न चानु- स्वारस्य दीर्घे तस्य पदान्तवद्भावविधानं व्यर्थं, तद्धि परसवर्णार्थमेवेति वाच्यम्; छमुध'तोर्यङि 'चंछम्यत' इत्यत्र दीर्घे 'चाच्छम्यत' इत्यत्र दीर्घादिति प्राप्ततुकं बाधित्वा 'पदान्ताद्वे'त्यस्य प्रवृत्तिः स्यादित्येतदर्थं तस्य चारितार्थ्यादिति चेन्न । 'दीर्घोऽकित' इत्यत्र दीर्घपदसाहचर्येण अचश्चेत्युपस्थितस्याचोऽच्त्वहल्त्वोभयाना- क्रान्तस्य ग्रहणेन नुकि कृते दीर्घाप्राप्त्या तद्वैयर्थ्यस्य सूपपादत्वात् । यद्वा—'झलां जशोऽन्ते' इत्यत्राकृतणत्वस्यानुस्वारस्य दर्शनेनायोगवाहानामकारोपरि शरि च पाठस्यानित्यत्वावगमाच्च । न च वैयधिकरण्यान्वयज्ञापनेनाकिद्ग्रहणस्य चारि- तार्थ्यात्कथं परिभाषाज्ञापकत्वमिति वाच्यम्; तक्रन्यायेन नुका दीर्घबाधेनैव नुगुत्तरं दीर्घाप्राप्त्याऽकिद्ग्रहणवैयर्थ्येन तस्य परिभाषाज्ञापकत्वात् । न च 'नृगत' इत्यत्र तपरकरणेन दीर्घोत्तरं नुगप्राप्त्या तक्रन्यायविषयाभावेन निरव- काशत्वादेव बाधस्य वक्तव्यतया नुगुत्तरं दीर्घवारणाय तदावश्यकत्वमिति वाच्यम्; अभ्यासह्रस्वत्वेन सर्वत्राभ्यासे ह्रस्वस्यैव सत्त्वेन तपरकरण- व्यावर्त्यालाभेन सामर्थ्यात्तस्यौपदेशिकदीर्घादिव्यावर्तकतया 'बाभाम्यत' इत्यत्र नुग्वारकत्वेऽपि 'दीर्घोऽकित' इत्येतद्विहितदीर्घव्यावर्तकत्वाभावेन कृतेऽपि दीर्घे नुकश्चारितार्थ्येन तक्रन्यायप्रवृत्तेः सूपपादत्वात् । यदि तूक्तपरिभाषाज्ञापना- त्पूर्वं नुक्शास्त्रस्य 'ह्रस्व' इत्येतच्छास्त्रबाधकत्वेनाभ्यासे ह्रस्वाप्राप्त्या 'बाभा- म्यत' इत्यत्र नुग्वारणाय तपरकरणावश्यकत्वेत्तौपदेशिकदीर्घमात्रव्यावर्तकत्वकल्प- नाया असम्भवात् तस्य सर्वदीर्घव्यावर्तकतया तक्रन्यायविषयाभावेन नुगुत्तरं

---

असम्भवादिति । एवञ्च अकिद्ग्रहणवैयर्थ्ये परिभाषासत्त्वम्, तद्वैयर्थ्यञ्च नुक्-

इयं परान्तरङ्गादिबाधकानामप्यबाधकत्वबोधिका, तेन 'अचीकरत्, मीमांसत' इत्यादि सिद्धम् । आद्ये सन्वद्भावस्य परत्वाद्दीर्घेण बाधः प्राप्नोति । अन्त्ये मान्बधेति दीर्घेणान्तरङ्गत्वादित्वस्य बाधः प्राप्तः ।

यत्तु—यत्रैकैकप्रवृत्त्युत्तरमपि सर्वेषां प्रवृत्तिस्तत्रै वेदमित्यत 'एके'ति सूत्रे कैयटः । तन्न; नुकि कृते दीर्घाप्राप्त्या धर्मिग्राहकमानविरोधान्मान्बधादीनां दीर्घे कृते इत्त्वाप्राप्त्या 'गुणो यङ्लुकोरि'ति सूत्रस्थभाष्योक्ततदुदाहरणासङ्गते-

---

दीर्घवारणाय अकिद्ग्रहणचारितार्थ्यमित्युच्यते, तर्हि पदलाघवानुरोधेन दीर्घोऽलुक इत्येव सिद्धेऽकिद्ग्रहणमेतज्ज्ञापकमिति सन्तुष्यतु भवान् । नीगादीनां तु तक्रन्यायेनैव दीर्घबाधकत्वस्य निर्विवादतया तत्राकिद्ग्रहणव्यावर्त्यालाभात् । न च 'चान्छायत' इत्यत्रान्तरङ्गत्वात्तुकि दीर्घव्यावृत्तयेऽकिद्ग्रहणं चरितार्थमिति वाच्यम्; 'दीर्घोऽकित' इत्यत्रानुवर्तमानाभ्यासपदस्याऽऽवृत्त्याऽभ्यासत्वावच्छिन्नोद्देश्यताककिद्घटितभिन्नस्येत्यर्थेनात्र तुकस्तथात्वाभावेनास्याकिद्ग्रहणव्यावर्त्यत्वासम्भवेन तद्वैयर्थ्यस्य सूपपादत्वात् । अत एव जहातेर्यङि तस्य व्यपदेशिवद्भावेन किद्घटितत्वेऽपि दीर्घसिद्धिः । ज्ञापिते त्वस्मिन्वचने नुगादेरबाधकत्वेन दीर्घस्य व्यावृत्तये तस्य स्वांशे चारितार्थ्यम् । न चानया पूर्वं नुकोऽप्रवृत्तावकिद्ग्रहणेऽप्यभ्यासस्य किद्घटितभिन्नत्वेन पूर्वं दीर्घो दुर्वार इति वाच्यम्; अकित इत्यस्य किदुद्देश्यघटितभिन्नस्येत्यर्थेन नुगादेः पूर्वमनन्तरं वा तद्घटितत्वेनोक्तातिप्रसङ्गासम्भवात् ।

दीर्घाप्रात्येति । ननु यत्रैकैकप्रवृत्त्युत्तरमपरेषां प्रवृत्तियोग्यता तत्रैवैतत्परिभाषाप्रवृत्तिरिति कैयटाशयात् 'यंयम्यते' इत्यादौ नुगादिप्रवृत्त्युत्तरमपि अभ्यासविकारे वैयधिकरण्येनान्वयात् 'दीर्घोऽकित' इति शास्त्रस्याकित इति निषेधेनाप्रवृत्तावपि तत्प्रवृत्तियोग्यताया अव्याघातात्कथं धर्मिग्राहकमानविरोध इत्यत आह—मान्बधेति । दीर्घे कृते इत्त्वाप्राप्तेति । नन्वत्रापि अभ्यासपदेऽर्शआद्यचं कृत्वाऽभ्याससस्थानिकादेशस्येत्यर्थकरणेन पूर्वमित्वे दीर्घे च 'मीमांसत' इत्यादीनां सिद्धिरिति नेदं दूषणमित्यरुचेराह—चेति । चेन 'बोभूयते' इत्यस्य सङ्ग्रहः । तथा च 'गुणो

---

शास्त्रस्य तक्रन्यायेन दीर्घबाधकत्वमूलकम्, तेन न्यायेन बाधश्च तपरकरणस्य वैयर्थ्येन औपदेशिकदीर्घमात्रव्यावर्तकत्वमूलकः, तपरवै॰र्थ्यं॰च सर्वत्र ह्रस्वप्रवृत्तिमूलकम्, तत्प्रवृत्तिश्च परिभाषाधीना, परिभाषा च अकिद्ग्रहणपरतन्त्रेति चक्रकापत्तिरिति भावः ।

मूले—एकेतीति । उत्सर्गस्यापवादस्य चेत्यर्थः । यथा 'नर्तति' इत्यादावुरदत्वे रुगादय', तेषु च तदिति भावः । मूले—तदुदाहरणेति । 'मीमांसत' इति तदुपाहरणेत्यर्थः ।

यङ्लुकोरि'ति सूत्रस्थ 'बोभूयते' इत्युदाहरणासिद्धिरिति भावः ।

अत्र केचित्—अभ्यासविकारे बाध्यबाधकभावाभावेन तयोर्यथायथं समावेशः; तेन 'बोभूयते' इत्यत्र ह्रस्वप्रवृत्त्युत्तरं गुणप्रवृत्त्येष्टसिद्धिः । 'विव्यथे' इत्यत्र सम्प्रसारणोत्तरं हलादिःशेषेणसिद्धिः । न च 'बोभूयत' इत्यत्र गुणोत्तरं ह्रस्वापत्तिरिति वाच्यम्; बाधकशास्त्रप्रवृत्तिनैष्फल्यासम्पादकस्यैव समावेशस्य स्वाकारेणात्र बाधकगुणशास्त्रप्रवृत्त्युत्तरं ह्रस्वप्रवृत्तौ गुणशास्त्रप्रवृत्तेर्नैष्फल्येन तादृशसमावेशाप्रसक्तेरिति वदन्ति ।

अन्ये तु—अनया परिभाषया बाध्यानामेव पूर्वं प्रवृत्तिरिति बोध्यते, तथा च 'बोभूयत' इत्यत्र बाध्यह्रस्वप्रवृत्त्युत्तरं बाधकगुणप्रवृत्त्येष्टसिद्धिः । न चैवं 'विव्यथे' इत्यादौ हलादिःशेषोत्तरं वकारस्य सम्प्रसारणापत्तिरिति वाच्यम्; 'न सम्प्रसारणे' इति सूत्रेणौपदेशिकयणवधिकपूर्वत्वाभाववत एव यणः सम्प्रसारणस्य बाधनात् 'विव्यथे' इत्यादौ 'व्यथो लिटी'त्यादिसूत्रारम्भसामर्थ्येन तत्परिभाषाया अत्राप्रवृत्तिकल्पनेनादोषात् । एतन्मूलकमेव कौमुद्या'मन्त्यस्य यणः पूर्वं सम्प्रसारणमि'त्युक्तम् । 'लिट्यभ्यासस्योभयेषामि'ति सूत्रे उभयेषां ग्रहणेन सम्प्रसारणस्य सर्वतो बलवत्त्वबोधनेनादोषाच्च ।

अन्ये तु—अभ्यासविकाराणां परस्परविरोधविरहपूर्वकः समावेश इति प्रकृतपरिभाषया प्रतिपाद्यते, तेन सति सम्भवे योगपद्येनैव तेषां प्रवृत्तिः, यथा 'यंयम्यत' इत्यादौ नुगागमहलादिःशेषयोः । यत्र तु बाध्यप्रवृत्त्युत्तरं बाधकप्रवृत्त्या तत्समावेशस्तत्र बाध्यप्रवृत्त्युत्तरमेव बाधकप्रवृत्तिः, यथा'ऽजीगर्णादि'त्यत्र हलादिः

---

गुणोत्तरं ह्रस्वापत्तिरिति । एवम्—'अनूनवत्' इत्यत्र दीर्घोत्तरं ह्रस्वापत्तिर्बोध्या । नैष्फल्यासम्पादकस्यैवेति । चिन्त्यमिदम्, मानाभावात् । न च 'गुणो यङ्लुकोः' 'दीर्घो लघोः' इत्यनयोश्च वैयर्थ्यापत्तिरेव मानमिति वाच्यम्, 'डोढौक्यते, तोत्रौक्यते' इत्यादौ पूर्वमभ्यासे इगभावेन पूर्वं गुणाप्राप्त्या ह्रस्वोत्तरं विधानेनाऽऽद्यस्य, एवम्—'अनीनयत्' इत्यत्र दीर्घान्ते तदप्राप्त्या पूर्वं ह्रस्वे ततो दीर्घविधानेन 'दीर्घो लघोः', इत्यस्य चारितार्थ्याच्च तथाकल्पयितुमशक्यत्वादित्यरुचेरेवाऽऽह—अन्ये त्विति ।

सम्प्रसारणस्य बोधनादिति । चिन्त्यमिदम्—युवन्शब्दादेरुपदेशाभावात्, 'उद्देशश्च प्रातिपदिकानां नोपदेशः' इति भाष्यात् । हलादिःशेषोत्तरमौपदेशिकयणवधिकपूर्वत्वाभाववतो वकारस्य सम्प्रसारणविधानेन 'व्यथो लिटि' इत्यस्य चारितार्थ्येन परिभाषाबाधे मानाभावाच्चेत्यरुचेराह—उभयेषां ग्रहणेनेति । नन्वेवं परिभाषाऽप्रवृत्त्या सम्प्रसारणेन तद्बाधस्तक्रन्यायेनैव वाच्य', तथा सति बाधमहिम्ना सम्प्रसारणप्रवृत्त्युत्तरं हलादिःशेषप्रवृत्तिर्न स्यादिति चेन्न । प्रतिलक्ष्यं लक्षणोपप्लवेन यकारनिवर्तकाद्भिन्नस्य थकारनिवर्तकहलादिःशेषस्य तेन बाधाभावात्, 'व्यथो लिटि' इत्यत्र यकारं प्रश्लिष्य व्यथो यकारस्य सम्प्रसारणमित्यर्थेन निरवकाशमूलकबाधेन बाधकप्रवृत्त्युत्तरमुत्सर्गशास्त्रप्रवृत्त्या दोषाभावाच्च ।

बलवत्त्वबोधनेन अदोषाच्चेति । आहुरिति शेषः । इत उत्तरं 'अन्ये तु' इत्यतः

ननु तच्छीलादितृन्विषये ण्वुलपि स्यात् । न च तृन्नपवादः ; असरूपापवादस्य विकल्पेन बाधकत्वात् ; अत आह—

**ताच्छीलिकेषु वाऽसरूपविधिर्नास्ति ॥ ६८ ॥**

ण्वुलि सिद्धे निन्दहिंसादिसूत्रेणैकाज्भ्यो वुञ्विधानमत्र ज्ञापकं, तत्र ण्वुलवुञोः स्वरे विशेषाभावात् ।

ताच्छीलिकेष्विति विषयसप्तमी, तेन ताच्छीलिकैरताच्छालिकैश्च वाऽसरूपविधिर्नेति बोध्यम् ।

नन्वेवं कम्रा कमनेत्याद्यसिद्धिर्नमिकम्पीति रेणानुदात्तेतश्च हलादेरिति युचो बाधादिति चेन्न । 'सूददीपदीक्षश्चे'त्यनेन दीपेर्युज्निषेधेनोक्तार्थस्यानित्यत्वात् ॥ ६८ ॥

---

शेषोत्तरमीत्वम् । सम्प्रसारणविषये तु नायं न्यायः प्रवर्त्तते, लिट्यभ्यासेत्यत्रोभयेषां ग्रहणेन तद्विषये एतदप्रवृत्तेर्ज्ञापनात्, तेन 'विव्यथे' इत्यादौ यकारस्य सम्प्रसारणसिद्धिरिति प्राहुः ॥ ६७ ॥

अपवादप्रस्तावादाह—ननु तच्छीलादीति । ण्वुलपि स्यादिति । कर्तृसामान्ये विधीयमानस्यास्य ताच्छील्यादिविशिष्टे कर्तरि प्रवृत्तौ बाधकाभावादिति भावः ।

स्वरे विशेषाभावादिति । 'निन्दक' इत्यादौ ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वे लितीति प्रत्ययात्पूर्वस्योदात्तत्वे वा विशेषाभावादित्यर्थः ।

ननु ताच्छीलिकेषु वासरूपविध्यभावे 'निराकर्ता, निराकरिष्णुरि'त्यादौ तृनिष्णुचोः पर्यायता न सिद्ध्येदत आह—विषयसप्तमीति ॥ ६८ ॥

---

आरभ्य 'प्राहुः इत्यन्तं तृतीयः प्रकारः प्रतिपादितः । सोऽपि 'केचित्तु'मतादविशिष्ट एव प्रतीयत इति 'बोभूयते' इत्यस्यासिद्धेरपेक्ष्य एवेति बोध्यम् ॥ ६७ ॥

मूले—ण्वुलिति । करणस्याधिकरणत्वविवक्षया सप्तमी । ताच्छिलिकेषु इति अभिव्यापकाधारे सप्तमी इत्याभिमानेनाऽऽशङ्कते—नन्विति ।

विषयसप्तमीतीती । विषयता च उत्सर्गापवादयोस्तत्त्वेनापवादस्य वा, अपवादस्य तु तत्त्वं सर्वथा ऽपेक्ष्यत इति भावः ; तदाह—मूले—तेनेति । ताच्छीलिकानामपवादानामिति शेषः । एवञ्च ताच्छीलिकेषु परस्परं वाऽसरूपविधिर्नेति परिभाषान्तरं न मन्तव्यम् । एकेनैव ज्ञापकेनोभयोरपि लाभात् ।

वस्तुतस्तु—नैतद्विषयसप्तम्याः फलम्, ताच्छीलिकेषु इति ताच्छीलिकापवादपरम् । अभिव्यापकाधारे सप्तमी । अस्तु ताच्छीलिकापवादप्रत्ययः, उत्सर्गस्य ताच्छीलिकत्वे वाऽसरूपन्याया-प्रवृत्तौ 'अनुदात्तेतश्च' इति युचासिद्धे पुनर्युचङ्क्रम्येति पदेर्युज्विधानमपि गमकं बोध्यम् ॥ ६८ ॥

नन्वेवं 'हसितं छात्रस्य हसनमि'त्यादौ घञ् 'इच्छति भोक्तुमि'त्यत्र लिङ्लोटौ'वीपत्पानः सोमो भवते'त्यत्र खल प्राप्नोतीत्यत आह—

## क्तल्युट्तुमुन्खलर्थेषु वाऽसरूपविधिर्नास्ति ॥ ६९ ॥



इदं च वाऽसरूपविधेरनित्यत्वात्सिद्धम्। तदनित्यत्वे ज्ञापकं 'चार्हे कृत्यतृचश्चे'ति। तत्र हि चकारसमुच्चितलिङा कृत्यतृचोर्बाधो मा भूदिति कृत्यतृज्ग्रहणं क्रियत इत्यन्यत्र विस्तरः।

वाऽसरूपसूत्रे भाष्ये स्पष्टा ॥ ६९ ॥

ननु 'श्वः पक्ते'त्यत्र वाऽसरूपविधिना लृडपि प्राप्नोति, कृते आदेशे वैरूप्यादत आह—

## लादेशेषु वासरूपविधिर्नास्ति ॥ ७० ॥



आदेशकृतवैरूप्यवत्सु लकारेषु स नास्तीत्यर्थः।

---

घञिति। न चैवं 'परिहास' इत्यस्यासिद्धिरिति वाच्यम्; हसेः पचाद्यजन्ताद् घञर्थकान्ताद्वा प्रज्ञाद्यणि णिजन्तात्पचाद्यचि वा तत्सिद्धिसम्भवात्। अत एव परीपाकशब्दवत्परिहासे 'उपसर्गस्य घञी'ति दीर्घो नेति बोध्यम्।

विधेरनित्यत्वादिति। अनेनैवपूर्वोत्तरपरिभाषयोः सिद्धौ पृथग्ज्ञापकान्तरोपवर्णनं प्रपञ्चार्थमिति बोध्यमित्यन्यत्र विस्तरः ॥ ६९ ॥

कृते आदेशे वैरूप्यादिति। वाऽसरूपसूत्रे सरूपपदेन स्वावृत्तिरूपवान् गृह्यते, तत्र स्वपदेनाविशेषादादेशरूपस्यापि स्वस्य ग्रहणात् प्रकृते आदेशरूपः स्वं लुट्स्थानिकस्तिशब्दस्तस्यापि स्थानिवत्त्वेन लुट्त्वात्तद्वृत्तिडाशब्दत्वरूपवान् लुडस्ति इति लुटो विकल्पेन लृड्बाधकत्वापत्तिः। प्रायोगिकासारूप्यमात्रग्रहणे विकल्पासहत्वस्य पूर्वमुपपादितत्वेऽपि तत्साधारणग्रहणे बाधकाभावादिति भावः।

आदेशकृतवैरूप्यवत्स्विति। उक्तज्ञापकरूपबाधकसत्त्वाद्वाऽसरूपसूत्रेऽपवादपदेन

---

ननु वाऽसरूपसूत्रेऽसरूपपदेन औपदेशिकसारूप्यवद्भिन्नस्य ग्रहणेन प्रकृते न दोष इति चेदाह—वाऽसरूपसूत्र इति। लृड्बाधकत्वापत्तिरिति। ननु वाऽसरूपसूत्रे प्रायोगिकासारूप्यस्य ग्रहणं न भवतीत्यस्य 'नानुबन्धकृतमसारूप्यम्' इति परिभाषायामुपपादितत्त्वेनात्र डाशब्दत्वरूपप्रायोगिकासारूप्योपादानेन दोषदानमयुक्तमित्याशङ्कायामाह—प्रायोगिकासारूप्यमात्रग्रहण इति। मात्रपदेन औपदेशिकस्य व्यावृत्तिः। विकल्पासहत्वस्येति। प्रयोगमात्रावच्छेदेन प्रयोगसामानाधिकरण्येन वैत्येवंरूपविकल्पासहत्वस्येति तदर्थः। तत्साधारण-

अत्र च 'हशश्वतोर्लङ् चे'ति लङ्विधानं ज्ञापकम् ; अन्यथा 'परोक्षे लिडि'ति लिटा लङः समावेशोऽसारूप्यात् सिद्ध इति किं लङ्विधानेन शत्रादिभिस्तिङां समावेशार्थं शतृविधायके विभाषाग्रहणानुवृत्ति 'लिटः कानज्वे'ति वाग्रहणं च कृतम् । तज्ज्ञापयति वाऽसरूपसूत्रेऽपवाद आदेशत्वानाक्रान्तः प्रत्यय एव गृह्यत इति कैयटादौ ध्वनितम् । तत्फलन्तु सदादिभ्यं भूतसामान्ये लिटा क्वसुरेव, न तु पक्षे तिङिति बोध्यम् ॥ ७० ॥

ननु 'ङमो ह्रस्वादि'त्यादौ ङमः परस्याचोऽचि परतो ङम इ वेति सन्देहः स्यादत आह—

---

लादेशत्वानाक्रान्तस्य ग्रहणम् , तथा च वाऽसरूपसूत्रे लादेशभिन्नो यः स्वं तद्वृत्तिरूपवान् असरूपपदेन गृह्यत इति फलति । न च लादेशभिन्नः स्व लृट्शब्दस्त वृत्तिरूपं लुट्त्वं तद्वान् लुडिति दोषस्तदवस्थ एवेति वाच्यम् ; 'नानुबन्धकृतमसारूप्यमि'ति परिभाषयाऽनुबन्धरहितस्यैव स्वस्य ग्रहणेन स्वपदेन लृडित्यानुपूर्वं मतोऽग्रहणात् । एवञ्च रूपपदेनापि अनुबन्धरहितवृत्तिन एव ग्रहणं बोध्यम् यदि तु वाऽसरूपसूत्र औपदेशिकसारूप्यवद्भिन्नोऽनुबन्धरहित एव गृह्यते, त शत्रादिभिस्तिङामसारूप्यादेव विकल्पसिद्धौ 'लटः शतृशा नचावि'त्यत्र विभाषाग्रह वैयर्थ्यमित्यादिमूलोक्तदूषणानि दुर्वाराण्यापद्येरन्निति दिक् ॥ ७० ॥

सन्देहः स्यादिति । ननु 'तस्मिन्नि'ति 'तस्मादि'ति परिभाषोपस्थितपूर्वपरपदा योरभेदेनान्वयेन 'सुगण्परमश्आत्मे'त्यादौ परमशब्दे तयोः । सामानाधिकरण्ये विरोधाभावात्संशयानुपपत्तिरिति चेन्न । तयोः परिभाषयोः पूर्वत्वपरत्यान्यतर षष्ठ्यर्थोऽव्यवहितत्वेत्यंशत्रयोपस्थापकत्वेन यत्र स्वघटकांशः सिद्धो बाधितो भवति तत्र तद्रहितांशोपस्थापकत्वम् , यथा—'परश्चे'त्यधिकारेऽव्यवधानांशमात्रोपस्थापकत्वम् । एवं चात्र संभेदेनान्यतरवैयर्थ्यात् , सप्तमीपरिभाषोपस्थितार्थ

---

लादेशत्वानाक्रान्तस्येति । ननु वासरूपसूत्रे औपदेशिकस्यैवासारूप्यस्य ग्रह मस्तु इत्येतावत्कल्पनयैवाऽऽदेशकृतवैरूप्यवत्सु लकारेषु दोषाभावेन लादेशत्वानाक्रान्त इ सङ्कोचो विफल इति चेन्न । त्वन्मते शत्रादिभिस्तिङां समावेशसिद्धये विभाषाग्रहणं स्यात् , क्वसुना तिङाञ्च नित्यं बाधश्च न स्यादित्याशयेन तथासङ्कोचस्याङ्गीकारात तदेतत् 'यदि तु' इत्यादिनाऽग्रे स्फुटम् ॥ ७० ॥

सम्भेदेनेति । अभेदेन पूर्वस्य परस्य च परस्परमभेदान्वयेनेति यावत् । अन्यत वैयर्थ्यादिति । अन्यतरस्य = षष्ठ्यर्थस्य वैयर्थ्यादित्यर्थः ॥ ७१ ॥

॥ इति श्रीवैयाकरणप्रवर 'गणपतिशास्त्रिमोकाटे' कृत-तत्त्वप्रकाशिकाभिधे

# उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् ॥ ७१ ॥

अचीति सप्तमीनिर्देशस्य 'मय उञ' इत्युत्तरत्र चारितार्थ्यात् पञ्चमीनिर्देशोऽनवकाश इति 'तस्मादित्युत्तरस्ये'त्यस्यैव प्रवृत्तिः । यत्र तु 'ङः सि धुडि' त्यादावुभयोरप्यचारितार्थ्यं, तत्र तस्मिन्निति सूत्रापेक्षया 'तस्मादित्युत्तरस्ये' त्यस्य परत्वादेवैव व्यवस्था । एवमुभयोश्चारितार्थ्येऽपि; यथा-'ऽऽमि सर्वनाम्न' इत्यादौ । तत्राऽऽमीति सप्तमी 'त्रेस्त्रय' इत्यत्र चरितार्था । आदिति पञ्चम्या'ऽज्जसेरसुगि'त्यत्र चरितार्थेति स्पष्टं तस्मिन्निति सूत्रे भाष्ये कैयटे च ॥ ७१ ॥

॥ इति बाधबीजनामकं द्वितीयं प्रकरणम् ॥

---

निर्देश्यत्वविवक्षायां पञ्चमीपरिभाषोपस्थितस्य परस्येत्यस्य विशेषणत्वेन विशेषणविभक्तेर्निरर्थकत्वाच्च तदुपस्थितपरत्वांशस्य श्रुतानुमितपरिभाषयाऽच्पदार्थेनान्वयाद् ङमः परो योऽच् तदव्यवहितपूर्वस्येत्यर्थेऽचि परतो ङमो ङमुट् प्राप्नोति । पञ्चमीपरिभाषोपस्थितस्य विशेष्यत्वे सप्तमीपरिभाषोपस्थितस्य विशेषणत्वे च पूर्वरीत्या तस्य ङम्पदार्थेऽन्वयेनाजव्यवहितपूर्वङम् उत्तरस्येत्यर्थेन ङम उत्तरस्याचो ङमुट् प्राप्नोतीति सन्देहस्य सूपपादत्वात् । न च द्वयोरपि परिभाषयोः षष्ठ्यर्थोपस्थापकत्वे फलाभावः, 'उद.स्था' 'इको यणची'त्यादौ स्वविषये षष्ठ्याः सत्त्वादिति वाच्यम् ; 'पद्दन्' इत्यादौ षष्ठ्यभावेन पादादीनां स्थाने आदेशसिद्ध्यर्थं तदुपस्थापकत्वावश्यकत्वात् ।

बलीयानिति । तथा च प्रकृते 'तस्मादि'ति परिभाषाया एवांशत्रयोपस्थापकत्वेनाचो ङमुट्सिद्धिः ।

बलीयस्त्वे हेतुमाह— अनवकाश इति । एवं चेदं वचनं न्यायसिद्धमिति भावः, तेन यत्र सप्तमीनिर्देशस्यैवानवकाशत्वं तत्र सप्तमीनिर्देश एव बलीयान् । अत एव 'शिलुगि'त्यत्र शे परे इत्यर्थलाभः । एतेन—'उभयनिर्देशे पञ्चमीनिर्देशो बलवानि'ति बलवत्त्वे परत्वादित्येव हेतुरिति वदन्तः परास्ताः । परत्वादिति । विप्रतिषेधाभावेन विप्रतिषेध इति सूत्रविषयाभावे 'ऽप्यणुरपि विशेष' इति न्यायेन 'तस्मादि'ति सूत्रस्यैवात्र प्रवृत्तिसिद्धिः ॥ ७१ ॥

॥ इति भूतितिलके बाधबीजनामकं द्वितीयं प्रकरणम् ॥

## अथ शास्त्रशेषनामकं तृतीयं प्रकरणम्।

ननु 'अतः कृकमी'ति सत्व'मयस्कुम्भी'त्यत्र न स्यात् कुम्भशब्दस्यैवोपादानादत आह—

## प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्॥ ७२॥

सामान्यरूपेण विशेषरूपेण वा प्रातिपदिकबोधकशब्दग्रहणे सति लिङ्गबोधकप्रत्ययविशिष्टस्यापि तेन ग्रहणं बोध्यम्। अपिना केवलस्यापीत्यर्थः।

अस्याश्च ज्ञापकं समानाधिकरणाधिकारस्थे 'कुमारः श्रमणादिभि'रिति सूत्रे स्त्रीलिङ्गश्रमणादिशब्दपाठः। स्त्रीप्रत्ययविशिष्टश्रमणादिभिश्च कुमारीशब्दस्यैव सामानाधिकरण्यं न तु कुमारशब्दस्येति तदेतज्ज्ञापकम्।

---

### अथ भूतितिलके तृतीयं प्रकणरम्।

कुम्भशब्दस्यैवोपादानादिति। न 'चैकदेशविकृत'न्यायेन 'कुम्भी'त्यत्र तत्त्वमिति वाच्यम्; तस्याक्तपरिमाणत्वेन परिभाषाया अप्रवृत्तेः, एकदेशविकृतत्वाभावाच्च। कुम्भान्ते कुम्भादावुत्तरपदे इत्यर्थोऽपि नात्र, उत्तरपदाधिकारे प्रातिपदिकग्रहण इति निषेधात्, कुम्भशब्दस्य वर्णत्वधातुत्वव्याप्यधर्मावच्छिन्नबोधकत्वाभावेन तदादिविध्यप्रसक्तेश्च। अत एव 'अयः कुम्भजलमि'त्यादौ सत्वं न।

सामान्यरूपेणेति। प्रातिपदिकत्वेनेत्यर्थः। विशेषरूपेणेति। प्रातिपदिकत्वव्याप्यकुम्भशब्दत्वादिनेत्यर्थः।

ज्ञापकमिति। ननु कुमारशब्दत्वस्य 'कुमारक्रीडायामि'त्यत्र धातावपि सत्त्वात् प्रातिपदिकत्वव्याप्यत्वाभावेन कथं परिभाषाप्रवृत्तिः। यदि च प्रातिपदिकत्वव्याप्येत्यस्य प्रातिपदिकमात्रवृत्तिविषयताप्रयोजकपदप्रतिपाद्यतावच्छेदकधर्मेत्यर्थः, 'कुमारश्रमणादिभिरि'त्यत्रत्यकुमारशब्दस्य प्रातिपदिकमात्रवृत्तिविषयताप्रयोजकत्वेन तत्प्रतिपाद्यतावच्छेदककुमारशब्दत्वस्यातिदेशसम्भव इत्युच्यते; तदा 'अत इनी'त्यादावच्छ-

---

### अथ तत्त्वप्रकाशिकायां शास्त्रशेषनामकं तृतीयं प्रकरणम्।

कुम्भशब्दस्यैवोपादानादितीति। समासाक्षिप्तोत्तरपदत्वेन इति शेषः। एतेन—यस्येति लोपोत्तरम् 'एकदेशविकृत'न्यायेन कुम्भशब्दत्वात् सत्वं स्यादिति शङ्काऽपि निरस्ता वेदितव्या।

प्रातिपदिकत्वेनेत्यर्थ इति। अत एव 'ङ्याप् प्रातिपदिकात्' इति सूत्रे प्रातिपदिकग्रहणेनैव सिद्धे ङ्याप्ग्रहणेन ङ्याबन्तात् तद्धितोत्पत्तिर्ज्ञापिता भाष्ये। विशेषरूपेणेतीति। धर्मिग्राहकमानादिति भावः।

इयञ्च द्विषत्परयोरित्याद्युपपदविधौ समासान्तविधौ महदात्वे ञ्नित्स्वरे राज-

---

न्दस्यापि प्रातिपदिकमात्रवृत्तिविषयताप्रयोजकत्वेन तत्प्रतिपाद्यतावच्छेदकाद्न्ततत्वस्य स्त्रीप्रत्ययान्तेऽतिदेशापत्त्या 'रमा, गौरी'त्यादावपि इनिप्रत्ययापत्तेरिति चेन्न। प्रातिपदिकमात्रवृत्तिविषयताप्रयोजकेत्यनेन प्रातिपदिकवृत्तिविषयताप्रयोजकं प्रातिपदिकेतरवृत्तिविषयताप्रयोजकत्वाभाववच्च यत्तस्य ग्रहणम्। तत्राभावश्च सामानाधिकरण्यसम्बन्धेन पदार्थान्तरान्वयाप्रयोज्यो गृह्यते। 'अत इनी'त्यत्रात्पदस्य प्रातिपदिकपदार्थेन सह सामानाधिकरण्येनान्वयादेव प्रातिपदिकेतरवृत्तिविषयताप्रयोजकत्वाभाववत्त्वेन प्रातिपदिकमात्रवृत्तिविषयताप्रयोजकत्वाभावात्तत्प्रतिपाद्यतावच्छेदकादन्तत्वस्यातिदेशासम्भवात्। 'कुमारश्रमणे'त्यत्र सुप्पदसम्बन्धात् कुमारधातुप्रकृतिकसुपो ऽसम्भवादेव कुमारपदस्य प्रातिपदिकेतरवृत्तिविषयताऽप्रयोजकत्वं न तु सामानाधिकरण्यसम्बन्धेन पदार्थान्तरान्वयप्रयोज्यम्, अतः कुमारपदस्य प्रातिपदिकमात्रवृत्तिविषयताप्रयोजकत्वेन ज्ञापकत्वस्य निष्प्रत्यूहत्वात्।

केचित्तु—'युवाखलती'ति सूत्रे जरतीति स्त्रीलिङ्गनिर्देशोऽस्या ज्ञापकः; अन्यथा युवशब्देन जरतीशब्दस्य सामानाधिकरण्यासम्भवात् तदसङ्गतिः स्यादिति वदन्ति।

द्विष-परयोरिति। 'द्विषतीताप' इत्यत्र न खश। समासान्तविधाविति। 'मद्रराज्ञी'त्यत्र न टच्। महदात्व इति। 'महतीप्रिय' इत्यत्र नाऽऽत्वम्। ञित्स्वर इति। 'औत्सी'त्यत्र नाऽऽद्युदात्तः। राजस्वरे ब्राह्मणकुमारयोरिति। 'राजकुमारी, राज-

---

विषयताप्रयोजकेति। विषयताऽत्र शाब्दबोधीया ग्राह्या, न तु उपस्थितीया, तस्याः सङ्कुचितताया असम्भवात्।

निष्प्रत्यूहत्वादिति। नन्वेवं 'ञ्नित्यादिर्नित्यमि'ति सूत्रस्थभाष्यविरोधः, तत्र हि प्रकृतपरिभाषया लिङ्गबोधकप्रत्ययविशिष्टस्यापि प्राप्तग्रहणवारणाय अस्या अनित्यत्वमभ्युपेयते, तन्न सङ्गच्छेत, भवद्रीत्या प्रातिपदिकग्रहणाभावेन तत्प्राप्तेरभावात् सामानाधिकरण्येनान्वयादेव प्रातिपदिकेतरवृत्तिविषयताप्रयोजकत्वाभाववत्त्वादिति चेत्—सत्यम्। 'प्रातिपदिकमात्रवृत्तिविषयताप्रयोजके'त्यादेः प्रातिपदिकविशिष्टधर्मावच्छिन्नविषयताप्रयोजकपदप्रतिपाद्यतावच्छेदकधर्म इत्यर्थकरणेनादोषात्; वैशिष्ट्यञ्च- स्ववृत्तित्व-स्वेतरोभूतधात्वितरावृत्तित्वैतदुभयसम्बन्धेन। अदन्तत्वस्य प्रातिपदिकेतरधात्वितरः—प्रत्ययादिस्तद्वृत्तित्वमेवेति न दोषः।

न टजिति। न चात्र टचि कृते यस्येति लोपेन ङीपो निवृत्तौ टचष्टित्वेन तदन्तात् ङीपि यस्येति लोपेन टचो निवृत्तौ रूपसिद्धिर्भवत्येवेति वाच्यम्; टजुत्तरं 'भस्याढे' इति पुंवद्भावेन 'नस्तद्धिते' इति टिलोपे टजन्तात् ङीपि 'मद्रराजी' इत्यस्यैवाऽऽपत्तेः। नाऽऽत्वमिति। तस्मिन् सति प्रियादिपरत्वेन पुंवद्भावाप्राप्त्या 'महतीप्रिय.' इति स्यात्। 'नित्स्वरे प्राचामवृद्धात्' इति फिञन्तग्लुचुकायनिशब्दात् 'इतो मनुष्यजातेः' इति ङीषि ग्लुचुकायनीशब्दे नाऽऽद्युदात्तः।

स्वरे ब्राह्मणकुमारयोर्बहोर्नञ्वदुत्तरपदभूम्नि इत्यादौ समासङ्घातग्रहणेषु च न प्रवर्तत इति 'ङ्याप्'सूत्रे भाष्ये स्पष्टम् । विभक्तिनिमित्तककार्ये च नेत्यपि तत्रैव । तत्र समासान्तविधाववयवग्रहण एव न; समासङ्घातग्रहणे तु प्रवर्तत

---

ब्राह्मणी'त्यत्र पूर्वपदप्रकृतिस्वरो न । बहोर्नञ्वदुत्तरपदभूम्नीति । 'बहवो गोमन्तोऽस्यां सा बहुगोमती'त्यत्र नञ्वत्स्वरोऽन्तोदात्तो न । समासङ्घातग्रहणेष्विति । इदं पूर्वान्वयि न तु पृथक् , तेनावयवीभूतपूर्वोत्तरग्रहणे राजस्वरव्यतिरिक्ते तु एतत्परिभाषा-प्रवृत्तिरिष्टैव । तेन 'कुसूलकूपकुम्भशालं बिले' इत्यनेन बिलशब्दे परतो विधीयमानं कुसूलादीनां प्रकृतिस्वरत्वं यथा 'कुसूलबिलमि'त्यत्र भवति तथा 'कुसूलीबिलमि'-त्यत्रापि भवति । विभक्तिनिमित्तककार्य इति । 'गोमती'त्यत्र 'उगिदचामि'ति नुम्न । समासान्तविधाववयवग्रहण एव नेति । 'मद्रराज्ञी'त्यादौ न टच् । समासङ्घातग्रहणे तु प्रवर्तत एवेति । तेन 'अतिशयितो भ्राता यस्याः साऽतिभ्रात्री, आ अतिभ्रात्री

---

पूर्वपदप्रकृतिस्वरो नेति । 'ब्राह्मणकुमारयोः परतो राजा वा प्रकृत्या' इत्येतदर्थकेन 'राजा च' इति सूत्रेणेत्यर्थः । बहोर्नञ्वदिति । 'उत्तरपदार्थभूयस्त्वे वर्तमानात् बहुशब्दात् परं यत् पदं तस्य नञ इव स्वरो भवति बहुव्रीहौ' इति तदर्थः । अनया बहुव्रीहित्वातिदेशेन स्वरो न भवतीत्यर्थः । इदं पूर्वान्वयीति । मूले बहुवचनमविवक्षितम् , बहोर्नञ्वदित्येकेनैव अन्वयस्य इष्टत्वात् ।

समासान्तविधाववयवग्रहण एव नेतीति । समासान्तविधौ कर्तव्ये अनया परि-भाषया समासावयवपर्याप्तधर्मस्य राजत्वादेः अतिदेशो न भवतीत्यर्थः । समाससङ्घातग्रहणे तु प्रवर्तत एवेतीति । समासान्तविधौ कर्तव्ये समासरूपसमुदायपर्याप्तधर्मस्य बहुव्रीहित्वादेः आरोपस्तु अनया भवत्येवेति तदर्थः । अप्रवृत्तौ फलाभावात् । प्रवृत्तौ च वक्ष्यमाणबहुव्रीहेः ऊधसो-ङीषिति भाष्ये उपन्यस्तस्य 'कुण्डोध्नी' इत्यत्र 'नद्यृतश्चे'ति कबापादनरूपपूर्वपक्षस्य सङ्गतिरेव फलं बोध्यम् । अन्यत्र समासान्तविधौ समुदायग्रहणे अस्याः प्रवृत्त्यप्रवृत्त्योः फले न विशेषः ।

यत्तु—कब्निषेधसिद्धया 'अतिभ्रात्रि' इत्येव सिद्धयतीति फलं वक्ष्यति, तत् समासान्त-निषेधे कर्तव्ये समुदायग्रहणे प्रवर्तत इत्यस्य फलं, न तु 'समासान्तविधौ कर्तव्ये समुदाय-ग्रहणे' इत्यस्य ।

अतिशयितो भ्राता यस्याः साऽतिभ्रात्रीति । अत्र अलौकिकविग्रहवाक्ये एव प्राप्तस्य कपो 'वन्दिते भ्रातुः' इत्यनेन निषेधः । ङीबुत्पत्त्युत्तरन्तु न कपः प्राप्तिः, ऋदन्तप्रकृतिक-सुबन्तोत्तरपदकबहुव्रीहित्वारोपेऽपि, अस्य समासार्थालौकिकविग्रहवाक्यत्वाभावात् समासान्तप्रकरणे समासवाचकपदस्य तद्विशेषवाचकपदस्य च तदर्थालौकिकविग्रहवाक्यपरत्वेनान्यत्र सिद्धान्तितत्वात् , वर्णत्वव्याप्यधर्मघटितधर्मस्य च अनयाऽनारोपाच्च । अत एव 'रमा' इत्यादौ अदन्तप्रातिपदिकत्व-स्यानया नातिदेशः ङीबुसमभिव्याहारे तद्रहिते ऋदन्तप्रकृतिकसुबन्तोत्तरपदत्वस्य इष्टत्वा-भावाच्च । एतेन —'अतिभ्रात्री' इत्यत्र ङीबन्ते एव ऋदन्तोत्तरपदकबहुव्रीहित्वमनया अतिदिश्य 'वन्दिते भ्रातुः' इत्यनेन निषेधप्राप्तेरत्रैव फलसम्भवे कस्यचिदत्रातिभ्रातृघटितद्वितीयसमासबीज-

एव, स्वरविधावेव समासमङ्घातग्रहणे तत्र दोषोक्तेः, 'बहुव्रीहेरूधस' इति सूत्रस्थभाष्याच्च ।

एतावत्स्वेवानित्यत्वादप्रवृत्तिर्दोषाः खल्वपि साकल्येन परिगणिता इति भाष्योक्तेः ।

नन्वेवं 'बहुव्रीहेरूधसो ङीषि'ति सूत्रस्थभाष्यासङ्गतिः, तत्र हि 'कुण्डोध्नी'-त्यत्र 'नद्यृतश्चे'ति कबापादितो नद्यन्तबहुव्रीहेरित्यर्थात् नद्यन्तस्य बहुव्रीहित्वाभावात्तदसङ्गतिः । नद्यन्तानां यः समास इत्यर्थेन च परिहृतम् । नद्यन्तप्रकृतिकसुबन्तोत्तरपदकः समास इति चेत् । न ; अनया परिभाषया स्त्रीप्रत्ययसमभिव्याहारे तद्रहिते दृष्टानां प्रातिपदिकत्वतद्व्याप्यधर्माणां विशिष्टेऽपि

---

यस्ये'त्यत्र भ्रातृशब्दान्तबहुव्रीहित्वातिदेशेन 'वन्दिते भ्रातुरि'ति कब्निषेधसिद्धया 'आतिभ्रात्री'त्येव सिद्धयति । एवम्—'आतिश्रेयसी'त्यादावपि बोध्यम् ।

नन्वेवमिति । ज्ञापकसाजात्यादनया परिभाषयाऽऽनुपूर्वीरूपधर्ममात्रस्यातिदेश इत्यर्थः । बहुव्रीहित्वाभावादिति । बहुव्रीहित्वस्याऽऽनुपूर्वीरूपत्वाभावादित्यर्थः । इदमेव भाष्यं समासान्तविधाववयवग्रहणेऽप्रवृत्तौ मानम्, समासान्तविधौ समाससङ्घातग्रहणेऽप्यप्रवृत्तिस्वीकारे त्वनित्यत्वादेवात्रापि परिभाषाया अप्रवृत्त्या कबापत्तितद्वारणयोर्निर्दलत्वापत्त्या भाष्यविरोधः स्पष्ट एव ।

विशिष्टेऽपीति । स्वान्तत्व—स्वविशिष्टादित्वोभयसम्बन्धेन स्त्रीप्रत्ययविशिष्टे

---

'करणं नावधारयामः' इति केषाञ्चिदुक्तिः परास्ता वेदितव्याः; वर्णत्वव्याप्यधर्माघटितधर्माणामारोपोऽनया बोध्यत इति स्वोत्तरग्रन्थविरोधाच्च ।

कब्निषेधसिद्धयेति । द्वितीयसमासप्रवृत्तिकाले नद्यन्तप्रकृतिकसुबन्तोत्तरपदकतया प्राप्तस्य कपो निषेध इति भावः । न च भ्रातृशब्दप्रकृतिकसुबन्तोत्तरपदकत्वाभावात् निषेधस्याप्राप्त्याऽत्र कब् इष्ट एवेति वाच्यम् ; भ्रातृशब्दत्वमनया ङीब्विशिष्टे आरोप्य भ्रातृशब्दप्रकृतिकसुबन्तोत्तरपदत्वस्य भात्रीशब्दे सुलभत्वात् , समासान्तविधौ एव अवयवग्रहणे अनित्यत्वोक्तेस्तन्निषेधे कर्तव्ये अवयवग्रहणे प्रवृत्तौ दोषाभावाच्च ।

मूले—नद्यन्तप्रकृतिकसुबन्तोत्तरपदकः समास इति चेदिति । अत्र समासपदोत्तरं तदर्थ इति शेषः । स चार्थः 'नद्यन्तानां यः समासः' इति भाष्यवाक्यस्य बोध्यः ।

ननु—मूले—स्त्रीप्रत्ययसमभिव्याहारे तद्रहिते दृष्टानां प्रातिपदिकत्वादेरतिदेशो भवति' इति बोधनात् 'शरदः+ई, शरदी' इत्यत्रापि शरच्छब्दस्याऽऽरोपो भवेत् ; 'इ' इति तु 'अस्य अपत्यं स्त्री' इति विग्रहे, 'अत इञ्' इति इञि 'इतो मनुष्यजातेः' इति ङीषि सिद्धम् , अतस्तत्परिष्कुर्वन्नाह—स्वान्तत्वेत्यादि । अत्र स्वान्तत्व-स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयादित्वोभयसम्बन्धेन स्त्रीप्रत्ययविशिष्टे स्त्रीप्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यताश्रयवर्तिनः प्रातिपदिकत्वादेः अतिदेशो भवति

**पर्याप्तत्वमतिदिश्यत इत्याशयात् ॥ ७२ ॥**

---

स्वविशिष्टवर्तिनः प्रातिपदिकमात्रवृत्तिविषयताप्रयोजकपदप्रतिपाद्यतावच्छेदकधर्मस्य अनयाऽतिदेश इत्याशयः। उभयत्र वैशिष्ट्यञ्च—स्वाव्यहितपूर्वत्व-स्वनिष्ठविधेयता-निरूपितोद्देश्यताश्रयघटकत्वोभय सम्बन्धेनेत्येकरूपमेव, तेन 'अयस्कर्णी'त्यत्र 'पाक-कर्णे'ति सूत्रेणायस्कर्णशब्दान्ङीष्यपि कर्णशब्दस्य ङीष्विशिष्टत्वेन तद्वृत्त्यर्थवत्त्वस्य कर्णीशब्दे स्वविशिष्टेऽतिदेशेन 'अतः कृकमी'ति सत्वसिद्धिः। अत एव 'दर्शनीय-मानिनी'त्यादौ 'क्यङ्मानिनोश्चे'ति पुंवद्भाव एतस्या प्रयोजनमित्युक्तं भाष्ये; अन्यथाऽत्र 'गतिकारके'ति परिभाषया ङीबुत्पत्तेः प्राक् समासे दर्शनीयामानिन्-शब्दान्ङीपि मानिनीशब्दस्योत्तरपदत्वाभावात्तदसङ्गतिः स्यादिति बोध्यम्। 'यतो यो विहितस्तदादेरेव तेन ग्रहणमि'ति नियमे तु न मानमिति स्पष्टं 'स्वाङ्गाच्चेत' इत्यत्र शेखरे। न च विशेषरूपेण प्रातिपदिकग्रहणे परिभाषाप्रवृत्तेः पूर्वमुक्त्वेन बहुव्रीहित्वस्यापि तद्विशेषरूपत्वाच्छङ्काया अनुत्थितिरिति वाच्यम्; विशेषरूपपदेन प्रातिपदिकत्वव्याप्यस्याऽऽनुपूर्वीरूपस्य कुम्भशब्दत्वादेरेव ज्ञापकसाजात्याद् ग्रहण-मित्याशयेन शङ्कायाः सुवचत्वात्।

केचित्तु—'अतः कृकमी'त्यत्र 'विश्वग्देवयोर्लोहितादिडाज्भ्य' इत्यादिषु 'कुम्भश्च कुम्भी चे'त्यादिविग्रहेण 'पुमान्स्त्रिये'त्येकशेषकल्पनात् कुम्भीदेवीलोहिन्या-दिशब्देष्वपि तत्तत्कार्यप्रवृत्त्येष्टसिद्धेः 'कुमारश्रमणादिभिरि'त्यत्र कृतपुंवत्ककुमारी-शब्दस्यैव निर्देशेन तत्सार्थक्योपपत्तेर्विशेषरूपेण ग्रहणेऽस्याः प्रवृत्तौ न किञ्चित्फलम्। न च 'अतः कृकमी'त्यादौ कुम्भशब्दस्य शब्दपरतया 'पुमान्स्त्रिये'त्यस्याप्रवृत्तिः, अत एव 'शक्तिलाङ्गले'त्यत्र 'घटघटी'त्येकशेषाभावः सङ्गच्छत इति वाच्यम्; प्रकृतिवदनुकरणमित्यतिदेशेन कुम्भीशब्दस्य स्त्रीवाचकत्वातिदेशेन 'पुमान्स्त्रिये' त्यस्य प्रवृत्तेः सुवचत्वात्. 'घटघटी'त्यादौ तु प्रकृतिवदनुकरणमित्यस्यानित्यत्वा-न्नैकशेषः। एवं सामान्यग्रहणेऽपि नास्याः फलम्, 'रमा, गौरी'त्यादौ स्वाद्युत्पत्तिस्तु

---

इत्युक्त्यैव सामञ्जस्ये अव्यवहितपूर्वत्वस्य घटकत्वस्य च प्रवेशश्चिन्त्यः, फलाभावात्, गौरवाच्च। उभयत्र उद्देश्यताऽऽश्रयता च अपर्याप्त्याऽपि गृह्यते, 'स्वाङ्गाच्चेतः' इति सूत्रभाष्यादिति न दोषः।

**अर्थवत्त्वस्य कर्णीशब्द इति।** न चात्र कर्णीशब्दस्य प्रातिपदिकग्रहणत्वाभावात् अस्या अप्रवृत्तिरेव स्यादिति वाच्यम्; 'अयः कुम्भजलम्' इत्यत्र सत्ववारणाय समासेन उत्तर-पदे इत्यस्याऽऽक्षेपेण अदोषात्, तस्य प्रातिपदिकमात्रवृत्तिविषयताप्रयोजकत्वाच्च प्रातिपदिक-ग्रहणं सूपपादम्। एवञ्च कर्णवृत्त्युत्तरपदत्वं कर्णीशब्दे आरोप्यत इति तत्त्वम्।

यत्तु—अर्थवत्त्वं न सुलभम्, कर्णीशब्दस्य अर्थवत्त्वासम्भवात्। तन्न; 'कर्णस्य स्त्री, कर्णी' ('पुंयोगादाख्यायाम' इति ङीष्) इत्यर्थवतः कर्णीशब्दस्य सम्भवात्।

**मानिनीशब्दस्योत्तरपदत्वाभादिति।** वस्तुतस्तु—स्वैरिणीवत् ङीपः प्रागभाग-मादाय नात्र दोषः।

नन्वेवं 'यूनः पश्ये'त्यत्रेव 'युवतीः पश्ये'त्यत्रापि 'श्वयुवे'ति सम्प्रसारणं स्यादत आह—

## विभक्तौ लिङ्गविशिष्टाग्रहणम् ॥ ७३ ॥

स्पष्टा चेयं 'युवोरनाकावि'त्यत्र भाष्ये । घटघटीग्रहणेन लिङ्गविशिष्टपरि-

---

ङ्याग्रहणादेव भविष्यति । ङ्याबन्तात्क्विबादेस्त्वनभिधानमेव । अत एव सूत्रकृन्मते 'प्राचां ष्फः तद्धित' इत्यत्र तद्धितग्रहणं चरितार्थम् ; अन्यथा ष्फान्तस्यानयैव प्रातिपदिकपदेन ग्रहणसिद्धेस्तद्वैयर्थ्यापत्तिरिति वदन्ति ॥ ७२ ॥

युवतीः पश्येति । 'सुपथी'त्यादावात्वादेरुपलक्षणमिदम् । 'युवतीरि'त्यत्र त्वन्नन्तानां श्वादीनामित्यर्थकरणेन सम्प्रसारणव्यावृत्तेर्भाष्यकृतोक्तत्वात् ।

केचित्—सूत्रे श्वन्नादीनां तदन्तपरत्वेनान्न एकदेशान्वयासम्भवादन इत्यस्यान्नन्तश्वन्नाद्यन्ते लक्षणायां तात्पर्यग्राहकत्वेनान्नन्तयुवन्शब्दत्वस्य तथात्वेन तदतिदेशो बाधकाभाव इति वदन्ति ।

विभक्ताविति । विषयसप्तमी, तेन विभक्त्युद्देश्यके तन्निमित्तके सर्वविधविभक्तिसम्बन्धिनि कार्ये इत्यर्थः । तेन 'शुन्ये'त्यादौ गौरादिङीषो यणि कृते उदात्तयणो 'हल्पूर्वादि'ति विभक्त्युदात्तत्वस्यानया 'शुनी'त्यत्र श्वनशब्दत्वमादाय 'न गोश्वन्साववर्णे'ति न निषेधः, अस्य विभक्त्युद्देश्यकत्वेन तत्सम्बन्धित्वात् । एवं 'सख्यावि'त्यत्र णिद्वद्भावोऽपि नेति बोध्यम् । न च 'चित्रगवीणामि'त्यत्र 'कुमति चे'ति णत्वानापत्तिः, विभक्त्युद्देश्यककार्यत्वेनानया निषेधेन ङ्यते समासत्वानतिदेशात्, 'कुमति'चेत्यस्य कवर्गवदुत्तरपदघटितसमासप्रकृतिकविभक्तिनकारे एव प्रवृत्तेः, अत एव 'पूर्वपापानां विपाक' इत्यत्र 'षष्ठ्या आक्रोश' इत्यलुकि

---

वदन्तीति । न च 'अतिशयितो भ्राता यस्याः सा अतिभ्रात्री, अस्य अतिभ्रात्री आतिभ्रात्री' इति तत्पुरुषसमासे कृते ङीबन्तेऽनया बहुव्रीहित्वारोपेण परादिवद्भावेन च समुदाये आरोपात् 'नद्युतश्च' इति कप्प्रवृत्तये इयमावश्यकीति वाच्यम् ; प्रागुक्तरीत्या बहुव्रीह्यर्थालौकिकविग्रहवाक्यत्वाभावेन सिद्धान्तेऽपि कपोऽप्राप्त्या तदर्थं तस्या अनावश्यकत्वादिति तात्पर्यम् ॥७२॥

सर्वविधेति । यथाकथञ्चिदिति तदर्थः, साक्षात् पदत्वादिद्वारकपरम्परया वा इति यावत् विभक्त्युद्देश्यककार्यत्वेनेति । साक्षात् परम्परया वा विभक्त्युद्देश्यककार्यत्वेन इति तदर्थः । शेखरकृन्मते तु साक्षादेव विभक्त्युद्देश्यके विभक्तिनिमित्तके वा कार्ये एव अस्याः प्रवृत्तिः, विभक्तेश्चाश्रयणं येन केनापि रूपेण भवतु । अत एव 'चित्रगवीणाम्' इत्यादौ णत्वं भवत्येव, लिङ्गविशिष्टपरिभाषया विभक्तिप्रकृतौ समासत्वात् । 'णत्वरहितपाठस्तु लेखकप्रमादात्' इति 'कुमति च' इति सूत्रस्थशेखरग्रन्थः, 'चित्रगवीणाम्' इति प्रतीकमुपादाय 'कुमति चेति नित्यं णत्वं न्याय्यम्' इति शब्दरत्नग्रन्थश्च सङ्गच्छते ।

भाषाया अनित्यत्वं तन्मूलकैरेवोक्तत्वात् ॥ ७३ ॥

ननु 'तस्यापत्यम्' इत्येकवचनपुंस्त्वाभ्यां निर्देशाद् 'गार्ग्यौ, गार्ग्या-वि'त्याद्ययुक्तमत आह—

**सूत्रे लिङ्गवचनमतन्त्रम् ॥ ७४ ॥**

---

'अर्द्धन्नपुंसकमि'ति नपुंसकग्रहणमस्या ज्ञापकम् । नित्यनपुंसकत्वार्थं तु न तदित्यन्यत्र निरूपितम् ।

---

विभक्तिनकारस्य णत्वं नेति वाच्यम्; 'अट्कुप्वाङि'ति णत्वेनेष्टसिद्धेः । 'दीर्घाह्नी'-त्यत्र 'अह्नि'ति रुत्वस्यापि पदत्वद्वारा विभक्तिनिमित्तकत्वेन विभक्तिसम्बन्धिकार्य-त्वादनयाऽहन्शब्दत्वातिदेशासम्भवान्न रुत्वमिति दिक् ॥ ७३ ॥

अयुक्तमिति । न च द्वित्वबहुत्वयोः पुंस्त्वस्त्रीत्वयोश्चाविवक्षायामेकवचन नपुंसकलिङ्गप्रयुक्तकार्यप्रवृत्तिः, अत एव स्तोकादिशब्देभ्यो नपुंसकैकवचनामादि सिद्धिरिति न प्रकृतप्रयोगासङ्गतिरिति वाच्यम्; समवायात्पक्षिमत्स्यमृगानि-त्यादिप्रयोगोपलक्षणत्वेनैतस्य 'मृगं हन्ति मार्गिक' इत्यादिप्रयोगानुपपत्तिरित्या-शयेनादोषात् ।

अतन्त्रमिति । असति यत्ने अविवक्षितमित्यर्थः । अत एव 'पदास्वैरी'त्यादौ नपुंसकनिर्देशेन सिद्धौ बाह्या इति स्त्रीलिङ्गनिर्देशो विवक्षार्थः, तेन पुन्नपुंसकयोः क्यबभावसिद्धिः । न च तस्याविवक्षितत्वे 'मृगानि'त्यादौ नत्वाद्यनापत्तिः, 'तस्मा-च्छस' इत्यस्य पुंस्त्वे विवक्षिते इत्यर्थादिति वाच्यम्; पक्षिमत्स्येत्यादिशब्दैः पुंस्त्वादेरविवक्षितत्वेऽपि तद्धितवाच्यतावच्छेदककुक्षावविवक्षितमित्यर्थेनादोषादित्यन्यत्र विस्तरः ।

नित्यनपुंसकत्वार्थं तु नेति । पूर्वापराधरोत्तराधमित्येकयोगेन सिद्धे पृथग्योगकरणे-नैव तत्सिद्ध्या नपुंसकग्रहणवैयर्थ्यस्य सूपपादत्वादिति भावः ।

---

अट्कुप्वाङिति णत्वेनेति । निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वरूपाखण्डपदत्व-सत्त्वादिति भावः । विभक्तौ लिङ्गविशिष्टाग्रहणात् प्रातिपदिकान्तेत्यस्याप्यप्राप्तेः । तत्रापि पूर्व-पदेनाऽऽक्षिप्तसमासरूपप्रातिपदिकप्रकृतिकविभक्तेरेव ग्रहणादिति भावः । 'माषं वपतीति या माषवापी' कर्म० .ण् , तदन्तात् ङीपि आम्विभक्तौ 'माषवापीनाम्' इत्यत्र शेखरकृन्मते विकल्पेन णत्वं भविष्यति, टीकाकृन्मते तु नित्यं णत्वमिति फलभेदश्चिन्तनीयः ।

न रुत्वमितीति । अत्र शेखरकृन्मतेऽपि 'अह्न' इति वक्तव्ये 'अहन्' इति नान्तानु-करणसामर्थ्यात् नान्ताहन्शब्दस्यैव रुत्वविधानान्न दोषः ॥ ७३ ॥

तद्धितवाच्यतावच्छेदककुक्षावविवक्षितमिति । बुद्धिस्थत्वबदुपलक्षणम्, न तु विशेषणमिति भावः । तथा च आश्रयत्वसम्बन्धावच्छिन्नबोधविषयतात्वावच्छिन्नप्रकारतानिरू-

धान्यपलालन्यायेन नान्तरीयकतया तयोरुपादानमिति 'तस्यापत्यमि'-त्यत्र भाष्ये स्पष्टम् ।

---

वस्तुतस्तु- तन्न युक्तमित्यत्र प्रमाणमाह—अन्यत्रेति । 'एओङ्, एच' इति सूत्रयोरर्धे एकारोऽर्धे ओकार इति भाष्ये समांशवाचिनाऽपि पुंस्त्वाभिधानेन नित्य-नपुंसकत्वस्याप्रामाणिकतया न तद्ग्रहणार्थं नपुंसकग्रहणमिति तत्रैव सूत्रे प्रति-पादितमित्यर्थः ।

केचित्तु - भाष्येऽर्धशब्दः खण्डत्वेन वस्तुतः समांशवाचक इति न तद्विरोध इति प्राहुः ।

नान्तरीयकतयेति । नान्तरीयकत्वं चाविनाभावः । विनार्थकादन्तराशब्दात् गहादित्वाच्छप्रत्यये नञ्तत्पुरुषे भाष्यप्रयोगान्नलोपाभावे स्वार्थिके कन्प्रत्यये नान्तरीयकशब्दः साधुरिति कैयटे स्पष्टम् । एतेन—नान्तरीयकतया यस्य यस्यो-पादानं तस्य सर्वस्याविवक्षितत्वमिति सूचितम्, तेन 'तदधीते' इत्यादौ कालस्य, 'तत्करोति तदाचष्ट' इत्यादौ कालकारकयोश्चैवमेवाविवक्षा सिद्ध्यतीति भावः । भाष्ये स्पष्टमिति । तत्र हि यथा कश्चिद्धान्यार्थी शालिकलापं सतुषं सपलालमाहरति नान्तरीयकत्वात्, स यावदादेयं तावदादाय तुषपलालन्युत्सृजति, तथा कश्चि-न्मत्स्यार्थी मत्स्यान् सशल्कान् सकण्टकानाहरति नान्तरीयकत्वात, स यावदायेयं

---

पितविशेष्यताश्रयविशेषणानां येषां बोधविषयतायां धर्मिपारतन्त्र्येण विशेषणत्वं तानि विशेषणानि इत्युच्यन्ते, येषां बोधविषयतासामानाधिकरण्यमात्रं तान्युपलक्षणान्युच्यन्ते । यथा—तत्पदशक्तौ बुद्धिविषयतावच्छेदकत्वम् । एवञ्च "एकत्वविशिष्टनपुंसकत्वविशिष्टापत्यत्वावच्छिन्नम् अण्पदाद् बोद्धव्यमि"ति शक्तौ तव्यप्रत्ययार्थविषयताया यथा अपत्यत्वस्य स्वनिष्ठस्वरूपसम्बन्धावच्छिन्ना-वच्छेदकतानिरूपितावच्छेद्यतासम्बन्धेन विशेषणत्वं न तथा नपुंसकत्वैकत्वयोरिति ते अविवक्षिते नाम उपलक्षणे इत्युच्येते । न च 'तस्यापत्यमि'ति शक्तिग्राहकशास्त्रेण "एकत्वविशिष्टनपुंसकत्व-विशिष्टापत्यत्वावच्छिन्नोऽण्पदवाच्य" इति शक्तिज्ञानस्य जातत्वेन पुंस्त्वादिपुरस्कारेण अपत्यबोधो न स्यादिति वाच्यम्; "अपत्यत्वावच्छिन्नोऽण्पदवाच्यः" इति शक्तिज्ञानान्तरेण तदादिपदेन स्वरूपतो घटत्वादिप्रकारबोधवत् नपुंसकैकत्वाविषयकापत्यविषयकबोधस्याप्युपपत्तेः । इयानेव विशेषः—तत्पदस्थले शक्यतावच्छेदकानुगमाय उपलक्षणविधया भानम्, अत्र तु नान्तरीकतया तयोरुपादानमिति न कश्चिद्विरोधः ।

वस्तुतस्तु—प्रकृतोपयोगित्वात् तद्धितेत्याद्युपात्तम्, सर्वत्रैव सूत्रघटकपदे लिङ्गवचनमतन्त्रम्, अविवक्षितविशेषणतया इति यावत् । उपलक्षणविधया भासत एवेति तत्त्वम् । अत एव ज्ञापक-परग्रन्थविरोधो न । न हि 'अर्धं नपुंसकम्' इति सूत्रेण प्रत्ययो विधीयते इति बोध्यम् ।

ननु सूत्रे लिङ्गवचनयोरुपलक्षणविधया भाने प्रयोजनाभावेन नपुंसकैकवचनाभ्यामपत्यमिति निर्देशः किमर्थं इत्याशङ्क्य, 'अपदं न प्रयुञ्जीत' इति भाष्यात् यस्य कस्यचित् लिङ्गवचनान्त-स्यैव प्रयोगे प्राप्ते नपुंसकैकवचनाभ्यां निर्देशः कृत इत्यत्र दृष्टान्तत्वेन लोकसिद्धन्यायमाह—मूले—धान्यपलालेति ॥ ७४ ॥

अत एवा'ऽऽकडार'सूत्रे एकेति चरितार्थमित्यन्यत्र विस्तरः ॥ ७४ ॥

ननु 'भृशादिभ्यो भुव्यच्वेरि'त्यादौ विधीयमानः क्यङ् 'क्व दिवा भृशा भवन्तो'त्यत्रापि स्यादत आह—

## नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ॥ ७५ ॥

नञ्युक्तमिवयुक्तं च यत्किञ्चिद् दृश्यते तत्र तस्माद् भिन्ने तत्सदृशेऽधिकरणे द्रव्ये कार्यं विज्ञायते हि यतस्तथाऽर्थगतिरस्ति । न हि 'अब्राह्मणमानये'त्युक्ते लोष्टमानीय कृती भवति । अतश्च्व्यन्तभिन्ने च्व्यन्तसदृशेऽभूततद्भावविषये क्यङिति नोक्तदोषः ।

'ओषधेश्च विभक्तावप्रथमायामि'त्यादौ विभक्तिग्रहणमेतन्न्यायसिद्धार्थानुवाद एव । एतेन—विभक्तावित्याद्यस्यानित्यत्वे ज्ञापकमिति वदन्तः परास्ताः,

---

तावदादाय शल्ककण्टकान्युत्सृजति ; एवमिहापि नान्तरीयकत्वात्पुल्लिङ्गेन निर्देशः क्रियते, एकवचनान्तेन च न ह्यत्र निर्देशस्तन्त्रमिति ।

लिङ्गस्यातन्त्रत्वे ज्ञापकमुक्त्वा वचनांशे तदाह—अत एवेति । प्राचीनमते तु एकदेशानुमत्या सर्वांश इदमेव ज्ञापकमिति दिक् ॥ ७४ ॥

नञिवयुक्तमिति । नञ्युक्तमिवयुक्तमित्यर्थः । योगश्चाऽऽद्ये पूर्वत्वरूपो, द्वितीये परत्वरूपः, स्वघटितसमासघटकत्वरूपस्तूभयसाधारणः । तथा च नञ उत्तरं तद्घटितसमासघटकम्, इवशब्दात्पूर्वं तद्घटितसमासघटकं च पदं स्वार्थभिन्नस्वार्थसदृशबोधकं, नञादिपदं च तदर्थे तात्पर्यग्राहकं निपातानां द्योतकत्वादिति भावः । अत एव परिभाषायां 'नञिवावन्यसदृशाधिकरणे वर्तेते' इति नोक्तम् । न चैवं—

"तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥"

इत्यभियुक्तवचने सादृश्यभेदयोः पृथग् नञर्थत्वकथनमनुपपन्नमिति वाच्यम्; भेदविशिष्टे सादृश्ये सादृश्यविशिष्टे भेदे च नञो वृत्तिकल्पनायां प्रधानाप्रधानभावमूलकेन भेदेन तथाकथने बाधकाभावात् । भेदविशिष्टसादृश्यबोधकत्वं नञो 'मृगो न भीम' इत्यादौ वेदे प्रसिद्धम् । तथा ह्यर्थगतिरिति । लोके ईदृशस्थले तद्भिन्नतत्सदृशरूपार्थावगतिरित्यर्थः । तथा च लोकसिद्धोऽयमर्थ इति सिद्धम् । अब्राह्मणश्चन्द्र इवे'त्यादि लोके उदाहरणम् । अच्वेरिति तत्र तस्यैवेति शास्त्रे उदाहरणम् ।

विभक्तावित्यादि । आदिनाऽकर्तरीत्यस्य सङ्ग्रहः । अनित्यत्व इति । नन्वनि-

अनित्यत्वे भाष्यसम्मतफलाभावात्। अत एव 'अकर्तरि चे'ति सूत्रे कारकग्रहणं भाष्ये प्रत्याख्यातमिति बोध्यम्। स्पष्टा चेयं 'भृशादिभ्य' इति सूत्रे भाष्ये।

अत्र 'अन्यसदृशे'त्युक्त्या सादृश्यस्य भेदाघटितत्वं सूचयति। निरूपितं चैतन्मञ्जूषायाम्।' ७५॥

ननु 'व्याघ्री, कच्छपी'त्यादौ सुबन्तेन समासात् ततोऽप्यन्तरङ्गत्वाट् टाप्यदन्तत्वाभावाज्जातिलक्षणो ङीप् न स्यादत आह—

---

त्यत्वे फल'मसूर्यंपश्यानि मुखानी'त्यादि सम्भवत्येवेत्यत आह–भाष्येति। शब्दशक्तिस्वभावात्तादृशस्थले सादृश्याप्रतीतिर्लोके प्रसिद्धा, न तु तत्र ज्ञापकापेक्षेति भावः। अत एवेति। अनित्यत्वस्य भाष्यानभिमतत्वादेवेत्यर्थः।

सूचयतीति। तथा च भेदसादृश्ययोः पार्थक्येन नञर्थत्वं पूर्वोक्तं स्वरसत उपपद्यत इति भावः। ७५॥

ननु व्याघ्रीति। ननु—'उपसञ्जनिष्यमाण'न्यायेनैव सिद्धे इदमवतरणदानमयुक्तम्, वस्तुतस्तु 'साङ्कुटिनमि'त्यत्र संशब्देन समासात्पूर्वं स्वार्थेऽणि 'सङ्कौटनमि'ति स्यात्, एवं 'माषवापिणी'त्यत्र माषशब्देन समासात्पूर्वं ङीपि उत्तरपदप्रातिपदिकान्तनकाराभावाद् 'गर्गभगिनी'त्यत्रेव णत्वानापत्तिरत आहेत्यवतरणं दातुं युक्तमिति राघवेन्द्राचार्याः। तन्न मनोरमम्; उक्तन्यायेन हि भविष्यदपवादविषयातिरिक्तत्वेन सङ्कोचात् केवलाद् व्रादिशब्दाट्टाबापत्तेर्दुर्वारत्वात्। न च तेन न्यायेन भविष्यदपवादविषयघटकातिरिक्तत्वेन सङ्कोच आवश्यकः, अत एव 'क्रीतात्करणपूर्वादि'ति चरितार्थम्, अन्यथा क्रीतशब्दस्य भविष्यदपवादविषयाश्व-

---

मूले—निरूपितं चैतन्मञ्जूषायामिति। तत्र हि सादृशादिपदशक्यतावच्छेदकतया सदृशदर्शने संस्कारोद्बोधकत्वस्य सर्वसम्मततया तत्कारणतावच्छेदकतया च सादृश्यमतिरिक्तोऽखण्डपदार्थश्च साधितः॥ ७५॥

मूले—ततोऽपीति। सुपोऽपीति तदर्थः। मूले—अन्तरङ्गत्वादिति। स्वार्थादिप्रयुक्तकार्याणां क्रमिकत्वस्वीकारादिति भावः।

समासात्पूर्वमिति। समासस्य सुबपेक्षत्वेन बहिरङ्गत्वादिति भावः। तद्धितस्य स्वार्थिकत्वेन सुबन्तात् तद्धितोत्पत्तिरित्येतद्बीजस्य स्वार्थे परिपूर्णमिति न्यायस्य तद्विषयेऽप्रवृत्तेरिति भावः।

दुर्वारत्वादिति। नन्वेवं 'स्वाङ्गाच्चोपसर्जनात्' इति सूत्रभाष्यविरोधः; तत्र हि भाष्ये "स्वाङ्गात् किम्? अशिखा" इत्युक्तम्, तत्र भवद्रीत्या 'अशिखे'त्यस्यापवादविषयत्वेऽपि तदेकदेशस्य 'शिखे'त्यस्य अपवादविषयातिरिक्तादन्तप्रातिपदिकत्वेन अन्तरङ्गत्वात् आपि तत्सिद्धौ भाष्यासङ्गतिः स्पष्टैव इति चेन्न। 'शिखे'त्यस्यैव प्रत्युदाहरणत्वेन भाष्यतात्पर्यात्। स्पष्टञ्चेदं शेखरे उद्योते च।

# गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः ॥ ७६ ॥

उपपदमि'ति सूत्रेऽतिङ्ग्रहणेन 'कुमती'त्यत्र तदन्तर्भावेनातिङन्तश्च समास इत्यर्थात्तयोः सूत्रयोः 'सुप्सुपे'त्यस्य निवृत्त्यैकदेशानुमत्या कारकांशे च सिद्धेयं, तेन 'अश्वक्रीतो'ति सिद्धा ; अन्यथा पूर्वं टाप्यदन्तत्वाभावात् 'क्रीतात्करणपूर्वादि'ति ङीष् न स्यात् ।

अस्या अनित्यत्वात् कश्चित् सुबुत्पत्त्यनन्तरमपि समासो, यथा—सा हि

---

क्रीतातिरिक्तत्वेन तेन टाब्विधायकशास्त्रे सङ्कोचेऽपि टापो दुर्वारत्वापत्तिः, मम तु क्रीतशब्दस्य भविष्यदपवादविषयघटकत्वेनानेन न्यायेन टाब्बाधसिद्धिरिति वाच्यम् ; तथा सति 'अजाक्रीती'त्यादौ अजशब्दस्य भविष्यदपवादविषयघटकत्वेन टाबनापत्तेः । नचानेन न्यायेन भविष्यदपवादविषयान्तातिरिक्तत्वेन सङ्कोचान्न 'अजाक्रीती'त्यादौ दोष इति वाच्यम् ; 'घन इव कपिला घनकपिले'त्यादौ 'अन्यतो ङीषि'ति ङीषापत्तेः । कपिल शब्दस्य 'तत्पुरुषे तुल्यार्थे'ति पूर्वपदप्रकृतिस्वरेणानुदात्तान्तत्वेन भविष्यदपवादविषयान्तत्वात् । सिद्धान्ते भविष्यदपवादविषयातिरिक्तत्वेन सङ्कोचे तु घनकपिले'त्यस्य भविष्यदपवादविषयत्वेऽपि कपिलशब्दस्य तदभावेन टाप् सङ्घटति । 'अन्तरङ्गानपि विधीन् बहिरङ्गा लुग्बाधत' इति परिभाषाया टापपेक्षया लुक्प्रयोजकसमासस्य प्राबल्यं तु नेति 'अकृतव्यूह'परिभाषान्ते प्राक् प्रदर्शितमेव ।

सुबुत्पत्तेरिति । सुप्पदं प्रत्ययमात्रोपलक्षणम् । अत एव साङ्कूटिनसिद्धिः ।

सुप्सुपेत्यस्य निवृत्त्येति । अत्र च तृतीयान्तस्य निवृत्तिर्न तु प्रथमान्तस्य । एकदेशानुमत्येति । कारकांशे 'स्थालीपुलाक'न्यायेनेयं सिद्धेति भावः ।

वस्तुतस्तु—कारकांशे ज्ञापकं क्रीतात्करणपूर्वादिति बोध्यम् ; तदेवानुवदति—अन्यथेति । एतस्या अभाव इत्यर्थः । ङीष् न स्यादिति । तथा च सूत्रं व्यर्थं स्यादित्यत्र शेषो बोध्यः ।

अनित्यत्वादिति । एतच्च 'कर्तृकरणे कृता बहुलमि'ति सूत्रस्थाद् बहुलग्रहणाल्लभ्यत इति 'उपपदमतिङि'ति सूत्रे कैयटः ।

---

प्रत्ययमात्रेति । तेन तद्धितात्टापश्च प्राग् समास एव । साङ्कुटिनसिद्धिरिति । अन्यथा समासतद्धितयोर्युगपत्प्राप्तौ पूर्वं तद्धित एव स्यात्, कुटिन्मात्रापेक्षत्वेन अन्तरङ्गत्वात् । न च 'कृद्ग्रहणे०' इति परिभाषया समुदायापेक्षत्वमेव तस्येति वाच्यम्; तस्यामवस्थायां समुदायस्य अप्रातिपदिकत्वात् ।

तस्य धनक्रीतेति ।

अन्ये तु—अनित्यत्वे न मानम्, तत्राजादित्वात् टाबित्याहुः ।

अत एव 'कुम्भकार' इत्यादौ षष्ठीसमासोऽपि सुबुत्पत्तेः पूर्वमेव । षष्ठीसमासाभावे चोपपदसमासकृत एकार्थीभाव इति न तत्र वाक्यमिति भाष्ये स्पष्टम् । तत्र हि 'षष्ठीसमासादुपपदसमासो विप्रतिषेधेने'ति वार्तिकम् । 'अथवा विभाषा षष्ठीसमासो, यदा न षष्ठीसमासस्तदोपपदसमास' इति तत्प्रत्याख्यानञ्च ।

---

केचित्तु –'अम्बाऽम्बे'त्यनेनेगन्तात् परस्य षत्वविधानमत्र मानम्; अन्यथा 'गोष्ठे'त्यत्र सुबुत्पत्तेः पूर्वं समासे पदत्वाभावेन 'सात्पदाद्योरि'ति षत्वनिषेधाप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेत्याहुः । तन्न; 'दधिसेचवि'त्यत्र सुबुत्पत्तेः पूर्वं समासे षत्वनिषेधाप्राप्त्या सिद्धान्तेऽपि 'पदादादिरि'ति पञ्चमीसमासस्याऽऽवश्यकत्वेन 'गोष्ठ' इत्यत्र षत्वनिषेधप्राप्त्याऽम्बाम्बगोभूमिसव्यापद्वित्रीणन्तात् षत्वविधानस्याऽऽवश्यकत्वात्; तदाह—न मानमिति । फलाभावमप्याह—तत्रेति । 'गोष्ठे'त्यत्र तु 'न पदान्ते' त्यत्र पदपदस्य पदत्वयोग्यपरत्वेन स्थानिवत्वनिषेधसिद्धिरिति तत्रैव शेखरे स्पष्टम् ।

अत एवेति । परिभाषास्वीकारादेवेत्यर्थः । षष्ठीसमासोऽपीति । परिभाषायां सामान्यतः कारकोपादानेनास्यापि तत्त्वादिति भावः । अत्र प्रमाणं दर्शयति—षष्ठीत्यादि । "यदि सुबन्तेन षष्ठीसमासस्तदोपपदसमास एवान्तरङ्गत्वाद्भविष्यती" भाष्यविरोधः स्पष्ट एव ।

---

एवं 'व्याघ्री'त्यत्र समासात्पूर्वं टाबिति न । न च प्रकृतपरिभाषया पूर्वं समासे ततः समुदायघटकघ्रशब्दात् अन्तरङ्गत्वात् टाब् स्यादिति वाच्यम; वृत्तिघटकपर्याप्तस्त्रीत्वमादाय स्त्रीप्रत्ययो न भवतीत्यभ्युपगमेन अदोषात् । अत एव 'कुक्कुट्यादीनामण्डादिषु' इति वार्तिकप्रत्याख्यानपरम्, अनुपसर्जनाधिकारसामर्थ्यात् स्त्रीप्रत्यये तदन्तविधिज्ञापकपरञ्च भाष्यं सङ्गच्छते । लिङ्गसामान्ये नपुंसकत्वविवक्षां कृत्वा 'कुक्कुटस्य अण्डम्' इति समासे कृते 'कुक्कुटाण्डम्' इत्यादिरूपसिद्धौ निर्बाधायां वार्तिकं न कर्तव्यमिति भाष्ये प्रत्याख्यातम् । भवन्मते समासोत्तरमपि तदेकदेशे कुक्कुटशब्दे स्त्रीत्वविवक्षायां सत्यां प्रत्याख्यानकल्पे स्त्रीप्रत्ययः स्यात्, आरम्भकल्पे पुंवद्भावविधानेन न तस्य श्रवणमिति फलभेदः । एवमेव 'उत्से भवमिति औत्सम्, तदतिक्रान्तः अत्यौत्सः' इत्यत्र समासवृत्तिघटकपर्याप्तस्त्रीत्वविवक्षया प्रामस्य 'टिड्ढाणञ्०' इत्यादिना ङीपो वारणाय 'अनुपसर्जनादि'त्यस्य चारितार्थ्यसम्भवे तदन्तविधिज्ञापनपरं भाष्यमसङ्गतमेव स्यात् ।

अत्र केचित्—'सुप्पद' न प्रत्ययमात्रोपलक्षकम्, ज्ञापकात्तदलाभात्, फलाभावात्, राम शब्दप्रकरणशब्देन्दुशेखरग्रन्थविरोधाच्च । 'विभा'रूपगतिसञ्ज्ञकसमभिव्याहारेणैव घ्रशब्दस्य अर्थवत्त्वेन टापोऽपि समुदायापेक्षत्वेन स्त्रीत्वस्य अधिकस्य अपेक्षत्वेन च बहिरङ्गतया समासस्य टापः पूर्वं प्रवृत्तेः सिद्धत्वात् । एवं 'शाङ्कुटिनम्' इत्यत्र इनुणन्तत्वरूपाधिकसापेक्षत्वेन समासापेक्षया

यद्यप्युपपदसमासस्यान्तरङ्गत्वाभिप्रायकं 'न वा षष्ठीसमासाभावादुपपद-समास' इति वार्तिककृतोक्तं; तथापि तदुभयप्रत्याख्यानपर'मथवे'त्यादि भाष्यं परिभाषायां सामान्यतः कारकोपादानेन कारकविभक्त्यन्तेन कृद्भिः समास-मात्रस्य सुबुत्पत्तेः पूर्वमेव लाभात् ।

एतेनैषा कारकतद्विशेषयोरुपादान एवेति परास्तम्, अस्या विध्येक-

---

समासमात्रस्येति । ननु सामान्यतः कारकोपादानेनात्रैतत्प्रवृत्तौ 'आपापन्ने'त्य-नेन द्वितीयया अ इति च्छित्वा अकारविधानं भाष्योक्तं व्यर्थं, तत्र टाबुत्पत्तेः पूर्वं समासेन सिद्धेः ; एवम् 'अपां स्रष्ट्री'त्यत्र 'षष्ठी'ति प्राप्तसमासस्य 'तृजकाभ्यामि'ति निषेधो 'लिङ्गविशिष्ट'परिभाषयेति ङ्याप्सूत्रे भाष्ये उक्तं, तत्राप्यनया पूर्वं समास-प्राप्त्या निषेधसिद्धिरिति 'लिङ्गविशिष्ट'परिभाषया समाधानं भाष्योक्तमसङ्गतमिति चेन्न । आद्ये टाबुत्पत्तेः पूर्वं समासेऽपि तदुत्तरं प्राप्तटापेऽकारविधानमावश्यक-मिति न भाष्यविरोधः । द्वितीयेऽपि ङीपः पूर्वं तृजन्तत्वेन समासनिषेधेऽपि ङीबु-त्तरं तृजन्तत्वाभावात्स न स्यादित्याशङ्क्य लिङ्गविशिष्टपरिभाषया समाधानं सुस्थ-मेवेत्यदोषात् ।

परास्तमिति । परे तु—कारकतद्विशेषोपादाने एवैषा परिभाषा प्रवर्तते । अस्या

---

अणिनुण इत्यस्य बहिरङ्गतया पूर्वं समासे कृते ततस्तद्धित इति तत्रापि दोषाभावादित्याहुः । तन्न; टाब्विधौ प्रातिपदिकत्वस्य अपेक्षितत्वेऽपि अर्थवत्त्वस्यानपेक्षितत्वात् परम्परयाऽपि सापेक्षत्वमादाय परिभाषाप्रवृत्तौ मानाभावात्, बह्वपेक्षत्वविशेषापेक्षत्वरूपबहिरङ्गत्वस्य नव्यैस्तिरस्कृतत्वात् पूर्व-पदोत्तरपदरूपसमुदायसापेक्षत्वरूपशब्दकृतबहिरङ्गत्वस्य समासविधायकेऽपि सत्त्वेन बहिरङ्गत्वा-समानाधिकरणान्तरङ्गत्वस्य बलवत्त्वप्रयोजकस्य तत्राविद्यमानत्वाच्च दोषतादवस्थ्यात् ।

यत्तु – रामशब्दप्रकरणे शब्देन्दुशेखरे इनुणन्तत्वरूपाधिकसापेक्षत्वेन 'अणिनुण' इत्यस्य बहिरङ्गत्वमुक्तम् — तत् प्राचामनुरोधेन । अत एव "सुबुत्पत्तेः प्रागित्युपलक्षणम्—लिङ्गबोधक-प्रत्ययोत्पत्तेः प्रागपि बोध्यम्" इति 'उपपदमतिङ्' इति सूत्रस्थोद्योतग्रन्थः, 'प्राक् सुबुत्पत्तेः' इति इति प्रतीकमुपादाय "स्त्रीप्रत्ययोत्पत्तेः प्रागित्यपि बोध्यम्" इति तत्पुरुषसमासप्रकरणस्थशब्देन्दु-शेखरग्रन्थश्च सङ्गच्छते । 'अतिङ्' इत्यनेन सामान्यतः प्रत्ययोत्पत्तेः प्रागित्यस्य ज्ञापनासम्भवेऽपि 'क्रीतात् करणपूर्वात्' इत्यनेन सामान्यतस्तज्ज्ञापनं सम्भवत्येव; अन्यथा पूर्वं टाबुत्पत्तौ तदसङ्गतिः । एवञ्च कारकांशे ज्ञापनेन एकदेशानुमत्या सर्वांशे च तत्सिध्यतीति बोध्यम् । एतेन—"केचित्तु 'प्राक्सुबुत्पत्तेः' इत्यत्र सुब्ग्रहणं प्रत्ययमात्रोपलक्षणमित्याहुः । तन्न; ज्ञापकात्तदलाभात्, उक्त-शब्देन्दुशेखरविरोधाच्च" इति विजयाकारोक्तिः परास्ता वेदितव्या ।

सामान्यतः कारकोपादानेनेति । परिभाषायां ग्रहणपदोपादानाभावेन समासशास्त्रे कारकग्रहणाभावेऽपि यत्र लक्ष्ये पूर्वपदं कारकं दृश्यते तत्र सुबुत्पत्तेः पूर्वं कृद्भिः सह समासो भवति इत्येव परिभाषार्थाङ्गीकारादिति भावः ॥ ७६ ॥

वाक्यत्वाभावेन विप्रतिषेधादिशास्त्रवत् कार्यव्यवस्थापकत्वेनोपादान एवेत्यर्थो-
लाभश्च ॥ ७६ ॥

ननु 'उगिदचामि'त्यत्र 'अञ्चतेश्चेन्नलोपिन एवे'ति नियमेनाधातोरेव
नुमि सिद्धेऽधातुग्रहणं व्यर्थमत आह—

## साम्प्रतिकाभावे भूतपूर्वगतिः ॥ ७७ ॥

तत्तद्वचनसामर्थ्यन्यायसिद्धेयम् । तत्सामर्थ्यादधातुभूतपूर्वस्यापीत्यर्थेन

---

विध्येकवाक्यत्वाभावेऽपि यत्र कारकत्वव्याप्यधर्मावच्छिन्नबोधकं पदं तत्र शास्त्रे सुपेति नानुवर्तते इत्यस्य वक्तुं शक्यत्वात् । न च 'षष्ठी'ति सूत्रे कारकतद्विशेषो [illegible] "अथवा विभाषा षष्ठीसमासो, यदा न षष्ठीसमासस्तदोपपदसमासः" इति भाष्यासङ्गतिरिति वाच्यम्, विभाषाधिकारस्य पाक्षिकैकार्थीभावबोधकतयैकार्थीभावे समासस्य नित्यत्वेन षष्ठीसमासाभावपक्षे एकार्थीभावस्याभावेनोपपदसमासाप्राप्त्याऽस्य भाष्यस्यैकदेश्युक्तित्वेन तद्विरोधस्याकिञ्चित्करत्वात् । अत एव 'पारे मध्ये षष्ठ्या वे'त्यादौ वाग्रहणं चरितार्थम् । किञ्चैवं 'षष्ठी'ति सूत्रे एतत्परिभाषया सुपेत्यस्य निवृत्तौ 'राजपुरुष' इत्यादावपि सुबुत्पत्तेः प्राक् समासापत्तिः । वाक्यभेदेनार्थद्वयकरणे तु न मानम् । किञ्च 'अथवे'ति भाष्यस्योभयप्रत्याख्यानपरत्वमप्ययुक्तम् । प्रत्याख्यानस्थले 'अथवे'ति शब्दस्य भाष्ये क्वाप्यदर्शनात्, तर्हि वक्तव्यमित्यादि शब्दैरेव प्रत्याख्यानस्य भाष्यकृच्छैलीसिद्धत्वात् । भाष्यकृता तु 'षष्ठीसमासादुपपदसमासो विप्रतिषेधेन' 'अथवा विभाषा षष्ठीसमासो यदा न षष्ठीसमासस्तदोपपदसमास' इति वार्तिककृदुक्तप्रकारद्वयस्य 'न वा षष्ठीसमासाभावादुपपदसमास' इत्यनेनोपपदसमासस्यान्तरङ्गत्वोपपादनेन प्रत्याख्यानं कृतम् । अत एव भाष्ये न वा षष्ठीसमासाभावादित्युत्तरं गतिकारकेत्युपात्तम् । तव तु षष्ठीति सूत्रेऽप्यनया सुपेत्यस्य निवृत्त्योपपदसमासमात्रस्यान्तरङ्गत्वप्रतिपादनमसङ्गतमेव स्यादित्याहुः ॥ ७६ ॥

अधातोरेव नुमि सिद्धेऽधातुग्रहणमिति । न च 'अञ्चतेश्चेन्नलोपिन एवे'ति नियमस्वीकारादधातुग्रहणं धातोर्नुमभावाय सार्थकमिति वाच्यम्; नकारविशिष्टस्याञ्चतेर्नुमि सत्यपि वर्णग्रहणे जातिग्रहणाद् द्वयोरपि नकारयोरनुस्वारे विशेषाभावाद् 'नपुंसकस्य झलच' इत्यतो झलच इत्यस्यानुवृत्त्याऽचः परो यो झल् तदन्तस्य नुमित्यर्थाच्चाञ्चतौ नकारविशिष्टे नुमोऽप्राप्त्या त्वदुक्तनियमासम्भवेनाधातुग्रहणवैयर्थ्यस्य सूपपादत्वात् ।

साम्प्रतिकाभाव इति । कार्यप्रवृत्तिवेलायां तत्तन्निमित्तस्यासन्निधानेऽपि तत्तद्वचनसामर्थ्याद् भूतपूर्वमपि तादृशधर्ममादाय तत्तत्कार्यं प्रवर्तनीयमित्यर्थः ।

गोमत्यतेः क्विपि 'गोमानि'त्यादौ नुम्सिद्धिः 'नामी'त्यादिसूत्रेषु भाष्ये स्पष्टा ॥ ७७ ॥

## बहुव्रीहौ तद्गुणसंविज्ञानमपि ॥ ७८ ॥

अपिना अतद्गुणसंविज्ञानम् । तेषां गुणानामवयवानामर्थानां संविज्ञानं विशेष्यान्वयित्वमिति तदर्थः । यत्र समवायसम्बन्धेन सम्बन्ध्यन्यपदार्थस्तत्र प्रायस्तद्गुणसंविज्ञानम्, अन्यत्र प्रायोऽन्यत् । 'लम्बकर्णचित्रगू' उदाहरणे, 'सर्वादीनि, जक्षित्यादय' इति चोदाहरणे । सर्वनामसंज्ञासूत्रे भाष्ये स्पष्टा ॥ ७८ ॥

---

नामीत्यादिसूत्रेषु भाष्य इति । तत्र हि आमीति न्यासे 'राम + आमि'त्यादौ दीर्घेऽपि ह्रस्वान्तान्नुडित्येतद्वचनसामर्थ्यादनया नुडित्युक्तम् ॥ ७७ ॥

समवायेति । संयोगस्याप्युपलक्षणम् । तथा च संयोगसमवायान्यतरसम्बन्धेन सम्बन्धीत्यर्थः । संयोगेन सम्बन्धित्वं 'नागयज्ञोपवीतिनमानये'त्यत्र । समवायेन सम्बन्धित्वं 'लम्बकर्णमानये'त्यत्र । प्रायग्रहणाद् 'नागयज्ञोपवीतिनं भोजये'त्यादौ संयोगेन तत्त्वेपि न तद्गुणत्वम् । अन्यत्रेति । 'चित्रगुर्दृष्टसागर' इत्यादावित्यर्थः । अत्र प्रायग्रहणफलं तु यदि 'चित्रगुरि'त्यत्रैव गवानयनेऽपि तात्पर्यं तदा तद्गुणत्वमेवेति बोध्यम् ।

केचित्तु—यत्र वर्तिपदार्थविशिष्टस्यान्यपदार्थस्य समभिव्याहृतपदार्थे वैशिष्ट्यं तत्र तद्गुणत्वं, यत्र तदुपलक्षितस्य वैशिष्ट्यं तत्रातद्गुणत्वमित्यनुगतं तल्लक्षणमाहुः ।

अन्ये तु—यत्र समभिव्याहृतपदार्थे वर्तिपदार्थानां धर्मिपारतन्त्र्येणान्वयस्तत्र तद्गुणत्वमेव, अन्यत्रातद्गुणत्वमेवेत्याहुः ।

परे तु—यत्र समभिव्याहृतपदार्थेऽन्यपदार्थान्वयो वर्तिपदार्थान्वयनान्तरीयकस्तत्र तद्गुणत्वं, यथा—'लम्बकर्णमानये'त्यत्रान्यपदार्थानयनं कर्णं विना न सम्भवतीति । 'नागयज्ञोपवीतिनमानय, भोजये'त्यादौ तु समभिव्याहृतक्रियान्वयोऽन्यपदार्थस्य नागयज्ञोपवीतसम्बन्धं विनाऽपि सम्भवतीत्यतद्गुणत्वम् । एवं 'चित्रगुरि'त्यत्र गवानयनतात्पर्येऽपि सर्वत्रातद्गुणत्वं बोध्यम् । 'सर्वादीनी'त्यत्राऽऽदिशब्दोऽवयवत्वविशिष्टपूर्वत्वविशिष्टवाचक इत्यन्यपदार्थगणान्वयः समभिव्याहृतपदार्थे सर्वशब्दान्वयनान्तरीयक इति तत्र तद्गुणत्वमेव । 'जक्षित्यादय' इत्यत्र आदिशब्दः केवलपूर्वत्वविशिष्टवाचीति न तत्र तद्गुणत्वम् । आदिशब्दस्यावयवत्वविशिष्टवाचकत्वं कुत्रेत्यत्र तु व्याख्यानमेव शरणम्; यथा—'हलि सर्वेषामि'त्यत्र सुहृद्दर्शनेन सर्वादीत्यत्राऽऽदिशब्दोऽवयवत्वविशिष्टवाचीति ज्ञायत इत्याहुः ।

ननु 'वदः सुपि क्यप् चे'ति चेनानुकृष्टस्य यतो 'भुवो भावे' इत्यत्राप्यनुवृत्तिः स्यादत आह—

**चानुकृष्टं नोत्तरत्र ॥ ७९ ॥**

णमुल्यनुवर्तमाने 'ऽव्ययेऽयथाभिप्रेते'ति सूत्रे पुनर्णमुल्ग्रहणमस्या ज्ञापकम्; अन्यथा क्त्वा चेति वदेत। तद्धि उत्तरत्रोभयोः सम्बन्धार्थम्। उदाहरणानि स्फुटानि।

इदमनित्यम्। अत एव 'तृतीया च होरि'त्यत्र चानुकृष्टाया अपि द्वितीयाया 'अन्तराऽन्तरेणे'त्यत्र सम्बन्धः।

---

अपरे तु—अत्र चित्रगुलम्बकर्णादौ तद्गुणत्वातद्गुणत्वविचारस्य काकदन्तपरीक्षावन्निष्फलत्वेन तदनुरोधेन तद्गुणत्वादिलक्षणस्यानुपयोगात् केवलमाद्यादिशब्दघटितबहुव्रीहिस्थल एव तत्फलसत्त्वेन तदनुरोधात् यत्र वर्तिपदार्थानामन्यपदार्थेन सह घटकघटितभावस्तत्र तद्गुणत्वमन्यत्रान्यदित्येवं तल्लक्षणं बोध्यम्। भाष्ये सर्वादीत्यादौ तद्गुणसंविज्ञानोऽतद्गुणसंविज्ञानो वेति सन्देहस्तु अत्राऽऽदिशब्दः शुद्धपूर्वत्वविशिष्टवाची उत अवयवत्वविशिष्टपूर्वत्वविशिष्टवाचीत्येतत्सन्देहप्रयुक्त एव। तथा च 'सर्वादी'त्यत्र ऽऽदिशब्दस्यावयवत्वादिविशिष्टवाचकतया तद्गुणसंविज्ञान एव। 'जक्षित्यादय' इत्यत्र तद्भावेनातद्गुणसंविज्ञान एवेत्याहुः ॥ ७८ ॥

चानुकृष्टमिति। चकारेणानुवर्तमानं परत्र सम्बध्यते इति परिभाषार्थः।

इदमनित्यमिति। केचित्तु—अनित्यत्वे न मानं, नापि फलम्। अत्र शास्त्रे चानुवृत्तिनिवृत्तिसूचकौ चकारौ स्तः। तत्राव्यवहितसूत्रे चशब्दोऽनुवृत्तिसूचको, व्यवहितसूत्रे तु निवृत्तिसूचकः। 'चानुकृष्टमि'त्यत्र चशब्दो निवृत्तिसूचकपरः। तथा च निवृत्तिसूचकशब्देनानुवर्तमानमुत्तरत्र न सम्बध्यत इत्यर्थः, तेन 'तृतीया च होरि'त्यत्र चशब्दस्य 'कर्मणि द्वितीये'त्येतदव्यवहितसूत्रस्थितत्वेन निवृत्तिसूचकत्वाभावात् तेनानुवर्तमानद्वितीयापदस्य 'अन्तराऽन्तरेणे'त्यत्र सम्बन्धे बाधकाभावः। तथा चैतत्परिभाषाविषयत्वाभाववतामनुवृत्तिसूचकानामव्यवहितोत्तरसूत्रवर्तिनां सर्वचकाराणां प्रत्याख्याने च न भाष्यविरोधोऽपि। एवमव्यवहितपूर्वसूत्रस्थस्य 'खोऽन्यतरस्यामि'त्यस्य चोत्तर सूत्रे 'द्विगोः ष्ठंश्चे'त्यत्र चेनानुकृष्टस्योत्तरत्रानुवृत्तावपि तस्य निवर्तकत्वाभावेनोक्तपरिभाषाऽविषयतया भाष्यविरोधाभावः स्फुट एवेति प्राहुः।

अन्ये तु—अव्यवहितोत्तरसूत्रघटकचशब्दः समुच्चायको विप्रकृष्टसूत्रस्थश्चानुकर्षकः। तत्र समुच्चायकचशब्देन समुच्चितशब्दः स्वरितत्वादिनोत्तरत्र गन्तुमर्हति, चानुकृष्टस्तु तावत्सूत्रगमनयोग्यस्वरितत्वाभावेऽपि चकारबलादाकृष्टस्तत्र कार्यं सम्पा-

'लुटि च क्लृप' इति सूत्रस्थेनानुवृत्त्यर्थकसकलचकारप्रत्याख्यानेन विरुद्धेयम् । व्याख्यानादेवानुवृत्तिनिवृत्त्योर्निर्वाह इति तदाशयः । 'कुलिजाल्लुक्खौ चे'ति सूत्रस्थभाष्यविरुद्धा च । तत्र हि 'द्विगोः ष्ठंश्चे'ति सूत्रात् ष्ठनस्तत्र चेनाप्यनुकृष्टस्य 'खोऽन्यतरस्यामि'त्यस्य चानुवृत्तिं स्वीकृत्य लुक्खौ चेति भाष्ये प्रत्याख्यातम् ॥ ७९ ॥

---

दयन्नप्युत्तरत्राकर्षकाभावान्न सम्बध्यते । गन्तुमसमर्थस्य परेण बलान्नयने एव कृषधातोर्लोके प्रयोगः । अत एव परिभाषायां चानुवृत्तमित्यनुक्त्वा चानुकृष्टमित्युक्तम् । भाष्यकृता च चसमुच्चितस्यापि स्वरितत्वादेवोत्तरत्रानुवृत्तिर्निर्वाच्या, तथा च स्वरितत्वादेवाव्यवहितोत्तरसूत्रेऽपि तस्यानुवृत्तिसम्भवेन वैयर्थ्यादेव समुच्चायकचकाराणां प्रत्याख्यानं कृतमिति नोक्तदोषावकाशः । अनेकसूत्रविप्रकृष्टस्य चकारस्य तु तदनुवृत्तिप्रयोजकमेवानुवर्तमानपदेषु स्वरितत्वमस्तीत्यत्र तात्पर्यग्रहार्थमावश्यकतया भगवता न तत्प्रत्याख्यानं कृतमिति प्राहुः ॥ ७९ ॥

---

मूले—भाष्ये प्रत्याख्यातमिति । ननु भाष्यकृन्मते ष्ठन्खयोर्विकल्पविधानेन पक्षे टञि तस्य लुकि त्रीणि रूपाणि भवन्ति, सूत्रकृन्मते ष्ठन्खलुकां विकल्पविधानेन पक्षे ठञ्घटितस्यापि वृद्धया चत्वारि रूपाणि भवन्तीति प्रत्याख्यानासङ्गतिरिति चेन्न । आरम्भपक्षेऽपि पुनः खग्रहणदन्यतरस्यामित्यस्यानुवृत्तेरिति शेखरकृतः । लुक् तु ठञ एव, न तु खष्ठनोः, सहविधाने उद्देश्यविधेयभावासम्भवात्, तेन 'द्वैकुलिजिकी' इति कौमुद्युक्तं चतुर्थं रूपं चिन्त्यमेवेति स्पष्टं तत्रैव ।

अन्ये तु—आरम्भपक्षे 'अन्यतरस्याम्' इत्यनुवर्तत एव, खष्ठनोर्विकल्पविधानाय तदनुवृत्तेरावश्यकत्वात्, अन्यथा ताभ्यां ठञो नित्यं बाधेन ठञो लुगनापत्तेः । एवञ्च द्वन्द्वनिर्दिष्टे खमात्रे विकल्पसम्बन्धानुपपत्त्या लुकोऽपि तत्सम्बन्ध आवश्यकः । सामर्थ्यात् तन्मात्रविकल्पकल्पने तु गौरवमेव, खमात्रे विकल्पसम्बन्धे खश्रवणानुपपत्तिश्च । भाष्येऽपि लुक्खग्रहणमात्रं प्रत्याख्यातं, न योगः ; अन्यथा 'अयं योगः शक्योऽवक्तुं कुलिजाच्च द्विगोः ष्ठंश्चेत्येव सिद्धमि'ति वक्तुं युक्तं स्यात् । एवञ्च योगविभागसामर्थ्यात् अनुवृत्तान्यतरस्यामित्यस्य आवृत्त्या एकस्य समुच्चयार्थकत्वेन प्राकरणिकं लुकं समुच्चित्य खष्ठन्लुकां विकल्पं विधाय रूपचतुष्टयं भाष्यकृतामपि साध्यमिति नाऽऽरम्भप्रत्याख्यानयोः फलभेद इति वदन्ति । तन्न युक्तम्; भाष्याद् रूपत्रयस्यैव लाभात्, आवृत्तौ मानाभावाच्च ॥ ७९ ॥

'अन्नवतीनां समूहः आन्नवतः' 'उदुम्बरवतीनां समूहः, औदुम्बरवतः' इत्यादावेव 'अनुदात्तादेरञ्' इत्यादिनाऽञ् स्यात्, न तु 'मायूरः, कापोतः' इत्यादौ, हलादित्वेन अनुदात्तादित्वाभावात् । एवं 'बह्वचोऽन्तोदात्ताठ्ठञ्' इति ठञ् 'षत्वणत्वयोर्विधायकं शास्त्रं षत्वणत्वं तस्य व्याख्यानं तत्र भवो वा षात्वणत्विकः' इत्यत्रैव स्यात्, न तु 'चर्त्वभषोर्विधायकं शास्त्रं चर्त्वभष्,

नन्वनुदात्तादेरन्तोदात्ताच्च यदुच्यते तद्व्यञ्जनादेर्व्यञ्जनान्ताच्च न प्राप्नोतीत्यत आह—

**स्वरविधौ व्यञ्जनमविद्यमानवत् ॥ ८० ॥**

---

स्वरोद्देश्यके विधावित्यर्थः । 'नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिष्वि'ति सूत्रे पृथिव्यादिपर्युदासोऽस्या ज्ञापकः ; अन्यथा पृथिव्यादीनामनुदात्तादित्वाभावादृग्रहणं तद्वैयर्थ्यं स्पष्टमेव ।

धर्मिग्राहकमानादेव च स्वरोद्देश्यकविधिविषयमिदम् । अत एव 'शतुरनुमो नद्यजादी' 'अचः कर्तृयकी'त्यादावजादी अच इत्यादेश्चारितार्थ्यम् । अत एव 'राजवती'त्यादौ नलोपस्यासिद्धत्वादन्वतीशब्दत्वा'दन्तोऽवत्या' इति स्वरो न, 'उदश्विन्वानि'त्यत्र 'ह्रस्वनुड्भ्यामि'ति मतुबुदात्तत्वं च नेत्याकरः । स्पष्टं चेदं 'समासस्ये'ति सूत्रे भाष्ये ।

---

स्वरोद्देश्यके विधाविति । स्वरत्वव्याप्यधर्मघटितधर्मनिमित्तताके विधावित्यर्थः, व्याप्यत्वानिवेशे तु नोत्तरपद इत्यस्य स्वरोद्देश्यकत्वाभावात्तदसङ्गतिः स्यात् ।

अत एवेति । स्वरोद्देश्यकेति निवेशादेवेत्यर्थः । चारितार्थ्यमिति । तद्धि 'तुड्भ्यामि'त्यत्र भ्याम उदात्तत्ववारणार्थम्, सामान्यतोऽविद्यमानवद्भावे त्वत्रापि विभक्तेरजादित्वादजादीति विशेषणं व्यर्थमेव स्यादिति भावः । न 'चाभ्यस्तानामादिरि'त्याद्युदात्तके 'दधती'त्यत्रोदात्तत्ववारणाय अत्रान्तोदात्तादित्यनुवृत्तेरावश्यकतयाऽस्यापि स्वरोद्देश्यकत्वेनोक्ताजादिग्रहणवैयर्थ्यं तदवस्थमेवेति वाच्यम् ; 'स्वरत्वव्याप्यधर्मघटितधर्मावच्छिन्नविधेयतायाः प्रतिबन्धकं व्यञ्जनं न भवती'ति परिभाषार्थस्वीकारेण 'तुदद्भ्या'मित्यत्र दान्तेऽन्तोदात्तत्वबुद्धिप्रतिबन्धकत्वाभावेऽपि व्यञ्जनस्य भ्याम आद्यजादित्वबुद्ध्यप्रतिबन्धकत्वे मानाभावात् । एवं 'ह्रस्वनुड्भ्यामि'त्यत्रान्तोदात्तादित्यनुवृत्त्या तस्य स्वरोद्देश्यकत्वेऽपि उदश्विच्छब्दे ह्रस्वान्तत्वबुद्धेरसम्भवो बोध्यः ।

---

तस्य व्याख्यानं तत्र भवो वा च सर्वभाषिकम्' इत्यत्र, हलन्तत्वेन अन्तोदात्तत्वाभावादत आह—मूले—नन्वित्यादि ।

परिभाषाया 'स्वरविधौ' इत्यस्य 'स्वरकर्मकविधौ' इत्यर्थाङ्गीकारे 'स्वरोद्देश्यकविधौ' इत्यर्थाङ्गीकारे वा 'नोत्तरपदे' इति ज्ञापकासङ्गतिः, तस्य स्वरनिषेधविधित्वेन स्वरकर्मकविधित्वाभावात् स्वरोद्देश्यकत्वाभावाच्च; अत आह—स्वरत्वव्याप्येति ।

'उच्चैरुदात्त' इति सूत्रे कैयटस्त्वयमनावश्यको समभिव्याहृताजुपरागेण हलोऽप्युदात्तादिवदभासात्तदुपपत्तेरित्याह । तत्र भाष्येऽपि ध्वनितमेतत् ॥८०॥

नन्वेवमपि 'राजदृषदि'त्यादौ 'समासस्ये'त्यन्तोदात्तत्वं षकारस्य न स्यादत आह—

## हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत् ॥ ८१ ॥



अस्याश्च 'यतोऽनाव' इति सूत्रेऽनौप्रतिषेधो ज्ञापकः । 'नाव्यमि'त्यत्राऽऽदिर्नकारो न स्वरयोग्यो, यश्चाऽऽकारस्तद्योग्यो नासावादिरिति स प्रतिषेधोऽनर्थकः ।

न चाऽऽदिरेव नकार उदात्तगुणविशिष्टान्तरतमाज्रूपोऽस्त्विति वाच्यम्; तथा सति निमित्तभूतद्व्यच्कत्वस्य विनाशादुपजीव्यविरोधेनाऽऽद्युदात्तत्वाप्राप्ते-

---

कैयटस्त्विति । नन्वनुदात्तत्वादीनामज्धर्मत्वेऽप्यजुपरागेण व्यञ्जनेषु तद्धर्मावभासेऽपि वस्तुतस्तदभावेनानुदात्तादिशब्दैस्तेषां ग्रहणे मानाभाव इत्ययुक्तोऽयं कैयट इत्यत आह—भाष्येऽपीति । तत्र हि उदात्तत्वादीनामज्धर्मत्वं व्यञ्जनेषु तु सामीप्यात्तदवभासमात्रमिति व्यवस्थाप्य, व्यञ्जनादेर्व्यञ्जनान्ताच्च स्वरोद्देश्यकस्य 'अनुदात्तादेरञि'त्यादेः प्रवृत्तये न कश्चिदुपायः प्रदर्शितः, तेनावभासमानानुदात्तत्वादिधर्मवतां व्यञ्जनानामप्यनुदात्तादिशब्दैर्ग्रहणमिति भाष्यकारस्सूचयतीत्याशयः ॥ ८० ॥

एवमिति । स्वरोद्देश्यकविधावेव अविद्यमानवद्भावस्वीकारे इत्यर्थः । न स्यादिति । किन्तु दकारस्य स्यादित्यव्याप्त्यातिव्याप्ती दूषणे इति भावः ।

हल्स्वरप्राप्ताविति । हलः स्थाने स्वरप्राप्तावित्यर्थः ।

उदात्तगुणविशिष्टेति । इदं गुणिविधानपक्षे बोध्यम् । द्व्यच्कत्वस्य विनाशादिति ।

---

मूले—समभिव्याहृताजुपरागेणेति । समभिव्याहारश्च पूर्वपरयोरन्यतरेणेति बोध्यम् ॥ ८० ॥

मूले—नाव्यमिति । अस्य अनर्थेत्यादिः ।

मूले—आद्युदात्तत्वाप्राप्तेरिति । नन्वेवं स्थानिनि धर्मस्यैव विधानं कर्तव्यम्, ततश्च उदात्तादेः स्थानित्वेन अच एव कल्पनत्वात् नकारस्य अतथात्वात् स्वराप्राप्त्या हल्स्वरप्राप्तिद्योतकधर्मिग्राहकमानाभाववत् स्वरप्राप्तौ व्यञ्जनमविद्यमानवदित्येव सिद्धे हल्ग्रहणं व्यर्थमिति चेन्न । 'द्विबद्धं सुबद्धमि'ति न्यायेन तस्य स्पष्टार्थत्वात् । एतच्च 'समासस्य' इति सूत्रे भाष्ये प्रतिपादितम् । तत्र हि "समासस्यान्तोदात्तत्वे व्यञ्जनान्तेषु उपसंख्यानं कर्तव्यम्, 'राजदृषद्,

रित्यन्यत्र विस्तरः । स्पष्टा चेयं 'समासस्ये'ति सूत्रे भाष्ये ॥ ८१ ॥

ननु 'पूरणगुणे'ति निषेधस्तदन्तस्यापि स्यात् , 'दिव औदि'त्यौत्वं दिवे क्विप्यपि स्यात् , तथा 'यतोऽनाव' इति स्वरो ण्यत्यपि स्यात् , 'ऋदृशोऽङि गुण' इति चङ्यपि स्यादत आह—

## निरनुबन्धकग्रहणे न सानुबन्धकस्य ॥ ८२ ॥

## तदनुबन्धकग्रहणे नातदनुबन्धकस्य ॥ ८३ ॥

'वामदेवाड् ड्यड् ड्यावि'ति सूत्रे ड्यड्यतोर्डित्वमनयोर्ज्ञापकम् । तद्धि 'ययतोश्चातदर्थे' इत्यत्र तयोरग्रहणार्थम् । नञः परस्य ययदन्तस्योत्तरपद-स्यान्त उदात्त इति तदर्थः । एवञ्चावामदेव्येऽव्ययपूर्वपदप्रकृतिस्वर एव भवति ।

तन्मात्रानुबन्धकग्रहणे स चान्यश्चानुबन्धो यस्य तद्ग्रहणं नेत्यन्त्यार्थः ।

---

न च 'सन्निपात' परिभाषायां स्वप्रवृत्तेः प्राक् स्वनिमित्तभूतो यः सन्निपातस्तद्विघात-कस्य स्वातिरिक्तस्य स्वयमनिमित्तमिति तदर्थनिरूपणावसरे स्वातिरिक्तेत विशे-षणात् स्वस्य तद्विघातकत्वेऽपि नोक्तपरिभाषाविरोध इत्यस्य वक्ष्यमाणत्वेनेद-मसङ्गतमिति वाच्यम् ; तत्र स्वातिरिक्तेति विशेषणस्य स्ववैयर्थ्यमूलकत्वेन 'आव्यमि'-त्यत्र 'यतोऽनाव' इति सुत्रस्य चारितार्थ्येन वैयर्थ्यमूलकतादृशार्थस्येहानाश्रयणेन सन्निपातपरिभाषाप्रवृत्तेः सूपपादत्वादिति दिक् ॥ ८१ ॥

चङ्यपि स्यादिति । ननु ऋदृशोश्चङ् परत्वाभावादिदमसङ्गतमिति चेन्न । 'ऋदृशोरि'ति सूत्रादङीत्यनुवर्तमाने 'श्वयतेर' इत्यकारादेशश्चङ्यपि स्यादित्यर्थेना-दोषात् । श्वयतेश्च 'विभाषा धेट् , श्व्योजूस्तम्भु' इति सूत्राभ्यां चङङोर्विधानात् ।

ज्ञापकमिति । तद्धि ङित्वं टिलोपार्थम् , तच्च 'यस्ये'ति लोपेनैव सिद्धमिति व्यर्थं सज्ज्ञापकमिति भावः । अव्ययपूर्वेति । 'तत्पुरुषे तुल्यार्थे'ति सूत्रेणेति भावः ।

---

ब्राह्मणसमित् हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत्' । अथ 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवद्भवति' इत्येषा परिभाषा कर्तव्या, किमर्थमिदमुभयमित्युच्यते ? न हल्स्वरप्राप्तौ अविद्यमानवदित्येव उच्येत, स्वरप्राप्तौ व्यञ्जनमविद्यमानवद् भवतीति वा द्विबद्धं सुबद्धं भवति" इत्युक्तम् ; तदाह—मूले—स्पष्टाचेयमिति ॥ ८१ ॥

एते च प्रत्ययाप्रत्ययसाधारणे, 'दिव औदि'त्यादौ सञ्चारितत्वात् ।

वर्णग्रहणे चानयोरप्रवृत्तिरिति स्पष्ट'मौङ आप' इत्यत्र भाष्ये ।

येनानुबन्धेन सानुबन्धकत्वं द्व्यनुबन्धकत्वादि वा तदनुच्चारणे एवैषा धर्मिग्राहकमानात्, तेन 'जश्शसोरि'त्यत्र नैषेति निरनुबन्धकत्वात्तद्धितशस एवात्र ग्रहणं स्यादिति न शङ्क्यम् ।

एवमन्त्याऽन्यतरानुबन्धोच्चारणे एव, तेन 'वनो र चे'त्यादौ ङ्वनिप्-क्वनिपोर्ग्रहणसिद्धिः ।

एकानुबन्धकग्रहणे सम्भवतीति त्वर्थो न भाष्यादिसम्मत इत्यन्यत्र विस्तरः ॥ ८२, ८३ ॥

ननु 'कुटीर' इत्यादौ स्वार्थिकत्वात् स्वार्थिकानां प्रकृतितो लिङ्गवचनानुवृत्तेर्न्यायप्राप्तत्वात् पुंस्त्वानुपपत्तिः, 'अप्कल्पमि'त्यत्र नपुंसकैकवचनयोरनुपपत्तिश्चेत्यत आह—

---

दिव औदित्यादाविति । तत्र हि दिव औत्वे 'धातुप्रतिषेध' इति वार्तिकं प्रथमपरिभाषया प्रत्याख्यातम् । दिवुधातुरुदित्त्वात् सानुबन्धकः । प्रातिपदिकं त्वव्युत्पन्नत्वान्निरनुबन्धकमिति तदाशयः ।

अप्रवृत्तिरिति । अत एव 'अधीते' इत्यत्रेङः सानुबन्धकत्वेऽपि सवर्णदीर्घसिद्धिः । औङ आप इत्यत्र भाष्य इति । तत्र हि निरनुबन्धकपरिभाषया प्रथमाद्विवचनस्यैव ग्रहणं प्राप्नोतीत्याशङ्क्य "नैषा वर्णग्रहणेषु प्रवर्तते" इत्युक्तम् ।

न शङ्क्यमिति । न चात्रोक्तरीत्या परिभाषाप्रवृत्त्यभावे कुतो न तद्धितशसो ग्रहणमिति वाच्यम्; साहचर्यपरिभाषया तद्ग्रहणसिद्धेः ।

न भाष्यादिसम्मत इति । अत एव 'अणिनुण' इत्यत्र घिनुणोऽग्रहणम्; अन्यथा एकानुबन्धकस्यासम्भवेनोक्तपरिभाषाया अप्रवृत्तौ घिनुणो ग्रहणं दुर्वारं स्यादिति भावः । एवं 'मय' इत्यत्र मतुशब्देन ड्मतुपोऽग्रहणसिद्धिरिति दिक् ।

परे तु—उक्तपरिभाषाद्वयस्थाने स्वाघटकानुबन्धघटितस्य ग्रहणे स्वाघटकानुबन्धघटितस्य ग्रहणं नेति एका परिभाषा स्वीकार्या, स्वपदेन बोधको ग्राह्यः । 'वनो र चे'त्यादौ तु असम्भवादेव सर्वेषां ग्रहणसिद्धिः । एवञ्च 'जश्शसोरि'त्यादौ धर्मिग्राहकमानादिनाऽर्थविशेषकल्पनाऽपि नेति महालाघवमित्याहुः ॥ ८२,८३ ॥

कुटीर इति । ह्रस्वा कुटीत्यर्थे 'कुटीशमी'ति रप्रत्ययः ।

## क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते ॥ ८४ ॥

'णचः स्त्रियामि'ति सूत्रे स्त्रियामित्युक्तिरस्या ज्ञापिका ; अन्यथा 'कर्मव्यतिहारे णच् स्त्रियामि'ति स्त्रियामेव विधानात् किं तेन । स्पष्टा चेयं बहुज्विधायके भाष्ये ॥ ८४ ॥

ननु 'सुपथी नगरी'ति 'युवोरनाकावि'ति सूत्रभाष्योदाहृत'इनः स्त्रियामि'ति कप्स्यादत आह —

## समासान्तविधिरनित्यः ॥ ८५ ॥

'प्रतेरंश्वादयस्तत्पुरुषे' इत्यन्तोदात्तत्वार्थांश्वादिषु राजन्शब्दपाठोऽस्या ज्ञापकः ; अन्यथा टचैवान्तोदात्तत्वे सिद्धे किं तेन ।

---

प्रकृतित इति षष्ठ्यान्तादाद्यादित्वात्तसिः । स्वार्थिकानां प्रकृत्यर्थबोधकत्वेन प्रत्ययत्वात् प्रकृत्यर्थलिङ्गसंख्याबोधकत्वस्य न्याय्यतया सर्वत्र स्वार्थिकत्वेन तद्भानस्याऽऽवश्यकत्वेऽपि तयोरर्थयोः खण्डशक्तिस्वीकारेण सति गमके एतत्त्यागाल्लोकसिद्धत्वाच्च तत्तल्लिङ्गभानमित्यत उक्तम् — क्वचिदिति । न च स्वार्थिकानां प्रकृत्यर्थेतरार्थाबोधकत्वेन कथमेकार्थीभावसम्भव इति वाच्यम् ; स्वार्थिकानां प्रमेयत्वावच्छिन्नबोधकत्वस्य कल्पनेन तेन सह प्रकृत्यर्थानामभेदान्वयस्वीकारेण तत्त्वस्य सुवचत्वात्, शब्दस्यापि शाब्दबोधे भाननैयत्येन तत्तत्प्रत्ययरूपार्थस्य प्रकृत्यर्थेतरत्वेनैकार्थीभावस्य सूपपादत्वात्, क्विबन्तलिडादिशब्देष्वनेकपदघटितत्वाभावेऽप्येकार्थीभावोपपत्तये स्ववृत्तित्व-स्वपर्याप्तशक्तिज्ञानप्रयोज्यज्ञानविषयत्वोभयसम्बन्धेन पदविशिष्टशक्तिपर्याप्त्यधिकरणत्वरूपैकार्थीभावस्य अभ्युपेयतया स्वार्थिकप्रत्ययान्तेषु तत्सत्त्वेनादोषाच्चेति दिक् ।

ज्ञापकमाह—णच इति । बहुज्विधायके इति । तत्रत्येन तुशब्देनैवायमर्थो भाष्ये निरूपित इति बोध्यम् ॥ ८४ ॥

टचैवेति । ननु 'प्रतेरंश्वादय' इत्यस्य 'प्रतेः परीभूतास्तत्पुरुषघटका अन्तोदात्ता' इत्यर्थात् टिलोपोत्तरमवशिष्टस्य जान्तभागस्य 'एकदेशविकृत'न्यायेन राजन्शब्दत्वेन सतिशिष्टतया रेफाकारस्योदात्तविधानाय सार्थक्यात् कथं वैयर्थ्यमिति वाच्यम् ; 'प्रतेः पराश्वाद्युत्तरपदकस्य तत्पुरुषस्यान्त उदात्त' इति तदर्थेनोक्तरेफाकारस्य स्वरप्राप्त्यभावात् । टचो नित्यत्वे तु प्रतिराजशब्दे चित्त्वादेवान्तोदात्तत्वसिद्धेस्तद्वैयर्थ्यस्य सूपपादत्वात् । नागेशनये—अक्तपरिमाणत्वेन राजन्शब्दत्वस्य ज्ञान्ते तेन न्यायेनातिदेशासम्भवाच्च ।

'द्वित्रिभ्यां पाद्न्मूर्धस्वि'ति स्वरविधायके भाष्ये स्पष्टेयम् ॥ ८५ ॥

ननु 'शतानीत्यादौ नुमि कृते पट्संज्ञा प्राप्नोति, ततश्च लुक् स्यात्, तथा 'उपादास्ते'त्यत्राऽऽत्वे कृते 'स्थाघ्वोरिच्च' इतीत्त्वं प्राप्नोतीत्यत आह—

## सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ॥ ८६ ॥

ननु 'राज्ञीं प्रतिगतः प्रतिराज्ञिरि'त्यत्रान्तोदात्तत्वायांशशादिषु राजनशब्द-पाठश्चरितार्थः, समासान्तविधौ लिङ्गविशिष्टपरिभाषाया अनित्यत्वेन टचो प्राप्त्या-ऽन्तोदात्ताप्राप्तेः । न चात्र स्वरविधौ कर्तव्येऽपि लिङ्गविशिष्टपरिभाषाया अनित्यत्व-मिति वाच्यम्; अस्याः स्वरविधौ सङ्घातग्रहणे एव भाष्ये दोषकथनेनावयव-ग्रहणेऽप्रवृत्तौ मानाभावादित्यिरुचेराह—द्वित्रिभ्यामिति । तथा च 'द्वित्रिभ्यां पादन्मूर्धस्वि'ति कृतसमासान्तमूर्धशब्दपाठेन द्वयादिभ्यः परस्य कृतसमासान्त-मूर्धशब्दस्य बहुव्रीहावेव सत्त्वेनार्थत एव तल्लाभाद् बहुव्रीहिग्रहणमस्यां मानम् । परिभाषासत्त्वे तु समासान्तस्यानित्यत्वेन 'द्विमूर्धा' इत्यत्रोक्तस्वरप्रवृत्तयेऽकृत-समासान्तमूर्धशब्दपाठस्याऽऽवश्यकतया बहुव्रीहीतरसमासे एतदप्रवृत्तये बहुव्रीहि-ग्रहणं चरितार्थम् ।

केचित्तु—'ऋक्पूरब्धूः पथामि'त्यकृतसमासान्तनिर्देशोऽस्या ज्ञापक इत्याहुः ।

अन्ये तु—राजस्वरे इत्यावर्त्य 'प्रतिराज्ञिरि'त्यत्रापि राजस्वरत्वेन 'प्रतेरंश्वादय' इत्यस्याप्रवृत्त्या मूलोक्तज्ञापकमपि युक्तमेवेत्याहुः ।

परे तु—राजस्वरे इति पृथक्कोटिः, तेन 'राज्ञीकुमार' इत्यत्र 'राजा च'ेति स्वरो न । ब्राह्मणकुमारयोर्लिङ्गविशिष्टपरिभाषाया अनित्यत्वात् 'राजब्राह्मणी, राजकुमारी' इत्यत्र उक्तस्वरो नेत्यविशेषात 'प्रतिराज्ञीरि'त्यत्रापि राजस्वरसत्त्वात् मूलोक्तज्ञापकसङ्गतिरित्याहुः ॥ ८५ ॥

लुक् स्यादिति । ननु 'ष्णान्ता' इत्यत्रोपदेशे ष्णान्ता इत्यर्थेन नात्र दोष इति चेन्न । उपदेशे इत्यस्य नकारषकारयोरन्वये सापेक्षत्वेन समासासम्भवादित्यादि-दूषणस्य मनोरमायामुक्तत्वेन तेन वारणासम्भवात्, अन्यार्थमावश्यकया उक्त-परिभाषया निर्वाहे उपदेशे इत्यपूर्वकथने गौरवेण तदनादरणाच्च । न च 'प्रिय-पञ्चान' इत्यत्र लुगभावाय 'षड्भ्य' इत्यत्र विहितविशेषणत्वस्वीकारान्नात्र लुक्प्राप्तिरिति वाच्यम्; षड्भ्यो विहितेत्यस्य जसादिनिरूपिततदाद्यभिन्नषड्भ्यः परेत्यर्थकत्वेन क्षतोषतादवस्थ्यात् । न च विभक्तिसापेक्षत्वेन नुमः तत्संज्ञादृष्ट्या-ऽसिद्धत्वेन तदप्राप्तीरिति वाच्यम्; संज्ञाशास्त्रस्य विधिनिमित्तनिमित्तकत्वेन लुगर्थ-संज्ञाया अपि विभक्तिसापेक्षत्वेन नुमो बहिरङ्गत्वायोगात् । नुर्मनिमित्तविभक्तेर्विना शोन्मुखत्वेन 'अकृतव्यूह'परिभाषया नुमभावस्तत्र न शङ्क्यः; लुको बहिरङ्गत्वा-भावेन बहिरङ्गेणान्तरङ्गनिमित्तविनाशसम्भावनाया असत्त्वेन तस्या नुम्प्रवृत्त्य-भावसम्भावनाप्रयोज्यत्वाभावेन च तत्प्रवृत्तेः सर्वथैवासम्भवात् ।

सन्निपातो = द्वयोः सम्बन्धस्तन्निमित्तो विधिस्तं सन्निपातं यो विहन्ति तस्यानिमित्तम् ।

उपजीव्यविरोधस्यायुक्तत्वमिति ।

---

उपजीव्येति । तथा च 'उपादास्ते'त्यत्र [illegible] जायमानात्त्वस्य घुसञ्ज्ञाद्वारा स्वोपजीव्यैज्विषयत्वविघातकं 'स्थाघ्वोरि'त्येतद्विहितसिज्धर्मिककित्त्वं प्रति निमित्तत्वे उपजीव्यविरोधः स्पष्ट एवेति तदप्रवृत्तिरिति भावः । एवं 'शतानी'-त्यत्रापि बोध्यम् । न 'चोपादास्ते'त्यत्रानयाऽऽत्त्वोपजीव्यविघातककित्वस्याप्रवृत्ता-वपि इत्वस्याप्रवृत्तौ मानाभाव इति वाच्यम्; 'सन्नियोगशिष्टानामि'त्युत्तरपरि-भाषया प्रधानीभूतकित्त्वस्याप्रवृत्त्या तत्सन्नियोगशिष्टेत्वस्याप्रवृत्तिरित्याशयात् ।

इदमत्रावधेयम्—'इको यणची'त्यादिविधिशास्त्रैस्तादृशस्वविधेयघटितस्य साधुत्वमितरस्य तदर्थकस्यासाधुत्वं बोध्यते, तेनैकरूपेण 'सुधी+उपास्य, सुध्यु-पास्ये'त्यादीनामसाधुत्वं सिद्धयति । एवं गोशब्दस्य साधुत्वबोधनाद् गाव्यादीना-मसाधुत्वं भवति । तथा च परिनिष्ठितस्यापि 'सुध्युपास्य' इति विसर्गान्तस्या-

---

उपजीव्येतीति । उपजीवयतीति उपजीव्यः, ण्यन्तात् कर्तरि बाहुलकात् यत्; येन स्वस्योपकृतं तस्य विरोधोऽन्याय्य इति भावः ।

ननु परिभाषायां सन्निपातलक्षणविधेः तद्विघातकशास्त्रं प्रति अनिमित्तत्वबोधनेऽपि स्वीयोद्देश्यतावच्छेदकाक्रान्ततया सन्निपातविघातकशास्त्रस्य प्रवृत्तिर्वारयितुमशक्या, विधेये तत्सं-सर्गे वा स्वीयोद्देश्यतावच्छेदकव्यापकत्वस्य भाननियमात्; अतस्तत्तात्पर्यं स्फोटयन्नाह—इदम-त्रावधेयमिति । अयम्भावः—परिभाषाया यदि तद्विघातशब्दो भावघञन्तः विधिशब्दश्च कर्म-किप्रत्ययान्तो विधेयपरः; तदा सन्निपातविघातकशास्त्रीयविधेये सङ्कोचो भवति । येन स्वस्योपकृतं तस्य विघातोऽयुक्त इति हि धर्मशास्त्रम्, तद्रीत्याऽयं सङ्कोचः । अमुमेव पक्षं "यदि तु लाघवात् भाव घञन्त" इत्यादिना ग्रन्थेन व्याख्याकारो वक्ष्यति । यथा—केनचित् अधिकारिणा राज-पुरोहितेन राजसभायां प्रवेशितः कश्चित् तदतिशायिपाण्डित्यवानपि धर्मशास्त्रज्ञः तद्विघातो मा भूदिति तद्विरोधं परिहरन्नेव व्यवहरति, तथा पूर्वप्रवृत्तशास्त्रेण साधुत्वार्थमभ्यनुज्ञातमपि शास्त्रं पूर्वशास्त्रीयस्वोपजीव्यनिमित्तसन्निपातविघातमकुर्वदेव तत्र तन्न प्रवर्तते । यदि तु परिभाषायां तद्विघातपदे कर्मण्यण्, विधिपदञ्च करणकिप्रत्ययेन शास्त्रपरम्, तदा सन्निपातलक्षण-शास्त्रीयाभ्यनुज्ञादानवाक्ये एव सङ्कोचः । अयमेव नीतिशास्त्रप्रयुक्तः सङ्कोचः कथ्यते । नीतिशास्त्रज्ञो हि राज्याधिकारी स्वापेक्षया गुणवत्तरं विद्वांसं न प्रवेशयिष्यति स्वोन्मूलनभिया इति भावः । तत्रादौ तत्तच्छास्त्रैश्च स्वोत्तरप्रवृत्तिमच्छास्त्रस्याभ्यनुज्ञानमपि विधीयते इत्यत्र प्रमाणमाह—इको यणचीत्यादिविधीत्यादि ।

विसर्गान्तस्यारुत्वापत्तिरिति । ननु "साधुत्वानुशासनेऽस्मिन् शास्त्रे" इति भाष्य प्रामाण्येन शास्त्रैः साधुत्वमेव विधीयताम्, तथा सति न तस्यासाधुत्वापत्तिरिति चेन्न । लुग्विधायक शास्त्रे बोधितसाधुत्वस्यापि 'सुधी+उपास्यः' इत्यस्य साधुत्वापत्त्या याज्ञे कर्मणि प्रयोगापत्तेः ।

साधुत्वापत्तिः, 'उदिते जुहोति, अनुदिते जुहोती'तिवन् शास्त्रद्वयप्रामाण्यात् पर्यायापत्तिर्वा स्यादिति 'इको यणची'त्यादीनां मदुत्तरप्रवृत्तिमता शास्त्रेण यस्य साधुत्वं बोध्यते तदपि साध्विति स्वोत्तरप्रवृत्तिमच्छास्त्रस्याभ्यनुज्ञादानमपि विधेयम् । तत्तच्छास्त्रैः साधुत्वविधानफलं "चाष्टाध्यायीस्थसाधुत्वविधायकशास्त्रं साधुशब्दघटकेष्वेव प्रवर्तते" इति नियमपरिरक्षणमेव, तेन गगरीशब्दघटकेकारादिषु 'इको यणची'त्यादीनामप्रवृत्तिः सिद्ध्यति । स्वोत्तरप्रवर्तमानशास्त्रान्तरबोधिताऽसाधुत्वासमानाधिकरणं च साधुत्वं पुण्यजनकतावच्छेदकमिति वैयाकरणसमयः । एवञ्चानया तत्तच्छास्त्रस्थाभ्यनुज्ञावाक्यीयस्वोत्तरप्रवृत्तिमत्पदार्थे मदीयसन्निपातविघातकातिरिक्तेनेति सङ्कोचः क्रियते, तेन 'बुद्धावि'त्यत्र 'अच्च घेरि'ति शास्त्रेण स्वसन्निपातविघातकटाब्विधेरभ्यनुज्ञादानाभावेन तदप्रवृत्तिसिद्धिः । अनित्यत्वविषये तु एतत्परिभाषाप्रयोज्यसङ्कोचघटकस्वसन्निपातविघातकशास्त्रे तत्तच्छास्त्रातिरिक्तत्वेन सङ्कोचः; यथा—'कष्टाये'ति निर्देशेनास्या अनित्यत्वेन 'ङेर्ये' इत्यस्याभ्यनुज्ञावाक्यघटकसन्निपातविघातकपदार्थे 'सुपि चे'त्यतिरिक्तत्वेन सङ्कोचाद् 'रामाये'त्यत्र तस्य 'ङेर्ये' इत्येतत्सन्निपातविघातकत्वेऽपि दीर्घसिद्धिः ।

माधवानुयायिनस्तु—'ङेर्य' इत्यस्याभ्यनुज्ञावाक्ये एतत्परिभाषाप्रयुक्त सङ्कोचे तत्तच्छास्त्रातिरिक्तत्वेन सङ्कोचकरणापेक्षयाऽनित्यत्वविषयेऽभ्यनुज्ञावाक्ये 'सन्निपात'परिभाषाप्रयोज्यसङ्कोचाभाव एव क्रियते, तेन 'नामी'ति सूत्रारम्भसामर्थ्येनैतस्या अनित्यत्वात् 'ह्रस्वनद्याप' इत्यस्याभ्यनुज्ञावाक्ये सन्निपातपरिभाषाप्रयोज्यसङ्कोचाभावेनाविशेषात् 'रायो हली'त्यस्याप्यभ्यनुज्ञादानसत्त्वेन 'प्रराणामि'त्यत्राऽऽत्त्वसिद्धिः । 'ह्रस्वनद्याप' इत्येतदभ्यनुज्ञावाक्ये सन्निपातपरिभाषाप्रयुक्तसङ्कोचाभावादेव 'रामाणामि'त्यत्र परत्वात् 'सुपि चे'ति दीर्घस्यैव प्रवृत्त्या 'नामी'त्यस्य 'अग्नीनामिन्दूनामि'त्यनकारान्तोदाहरणदानं भाष्यकृतः स्वरसत उपपद्यते । न च 'आन्नलोप' इति सूत्रस्थभाष्यविरोधेनेदृशप्रकारस्यायुक्तत्वम्, तत्र हि नान्नलोप इति न्यासे 'यज्ञानां यत्नानामि'त्यत्र लोपमाशङ्क्य "इदमिह सम्प्रधार्यं लोपः क्रियतां दीर्घो वा" इत्युक्त्वा "परत्वान्न लोप" इत्युक्तम्, 'नामी'त्यपेक्षया लोपस्य परत्वेऽपि 'सुपि चे'त्यपेक्षया परत्वाभावेन त्वदुक्तरीत्या नुडुत्तरं 'सुपि चे'त्यस्य प्रवृत्तौ बाधकाभावात् नलोपापेक्षयाऽपि तस्य परत्वात्प्रवृत्त्यापत्त्या भाष्यविरोधः स्पष्ट एवेति वाच्यम्; 'सुपि चे'त्यपेक्षया लोपस्य नित्यत्वेन प्रतिपदोक्तत्वेन च पूर्वं प्रवृत्तिरिति भाष्याशयकल्पनेनादोषादिति प्राहुः । तन्न, 'ह्रस्वो नपुंसक' इत्युत्तरं

---

नियमपरिरक्षणमेवेति । अयम्भावः—साधुत्वं द्विविधम्—एकं शास्त्रप्रवृत्त्यर्हत्वरूपं शास्त्रप्रक्रियानिर्वाहाय परिकल्पितं प्रकृतिप्रत्ययादिगतार्थवत्त्वमिव, अपरं पुण्यजनकतावच्छेदकीभूतो व्याकरणशास्त्रज्ञानाभिव्यङ्ग्यो शब्दनिष्ठो जातिविशेषो मुख्यमेव । तच्च 'यदिह परिनिष्ठितत्वेन ज्ञाप्यं तत्साधु' इत्यर्थापत्तिकल्पितवाक्येन बोध्यत इति । तदुक्तं मञ्जूषायाम्— 'साधूनामेव प्रत्ययविधावुद्देश्यत्वेन प्रकृतित्वम्, खण्डसाधुत्वबोधनद्वारा समुदायसाधुत्वबोधकं व्याकरणमर्थवत्त्वबोधनवत्'' इति । एतेन—साधुत्वासाधुत्वरूपविरुद्धधर्मावच्छिन्नस्य बोधनादिदं शास्त्रमप्रमाणमेवेति अपास्तम् ।

सर्वत्र तत्सन्निपातविघातकस्य 'इकोऽचि विभक्ता'विति नुमः प्राप्त्या तत्सूत्रारम्भसामर्थ्येन सन्निपातपरिभाषाया अनित्यत्वस्यावश्यकत्वेनात्रापि 'ह्रस्वो नपुंसक' इत्यस्याभ्यनुज्ञावाक्ये स्वोपजीव्यह्रस्वविघातकशास्त्रेण 'इकोऽची'ति शास्त्रस्येव 'ह्रस्वस्य पिति कृती'ति शास्त्रस्याप्यभ्यनुज्ञाततया सुत्वादिशब्देषु तुगापत्तेर्दुर्वारत्वात्। मन्मते तु 'ह्रस्वो नपुंसके'त्यस्याभ्यनुज्ञावाक्ये 'इकोऽची'त्यतिरिक्तं यन्मत्सन्निपातविघातकं तदतिरिक्तेनेति विशेषरूपेण सङ्कोचात् 'ह्रस्वस्य पिती'त्यस्याभ्यनुज्ञादानाभावेन तदप्रवृत्तेः। एवं 'ह्रस्वनद्याप' इत्यस्याभ्यनुज्ञावाक्येऽपि 'नामी' त्येतदतिरिक्तं यन्मत्सन्निपातविघातकं तदतिरिक्तेनेत्येवं विशेषरूपेण सङ्कोचात् 'नामी'त्यस्याभ्यनुज्ञादानेऽपि 'रायो हली'त्यस्य तदभावेन तदप्रवृत्त्या 'प्रराणामि'त्यस्य साधुत्वाभावात्। एवं 'श्रीपाये'त्यत्र 'सुपि चे'त्यनेन ह्रस्वाकारनिमित्तकप्रवृत्तिकेन स्वोपजीव्यह्रस्वत्वविनाशेऽपि स्वनिमित्तभूतात्त्वनाशका 'ऽऽतो धातोरि'त्येतत्प्रति अभ्यनुज्ञादानाभावेनाकारलोपाप्रवृत्तिरिति बोध्यम्। सर्वं चेदं परिभाषायां 'कर्मण्यणि'त्यण्प्रत्ययान्ततद्विघातशब्दाभिप्रायेण। अत एव मूले "तं सन्निपातं यो विहन्ति" इत्युक्तम्।

यदि तु लाघवात् भावघञन्तो विघातशब्दस्तदा 'स्वोपजीव्यसन्निपातविघातः स्वेन न न्याय्य' इत्यर्थः। तथा च तत्तच्छास्त्रविधेये स्वनिमित्तभूतसन्निपातविघातकातिरिक्तत्वेन स्वनिमित्तसन्निपातसम्पादकशास्त्रीयसन्निपातविघातकातिरिक्तत्वेन च सङ्कोचोऽनया क्रियते। स्वोपकारकनाशकर्तृरभ्यनुज्ञादाने स्वयं वा स्वोपकर्तुर्नाशकरणे उपजीव्यविरोधः स्पष्ट एव। तत्रान्यतरपक्षाश्रयणेनेष्टसिद्धावपि द्वितीयपक्ष एवाऽऽकरसम्मतः।

अयं च स्वसन्निपातविघातकातिरिक्तत्वेन तत्तद्विधेये सङ्कोचो यत्र स्वनिमित्तभूतसन्निपातविघातं विनाऽपि तत्तच्छास्त्राणां चारितार्थ्यं सम्भवतीति तत्रैव; यथा—'यतोऽनाव' इत्यत्रानौप्रतिषेधस्य 'आव्यमि'त्यत्र चारितार्थ्यं सम्भवतीति तेन रूपेण सङ्कोचात्। गुणिविधानपक्षे 'नाव्यमि'त्यत्र नकारस्योदात्ताजूरूप आदेशो नेति प्राक् प्रदर्शितमेव। यत्र च स्वसन्निपातविघातं विना 'सुपि चे'त्यादितत्तच्छास्त्राणां चारितार्थ्यं न सम्भवति तत्र नानेन रूपेण सङ्कोचः, किन्तु स्वनिमित्तसन्निपातसम्पादकशास्त्रीयसन्निपातविघातकातिरिक्तत्वेनैव सङ्कोचः, तेन 'शतानी'त्यत्र षट्संज्ञाद्वारा लुक्प्रयोजकीभूतनान्तत्वसम्पादकनुम्विधायकशास्त्रीयसर्वनामस्थानप्रकृतिसन्निपातविघातकातिरिक्तत्वेन लुकि सङ्कोचात् स न भवति। लुकि सति तु सम्बन्धिनो नाशात्तद्विघातः स्पष्ट एव। 'कष्टाये'ति निर्देशेनास्या अनित्यत्वात् 'सुपि चे'त्येतद्विधेये स्वनिमित्तसन्निपातसम्पादकं 'ङेर्य' इत्येतदतिरिक्तं यच्छास्त्रं तन्निमित्त भूतसन्निपातविघातकातिरिक्तेति विशेषणात् दीर्घस्य 'ङेर्य' इत्येतत्सन्निपातविघातकत्वेऽपि नः क्षतिः। एवं 'नामी'त्यत्रापि

---

आकरसम्मत इति। 'समासस्य' इति सूत्रस्थोद्योतसम्मत इत्यर्थः। अत्रैव पक्षे उपजीव्यविरोधस्यायुक्तत्वमिति न्यायमूलत्वोपवर्णनं स्वरसतः सङ्गच्छते।

न्यायमूलैषा ।

---

'ह्रस्वनद्याप' इत्येतदतिरिक्तं यत्स्वसन्निपातसम्पादकं शास्त्रं तत्सन्निपातविघातकातिरिक्तो दीर्घो भवतीत्यर्थान्न दोषः । अत्र पक्षेऽपि 'प्रीणामि'त्यत्राऽऽत्त्वस्य 'ह्रस्वनद्याप' इत्येतत्सन्निपातविघातकत्वेन 'रायो हली'त्यस्याप्रवृत्तिः । 'नामी'त्यत्र सूत्रारम्भसामर्थ्येनोक्तरूपेण सङ्कोचेऽप्यत्र तथासङ्कोचे मानाभावः ।

वस्तुतस्तु—अयं द्वितीयप्रकार एव युक्तः । प्रथमकल्पे च 'बुद्धौ' इत्यादौ 'अच्च घेरि'ति शास्त्रेण स्वनिमित्तसन्निपातविघातकटाब्विधेयः, उक्तन्यायसहकारेणाभ्यनुज्ञादानाभावेऽपि उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्यौत्सर्गिकतया तदीयोद्देश्यतावच्छेदके सङ्कोचं विना टाप्प्रवृत्तेर्दुर्वारत्वापत्तिः । किञ्चैवं 'नाऽर्यामि' त्यत्रोक्तदिशाऽनया दोषवारणासम्भवेन नौप्रतिषेधस्य 'हल्स्वरप्राप्तावि'ति परिभाषाज्ञापकत्वासम्भवः । किञ्च—पूर्वनिर्दिष्टपरिभाषार्थे एव ग्रन्थकर्तुः सामञ्जस्ये 'स्वप्रवृत्तेः प्राक् स्वनिमित्तभूत' इति वक्ष्यमाणग्रन्थेन परिभाषया अर्थान्तरोपवर्णनस्य नैरर्थक्यापत्तिः । किञ्च—संज्ञाशास्त्रस्य साधुत्वविधायकत्वाभावेन पूर्वशास्त्राभ्यनुज्ञाया अभावात् 'कुम्भकारेभ्य' इत्यादावनयाऽव्ययसंज्ञाया वारणपरभाष्यासङ्गतिः । किञ्च—परिभाषायां विघातपदस्याणन्तत्वकल्पनया सन्निपातलक्षणविधेस्तद्विघातकशास्त्रप्रवृत्तिनिरोधकत्वकल्पनेन अल्पदोषप्रयोजकोपजीव्यविरोधनिवारकत्वेऽपि महादोषप्रयोजकस्य स्वेन स्वोपजीव्यविघातकरणस्यान्याय्यत्वावोधने शास्त्रकारस्याविवेकित्वापत्तिः । विघातपदे भावघञ्कल्पनेन सन्निपातलक्षणविधेः स्वनिमित्तभूतसन्निपातविघातनिमित्तत्वसामान्याभावबोधकत्वकल्पने तु स्वरसत एवोभयं सिद्ध्यतीति दिक् ।

न्यायमूलैषेति । केचित्तु—न तिसृ'ति सूत्रमत्र ज्ञापकम्; अन्यथा 'तिसृणामि'त्यत्र तत्परिभाषाभावे 'तिसृ + नामि'त्यवस्थायामन्तरङ्गत्वान्ङीपि तद्वैयर्थ्यापत्तिः । एतत्सत्त्वे तु प्रकृतिप्रत्ययसन्निपातप्रयोज्यतिस्रादेशस्य ङीपं प्रत्यनिमित्त-

---

टाप्प्रवृत्तेर्दुर्वारत्वापत्तिरिति । टापः प्रवृत्तावपि तद्घटितस्य साधुत्वाभ्यनुज्ञाभावेन लोके प्रयोगाभावाददोष इत्यरुचेराह—किञ्चैवमिति ।

ज्ञापकत्वासम्भव इति । गुणिविधानपक्षे तदसम्भवेऽपि लाघवात् गुणमात्रविधानपक्षे तत्सम्भवेऽस्त्येव, फलमुखगौरवन्तु न दोषावहमित्यरुचेराह—किञ्चेति । नैरर्थक्यापत्तिरिति । इष्टापत्त्या आह—किञ्चेति । वारणपरभाष्यासङ्गतिरिति । एतत्समाधानन्तु 'तदुदाहरणपरभाष्यप्रामाण्येन' इत्यादिना मूले एव स्फुटमत आह—किञ्चेति ।

वस्तुतस्तु—उभयविधरूपेण तत्तद्विवेके धर्मशास्त्रप्रयुक्तसङ्कोचापेक्षया अभ्यनुज्ञातवाक्ये एव नीतिशास्त्रप्रयुक्तसङ्कोच एव लाघवात् दोषाभावाच्च प्रथमप्रकारोऽपि निर्दुष्ट एवेति बोध्यम् ।

अत्र कल्पे नीतिशास्त्रमूलको "विरोधिनं नोपजीवयेत्" इति न्यायो मूलम् । सन्निपातलक्षणविधित्वस्या लिङ्गम् । द्वितीयकल्पे "धर्मशास्त्रमूलकः उपजीव्यविरोधो न न्याय्यः" इति हि न्यायोऽस्या लिङ्गम् । सन्निपातविघातकशास्त्रत्वञ्च अस्या लिङ्गमिति तात्पर्यम् ।

अत एवात्र सन्निपातशब्देन न पूर्वपरयोः सम्बन्ध एव, किन्तु विशेष्यविशेषणसन्निपातोऽपि गृह्यते । अत एव 'ग्रामणिकुलमि'त्यादौ नपुंसकह्रस्वत्वेऽपि 'पिति कृती'ति तुग्न ; प्रातिपदिकाजन्तत्वसन्निपातेन जातस्य ह्रस्वस्य तदविघातकत्वात् । तुक्यजन्तत्वविघातः स्पष्ट एव ।

---

त्वेन तदप्रवृत्त्या सूत्रसार्थक्यं स्पष्टमेव । न च 'न षडि'ति निषेधः शङ्क्यः ; स्वस्रादिगणे तिसृचतसृपाठस्यानार्षत्वेन तेन तन्निषेधायोगात् । अत एव 'कृन्मेजन्त' इति सूत्रे भाष्ये 'तिस्रश्चतस्र' इत्यत्र ङीपमाशङ्क्य आचार्यप्रवृत्तिर्ज्ञापयति न तिसृचतसृभावे ङीब् भवतीति । "यदयं न तिसृचतसृ इति नामि दीर्घत्वप्रतिषेधं शास्ती"त्युक्तमिति । तन्न युक्तम् ; 'तिस्रोऽतिक्रान्तानामतितिस्रिणामि'त्यत्र ङीपि 'लिङ्गविशिष्ट'परिभाषया ङीबन्ते उपसर्जनत्वात् 'गोस्त्रियोरि'ति ह्रस्वे 'नामी'ति दीर्घे च प्राप्ते न्यूनसमुदायापेक्षत्वेनान्तरङ्गत्वात्पूर्वं ह्रस्वे कृते प्राप्तदीर्घवारणायोक्तसूत्रस्याऽऽवश्यकत्वेन ज्ञापकत्वासम्भवात् ।

परे तु—'अतितिस्री + नामि'ति स्थिते 'नामी'त्यस्यापि प्रतिपदोक्तत्वरूपान्तरङ्गत्वेन नित्यत्वेन चोभयोः समत्वात् परत्वाद्दीर्घोत्तरं ह्रस्वे 'लक्ष्ये लक्षण'न्यायेन पुनर्दीर्घप्राप्त्योक्तसूत्रस्य वैयर्थ्येन ज्ञापकत्वं सुस्थमेवेति प्राहुः ।

यत्तु—'वाचि ह्रस्वश्चे'ति न्यासेनैव 'श्रियां, श्रीणामि'त्यादीष्टरूपसिद्धौ 'वामि, ङिति ह्रस्वश्चे'ति योगद्वयकरणमस्यां ज्ञापकम् । ज्ञापिते तु 'श्रीणामि'त्यत्राजादित्वमुपजीव्य जायमानेन नदीत्वेन नुड्द्वाराऽजादित्वविघातेनानया नुडप्राप्त्या 'वामी'त्यस्याऽऽवश्यकत्वम् । तत्सत्त्वे तु नुड्विशिष्टे आम्त्वेन सन्निपातविघाताभावः स्पष्ट एव । तव तु अजादित्वस्य वर्णत्वव्याप्यधर्मघटितत्वेन 'यदागम'परिभाषयाऽऽनयनाभावेन तद्विरोधः स्पष्ट एव । न च 'मतिश्रीमा चे'ति द्वन्द्वेऽच्परत्वेन मतिशब्दस्य नदीत्वेन घित्वाभावात् पूर्वनिपातानापत्त्येदृशन्यासस्य वक्तुमशक्यत्वमिति वाच्यम् ; 'मतिश्च चित्रश्चे'ति द्वन्द्वे सिद्धान्ते ङित्परत्वेऽपि नदीत्वाभावार्थं प्रत्ययाक्षेपस्याऽऽवश्यकत्वेनोक्तदोषासम्भवादिति प्राहुः । तन्न ; 'वापि ह्रस्वश्चे'ति न्यासेन सिद्धेः सिद्धान्तेऽप्युक्तयोगविभागवैयर्थ्येन तस्योक्तार्थज्ञापकत्वासम्भवात्, 'ङिति ह्रस्वश्चे'त्यत्र नित्यस्त्रीत्वसम्बन्धो 'वामी'त्यत्र च 'अतिश्रियामतिश्रीणां, ब्राह्मणानामि'ति सिद्ध्यर्थं तदसम्बन्ध इति भाष्यसम्मतसिद्धान्तस्यासिद्ध्या तथाविधैकयोगस्य कर्तुमशक्यत्वाच्च । स्पष्टं चेदं तत्रैव सूत्रे शब्देन्दुशेखरटिप्पणे ।

अत एवेति । न्यायमूलत्वादेवेत्यर्थः । विशेष्यविशेषणसन्निपात इति । अभेद इत्यर्थः । अत एवेति । अभेदस्यापि ग्रहणादेवेत्यर्थः । तुक्यजन्तत्वविघात इति । इदं

---

अभेद इत्यर्थ इति । तस्याप्युपजीव्यत्वात्, परिभाषाया सन्निपातपदेन उपजीव्यमात्रस्य ग्रहणात् । ज्ञापकसिद्धत्वाङ्गीकारे तु तत्साजात्यात् पौर्वापर्यलक्षणसन्निपात एव गृह्यते इति भावः ।

न चार्थाश्रयत्वेन ह्रस्वस्य बहिरङ्गतयाऽसिद्धत्वम्; अर्थकृतबहिरङ्गत्वानाश्रयणस्योक्तत्वात्। किञ्च 'षत्वतुकोरसिद्ध' इत्येतद्बलात् कृतितुग्ग्रहणाच्च तुग्विधौ बहिरङ्गपरिभाषाया अप्रवृत्तेः।

सर्वविधसन्निपातग्रहणादेव वर्णाश्रयः प्रत्ययो वर्णविघातस्यानिमित्तं स्यादित्येतत्परिभाषादोषनिरूपणावसरे वार्तिककृतोक्तम्। न हि प्रत्ययः पूर्वपरसन्निपातनिमित्तकः स एव च सन्निपातशब्देन गृह्यत इति मत्वा न प्रत्ययः सन्निपातनिमित्तक इति शङ्कायां तदभ्युपेत्यैवाङ्गसंज्ञा तद्धनिमित्तं स्यादित्येकदेशिनोक्तमिति न तद्भाष्यविरोधः। किञ्चैवं 'शैवो, गार्ग्यो, वैनतेय' इत्यादावप्यङ्गसंज्ञाया लोपनिमित्तत्वानापत्त्या वर्णाश्रय इत्यस्य वैयर्थ्यम्।

---

ह्रस्वस्यैव तुगागम इत्यभिप्रायेण। तत्पक्षे ह्यागमसन्निधाने तद्विशिष्टेऽच्त्वेऽपि तकारस्य समुदायावयवत्वमवयवावयवन्यायगम्यं पाश्चात्यमित्यागमविधानकालिकाजन्तत्वविघातो दुर्वार एव। ह्रस्वान्तस्य तुगागमे तु यदागमन्यायेन विधानवेलायामेवावयवत्वग्रह इति नास्त्यजन्तविघात इति बोध्यम्।

वार्तिककृतोक्तमिति। अन्यथा पूर्वपरसन्निपाताभावादेतद्विरोधः स्पष्ट एव। एकदेशिनोक्तमिति। ननु विशेष्यविशेषणसन्निपातं बुद्ध्वा प्रवृत्तं भाष्यं कुतो नैकदेशीति चेन्न। मानाभावात्, 'जराया जरसि'त्यादिसूत्रारम्भसामर्थ्येनाऽऽतिदेशिकसन्निपातविघाताभावमादाय तदप्रवृत्तिर्नेत्यत्र अतिदेशपदेनैकदेशविकृतन्यायातिरिक्तस्य ग्रहणेनाङ्गत्वस्य विघाताभावादङ्गसंज्ञा तद्धनिमित्तमिति भाष्ये एवैकदेश्युक्तित्वकथनस्य युक्तत्वात्। अत एव 'अजरसी'त्यत्र जरसादेशोत्तरं नुम् भाष्ये उक्तः; अन्यथाऽङ्गत्वस्याऽऽदेशेन विघातेन नुमोऽप्राप्त्या तदसङ्गतिः। अत एव च 'वर्णाश्रयः प्रत्यय' प्रत्युक्तम्; अन्यथा 'शैव' इत्यत्रापि अङ्गत्वाविघातेन वर्णाश्रय इति कथनमयुक्तमेव स्यात्। अत एव कतेर्नामीति वक्तव्ये सामान्येन नामीति दीर्घविधानेन सन्निपातपरिभाषाया अनित्यत्वापवर्णनं शेखरोक्तं सङ्गच्छते; अन्यथा 'कतीनामि'त्यत्र तेन दीर्घे षट्त्वविघातः स्पष्ट एवेति दिक्।

ननु विशेष्यविशेषणसन्निपातग्रहणादेव 'ग्रामणिपुत्रे'त्यादौ तुग्वारण-

---

तद्विशिष्टेऽच्त्वेऽपीति। इदमग्रिमञ्च नव्यमतेन बोध्यम्।

सूत्रारम्भसामर्थ्येनेति। अङ्गत्वमुपजीव्य जायमान आदेशोऽङ्गत्वस्य विघातकः कथं भवेदिति सूत्रमेव व्यर्थं स्यादिति भावः। एकदेशविकृतन्यायेति। इदमुपलक्षणम्—स्थानिवद्भावस्य, अन्यथा न्यायस्य सर्वविकारतया अप्राप्तेः।

नुमोऽप्राप्त्येति। जरमोऽप्राप्त्येति युक्तः पाठः। वस्तुतः—गौरीत्यादौ अतिव्याप्तिपरक-'कृन्मेजन्त'भाष्यासङ्गत्या स्थानिवद्भावोपलक्षकत्वं वक्तुमशक्यमिति चिन्त्यमेतत् ॥ ८६ ॥

'ग्रामणिकुलं, ग्रामणिपुत्र' इत्यादावुत्तरपदनिमित्तके ह्रस्वत्वे यथाकथञ्चिद् बहिरङ्गपरिभाषयाऽपि वारणं सम्भवतीति 'ङ्णमेजन्त' इत्यत्र 'ह्रस्वस्य पिती'ति सूत्रे चैकदेशिना तया परिभाषया तुग्वारितो भाष्ये। अत एव परिभाषाफलत्वेनेदमुक्तं 'ङ्णमेजन्त' इति सूत्रे वार्तिककृतेति केचित्।

सन्निपातलक्षणविधित्वमस्या लिङ्गम्। स्वप्रवृत्तेः प्राक् स्वनिमित्तभूतो यः सन्निपातस्तद्विघातस्य स्वातिरिक्तशास्त्रस्य स्वयमनिमित्तमिति फलति।

नन्वेवं 'रामाये'त्यादौ 'सुपि चे'ति दीर्घानापत्तिः, अदन्ताङ्गङेसन्निपातेन जातस्य यादेशस्य तदविघातकत्वात्। न च यञादित्वसापेक्षदीर्घस्य बहिरङ्गतयाऽसिद्धत्वान्नात्र सन्निपातविघात इति वाच्यम्; आरोपितासिद्धत्वेऽपि

---

सम्भवेऽन्तरङ्गपरिभाषया तुग्वारणं भाष्योक्तमसङ्गतमित्यत आह—उत्तरपदनिमित्तके ह्रस्वत्वे यथाकथञ्चिदिति। ईधातोः क्विपि ह्रस्वे 'इ+कुलमि'त्यत्र बहिरङ्गत्वाभावात्तुग्वारणायास्या आवश्यकत्वमिति तदाशयः। एकदेशिनेति। 'नाजानन्तर्य'परिभाषाऽज्ञानेन प्रवृत्तत्वादस्यैकदेश्युक्तित्वमिति भावः। अत एवेति। अस्यैकदेश्युक्तित्वादेवेत्यर्थः। परिभाषाफलत्वेनेति। सन्निपातपरिभाषाफलत्वेनेत्यर्थः।

सन्निपातलक्षणविधित्वमिति। सन्निपातलक्षणशास्त्रत्वमित्यर्थः। विधिशब्दे करणे किप्रत्ययात्। एवं चास्या 'न तिसृ'ति शास्त्रदेशीयत्वेन सापादिकतया त्रिपाद्यास्तादृशशास्त्रत्वप्रकारकज्ञानाभावात्तत्रेयं न प्रवर्तते। अत्र मानं च 'मय उञो वो वे'त्यनेन वकारविधानमेव। तस्यास्त्रिपाद्यां विधानं वत्वस्यासिद्धत्वानुस्वाराभावार्थम्। अस्याः त्रिपाद्यां प्रवृत्तौ तु तयैवानुस्वारवारणे 'इको यणची'त्युत्तरं 'मय उञो वो वे'ति पाठेन यणोऽनुवृत्त्या चेष्टसिद्धौ तद्वैयर्थ्यं स्पष्टमेव। अत एव च 'नर्तिष्यती'त्यत्रेटः सकारनिमित्तकत्वेऽपि षत्वम्, 'धुक्षीष्टे'त्यत्र घत्वस्य दादित्वनिमित्तकत्वेऽपि भष्भावः, 'जग्धमि'त्यत्र जग्धादेशस्य तकारनिमित्तत्वेऽपि धत्वम्, 'द्रक्ष्यती'त्यत्र 'षढोरि'ति कत्वस्य सकारनिमित्तत्वेऽपि षत्वम्, 'सञ्च्छम्भुरि'त्यत्र तुकः शकारनिमित्तकत्वेऽपि 'शश्छोऽटी'ति छत्वं चेत्यादि सिद्ध्यतीति भावः।

स्वप्रवृत्तेः प्रागिति। अत्र तद्विघातकेति कान्तपाठस्त्वयुक्तः, किन्तु तद्विघातस्येति षष्ठ्यन्तपाठ एव युक्तः; अन्यथाऽनन्वयापत्तेः। स्वातिरिक्तशास्त्रस्य='सुपि चे'त्याद्यतिरिक्तस्य 'ङेर्य' इत्यादिशास्त्रस्य। स्वप्रवृत्तेः प्राक्='सुपि चे'त्यादिप्रवृत्तेः प्राक्। स्वनिमित्तभूतः='सुपि चे'त्यादिशास्त्रनिमित्तभूतः। तथा च स्वनिमित्तभूतः सन्निपातः स्वनिमित्तभूतसन्निपातसम्पादकस्य स्वातिरिक्तशास्त्रस्य निमित्तभूतः सन्निपातश्चेत्युभयविधोऽपि गृह्यते इति सूचितम्। एतदुभयविधसन्निपातसङ्ग्रहायैव 'स्वप्रवृत्तेः प्राक् स्वनिमित्तभूत' इत्युभयोपादानम्। एतद्ग्रन्थबोधितसङ्कोचप्रकारः प्राक् प्रदर्शित एवेति बोध्यम्।

वस्तुतस्तद्विघातस्य जायमानत्वेनैतत्प्रवृत्तेः । किञ्च अन्तरङ्गे कर्तव्ये बहिरङ्गस्यासिद्धत्वेऽपि तत्र कृते तस्यासिद्धत्वे मानाभावः । किञ्चातिदेशिकसन्निपातविघाताभावमादायैतत्प्रवृत्तौ 'गौरी'त्यादौ सम्बुद्धिलोपेऽपि स्थानिवत्त्वेन ह्रस्वनिमित्तसन्निपातविघाताभावात् तत्रैतस्यातिव्याप्तिपर'कृन्मेजन्त' इति सूत्रस्थभाष्यासङ्गतिः । सन्निपातस्याशास्त्रीयत्वान्नात्र स्थानिवत्त्वमिति चेत् ; तर्ह्यत्रासिद्धत्वमपि कथमिति विभावय, अशास्त्रीयेऽसिद्धत्वाप्रवृत्तेः 'ईदूदेदि'ति सूत्रे कैयटेन स्पष्टमुक्तत्वात् । एवञ्च पूर्वत्रासिद्धीयेऽपि कार्ये एतत्परिभाषाप्रवृत्तिर्भवत्येवेति चेन्न । 'कष्टाये'ति निर्देशेनैतस्या अनित्यत्वात् ।

ययोः सन्निपातस्य विघातकं शास्त्रं तयोः सन्निपातनिमित्तकविधावुपादानमपेक्षितमिति तु नाऽऽग्रहः । अत एव 'दाक्षिरि'त्यत्राकारान्तप्रकृतीञ्सन्निपातनिमित्ताङ्गसंज्ञाऽनया परिभाषयाऽल्लोपस्य निमित्तं न स्यादित्याशङ्क्य अनित्यत्वेन समाहितं 'कृन्मेजन्त' इति सूत्रे भाष्ये, "न ह्यङ्गसंज्ञायामदन्तस्याङ्गसंज्ञे"त्युक्तमस्ति ।

न च 'कुम्भकारेभ्य, आधय' इत्यादावव्ययसंज्ञाया अनया परिभाषया वारणपरभाष्यासङ्गतिः, अनया परिभाषया लुग्मा भूत् , अव्ययत्वं तु स्यादेव, लुका हि तदीयसन्निपातस्य विघातो नाव्ययसंज्ञया, संज्ञाफलं त्वकच् स्यादिति वाच्यम् ; एतदुदाहरणपरभाष्यप्रामाण्येन साक्षात्परम्परया वा

---

वस्तुतस्तद्विघातेति । ननु शास्त्रप्रवृत्तौ निवृत्तौ च तद्बुद्धिरेव नियामिका, न तु वास्तविकी तत्सत्ता ; अन्यथा 'हर + एही'त्यत्र यलोपस्यासिद्धत्वेऽपि वृद्धिर्दुर्वारेत्यरुचेराह—किञ्चेति । ननु 'ङेयें' इत्यस्य प्रवृत्तेः प्रागेवाऽभ्यनुज्ञाकाले 'मत्सन्निपातविघातकः क' इति जिज्ञासायां 'सुपि चे'त्यस्योपस्थितत्या तस्य बहिरङ्गत्वमिति न तत्कृतं विघातं पश्येदित्यरुचेराह—किञ्चेति । अशास्त्रीयत्वादिति । वस्तुतः—अत्र प्रत्ययसत्ताबोधनमेवाऽऽवश्यकं, सन्निपातस्त्वार्थसमाजग्रस्त एवेति चिन्त्यमेतदिति केचित् ।

समाहितमिति । यद्यपीदं भाष्यमेकदेशि; तथाप्यत्रांशे मानं भवत्येवेति बोध्यम् ।

परम्परयेति । लुग्द्वारा एत्वनिमित्तविभक्तिनाशादित्यर्थः । नन्वेवं 'सत्यूखतुरि'त्यत्र सवर्णदीर्घानापत्तिः लिड्विघातकलुक्प्रयोजकामुसम्पादकगुरुमत्त्वसम्पादकत्वेन दीर्घस्य परम्परया द्वित्वोपजीव्यलिड्विघातकत्वादिति चेन्न । विधिद्वयाघटितपरम्पराया एव ग्रहणेनादोषात् । अत्र चैतद्भाष्यमेव मानम् ।

स्वनिमित्तसन्निपातविघातविघातकस्य स्वयम[illegible]र्थ[illegible]षात् ।
एतेन—अत्राकच् स्यादित्यपास्तम् ।

न च कार्यकालपक्षे लुगे[illegible]ङ्कायामप्यकजेकवाक्यतापन्ना स्यादिति वाच्यम्; अन्तरङ्गायां तदेकवाक्यतापन्नसंज्ञायां बहिरङ्गगुणादेरसिद्धत्वात् । लुगेकवाक्यतापन्ना तु न, गुणादितोऽन्तरङ्गोभयोरपि शब्दतः सुबाश्रयत्वात् ।

'न यासयोरि'ति निर्देशाच्चैषाऽनित्या. तेन नातिप्रसङ्गः । स्पष्टा चेयं 'कृन्मेजन्त' इति सूत्रे भाष्ये ।

अस्या अनित्यत्वे फलानि भाष्ये परिगणितानि । वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तम्—'दाक्षिः' । आत्त्वं पुग्विधेः—'क्रापयति' । पुग् ह्रस्वस्य—'अदीदपत्' । त्यदाद्यकारष्टाब्विधेः—'यासे'ति । इड्विधिराकारलोपस्य—'पपिवान्' । 'ह्रस्वनुड्भ्यां मतुप्, अन्तोदात्तादुत्तरपदादि'ति मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्य—'अग्निमान्, परमवाचा' । नदीह्रस्वत्वं सम्बुद्धिलोपस्य—'नदि, कुमारी'त्यादि । यादेशो दीर्घत्वस्य—कष्टाय ।

इतोऽन्यत्र प्रवृत्तिरेव, 'दोषाः खल्वपि साकल्येन परिगणिता' इतिभाष्योक्तेरित्यन्यत्र विस्तरः ॥ ८६ ॥

---

अन्तरङ्गायामिति । अकचः स्वार्थिकत्वादिति भावः । शब्दत इति । अकच् तु सुबुत्पत्त्यनन्तरं प्रवर्तमानोऽपि न तथा सुबाश्रय इति भावः ।

पुग्विधेः क्रापयतीति । ननु 'आतिदेशिके'त्यत्र यदागमन्यायातिरिक्तत्वेन सङ्कोचः, अत एव 'साम आकमि'त्यत्र सुटस्त्वाकमोऽवयवत्वान्न सन्निपातविघात इत्युक्तं भाष्यशेखरयोः; किं चाऽऽतिदेशिकसन्निपातविघाताभावेऽप्येषा प्रवर्तते इत्यत्र बीजं हि अतिदेशेन तत्त्वबुद्धावपि अतिदेशप्रवृत्तेः पूर्वक्षणेषु विघातोऽस्त्येवेति, तच्च यदागमन्यायविषये नास्ति, विधानकाल एव अवयवत्वेन बोधनात् । एवं च न 'क्रापयती'त्यत्रानित्यत्वफलमिति चेन्न । 'क्रीङ्जीनामि'त्यनेन णिजव्यवहितपूर्ववर्तिनिर्दिश्यमानावयवैच आत्त्वविधानेन पुकि सति निर्दिश्यमानत्वविघाते नानित्यत्वस्याऽऽवश्यकत्वात् । यदागमन्यायेन निर्दिश्यमानत्वं तु न; 'अपिबदि'त्यत्रापि अडागमसहितस्य पिबादेशापत्तेरित्युक्तमधस्तात् । अग्निमानिति । अन्तोदात्तत्वमुपजीव्य जायमानेन मतुबुदात्तत्वेन शेषनिघातद्वारा तद्विघातः स्पष्ट एवेति बोध्यम् ।

इतोऽन्यत्रेति । एतदुदाहरणात् 'एचोऽयवायाव' इत्यादिनिर्देशाच्च सन्धिकार्येऽप्येषा न प्रवर्तते । तत्राऽऽत्त्वमुपजीव्य जायमानेनोत्वेन गुणद्वारा तद्विघातः स्पष्ट एव । अत एव 'गवाग्रमि'त्यादिसिद्धिः ॥ ८६ ॥

ननु 'पञ्चेन्द्राण्यो देवता अस्य, पञ्चेन्द्र' इत्यादौ 'द्विगोर्लुगि'त्यणो लुकि 'लुक् तद्धित' इति स्त्रीप्रत्ययलुक्यानुकः अद[illegible] आह—

**सन्नियोगशिष्टानामन्यतरापाय उभयोरप्यपायः ॥ ८७ ॥**

अत्र च 'बिल्वकादिभ्यश्छस्य लुगि'ति सूत्रस्थं छग्रहणं ज्ञापकम् । तद्धि

---

सन्नियोगशिष्टानामिति । 'सन्नियोगशिष्टौ च सन्नियोगशिष्टौ च सन्नियोगशिष्टौ च सन्नियोगशिष्टाः; अन्यतरश्चान्यतरश्चान्यतरश्च अन्यतरे तेषामपाये' इति च विग्रहः ; अत एव बहुवचनोपपत्तिरिति—केचित् ।

परे तु—द्वित्वविशिष्टसन्नियोगशिष्टत्वावच्छिन्नबोधकतया सन्नियोगशिष्टपदस्य बहुवचनान्तत्वोपपत्तिः । एकशेषेण तु न निर्वाहः; यावतामेकशेषः क्रियेत तावतां ग्रहणेऽपि अवशिष्टानामग्रहणप्रसङ्गात्, विवक्षितसंख्याज्ञानं च दुर्लभ'मुभयोरि'त्यत्र 'उभयेषामि'त्यापत्तिश्चेत्याहुः ।

---

अन्यतरसमभिव्याहारे सन्नियोगशिष्टानामिति बहुवचनमनुपपन्नमत आह—**सन्नियोगशिष्टौ चेति** ।

**परे त्विति** । सन्नियोगशिष्टत्वम्—समुच्चयेन विहितत्वं द्वयोर्द्वयोरेव दृष्टमिति प्रत्येकं बोधकवत् सन्नियोगशिष्टत्वेन उभयबोधकतात्पर्येण एकशेषमन्तराऽपि सन्नियोगशिष्टपदप्रयोगो भवितुमर्हति, अन्यतरपदसमभिव्याहाररूपतात्पर्यग्राहकवशात्, 'घटौ' इतिवत् । तदुक्तं सरूपसूत्रभाष्ये—"अर्थौ अर्थौ प्रति च यत् तदपि प्रत्यर्थम्, अर्थान् अर्थान् प्रति च यत् तदपि प्रत्यर्थमेव" इति; तदाऽऽह—**द्वित्वविशिष्टेति** ।

ननु द्वित्वस्य द्वित्वत्वेन शक्यतावच्छेदककोटौ प्रवेशे नित्यद्विवचनान्तप्रयोगोपपत्तिः, ताभ्यां सन्नियोगशिष्टो 'ङीप् च' इति एकवचनान्तप्रयोगानुपपत्तिश्च; लक्षणया तथाबोधनसम्भवेऽपि सामान्यतो द्वित्वत्वेन द्वित्वप्रवेशे अनभीप्सितद्वित्ववतामपि बोधप्रसङ्गः ; तत्तद्द्वित्वत्वेन द्वित्वप्रवेशे तु विवक्षितानां तावतां ज्ञानं दुर्लभं स्यादिति चेत्सत्यम् । वस्तुतो द्वित्वविशिष्टस्य सन्नियोगशिष्टत्वेन बोधकमिति तदर्थात् । एतेन—सन्नियोगशिष्टपदं द्वित्वविशिष्टसन्नियोगशिष्टत्वावच्छिन्नबोधकमित्ययुक्तमेव, ताभ्यां सन्नियोगशिष्टो 'ङीप् चे'ति दीक्षितोक्त्या द्वित्वस्य सन्नियोगशिष्टपदप्रवृत्तिनिमित्तकोटावप्रवेशादिति कैश्चिदुक्तं तत्परास्तम् । उभयात्मकाश्च यावन्तो सन्नियोगशिष्टाः तेषां बहुत्वाद् बहुवचनान्तोपपत्तिः । अत एव एकशेषेण न निर्वाहः, प्रत्यर्थशब्दनिवेश इति पक्षे हि एकशेषारम्भात् ; तदेतदाह—**एकशेषेण तु नेत्यादि** ।

**अवशिष्टानामग्रहणप्रसङ्गादिति** । यत्तु—अष्टाध्याय्यां यावन्तः सन्नियोगशिष्टास्तेषां सर्वेषामेकशेषकरणेन अवशिष्टाभाव एव इति । तन्न; तावतां सन्नियोगशिष्टानामस्माकमेकशेषप्रवृत्तिकाले ज्ञानासम्भवात् । आचार्याणां तज्ज्ञानसम्भवेऽपि अस्मदुद्देशेन तेषां शास्त्रप्रवृत्तेः अस्माकं तज्ज्ञानस्य तदानीमसत्त्वेन वाक्यार्थबोधविलयप्रसङ्गात् । कथञ्चित् तत्सम्भवेऽपि तावतामेकशेषकरणे गौरवापाताच्च ।

इत्यनेन लुग्बोधनद्वारा कुकोऽनिवृत्तिर्यथा स्यादित्यर्थम्। कृतकुगागमा नडा-

---

समुच्चयेन विशिष्टस्य [illegible] सम्भाविते तदुभयोरप्यनुत्पत्तिः कर्तव्येति परिभाषार्थः। यथाश्रुते तु न सम्यक्; एकस्यापाये उभयस्याभावात्।

वस्तुतः—एकतरत्वे उभयाभावबुद्धावपि 'एकस्मिन्नष्टे उभयं नष्टमि'ति व्यवहारस्य लोके अनुभवेन यथाश्रुतार्थेऽपि दोषविरहः।

अत्र केचित्—इयं परिभाषा धर्मिग्राहकमानाल्लुग्विषया, तेन 'फौल्लिरि'त्यत्रोकारनाशेऽपि न लत्वस्य निवृत्तिः। 'खेयमि'त्यत्रेकारनिवृत्तावपि क्यपो न निवृत्तिः। 'तार्तीयीक' इत्यत्र सम्प्रसारणनाशेऽपि न प्रत्ययनाश इति वदन्ति। तन्न युक्तम्; वातातीसाराभ्यामिति निष्पन्नवातकिशब्दादपत्येऽणि टिलोपे कुको निवृत्त्यभावापत्त्या 'वात' इति रूपासिद्धिप्रसङ्गात्। लुगितरत्र प्रवृत्तिस्वीकारादेव 'चैनेय' इत्यत्रैतत्परिभाषाप्रयोज्यनकारनिवृत्त्यभावाय पूर्वस्य स्थितौ स्थानिवद्भावाश्रयणमनायोक्तं सङ्गच्छते। अस्याः परिभाषायाश्चान्यतरस्य प्रधानस्य निवृत्तौ तदितरस्याप्रधानस्य निवृत्तिरित्यर्थ आश्रीयते, तेन 'फौल्लिरि'त्यत्र निष्ठादेशप्रकरणे लत्वस्यैव प्राधान्यादुत्वस्याप्रधानत्वेन तन्निवृत्तावपि न लत्वनिवृत्तिः। एवमन्यत्र प्रत्ययविधानप्रकरणेनेत्वसम्प्रसारणयोरप्राधान्यान्न तन्निवृत्तावनया प्रत्ययनिवृत्त्यापत्तिः। एवं 'चैनेय' इत्यत्र च ङीप एव प्राधान्यात्तन्निवृत्तौ प्राप्तनकारनिवृत्त्यभावार्थं स्थानिवत्त्वमप्यावश्यकमिति दिक्।

केचित्तु—'अचः परस्मिन्नि'ति सूत्रे भावसाधनविधिशब्दान्तपूर्वविधिशब्देऽप्यविशेषात् पञ्चमीसमासाश्रयणेन 'फौल्लिरि'त्यादावपि पूर्वत्वेन दृष्टात् फकारादेः परस्य लकारादेः स्थितौ कर्तव्यायां स्थानिवद्भावेनान्यतरापायाभावेन लकारादेरनिवृत्तिः सुलभा। न च पञ्चमीसमासपक्षेऽव्यवहितपरस्यैव ग्रहणम्, अत एव 'हे गौरि'त्यत्र सुलोपो नेति प्रकृते तदसम्भव इति वाच्यम्; 'हे गौरि'त्यत्र पञ्चमीसमासप्रयुक्तस्थानिवद्भावस्य अनित्यत्वेनाप्रवृत्तावपि इष्टप्रयोगे तदप्रवृत्तिकल्पने मानाभावादिति वदन्ति।

यथा स्यादिति। एतत्परिभाषाभावे च कुको निवृत्तेरप्राप्तौ तद्वैयर्थ्यं स्पष्टमेवेति भावः। कृतकुगागमा इति। व्याख्यानादिति भावः, तेन कप्रत्ययान्तबिल्वक-

---

सम्भावित इति। अन्यथा 'पञ्चभिरेनीभिः क्रीत, पञ्चैत' इत्यत्र नकारापायेऽपि तकारश्रवणं न स्यात्; 'देवदत्तहन्तृहत'न्यायेन। स्थानिनिवृत्त्यादेशस्थित्योरित्यर्थं उभयोरित्यस्य इति परे।

रूपासिद्धिप्रसङ्गादिति। ननु इष्टापत्तिरेवेति चेदाह—लुगितरत्रेति।

इति दिगिति। नन्वेवमन्यतरस्य अप्रधानत्वेऽन्वाचयशिष्टत्वं स्यात्, न तु समुच्चयशिष्टत्वमित्यस्वरस इति समाधानान्तरमाह—केचित्त्विति।

व्याख्यानादितीति। 'बिल्वकादिभ्यः' इति गणेन निर्देशसामर्थ्यादित्यर्थः। न हि कप्रत्ययान्ताः क्वचित् पठ्यमानाः दृश्यन्ते, आदिशब्दस्य प्रकारवाचित्वे तु छग्रहणज्ञापकपरं भाष्यं विरुद्ध्येतेति भावः।

द्यन्तर्गता बिल्वादय एव तत्र निर्दिष्टा बिल्वकादिशब्देन ।

न चैवमपि छग्रहणं व्यर्थं, कुनकुगागमानुवादसामर्थ्यादेव तदनिवृत्तिसिद्धेः; अन्यथा बिल्वादिभ्य इत्येव वदेत्, 'लक्षणप्रतिपदोक्त'परिभाषया बिल्वादिपुरस्कारेण विहितप्रत्ययस्यैव लुग्विधानान्नातिप्रसङ्ग इति वाच्यम्, ततोऽपि प्रतिपदोक्तत्वेन 'बिल्वादिभ्योऽण्' इति विकाराद्यर्थस्य लुगापत्तिवारणार्थं कुगनुवादचारितार्थ्यात् । समुच्चयार्थकचशब्दयोगे तु विधेययोरेककालिकत्वैकदेशत्वनियमात् न्यायसिद्धाऽपीयम् ।

यत्तु—'णाविष्ठवदि'त्यनेन पुंवत्त्वविधानमेतदनित्यत्वज्ञापनार्थम्, अन्यथा 'एतयती'त्यादौ टिलोपेनैव ङीपि निवृत्ते 'सन्नियोगशिष्ट'परिभाषया नस्यापि निवृत्त्या 'एतयती'त्यादिसिद्धौ पुंवत्त्ववैयर्थ्यं स्पष्टमेवेति 'टेरि'ति सूत्रे कैयटः । तन्न; 'इडविडमाचष्ट, ऐडविडयती'त्यादौ पुंवत्त्वस्याऽऽवश्यकत्वात् । 'ऐनेयः,

---

शब्दप्रकृतिकस्य च्छप्रत्ययेतरस्य लुगभावार्थं छग्रहणमिति नाऽऽशङ्कनीयमिति बोध्यम् ।

लक्षणप्रतिपदोक्तपरिभाषयेति । नडाद्यन्तर्गतानां बिल्वादीनां तत्तच्छब्दत्वेन ज्ञानादिति भावः । ततोऽपि प्रतिपदोक्तत्वेनेति । गणज्ञानानपेक्षत्वेन ततोऽपि शीघ्रोपस्थितिकत्वेनेत्यर्थः । कुगनुवादचारितार्थ्यादिति । न च 'बिल्वादिभ्यश्छस्य लुगि'ति वक्तव्ये 'बिल्वकादिभ्य' इति कृतकुगागमानुवादसामर्थ्यादेव न कुको निवृत्तिरिति वाच्यम्; तृणवेतसशब्दयोर्नडादिगहाद्युत्करादिषु पाठेन कुगनुवादाभावे तद्विहितच्छस्यापि लुगापत्तेः ।

ऐडविडयतीति । एवं 'दरदमाचष्टे, दारदयती'त्यत्र बोध्यम् । दारदशब्दादैडविडशब्दात् 'तद्राजप्रत्ययस्य, अतश्चे'ति स्त्रियां लुकि ततो णिचि स्थानिवद्भाव-

---

नाशङ्कनीयमिति । नन्वेवमपि बिल्वकीयशब्दादणि छस्य लुकि अणन्तादिदमर्थे 'वृद्धाच्छः' इति छप्रत्यये अणो लुक् प्रसज्येत इति छग्रहणं चरितार्थम् । न च अणो लोपे लुकि वाऽविशेष इति वाच्यम्; 'न लुमते'ति प्रतिषेधेन वृद्धत्वाभावप्रसङ्गादिति चेन्न । बिल्वकादिभ्यो विहित इत्यर्थकरणेन अदोषात् । न चैवमपि कुक्सन्नियोगेन प्रत्ययविधानात् बिल्वकादिभ्यो विहितत्वं नास्तीति वाच्यम्; भाविकुगागमेभ्यो बिल्वकादिभ्यो विहित इत्यर्थकरणेन अदोषात् । स्पष्टञ्चेदं भाष्यकैयटयोः ।

मूले—नातिप्रसङ्ग इति । बिल्वशब्दात् मतुपि ततो भावार्थकत्वप्रत्यये परतो मतुपो लुगापत्तिरूपादिप्रसङ्गो नेत्यर्थः ।

अनित्यत्वफलमन्यथयति, मूले—ऐनेय इति ।

स्थानिवद्भावविषयाभावेनेति । लुकि न स्थानिवदिति निषेधादित्यर्थः ।

श्यैनेय' इत्यादि तु स्थानिवत्त्वेन सिद्धमित्यन्यत्र विस्तरः ॥ ८७ ॥

ननु 'चुरा शीलमस्याः सा, चौरी'त्यादौ 'शीलं, छत्रादिभ्यो ण' इति णे ङीप् न प्राप्नोतीत्यत आह—

## ताच्छीलिके णेऽण्कृतानि ॥ ८८ ॥

'अन्' इत्यणि विहितप्रकृतिभावबाधनार्थं 'कार्मस्ताच्छील्ये' इति निपातनमस्या ज्ञापकम् ।

ताच्छीलिकणान्ता'दगो द्व्यच' इति फिञ्सिद्धिरप्यस्याः प्रयोजनमिति नव्याः ।

ताच्छीलिक इत्युक्ते'स्तदस्यां प्रहरणमि'ति णे 'दाण्डे'त्येव । 'कार्म' इति सूत्रे भाष्ये स्पष्टा ॥ ८८ ॥

ननु 'कंसपरिमृड्भ्यामि'त्यादौ मृजेर्वृद्धिर्दुर्वारेत्यत आह—

## धातोः कार्यमुच्यमानं तत्प्रत्यये भवति ॥ ८९ ॥

'भ्रौणहत्ये' तत्त्वनिपातनमस्या ज्ञापकम् । 'धातोः स्वरूपग्रहणे तत्प्रत्यये

---

विषयाभवेन प्रत्ययसत्तार्थं पुंवद्भावावश्यकत्वम् । सति तु तस्मिन् स्त्रीत्वप्रयुक्तलुको निवृत्त्या तद्धितनिमित्तकाऽऽदिवृद्ध्यादिसिद्धिरिति भावः ।

केचित्तु—सन्नियोगशिष्टन्यायेन निवृत्त्यभावरूपपूर्वविधिसत्त्वेन एकेनैवोभयार्थसिद्ध्या न तन्त्रस्याऽऽवश्यकत्वमिति वदन्ति ॥ ८७ ॥

शीलमिति । शीलमित्यनुवर्तमाने इत्यर्थः ।

अण्कृतानीति बहुवचनफलमाह—ताच्छीलिकेति ।

नव्या इति । तथा चैतद्भाष्याननुगृहीतं फलमित्यस्वरसः । 'छत्रादिभ्योऽणि'ति वक्तव्ये णग्रहणादेषाऽनित्या, तेन 'च्छात्रे'त्यत्र न ङीबिति बोध्यम् ॥ ८८ ॥

तत्प्रत्यय इति । धातुत्वावच्छिन्नोद्देश्यताके प्रत्यय इत्यर्थः ।

तत्त्वनिपातनमिति । न च कुत्वाभावार्थं निपातनावश्यकत्वेन ज्ञापकत्वासम्भव इति वाच्यम् ; 'हो हन्तेरि'त्यत्र णित्साहचर्यान् ञितोऽपि व्यन्तिरिक्तस्य ग्रहणेन

---

मूले—स्थानिवत्त्वेनेति । एतेन 'भस्याढे तद्धिते' इत्यत्राऽऽढे इति निषेध एव अनित्यत्वे मानमिति केषाञ्चिन्मतं परास्तम् ॥ ८७ ॥

कार्यविज्ञानमि’ति पाठस्तु ‘प्रसृड्भिरि’त्यादौ ‘अनुदात्तस्य चर्दुपधस्ये’त्यमापादनेन भाष्ये दूषितः ।

यत्कार्यं प्रत्ययनिमित्तं तत्रेयं व्यवस्थापिका, तेन पदान्तत्वनिबन्धनं ‘नशेर्वे’ति कुत्वं ‘प्रणड्भ्यामि’त्यादौ भवत्येव । इयङादिविधौ तु नैषा, ‘न भूसुधियोरि’ति निषेधेनानित्यत्वात् । ‘मृजेर्वृद्धिरि’त्यत्र भाष्ये स्पष्टा ॥८९॥

---

कुत्वाभावस्य सुवचत्वेन ज्ञापकत्वस्य सुस्थत्वात् । पाणिनितात्पर्यविषयीभूततत्त्वविधानस्य वैयर्थ्येनोक्तपरिभाषानुमानमित्याशयात् । अत एव भाष्यकृता “अत्र तत्त्वं निपात्यत” इति व्याख्यातम् । एतेन—टिलोपाभावार्थं निपातनावश्यकत्वेन ज्ञापकत्वासम्भव इति परास्तम् ।

प्रत्ययनिमित्तमिति । इयं च धर्मिग्राहकमानेन प्रत्ययत्वव्याप्यधर्मावच्छिन्नोद्देश्यताके विधावेव प्रवर्तते इति भावः ।

वस्तुतः—इयमुक्तिर्निष्फला, ‘नशेर्वे’त्यत्र तत्प्रवृत्तावपि ‘प्रणड्भ्यामि’त्यादौ धातूद्देश्यकक्विप्प्रत्ययपरकत्वस्य सत्त्वेन कुत्वप्रवृत्तौ बाधकाभावात् । न चैवं ‘वचिस्वपी’त्यस्य प्रत्ययनिमित्तकत्वाभावेऽपि अनया धातूद्देश्यकप्रत्ययनिमित्तकत्वापत्त्या वेञो विजन्तात् क्यचि सम्प्रसारणानापत्तिरिति वाच्यम्, इष्टापत्तेः । अत एव भाष्ये “उच्चारणसामर्थ्यात् काम्यचः ककारस्य नेत्वमि”त्युक्तम्; अन्यथा वेञो विजन्तात्काम्यचि सम्प्रसारणार्थं कित्त्वस्याऽऽवश्यकत्वेन तदसङ्गतिः स्पष्टैव । न चैवं किति धातौ सम्प्रसारणवारणाय ‘वच्यादिभ्यो विहिते किती’ति विहितविशेषणवैयर्थ्यापत्तिः, एनया तत्प्रत्यये सम्प्रसारणविधानेन किति धातौ तदप्राप्तेरिति वाच्यम्; अशब्दादाचारक्विबन्ताद् घञर्थे के विजन्तवच्यादेः पूर्वं प्रयोगे सम्प्रसारणव्यावृत्तये विहितविशेषणसार्थक्यस्य सुवचत्वात् । तत्रोक्तपरिभाषया तु न निर्वाहः, कस्य धातूद्देश्यकत्वादित्यन्यत्र विस्तरः ।

अनित्यत्वादिति । वस्तुतस्तु—ज्ञापकसाजात्याद्धातुत्वेतरधातुत्वव्याप्यधर्मावच्छिन्नबोधकपदोपादाने एवैतत्परिभाषाप्रवृत्तिस्वीकारेणेयङादिविधौ तदप्रवृत्त्याऽनित्यत्वस्य नोपयोगः । ‘सृजिदृशोरि’त्यत्रैतत्परिभाषाप्रवृत्तेर्निर्विवादतया तत्प्रत्यये इत्यस्य सम्बन्धादर्थाधिकारानुरोधेन ‘अनुदात्तस्य चर्दुपधस्ये’त्यत्रापि तद्ग्रहणेन ‘प्रसृड्भिरि’त्यत्रोक्तदोषानवकाश इति दिक् ॥ ८९ ॥

---

ज्ञापकस्य सुस्थत्वादिति । वस्तुतस्तु—“निपातनानि अनेकप्रयोजनकानि भवन्ति’ इति कुत्वाभावोऽपि निपात्यतां परं तत्त्वं निपात्यते” इति भाष्यकृद्व्याख्यानतो गृहीतपाणिनितात्पर्यविषयस्य तत्त्वविधानस्य वैयर्थ्यमेवेत्याशयेनाह—पाणिनीति ।

टिलोपाभावार्थमिति । वस्तुतस्तु—द्वयोरप्यनित्ययोः परत्वात् तत्त्वमेव प्राप्नोति ।

प्रत्ययत्वव्याप्यधर्मावच्छिन्नोद्देश्यताक इति । निमित्तताके इत्यर्थः ॥ ८९ ॥

ननु 'सर्वके, उच्चकैरि'त्यादौ सर्वनामाव्ययसंज्ञे न स्यातामत आह—

**तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ॥ ९० ॥**

'नेदमदसोरकोरि'ति सूत्रे 'अकोरि'ति निषेधोऽस्या ज्ञापकः। 'तदेकदेशभूतं

---

सर्वके उच्चकैरिति। ननु 'जसः शी, अव्ययादाप्सुप' इत्यत्र विहितविशेषणसत्त्वान्नात्र दोप इति चेन्न। विहितपदार्थस्य सर्वनामाद्यभिन्नतदाद्यवधिकपररूपतयाऽकच्त्रिशिष्टस्य तदादित्वाभावेनोक्तदोषस्य सुवचत्वात्।

तन्मध्यपतित इति। तत्त्वं च निर्दिश्यमानपरिभाषायां प्राङ् निरूपितमेव; 'गङ्गां प्रविष्टानेका नदी गङ्गाग्रहणेन गृह्यते, देवदत्तास्थो गर्भो देवदत्ताग्रहणेन गृह्यते' इति लोकन्यायेनायमर्थो न सिद्ध्यति सर्वनामत्वादेरुपसर्गत्वादिवदक्तपरिमाणत्वेन न्यूनेऽधिके वा शास्त्रव्यापारमन्तरा तत्त्वबुद्धेरसम्भवाद् ज्ञापकसाध्य एवायमर्थ इति 'येन विधिरि'ति सूत्रे भाष्ये स्पष्टमतो ज्ञापकमाह—नेदमदस इति। इदम् 'एतत्तदोरि'ति सूत्रस्थस्य अकोरित्यस्योपलक्षणम्, 'नेदमदसोरि'ति सूत्रे भाष्ये 'इदमदसोः कात्' इति न्यस्यातो भिस इति सिद्धे इदमदसोर्भिस ऐस्स्यात्तर्हि कादेवेति नियममाश्रित्याकोरित्यस्य प्रत्याख्यानात्। विप्रतिषेधसूत्रभाष्ये 'नेदमदस' इत्येतद्घटकस्याकोरित्यस्य एतत्परिभाषाज्ञापकत्वोपवर्णनं तु यथाश्रुतसूत्राभिप्रायेण सम्भवप्रदर्शनमात्रपरमिति बोध्यम्।

नन्वेवं निर्दिश्यमानपरिभाषायां तन्मध्यपतितत्वनिरूपणावसरे गङ्गानदीदृष्टान्ते उद्देश्यतादेरसम्भवेन तत्सिद्धैतन्न्यायेऽपि तत्प्रवेशस्यायुक्तत्वात् तत्परिष्कारे 'स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्व'रूपसम्बन्धमनिवेश्य तत्स्थाने 'स्वसत्तोत्तरसत्ताकत्व'रूपसम्बन्धनिवेशनं पूर्वोक्तमप्रामाणिकम्, 'येन विधिरि'ति सूत्रे भाष्ये 'विषम उपन्यास' इति ग्रन्थेन तन्मध्यपतितन्यायस्य गङ्गादिदृष्टान्तासिद्धित्व-

---

मूले—न स्यातामिति। अपाठादिति शेषः।

ननु 'सर्वके, उच्चकै.' इत्यादावकज्विशिष्टे सर्वनामाव्ययसंज्ञयोरभावेऽपि न दोषः, सुबन्तात् तद्धितोत्पत्तिरिति सिद्धान्तेन सुबुत्पत्त्यनन्तरमेव अकच्प्रवृत्त्या 'मासपूर्वाः, अस्युच्चैसौ' इत्यादौ शीलुकोर्वारणाय 'जशः' शी, अव्ययादाप् सुप.' इत्यादौ विहितविशेषणस्य आवश्यकत्वेन अव्ययसर्वनामविहितजस्सुपोः सत्वेनादोषादित्याशयेनाऽऽशङ्कते—नन्विति।

सुवचत्वादिति। न च 'सर्व+जस्' इत्यवस्थायामेव परत्वात् शीभावादिकार्यप्रवृत्त्युत्तरमकचि कृते अवतरणासङ्गतिरिति वाच्यम्; 'अन्तरङ्गानपि०' इति न्यायेन शीभावादिकं बाधितत्वात् पूर्वमकचि 'यस्मात् प्रत्ययविधिरि'त्युक्तेः अप्रत्यय इति निषेधाप्राप्त्या जसन्तस्य प्रातिपदिकसंज्ञायां जसो लुकि पुनर्जसि अकज्विशिष्टस्य सर्वनामत्वाभावेन ततो विहितत्वाभावात् सर्वनामाभिन्नतदाद्यवधिकपरत्वाभावाच्च शीभावाप्राप्त्याऽवतरणसङ्गतेः सूपपादत्वात् ॥ ९० ॥

तद्ग्रहणेन गृह्यते' इति 'येन विधिरि'ति सूत्रे भाष्ये पाठः ॥ ९० ॥

ननु 'गातिस्थाघुपाभूभ्य' इति सिचो लुक् 'अपासीदि'त्यादौ पातेरपि स्यादत आह—

**लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ॥ ९१ ॥**

अस्याश्च ज्ञापकः 'स्वरतिसूती'ति सूत्रे सुङिति वक्तव्ये सूतिसूयत्योः पृथङ् निर्देश इति कैयटः । तन्न; साहचर्यादलुग्विकरणस्यैव ग्रहणे प्राप्ते पृथङ्-निर्देशस्य तज्ज्ञापकत्वासम्भवात् ।

ध्वनिता चेयं परिभाषा 'यस्य विभाषे'त्यत्र भाष्ये । तत्र हि विदित इति प्रयोगो निषेधमाशङ्क्य "यदुपाधेर्विभाषा तदुपादेर्निषेधो 'विभाषा गमहनविद्-विशामि'ति सूत्रे शविकरणस्य ग्रहणं लुग्विकरणश्चायमि"त्युक्तम् । तत्र चो हेतौ; यतोऽयं लुग्विकरणोऽतो विशिसाहचर्याच्छविकरणस्य ग्रहणं न तु हनिसाहचर्यादस्यापि, एतत्परिभाषाविरोधादिति तदाशयः ।

अत एव परिभाषायां लुग्विकरणस्यैवेति नोक्तम् । कण्ठतस्तु भाष्ये एषा क्वापि न पठिता । 'गातिस्थे'ति सूत्रे पिबतेर्ग्रहणं कर्तव्यमिति वार्तिककृता सर्वत्रैव पाग्रहणेऽलुग्विकरणस्य ग्रहणमिति भाष्यकृता चोक्तम् । 'स्वरतिसूति' इति सूत्रे कैयटेन च स्पष्टमुक्ता ॥ ९१ ॥

---

प्रतिपादनात् तद्बलेनोक्तार्थकल्पनाया असम्भवादिति चेन्न । भाष्यकृता लोक-न्यायस्याक्तपरिमाणधर्मानियनेऽसामर्थ्यप्रतिपादनेन परिभाषासिद्धयावदर्थासाध-कत्वबोधनेऽपि तद्भिन्नानामव्ययत्वादीनां लोकन्यायेनाऽऽनयनस्य भाष्यकाराभि-मततया निरुक्तसम्बन्धनिवेशनस्य सप्रमाणत्वादिति दिक् ॥ ९० ॥

साहचर्यादिति । पूर्वोत्तरयोरलुग्विकरणयोः स्वरतिधून्वोः साहचर्यादित्यर्थः ।

वस्तुतस्तु—स्वरतिधूर्न्वादित्सूङो वेति न्यासे साहचर्याश्रयणेऽपि दोषाभावे-नेष्टसिद्धेः कैयटोक्तमपि युक्तमेवेति बोध्यम् ।

ननु सूतिसूयत्योः पृथङ्निर्देशस्य लुग्विकरणस्यैव ग्रहणमिति विपरीतार्थ-ज्ञापनेऽपि चारितार्थ्यसम्भवात् त्वदुक्तस्यैवाऽऽचार्याभिप्रेतत्वमित्यत्र मानाभाव इत्यत आह—ध्वनितेति ।

अन्यतरार्थस्य तेन कल्पनसम्भवेऽपि भाष्यप्रामाण्यादुक्तार्थ एव पाणिन्यभिप्रेत इति भावः । तदेवाह—अत एवेति । पूर्वोक्तभाष्यसन्दर्भेण अलुग्विकरणस्यैव ग्रहण-मित्यर्थस्याभिप्रेतत्वादेवेत्यर्थः ॥ ९१ ॥

ननु 'प्रजिघाययिषती'त्यादौ 'हेरचङी'ति विधीयमानं कुत्वं न स्यादत आह—

## प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम् ॥ ९२ ॥

अचङीति प्रतिषेध एवास्या ज्ञापकः। इयं च कुत्वविषयैव। 'हेरचङी'ति सूत्रे भाष्ये स्पष्टेयम् ॥ ९२ ॥

ननु 'युष्मभ्यामि'त्यादौ 'भ्यस' इत्यत्र भ्यमिति च्छेदे भ्यसो भ्यमि कृते अन्त्यलोपे एत्वं स्यादत आह—

## अङ्गवृत्ते पुनर्वृत्तावविधिः ॥ ९३ ॥

अङ्गे = अङ्गाधिकारे, वृत्तं = निष्पन्नं, यत्कार्यं तस्मिन्सति पुनरन्यस्याङ्गकार्यस्य वृत्तौ = प्रवृत्तावविधानं भवतीत्यर्थः।

एषा च 'ज्यादादीयस' इत्याद्विधानेन ज्ञापिता; अन्यथेकारलोपेन 'अकृत्सार्वे'ति दीर्घेण च सिद्धे तद्वैयर्थ्यं स्पष्टमेव। अत एव भिन्नस्थानिकाङ्गकार्यविषयाऽप्येषा।

---

कुत्वं न स्यादिति। ननु 'हेरचङी'त्यस्य हिनोतेरभ्यासात्परस्य कुत्वमित्यर्थादुक्तरूपे तत्सत्त्वेन कुत्वं सुवचमिति चेन्न। 'वार्णा'परिभाषायां प्राक् प्रदर्शितरीत्या द्वित्वप्रयोजकप्रत्यये इत्यस्यात्र सूत्रे सम्बन्धेनोक्तरूपे णिचो व्यवधानात्तादृशप्रत्ययपरकत्वाभावेन कुत्वाप्राप्त्युद्भावनस्य युक्तत्वात्। अत एव च 'अचङी'ति सूत्रभाष्योक्तं तज्ज्ञापकं सङ्गच्छते।

कुत्वविषयैवेति। अत एव 'शाययती'त्यत्र 'अदिप्रभृतिभ्य' इति न शपो लुगिति भावः।

भाष्ये स्पष्टेयमिति। तत्र हि "हेश्चङि प्रतिषेधानर्थक्यमङ्गान्यत्वात्। ज्ञापकं तु चङोऽन्यत्र ण्यन्तेऽपि कुत्वभावस्ये"ति उक्तम् ॥ ९२ ॥

तद्वैयर्थ्यमिति। ननु ज्यायश्शब्दाण्ण्यन्तात्क्विपि णिलोपयलोपयोः पुनस्तस्माण्णिजन्तात्क्विपि पुकि सम्पन्नाद् ज्याप्शब्दादीयसुनि 'ज्यापायानि'ति सिद्ध्यर्थमाकारविधानं चरितार्थमिति चेन्न। ज्ञापकपरोक्तभाष्यप्रामाण्येनैषामनभिधानात्, णिलोपस्य स्थानिवत्त्वेन तदप्राप्तेश्चेति बोध्यम्। अत एवेति। आद्ग्रहणज्ञापितत्वेन तत्साजात्यादित्यर्थः।

नन्वेतत्परिभाषासत्त्वे 'येषामि'त्यादौ त्यदाद्यत्वोत्तरं 'बहुवचने' इत्येत्वाना-

इयं चानित्या, द्वयोरिति निर्देशात् । अनित्यत्वबललभ्यार्थमादायैव 'भ्यसोऽभ्यमि'ति सूत्रे भाष्ये निष्ठितस्येति पठितम् ।

केचित्तु—अनया परिभाषया न किञ्चिल्लक्ष्यं साध्यते । अत एव 'ज्ञाजनोर्जा, ज्यादादीयस' इति सूत्रयोरेनां ज्ञापयित्वा किं प्रयोजनमिति प्रश्ने पिबतेर्गुणप्रतिषेध उक्तः स न वक्तव्य इत्येव प्रयोजनमुक्तम्, न तु लक्ष्यसिद्धिरूपम् । तदुक्तम्—'भ्यसोऽभ्यमि'त्यत्राभ्यमिति च्छेदः शेषे लोपश्चान्त्यलोप एव 'अतो गुणे' इति पररूपेण सिद्धं 'युष्मभ्यमि'त्यन्यत्र निरूपितम् । एवञ्च सूत्रद्वयस्थमेतज्ज्ञापनपरं भाष्यं 'भ्यसोऽभ्यमि'ति सूत्रस्थं च भाष्यमेकदेश्युक्तिरित्याहुः ॥९३॥

यत्तु—'ओरोदि'ति वाच्ये 'ओर्गुण' इति गुणग्रहणात्—

## संज्ञापूर्वकविधेरनित्यत्वम् ॥ ९४ ॥

---

इयं च विधेयकोटौ संज्ञापूर्वकत्व एव, तेन 'स्वायम्भुवमि'त्यादि सिद्धम् । तथा निलोडित्येव सिद्ध आनिग्रहणात्—

## आगमशास्त्रमनित्यम् ॥ ९५ ॥

---

पत्तिरत आह—अनित्येति । निष्ठितस्येति । परिनिष्ठितस्येत्यर्थः । एवञ्च यत्राङ्गाधिकारीयकार्यप्रवृत्त्युत्तरं लक्ष्यस्य परिनिष्ठितत्वं सम्पद्यते, तत्र द्वितीयमङ्गाधिकारीयं कार्यं न प्रवर्तते । यत्र तु न तथा, तत्र पुनरङ्गाधिकारीयमपरं प्रवर्तते एव । परिनिष्ठितत्वज्ञानं च शिष्टप्रयोगादितो ज्ञेयमिति तदाशयः ।

प्रयोजनमुक्तमिति । तच्च पिबादेशस्याऽऽदन्तत्वादन्यथासिद्धमिति भावः । इत्यन्यत्रेति । इत्यादिरस्या विषयोऽन्यत्र शेखरे शब्दरत्ने च विस्तरेण निरूपित इत्यर्थः ॥ ९३ ॥

इयं चेति । यत्र शास्त्रे संज्ञाशब्दो विधेयताप्रयोजकस्तस्याऽनित्यत्वमित्यर्थः । धर्मिग्राहकमानसिद्धस्यार्थस्यास्वीकारे तु प्रायः शास्त्रमात्रस्य संज्ञापूर्वकत्वेनानित्यत्वस्वीकारेऽनिष्टप्रसङ्ग इति भावः । स्वायम्भुवमिति । अत्र संज्ञापूर्वकत्वेन गुणस्याप्रवृत्तेरुवङ् सिद्ध्यति ।

---

मूले—न तु लक्ष्यसिद्धिरूपमिति । 'युष्मभ्यम्, दवयति, स्रजयति' इत्यादिलक्ष्याणामन्यथासिद्धत्वादिति शेषः । तत्राऽऽद्यस्य सिद्धिप्रकारमाह—मूले—तदुक्तमिति । अस्या लक्ष्यासाधकत्वमित्यर्थः ॥ ९३ ॥

तेन सागरं तर्तुकामस्ये'त्यादि सिद्धम् ।

तथा तनादिपाठादेव सिद्धे 'तनादिकृञ्भ्य' इति सूत्रे कृञ्ग्रहणात्—

**गणकार्यमनित्यम् ॥ ९६ ॥**



तेन 'न विश्वसेदविश्वस्तमि'त्यादि सिद्धम् ।

तथा चक्षिङो ङित्करणात्—

**अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् ॥ ९७ ॥**



तेन 'स्फायन्निर्मोक' इत्यादि सिद्धम् ।

तथा विनार्थनञा समासेनानुदात्तं पदमनेकमित्येव सिद्धे वर्जग्रहणात्—

**नञ्घटितमनित्यम् ॥ ९८ ॥**



तेन 'नेयङुवङि'त्यस्यानित्यत्वात् 'हे सुभ्रु' इति सिद्धमिति ।

—तन्न ; भाष्येऽदर्शनात् । भाष्यानुक्तज्ञापितार्थस्य साधुतानियामकत्वे मानाभावात्, भाष्याविचारितप्रयोजनानां सौत्राक्षराणां पारायणादावदृष्टमात्रार्थकत्वकल्पनाया एवौचित्यात् ।

किञ्च ज्ञापितेऽप्यानीत्यस्य न सार्थक्यमाडागमशून्यप्रयोगस्याप्रसिद्धेः ।



तर्तुकामस्येति । अत्रेडभावसिद्धिरस्याः प्रयोजनम् ।

गणकार्यमिति । गणनिर्देशप्रयुक्तं कार्यमनित्यमित्यर्थः ।

विश्वसेदिति । अदादिगणप्रयुक्तश्लुकः प्रवृत्त्यभावः ।

स्फायन्निति । अत्र धातोरनुदात्तत्वेऽपि परस्मैपदशतृसिद्धिः ।

हे सुभ्रु इति । अत्रानित्यत्वेनोक्तनिषेधाप्राप्त्या नदीत्वेन 'अम्बार्थ' इति ह्रस्वसिद्धिः ।

अदर्शनादिति । ननु शिष्टप्रयोगसमर्थनाय तत्तत्पाणिनिप्रयासवैयर्थ्यान्यथानुपपत्त्यैतत्कल्पनेऽपि क्षतिविरह इत्यत आह—भाष्यानुक्तेति । तथा च महर्षेरज्ञानकल्पनापेक्षया शिष्टप्रयोगाणामसाधुत्वकल्पनमेव न्याय्यमिति भावः । नन्वेवं तत्तत्परिभाषाज्ञापकसूत्रकारप्रयत्नवैयर्थ्यमत आह—अदृष्टेति ।

आट्ग्रहणं तु लोड्ग्रहणवदिति बोध्यम् । अत एव 'घोर्लोपो लेटि वे'ति सूत्रे वेति प्रत्याख्यातम् । लोपेऽप्याट्पक्षे आटः श्रवणं भविष्यति—'दधादि'ति, अटि—'दधदि'ति । आगमशास्त्रस्याऽनित्यत्वे त्वाट्यसति 'दधादि'त्य-सिद्ध्या वाग्रहणस्याऽऽवश्यकत्वेन तत्प्रत्याख्यानासङ्गतिः स्पष्टैव ।

एतेन—यत्कैयटेन केचिदित्यादिनाऽस्यैव वाग्रहणस्य तदनित्यत्व-ज्ञापकतोक्ता साऽपि चिन्त्या; प्रत्याख्यानपरभाष्यविरोधात्, तनादिसूत्रे कृञ्-ग्रहणस्य भाष्ये प्रत्याख्यानाच्च, चक्षिङो ङकारस्यान्तेदित्त्वाभावसम्पाद-नेन चारितार्थ्याच्च ॥ ९४, ९५, ९६, ९७, ९८ ॥

---

लोड्ग्रहणवदिति । यथा त्वन्मते 'प्रत्ययाप्रत्यय'परिभाषयाऽऽनीत्यस्य प्रत्यय-स्यैव ग्रहणेन लोड्ग्रहणं व्यर्थं तथा मन्मते आड्ग्रहणमिति भावः । एतेन—आन-धातोः प्रपूर्वकात् कर्मणि लुङि चिणि 'प्रानी'त्यत्र णत्वाभावाय लोड्ग्रहणमाव-श्यकमित्यपास्तम् । अत एवेति । एतस्या अभावादेवेत्यर्थः । असङ्गतिरिति । ननु वाग्रहणसत्त्वेऽपि अटि 'दधदि'ति, आटि 'दधादि'ति परिभाषयाऽडाटोरभावे 'दधू' इति रूपत्रयं, वाग्रहणप्रत्याख्यानेऽप्युक्तरीत्या परिभाषावादिमते निरुक्तरूपत्रय-मेवेति कथं तदसङ्गतिरिति चेन्न । वाग्रहणसत्त्वे आटि 'अभ्यस्तानामि'त्यनेनाऽऽद्यु-दात्तं 'दधादि'ति, आडभावेऽजादिलसार्वधातुकपरत्वाभावेन 'अभ्यस्तानामि'त्यस्या-प्राप्त्या 'धातोरि'त्यन्तोदात्तं 'दधादि'त्येवमेकानुपूर्वीमद्रूपद्वयं भवति, प्रत्याख्याने तु लोपस्य नित्यत्वेनाऽऽडागमाभावे च 'दधादि'त्यन्तोदात्तद्वितीयरूपासम्भवेन एकमेवाऽऽडागमसहितमाद्युदात्तं 'दधादि'ति रूपमिति फलभेदस्य स्पष्टतया तदसङ्गतेः सुवचत्वात् । मन्मते तु आटो नित्यत्वेन सर्वदैव 'अभ्यस्तानामि'त्या-द्युदात्तप्राप्त्याऽन्तोदात्त-'दधादि'ति रूपासिद्ध्या फलभेदाभाव एव । न च लोपाभावपक्षे आडागमाभावेन 'अभ्यस्तानामि'त्यस्याप्राप्तावपि 'अविद्यमानोदात्ते लसार्वधातुके परेऽभ्यस्तानामादिरुदात्त' इत्यर्थकेन 'अनुदात्ते चे'त्यनेनाऽऽद्युदात्तसिद्ध्या तत्पक्षे-ऽपि रूपद्वयासत्त्वेन न फलभेद इति वाच्यम्; 'पर्युदास'न्यायनोदात्तघटितभिन्ने-ऽघटिते तत्प्रवृत्तेः स्वीकारादाडागमरहिते 'दधादि'ति रूपे तदप्राप्तेः 'दधातामि'-त्यादावुदात्ते परतो'ऽनुदात्ते चे'त्यस्याप्राप्त्याऽत्र फलभेदस्य दुर्वारत्वाच्चेति दिक् ।

अन्तेदित्त्वाभावसम्पादनेति । तदर्थमकारकरणे तु प्रागुक्तदूषणमेवेति बोध्यम् ॥ ९४, ९५, ९६, ९७, ९८ ॥

---

आटीति । लोपे सति असति वा इति शेषः । आडभाव इति । लोपाभावपक्षे इति शेषः । तत्पक्षेऽपीति । आरम्भपक्षेऽपीति तदर्थः । रूपद्वयासत्त्वेनेति । एकानुपूर्वीमदाद्यु-दात्तान्तोदात्तरूपद्वयाभावेनेत्यर्थः । आडागमरहित इति । तकारमात्रे परत इत्यर्थः ।

प्रागुक्तदूषणमेवेतीति । भाष्यादर्शनादित्यादिरूपमित्यर्थः । यत्तु—'एकोनषड्साधि-करण'न्यायेन अपाणिनीयत्वेन अदृष्टहानाच्च अकारः पाठ्य इति वक्तुमशक्यमिति काशिकाकाराः ।

एवमेव—

## आतिदेशिकमनित्यम् ॥ ९९ ॥

## सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान् ॥ १०० ॥

इत्यादि भाष्यानुक्तं बोध्यम् ।

'स्वायम्भुवमि'त्यादि लोकेऽसाध्वेवेत्यन्यत्र विस्तरः ॥९९,१००॥

यदपि—ननु हन्तेयङ्लुक्याशीर्लिङि वधादेशो न स्यादत आह—

---

आतिदेशिकमनित्यमिति । अत्र च 'लोटो लङ्वदि'त्यतिदेशो ज्ञापकः । अन्यथा ङ्लोडित्युक्तेऽपि ङित्कार्यनिर्वाहे तद्वैयर्थ्यापत्तिः । तेन 'जुह्वत्वि'त्यत्र 'सिजभ्यस्तै'ति जुस् नेति—प्राञ्चः ।

वस्तुतः—सिच्साहचर्यादभ्यस्तादप्यनतिदिष्टङित्त्ववतो लकारस्य स्थाने जायमानस्य झेर्जुसित्यर्थस्वीकारेणोक्तदोषाभावादेतस्या आनर्थक्यं भाष्यानुक्तत्वेनाप्रामाण्यं चेति भावः ।

लोपविधिरिति । अत्र ज्ञापकञ्च 'नाग्लोपी'त्यत्र प्रत्याहारग्रहणमिति—प्राञ्चः ।

वस्तुतः—तस्य वृद्धेर्लोपो बलीयानिति विशेषांशज्ञापकताया भाष्यकृतोक्तत्वेन सर्वविधिभ्यो लोपविधेर्बलवत्त्वे प्रमाणाभाव इति भावः ।

इड्विधिरिति । अत्र ज्ञापकं च 'नेड्वशी'त्यत इटोऽनुवृत्तौ पुन'रार्धधातुकस्ये'त्यत्रेड्ग्रहणमिति—प्राञ्चः ।

वस्तुतः—तस्य भाष्यकृता प्रत्याख्यातत्वात् अर्थान्तरसङ्ग्रहाय तदावश्यकत्वस्योपवर्णितत्वाच्चोक्तार्थज्ञापकत्वासम्भव इति बोध्यम् ।

लोकेऽसाध्वेवेति । वेदे तु तन्वादित्वादुवङ् सिद्ध्यति । एवं 'वृत्रं हनति, वृत्रहे'त्यत्र 'बहुलञ्छन्दसी'ति शपो लुगभावो बोध्यः ॥ ९९,१०० ॥

वधादेशो न स्यादिति । लिङ्प्रकृतेः समुदायस्य हन्त्वाभावादुत्तरखण्डस्य तदादित्वाभावान पूर्वखण्डस्य लिङ्परकत्वाभावादिति भावः ।

---

तन्न; तन्न्यायस्य ज्ञापकस्थले अप्रवृत्त्यङ्गीकारात् । तत्राधिकरणे सत्रयागे सर्वे एव यजमानास्तर्हि विरोधे आर्त्विज्यं बाध्येतेति ये यजमानास्ते ऋत्विज इति प्रत्यक्षविहितेन आर्त्विज्यस्यैव बलवत्त्वं याजमानस्य चोदकप्राप्तत्वादित्युक्तम्, एवमत्र प्रत्यक्षविहितेन इकारेण अकारोच्चारणं बाध्येत चेत्, ज्ञापकपरसकलभाष्योच्छेद एव प्रसज्येत । अत एव द्वितीयोऽपि न, सूत्रभेदं तमुपाचरन्तीत्यादिना 'अच उपसर्गात्तः' इति सूत्रभाष्येण तिरस्कृतत्वात् ॥ ९७ ॥

# प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ॥ १०१॥

षाष्ठद्वित्वस्य द्विप्रयोगत्वसिद्धान्तेन प्रयोगद्वयरूपे समुदाये प्रकृतिरूपत्व-बोधनेनेदं न्यायसिद्धम् । अत एव 'जुहुधी'त्यादौ द्वित्वे कृते धित्वसिद्धिरिति ।

—तदपि न; भाष्येऽदर्शनात् ।

किञ्च तेन सिद्धान्तेन प्रत्येकं द्वयोस्तत्त्वबोधनेऽपि समुदायस्य तत्त्वबोधने मानाभावः । अत एव 'दयतेर्दिगी'ति सूत्रेऽस्तेः परत्वाद् द्वित्वे कृते परस्यास्ते-र्भूभावे पूर्वस्य श्रवणं प्राप्नोतीत्याशङ्क्य विषयसप्तम्याश्रयणेन परिहृतं भाष्ये; अन्यथा त्वदुक्तरीत्यैकाज्द्विर्वचनन्यायेन समुदायस्यैवाऽऽदेशापत्तौ तदसङ्गतिः स्पष्टैव । तस्मादुत्तरखण्डमादायैव यथायोगं तत्तत्कार्यप्रवृत्तिर्बोध्या ।

'भूसुवोरि'त्यस्य तदन्ताङ्गस्येत्यर्थात् प्राप्तस्य गुणनिषेधस्य बोभूत्विति नियम इति न तद्विरोधः । तस्माद्धन्तेर्यङ्लुकि 'वध्यादि'त्यादि माधवाद्युदाहृतं चिन्त्यमेवेत्यन्यत्र विस्तरः ॥ १०१ ॥

यदपि ननु 'वृद्धिर्यस्याचामादिरि'त्यत्र इक्परिभाषोपस्थितौ शालीयाद्य-सिद्धिरत आह—

---

धित्वसिद्धिरिति । समुदायस्य धातुत्वाभावात्तदुत्तरस्य आगन्तुकत्वेनार्थवत्त्वाभावाच्च तदप्राप्तिरिति भावः ।

उत्तरखण्डेति । "परस्यास्तेर्भूभावे कृते" इति पूर्वोक्तभाष्यप्रामाण्यान्नानर्थकेति वचने 'अनभ्यासविकार' इति पर्युदासाच्चाऽऽगन्तुकस्याप्युत्तरखण्डस्यार्थवत्त्वादि कल्प्यते । प्रत्येकं तत्कल्पने तु बोधावृत्तिप्रसङ्ग इति भावः । न चैवं 'प्रणिजगादे'त्यत्र नेरुपसर्गस्य गदधातुपरकत्वाभावाण्णत्वाप्राप्तिरिति वाच्यम्; 'नेर्गदे'त्यत्र पञ्चम्यर्थक-सप्तम्याश्रयणेन गदादिनिरूपितोपसर्गस्य नेरित्यर्थेन व्यवधानेऽपि तत्प्रवृत्तेः सुवचत्वात् । अत एव 'प्रण्यगददि'त्यत्राड्व्यवधानेऽपि णत्वसिद्धिः ।

न तद्विरोध इति । परिभाषाभावेऽपीति शेषः । चिन्त्यमिति । किन्तु लिङीत्यस्या-ऽऽर्धधातुके इत्यनेन सामानाधिकरण्याद्विषयसप्तम्यन्तत्वेन द्वित्वात्पूर्वं वधादेशे 'दीर्घोऽकित' इति दीर्घे वावध्यादिति—केचित् ।

अन्ये तु—'नुगत' इत्यन्तरङ्गत्वान्नुकि जंवध्यादिति प्राहुः ।

अपरे तु—अनुनासिकान्तत्वस्य विनाशोन्मुखत्वेनाकृतव्यूहपरिभाषया नुको-ऽप्रवृत्त्या दीर्घे जावध्यादिति वदन्ति ॥ १०१ ॥

शालीयाद्यसिद्धिरिति । यस्य समुदायस्याचां मध्ये आदिरिक्स्थानिका वृद्धि-स्तद्वृद्धसंज्ञमित्यर्थे लैगवायनशब्दादावेव सा स्यादिति भावः ।

# विधौ परिभाषोपतिष्ठते नानुवादे ॥ १०२ ॥

अनूद्यमानविशेषणेषु तन्नियामिका परिभाषा नोपतिष्ठत इति तदर्थः। विध्यङ्ग भूतानां परिभाषाणां विधेयेनासिद्धतया सम्बन्धासम्भवेऽपि तद्विशेषणव्यवस्थापकत्वेन चरितार्थानां तद्विशेषणव्यवस्थापकत्वे मानाभाव इति तर्कमूलेयम्। किञ्च 'उदीचामातः स्थाने' इति सूत्रे स्थानेग्रहणमस्या लिङ्गम्, अन्यथा 'षष्ठी स्थाने' इति परिभाषयैव तल्लाभे तद्वैयर्थ्यं स्पष्टमेवेति।

—तन्न; 'उदात्तस्वरितयोर्यण' इत्यादौ 'ष्यङः सम्प्रसारणमि'ति सूत्र-भाष्योक्तरीत्या 'अह्लोपोऽन' इत्यादौ चैतस्या व्यभिचरितत्वात्, भाष्यानुक्तत्वाच्च। स्थानसम्बन्धो न परिभाषालभ्य इत्यर्थस्य 'षष्ठी स्थाने' इति सूत्रे भाष्ये स्पष्टमुक्तत्वेन त्वदुक्तज्ञापकासम्भवाच्च। तत्र स्थानेग्रहणं तु स्पष्टार्थमेव। किञ्च 'विधौ परिभाषे'ति प्रवाद 'इको गुणवृद्धी, अचश्च' इत्यनयोर्विधीयत इत्यध्याहार-

---

अनूद्यमानेति। साक्षादुद्देश्येत्यर्थः, स्वोपस्थाप्यार्थस्य साक्षादुद्देश्येन सहान्वये सति स्वस्य चारितार्थ्यं सम्भवति, तत्रानूद्यमानविशेषणे स्वोपस्थाप्यार्थान्वयनियामिका सा परिभाषा न भवतीति भावः। विध्यङ्गभूतानामिति। विधेयोपकारिकाणामित्यर्थः। असिद्धतयेति। तात्पर्यविषयत्वाभावेनेत्यर्थः। यत्र तु स्वोपस्थाप्यार्थस्य स्थाने इत्यादेः 'इको यणची'त्यादौ विधेयेऽन्वयस्तात्पर्यविषयस्तत्र विधेयेन सह स्वोपस्थाप्यार्थस्य सम्बन्धो भवत्येवेति सूचितम्। तथा चायमर्थः—नाप्राप्तपरम्पराधिकपरम्परया विधेयोपकारकत्वं परिभाषाणां न भवतीति। परिभाषायाः प्रधानीभूतविधेयोपकारे सम्पादनीये यावती परम्परा नाप्राप्ता ततोऽधिकपरम्परा यत्र शास्त्रे विधेयोपकारे तत्र शास्त्रे सा न प्रवर्तते इति यावत्। यथा 'षष्ठी स्थाने' इति परिभाषायाः स्वोपस्थाप्यार्थस्य साक्षादेव विधेयेनान्वयेन 'इको यणची'त्यादौ चारितार्थमि'त्युदीचामात' इत्यादौ परम्परया विधेयोपकारकत्वविषयेऽस्याः प्रवृत्त्यभावात् स्थानेग्रहणं चरितार्थम्। 'तस्मिन्नि'ति परिभाषाया 'इको यणची'त्यादावुद्देश्यमात्रघटितपरम्परया विधेयोपकारस्थले चारितार्थ्यात् 'अह्लोपोऽन' इत्यादौ तदधिकपरम्परया विधेयोपकारस्थले तस्या अप्रवृत्त्यापत्तौ 'ष्यङ्' इति सूत्रस्थभाष्यविरोधः स्पष्ट एवेति दिक्।

न परिभाषालभ्य इति। अन्तरङ्गत्वादेव स्थानपदार्थलाभेन सूत्रस्य निर्दिश्यमानपरिभाषार्थकथनपरत्वव्यवस्थापनादिति भावः। ज्ञापकासम्भवाच्चेति। स्थानपदार्थस्यान्तरङ्गत्वादेव लाभेन स्वांशे चारितार्थ्याभावादित्यर्थः। अध्याहारमूलक इति। न च तदध्याहारोऽप्येतन्मूलक एवेति वाच्यम्; गुणवृद्धिग्रहणानुवृत्त्यादिना

मूलकः, अन्यत्र तु नास्याः फलमित्यन्यत्र विस्तरः ॥ १०२ ॥

ननु 'नमस्करोति देवान्, नमस्यति देवानि'त्यादौ 'नमः स्वस्ती'ति चतुर्थी दुर्वारेत्यत आह—

## उपपदविभक्तेः कारकविभक्तिर्बलीयसी ॥ १०३ ॥

---

कारकविभक्तित्वञ्च—क्रियाजनकार्थकविभक्तित्वम्, तच्च प्रथमाया अप्यस्तीति सापि कारकविभक्तिरिति 'सह युक्ते' इत्यादिसूत्रेषु भाष्ये ध्वनितम् ।

---

तदर्थसिद्धौ सूत्रे पुनर्गुणवृद्धिग्रहणसामर्थ्येन ह्रस्वादिग्रहणस्यानुवर्तमानस्याऽऽवृत्त्या च श्वेत्यत्रापि तदर्थस्य सिद्धेरिति बोध्यम् ॥ १०२ ॥

नमस्करोतीति । ननु नमःपदार्थेऽन्वयविवक्षाया चतुर्थी, कृञ्धात्वर्थफलेऽन्वयविवक्षायां 'कर्मणि द्वितीये'ति विषयभेदसत्त्वात्कथं तदापत्तिः । न च निपातानां द्योतकत्वेन नमःपदार्थनमस्कारस्यैव कृधात्वर्थफलत्वादेकार्थान्वयप्रयुक्तविभक्तिद्वयप्राप्त्या तदापत्तिस्सुवचा, इत एव वाऽरुचे'र्नमस्यती'त्युक्तम्, अत्र हि मुण्डयतौ मुण्डस्येव नमःपदार्थस्य कृञर्थत्वेन विभक्तिद्वयप्राप्तिः सुलभेति वाच्यम्; नमःपदार्थे क्रियाकर्मभावसम्बन्धेनान्वयविवक्षायां द्वितीयाप्राप्तिः, अन्यसम्बन्धेनान्वयविवक्षायां च चतुर्थीप्राप्तिरिति द्वयोरेकविषयाभावात् तदापादनस्याशक्यत्वादिति चेन्न । 'नमः स्वस्ती'त्यस्योद्देश्यतावच्छेदककुक्षौ सम्बन्धविशेषानुक्त्या क्रियाकर्मभावसम्बन्धेनान्वयविवक्षायामपि तत्प्रवृत्तेरत्र परत्वाच्चतुर्थ्यापादनस्य सुवचत्वात् । न चैवं चतुर्थ्या अपि क्रियाजनकार्थकविभक्तित्वरूपवक्ष्यमाणकारकविभक्तित्वेन परत्वाच्चतुर्थ्यापत्तिर्दुर्वारेति वाच्यम्; क्रियाजनकत्वमात्रार्थकविभक्तेरेव कारकविभक्तित्वस्वीकारेण 'नमः स्वस्ती'त्येतद्विहितविभक्ते'र्हरये नम' इत्यादौ क्रियाजनकत्वरूपार्थबोधकत्वाभावेन तन्मात्रार्थकत्वरूपोक्तकारकविभक्तित्वाभावात् । 'कर्मणि द्वितीये'ति सूत्रविहितद्वितीयायास्तु कदाऽप्यर्थान्तराबोधकत्वेन कारकविभक्तित्वस्य सुवचत्वात् । अत्र च क्रियाजनकत्वेन विवक्षितोऽर्थो ग्राह्यः, तेन 'मातुः स्मरती'त्यत्र वस्तुतो मात्रादेः क्रियाजनकत्वेऽपि न क्षतिरिति बोध्यम् ।

ध्वनितमिति । तत्र हि "पुत्रेण सहाऽऽगतः पिते'त्यत्र 'उपपदविभक्तेरि'ति

---

द्योतकत्वेनेति । एवञ्च द्योतकवाचकसमभिव्याहारे विनिगमनाविरहेण उभयोरपि कृधात्वर्थफलनिष्ठविषयताप्रयोजकत्वेन कृधात्वर्थफलान्वयविवक्षायामपि नमःपदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वरूपनमोयोगसत्त्वादस्ति चतुर्थीद्वितीययोर्युगपत्प्राप्तिरिति भावः । कृधात्वर्थफलत्वादिति । कृधात्वर्थत्वादित्युचितः पाठः । इत एवेति । 'सन्तुष्यतु' न्यायेनैतत् । कृञर्थत्वेनेति । साध्यत्वेन प्रतीतिविषयत्वेनेति तदर्थः ।

इयं च वाचनिक्येव । अत एव 'यस्य च भावेन' इति सप्तम्यपेक्षयाऽधिकरणसप्तम्या बलवत्त्वमनेन न्यायेन 'तत्र च दीयते' इति सूत्रे भाष्ये ध्वनितं कैयटेन च स्पष्टमुक्तम् । एतेन—क्रियान्वयित्वं कारकत्वमित्यपास्तम् ; 'यस्य च भावेने'ति सप्तम्या अपि क्रियान्वयित्वात् ।

ये तु—प्रधानीभूतक्रियासम्बन्धनिमित्तकार्यत्वेन कारकविभक्तीनां बलवत्त्वं

---

न्यायेन तृतीयां बाधित्वा प्रथमे''त्युक्तम् ; अन्यथा प्रथमार्थस्य तिङर्थकर्त्रादावन्वयेन क्रियान्वयित्वरूपकारकत्वाभावेन तदसङ्गतिः स्यादिति भावः ।

अत एवेति । उक्तकारकविभक्तित्वस्वीकारात् , अस्या वाचनिकत्वस्वीकाराच्चैवेत्यर्थः । कैयटेन च स्पष्टमुक्तमिति । तत्र हि ''दीयते कार्यमित्युभयमपि न कार्यम् , 'तत्र भव' इत्यनेनैव सिद्धत्वात् । यच्च तत्र दीयते तत्र कार्यं वा तत्तत्र भवं भवत्येवे''त्युक्त्वा 'तत्र भव' इति सूत्रे तत्रेत्यस्योपपदविभक्तेरिति न्यायात् औपश्लेषिकाधिकरणसप्तम्यन्तत्वकल्पनया तादृशसप्तम्यन्तादेव प्रत्ययोत्पत्तिरित्याशयेन ''यन्मासे गते सति दीयते तत्र 'तत्र भव' इतस्याप्राप्त्या सूत्रावश्यकत्वम् । सूत्रसत्त्वे तु तत्सामर्थ्यात् 'यस्य च भावेने'ति सप्तमीविषयेऽप्येतत्प्रवृत्तिरि''त्युक्तम् । तथा चानेन न्यायेन सौत्रविभक्तितात्पर्यनिर्णयस्तत्तद्विभक्तिसाधुत्वनिर्णयश्चेत्युभयमपि क्रियते । तत्राऽऽद्यांशे व्याख्यानं मूलम् , द्वितीयांशस्तु वाचनिक एवेति बोध्यम् ।

---

**कैयटेन च स्पष्टमुक्तमितीति** । अत्र मूलं ''भाष्ये ध्वनितं बलवत्त्वं कैयटेन च स्पष्टमुक्तं सङ्गच्छते'' इति शेषेण योजनीयम् । वाचनिकत्वानङ्गीकारे तु प्रधानान्तरङ्गत्वन्यायमूलकत्वाङ्गीकारे द्वयोरपि प्रधानत्वस्य अन्तरङ्गत्वस्य च समत्वेन 'उपपदविभक्तेरि'ति न्यायाप्राप्त्या तदसङ्गतिरेव स्यादिति तदर्थः ।

ननु अनया हि एकस्मिन् लक्ष्ये द्वयोर्विभक्त्योर्युगपत्प्राप्तौ सति विरोधे कारकविभक्तेर्बलवत्त्वबोधनेन तत्तत्कारकविभक्तेः साधुत्वं व्यवस्थाप्यते; 'तत्र भव' इत्यत्र तु न द्वयोर्युगपत्प्राप्तिः, लक्ष्यलक्षणभावविवक्षायां सत्सप्तमी प्राप्नोति, अधिकरणत्वविवक्षायाञ्च अधिकरणसप्तमी प्राप्नोति इति विषयभेदसत्त्वात् तदप्राप्तेरिति भाष्यासङ्गतिरिति चेदाह—**तथा चानेनेति । आद्यांशे व्याख्यानं मूलमिति** । व्याख्यानञ्च 'तस्मिन्नि'ति परिभाषारूपमेव । तथा हि—तस्य च औपश्लेषिकाधिकरणबोधकसप्तम्यन्तपदार्थोपश्लिष्टस्य विधीयमानं कार्यमव्यवहितोच्चारिते सति पूर्वस्य भवतीत्यर्थः ; तथा सति तत्र तत्र विधिप्रदेशे ''अचीत्यादिसप्तमीकारकविभक्त्यर्थे उपपदविभक्त्यर्थे वा'' इति सन्देहात् एतदीयस्य उद्देश्यस्य उद्देश्यतावच्छेदकरूपेणानिश्चय एव इति तदन्यथानुपपत्त्या ''असति बाधके सर्वत्र सप्तम्या कारकविभक्त्यर्थ एव तात्पर्यमिति कल्प्यत'' इति 'व्याख्यानत' इति परिभाषाशेषभूत एवेति आद्यांशः फलित इति भावः । तथा-चोक्तम्—'ङ्णुक्ष्मोः' इति सूत्रे 'तस्मिन्नि'ति परिभाषायां सत्यां सत्सप्तम्याश्रयणमशक्यमिति । **वाचनिक एवेतीति** । 'नमो वरिव' इति सूत्रभाष्यानुरोधादिति भावः ।

वदन्ति ; तेषामुभयोरपि क्रियासम्बन्धनिमित्तकत्वेन तदसङ्गतिः स्पष्टैव, 'नमो वरिव' इति सूत्रे 'नमस्यति देवानि'त्यादौ चतुर्थीवारणाय भाष्ये उपन्यासस्यासङ्गतेश्च ।

एतेन क्रियाकारकसम्बन्धोऽन्तरङ्ग इति तन्निमित्ता विभक्तिरन्तरङ्गा,

---

परे तु—द्वितीयांशः प्रधानन्यायमूलक एव । अत एव 'सहयुक्ते' इति सूत्रस्थाप्रधानग्रहणप्रत्याख्यानं सङ्गच्छते । निरुक्तरीत्या त्वदुक्तकारकविभक्तित्व-स्थले 'पुत्रेण सहाऽऽगतमानये'त्यादौ कथञ्चिद्दोपवारणेऽपि 'पुत्रेण सहाऽऽगतस्य पितुर्धनमि'त्यादौ पित्रादिशब्दात्तृतीयावारणस्याशक्यत्वमेव । एवं 'राज्ञः पुरुप-मन्तरा न गच्छती'त्यादौ सम्बन्धप्रतियोगिवाचकादेव षष्ठीति सिद्धान्तासिद्धि-प्रसङ्गः, सम्बन्धस्योभयनिष्ठत्वेन सम्बन्धिवाचकात् षष्ठीविधानेऽविशेषाद् द्वाभ्यामपि षष्ठीप्रसङ्गस्य दुर्वारत्वात् । मन्मते तु पित्रादिपदात् पुरुषादिपदाच्च जायमानविभक्तेः प्रधानक्रियासम्बन्धनिमित्तकतया कारकविभक्तित्वेनोक्तपरि-भाषया स्वानुयोगिकसम्बन्धबोधकोक्ततृतीयाषष्ठीरूपपदविभक्त्यपेक्षया प्राबल्य-बोधनेन बाधात् पितृपुरुषादिपदान्न तृतीयाषष्ठ्यादिविभक्त्यापत्तिसम्भवः । अत्र कारकविभक्तित्वं च सापेक्षतया भिन्नं भिन्नम् । स्वार्थस्य यादृशपरम्परया प्रधानीभूतक्रियासम्बन्धित्वं ततो न्यूनपरम्परया प्रधानीभूतक्रियासम्बन्धवत्त्वं स्वापेक्षया कारकविभक्तित्वं, तदपेक्षया च स्वस्या उपपदविभक्तित्वमिति पर्यव-स्यति । न चैवं 'नमस्यति, नमस्करोती'त्यादावपि नमस्काररूपफलसम्बन्धनिमित्त-त्वस्योभयत्र साम्याद् द्वितीयायाः प्राबल्यमनुपपन्नमिति वाच्यम् ; उभयोः फल-सम्बन्धित्वमात्रेण साम्येऽपि कर्मसंज्ञायां प्रधानीभूतव्यापारस्यापेक्षितत्वेन द्वितीयायाः फलापेक्षयाऽपि प्रधानीभूतव्यापारापेक्षितत्वेन बलवत्त्वस्य सुवचत्वात् । न च 'यस्य च भावेने'ति सप्तम्यपेक्षयाऽधिकरणसप्तम्याः कारकविभक्तित्वप्रयुक्तबल-वत्त्वकथनमयुक्तम्, उभयोरपि प्रधानीभूतक्रियासम्बन्धनिमित्तकत्वादिति वाच्यम् ; आद्यांशरूपायां 'व्याख्यानत' इति परिभाषाशेषभूताया'मुपपदविभक्तेरि'ति परिभाषायां कारकविभक्तिपदेन कारकत्वव्याप्यकर्त्रादिनिरूपितान्यतमार्थबोधकविभक्तेर्ग्रहणेनादोषात् । निरुक्तद्वितीयांशबोधकैतत्परिभाषायां तु 'सहयुक्ते'त्यादिसूत्रभाष्यविरोधेन तादृशकारक-विभक्तित्वस्यास्वीकार एव ।

वस्तुतस्तु—'तत्र भव' इत्यत्र व्याख्यानादधिकरणसप्तमीस्वीकारेणान्यसप्तम्यन्ता-त्तदप्रवृत्तेः फलान्तराभावेन चैतत्परिभाषान्तरस्य नोपयोगः । अत एव 'द्विर्वचनेऽची-

---

सर्वा अपि परिभाषा ज्ञापकन्यायसिद्धा इति मतानुसारेणाऽऽह—परे त्विति । निरुक्त-रीत्येति । अन्यथेत्यादिः । अशक्यमेवेति । क्रियाजनकार्थकविभक्तित्वरूपकारकविभक्तित्वा-भावात् । स्वानुयोगिकेति । पित्रादिरूपप्रकृत्यर्थानुयोगिकेत्यर्थः । स्वार्थस्येति । विभक्त्यर्थ-स्येति तदर्थः ।

उपपदार्थेन तु यत्किञ्चित्क्रियाकारकभावमूलकः सम्बन्ध इति तन्निमित्ता विभक्तिर्बहिरङ्गेत्यप्यन्यत्र ...नम्; 'नमस्यती'त्यत्र नमःपदार्थेऽपि क्रियाकारकभावेनै-वान्वयात्। अत्र च ... क्रियात्वं मुण्डयतौ मुण्डस्येव।

'सहयुक्ते' इत्यादौ च प्रधाने प्रथमासाधनार्थमियं भाष्य उपन्यस्ते-त्यन्यत्र विस्तरः॥ १०३॥

नन्वदमुयङि'त्यादौ पूर्वस्यापि मुत्वापत्तिरत आह—

## अनन्त्यविकारेऽन्त्यसदेशस्य ॥ १०४ ॥



अन्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत्प्राप्तावन्त्यसदेशस्यैवेति तदर्थः; अन्यथा धात्वादेर्नत्वसत्वे 'नेता, सोते'त्यादावेव स्यातां, न तु 'नमति सिञ्चती'त्यादौ।

अनन्त्यविकार इति च लिङ्गम्।

---

त्यादौ तन्निमित्त इत्यर्थलाभः। 'तत्र च दीयते' इति सूत्रे कैयटेनैषा भाष्याशयप्रदर्शनाय दर्शिताऽपि भाष्ये कुत्रापि स्पष्टं नोपलभ्यते इति बोध्यम्। न चैवमपि 'देवा नमस्क्रियन्त' इत्यादौ कर्मप्रत्यये फलस्यैव प्राधान्येन तत्सम्बन्धनिमित्तकचतुर्थ्यापत्तिर्दुर्वारेति वाच्यम्; कर्मप्रत्यये फलस्य कथञ्चिद्विशेष्यत्वेऽपि व्यापारस्य प्रधानत्वबोधे मानाभावात्। अत एव कर्मसंज्ञोपपत्तिः; अन्यथाऽत्र व्यापारस्याप्रधानत्वेन प्रधानीभूतव्यापार-प्रयोज्यफलाश्रयत्वप्रयुक्तायाः कर्मसंज्ञाया अप्रवृत्त्यापत्तिः। स्पष्टं चेदं 'सहयुक्ते'ति सूत्रे भाष्यकैयटयोरिति वदन्ति॥ १०३॥

मुत्वापत्तिरिति। न च परिभाषासत्त्वेऽप्यदस' इति शास्त्रस्य 'अमा'त्यादावन्त्य-वर्णवृत्तिविकारप्रयोजकत्वेन एतत्परिभाषाप्रवृत्त्ययोगात् तदापत्तिर्दुर्वारेति वाच्यम्; अत्र विधेयभेदेन वाक्यभेदान्मत्वविधायकैतच्छास्त्रस्यान्त्यवृत्तिविकाराप्रयोजकत्वेना-न्त्यसदेशस्यैव मत्वविधानात् पूर्वपदस्य तत्प्राप्तेरभावात्। एवञ्च 'सन्नियोगशिष्ट'-न्यायेनाकारे उत्वस्याप्यप्रवृत्तिरिति बोध्यम्।

युगपत्प्राप्ताविति। क्वचिदिति शेषः, तेन 'अमी'त्यादौ तदसत्त्वेऽपि न क्षतिः।

इति चेति। चेनान्त्यसदेशानन्त्यसदेशयोरिति प्रागुक्तसङ्ग्रहः। तथा च

---

इत्यर्थलाभ इति। 'कर्तृकर्मणोः कृति' इत्यादौ 'कृति सती'त्यर्थलाभ इत्यपि बोध्यम्। विशेष्यत्वेऽपीति। शाब्दप्राधान्यसत्त्वेऽपीत्यर्थः। प्रधानत्वबाध इति। अन्यानधीनत्व-लक्षणार्थप्राधान्यस्य बाधे इत्यर्थः॥ १०३॥

परिभाषाप्रवृत्त्ययोगादिति। 'अन्त्यं विकारयति' इति व्युत्पत्त्या अन्त्यवृत्तिविकारा-प्रयोजके तत्प्राप्तेरिति भावः।

अन्त्येन समानो देशो यस्य सोऽन्त्यसदेशः । तत्त्वं चान्त्यवर्णतद्वर्णयो-

---

यत्किञ्चिद्रूपविशिष्टे शास्त्रेऽन्त्यसदेशस्येत्युपतिष्ठते इति परिभाषार्थः; वैशिष्ट्यञ्च—स्वावच्छिन्ननिरूपितान्त्यवृत्ति विकाराप्रयोजकत्व–स्वावच्छिन्नान्त्यसदेशानन्त्यसदेशवृत्त्येककालिकप्राप्तिप्रयोजकत्व – स्वावच्छिन्ननिरूपितावच्छेदकतावच्छिन्नोद्देश्यताकत्वैतत्त्रितय-सम्बन्धेन । अत्र रूपं चादृशशब्दत्वधातुत्वप्रातिपदिकत्वादि बोध्यम् । अत्र प्रथमसम्बन्ध-निवेशात् 'सुपो धात्वि'त्यादौ 'राजन्+अस्+पुरुष+स्' इत्येतत्प्रातिपदिकान्त्यसुवृत्ति-विकारप्रयोजकत्वेन प्रातिपदिकत्ववैशिष्ट्याभावान्नानेन अत्रान्त्यसदेशस्योपस्थितिः । द्वितीयसम्बन्धनिवेशाच्च 'णोऽन' इत्यादावेतदप्रवृत्तिः । 'णोऽन' इत्यस्य नमननीत्ये-तत्समुदायान्त्यवृत्तिविकाराप्रयोजकत्वादिसत्त्वेऽपि तस्य समुदायस्य स्वोद्देश्यता-वच्छेदकत्वाभावेन स्वीयोद्देश्यतावच्छेदकधातुत्वावच्छिन्नान्त्यसदेशानन्त्यसदेशोभय वृत्त्येककालिकप्राप्तिप्रयोजकत्वाभावेन चात्रैतदप्रवृत्तिः, अत एवात्र तृतीयसम्बन्धनिवेश इति बोध्यम् । एवं 'चलीक्लृप्यते' इत्यत्रापि 'चरीकृप' इति समुदायस्य 'कृपो रो ल' इति शास्त्रीयोद्देश्यतावच्छेदकत्वाभावेन कृप्धातुत्वस्य तत्त्वेऽपि समुदाये धातुत्वा-भावेन तदवच्छिन्ननिरूपितान्त्यसदेशानन्त्यसदेशोभयवृत्त्येककालिकप्राप्तिप्रयोजकत्वा-भावेन 'कृपो रो ल' इत्यत्रैतदप्रवृत्त्योभयत्र लत्वासिद्धिः । एतेन—एतस्या अनित्यत्वेन 'कृपो रो ल' इत्यत्राप्रवृत्त्या 'चलीक्लृप्यत' इत्यत्रोभयोर्लत्वसिद्धिरित्यपास्तम् । न चैवं 'मिमार्जिषती'त्यत्रैतदप्रवृत्त्यापत्तिरिति वाच्यम्; इष्टापत्तेः । अभ्यासे वृद्ध्यभावस्तु प्रत्ययस्य मृजविशेषणत्वेन 'निर्दिश्यमान'परिभाषया 'अर्थवद्ग्रहण'परिभाषयाऽपि सिद्ध्यतीति बोध्यम् ।

---

उभयत्र लत्वसिद्धिरिति । न च 'अर्थवत्'परिभाषयाऽभ्यासे लत्वं न स्यादिति वाच्यम्; "केचिदिच्छन्ति लत्ववत्" इति भाष्यप्रामाण्यात् 'कृपो रो लः' इत्यारम्भाच्चात्र तद-प्रवृत्तेः । 'क्लृपू सामर्थ्ये' इत्येवं धातुपाठपाठेन सर्वत्र लकारश्रवणसिद्धेः । न च 'अचीक्लृपत्' इत्यत्र ऋकारलृकारयोः सावर्ण्यात् 'उऋदि'त्यनेन लृकारस्य ऋकारे 'अचीकृपत्' इति स्यात्, सिद्धान्ते तु लत्वस्यासिद्धत्वेन न भवतीति वाच्यम्; क्लृप्तशिखार्थं भवताऽप्यवश्यमाश्रयितव्येन सावर्ण्यविधेरनित्यत्वेनात्र दोषाभावात् ।

नचैवमिति । 'चलीक्लृप्यते' इतिवत् मृजधातुत्वमादाय परिभाषया अप्राप्तिरिति भावः । यद्यपि 'मृजधात्वन्तस्याङ्गस्य 'इको गुणः' इत्यर्थेन अङ्गत्वरूपमादाय परिभाषाप्रवृत्तावपि न दोषः; तथापि परिभाषायाः खण्डयिष्यमाणतया तदनुसारेण समाध्यन्तरमाह—अभ्यास इत्यादिना ।

मूले अन्त्यसदेशपदे सादेशोपपत्तये अव्ययीभावो बहुव्रीहिर्वा वक्तव्यः, तच्च न सम्भ-वति, अर्थासङ्गतेरत आह, मूले—अन्त्येनेति । तथा च निपातनात् बहुव्रीहिः सादेशश्च भवतीति भाव । नन्वेवमपि देशशब्देन आकाशस्य प्रयोगस्य वा ग्रहणेऽतिप्रसङ्गस्तदवस्थ एवेत्यत आह—मूले—तत्त्वं चेति ।

रितराऽव्यवधानेन बोध्यम् । अत एव 'विद्ध' इत्याद्यर्थं 'न सम्प्रसारणे' इति चरितार्थम् ।

'अक्षोपोऽन' इत्यादे'रनस्तक्ष्णो'त्यादावाद्याकारादावप्रवृत्तिरप्यस्याः फलम्, यजादिस्वादिपरान्नन्ताङ्गस्याकारस्य लोप इत्यर्थस्यैवाङ्गांशे प्रत्ययस्योत्थिताकाङ्क्षत्यौचित्यात् अङ्गावयवयजादिस्वादिपरस्यान इत्यादिक्रमेण अनेकत्रानेकक्लिष्टकल्पनयपेक्षयाऽस्या उचितत्वात् ।

न चैषा 'ष्यङः सम्प्रसारणमि'ति सूत्रे भाष्ये प्रत्याख्यातेति भ्रमितव्यम्;

---

इतराऽव्यवधानेनेति । इतरपदेनाज् गृह्यते । तथा चाऽज्व्यवधानशून्यत्वमन्त्यसदेशत्वं, तेन 'अदमुयङि'त्यत्र रेफव्यवधानेऽपि न क्षतिः । एवं 'हंसशिरांसी'त्यत्रापि बोध्यम् । चरितार्थमिति । वस्तुतश्चिन्त्यमिदम्—'ष्यङः सम्प्रसारणमि'ति सूत्रे भाष्ये एनां परिभाषामुक्त्वा "किमेतस्याः प्रयोजनमि"ति प्रश्ने 'न सम्प्रसारणे' इति सूत्रं न कर्तव्यं भवती"त्युक्त्या 'न सम्प्रसारणे' इति सूत्रसाध्यफलानामेतत्परिभाषासिद्धत्वबोधनेन तद्विरोधापत्तेः ।

वस्तुतस्तु—कार्यिव्यवधानशून्यत्वमन्त्यसदेशत्वम् । व्यधादावकारव्यवधानेऽपि यकारस्य कार्यिव्यवधानशून्यत्वादन्त्यसदेशत्वसिद्ध्याऽनया वकारस्य सम्प्रसारणाप्राप्त्योक्तभाष्यं सङ्गच्छते । न चैवं 'यून' इत्यत्र यकारस्य कार्यिव्यवधानशून्यत्वेनान्त्यसदेशतया सम्प्रसारणापत्तिरिति वाच्यम्; साक्षात् स्थानिद्वारा वा कार्यित्वस्यात्र ग्रहणेन 'यून' इत्यत्रोकारे स्थानिद्वारा कार्यित्वस्य सत्त्वेनादोषात् । न चैवमपि 'अनस+आन, अनश्रान' इत्यत्र तपरकरणेनाल्लोप इत्येतत्कार्यित्वस्याकारेऽभावेन पूर्वानोऽन्त्यसदेशत्वेन लोपापत्तिरिति वाच्यम्; निरुक्तकार्यितावच्छेदकावच्छिन्नबोधकपदप्रतिपाद्यतावच्छेदकधर्मावच्छिन्नपूर्वभिन्नत्वरूपतत्त्वस्वीकारेण अत्रानस्तादृशान्त्वरूपधर्मावच्छिन्नत्वेनादोषात् । भाक्षिप्तप्रत्ययेनानो विशेषणेन 'निर्दिश्यमान'परिभाषया वोक्तदोषस्य सुनिवारत्वाच्चेति दिक् ।

---

एवं हंसशिरांसीति । अन्यथा रेफोत्तराकारस्य नुमा व्यवधानेन अन्त्यसदेशत्वं न स्यात् ।

निरुक्तेति । अन्त्यवृत्तिविकाराप्रयोजकशास्त्रीयेत्यर्थः । अन्त्वरूपधर्मावच्छिन्नो य आन् तत्पूर्वत्वमेव पूर्वस्मिन्ननशब्दे इति नान्त्यसदेशत्वमित्यर्थः ।

भाक्षिप्तप्रत्ययेनेति । यत्तु—प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षतया यजादिस्वादिपरान्नन्ताङ्गस्य अकारस्य लोप इत्यर्थ एवोचित इति । तन्न; स्वस्वप्रकृत्यर्थान्यतरप्रत्यायकत्वरूपप्रत्ययत्वस्य उत्थिताकाङ्क्षत्वाभावात्, स्वाव्यवहितपूर्वत्व—स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयाद्यवयवकत्वोभयसम्बन्धेन प्रत्ययविशिष्टत्वरूपाङ्गत्वस्य उत्थिताकाङ्क्षत्वेऽपि आकाङ्क्ष्यमाणप्रत्ययत्वस्य अङ्गशरीरे एव पतितत्वेनाऽऽकाङ्क्षाशान्त्या अङ्गत्वस्य प्रत्ययांशे उत्थिताकाङ्क्षत्वादित्यपि वक्तुमशक्यत्वाच्च ।

वार्तिकोक्तफलानामनेकक्लिष्टकल्पना[illegible] प्रदर्श्यापि यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा कर्तव्या प्रतिविधेयं दोषेषु, प्रतिविधानं चोदात्तनिर्देशात्सिद्धमित्युपसंहारात् । मिमार्जिषतीत्यर्थं चैषा । तत्र वृद्धेः पूर्वमन्तरङ्गत्वाद् द्वित्वे परत्वादभ्यासकार्ये ततोऽभ्यासेकारस्य वृद्धिवारणायाऽवश्यकी । न च वृद्धौ पुनरभ्यासह्रस्वत्वेन सिद्धिः; लक्ष्ये लक्षणस्येति न्यायेन पुनरप्रवृत्तेः ।

यत्तु—'न सम्प्रसारणे' इति सूत्रे भाष्ये नैतस्याः परिभाषायाः प्रयोजनानीत्युक्तं तस्यायमर्थः—एतत्सूत्रे प्रयोजनान्येतस्याः परिभाषाय न भवन्ति व्यधादावन्त्यसमानदेशयणोऽभावादिति । नैतान्येतस्याः प्रयोजनानीति पाठोऽपि क्वचिद् दृश्यते ।

वाचनिक्येवैषा । स्पष्टा च 'ष्यङ' इति सूत्रे 'अदसोऽसेरि'ति सूत्रे च "केचिदन्त्यसदेशस्ये"त्यनेन भाष्य इत्यन्यत्र विस्तरः ।। १०४ ।।

---

उदात्तनिर्देशादिति । यत्रैषा परिभाषेष्यते तत्रोदात्तनिर्देशः कर्तव्यः, अनन्त्यविकारेऽन्त्यसदेशस्योदात्तनिर्देश इति वक्तव्यमित्यर्थः ।

परे तु—परिभाषा निष्फला । अत एव 'ष्यङ' इति सूत्रे भाष्ये प्रत्याख्याता । अत एव च 'नोपधाया' इत्यत्रोपधाग्रहणं, 'तदोः सः सावि'त्यत्र तदोर्ग्रहणं च चरितार्थम् । 'मिमार्जिषति, अनस्तक्ष्णे'त्यादि तु नास्याः फलमिति प्रागेवावोचाम । 'हंसशिरांसी'त्यत्रापि 'सर्वनामस्थाने' इत्यस्य श्रुतानुमितपरिभाषया सान्तसंयोगविशेषणत्वस्वीकारेण 'निर्दिश्यमान'परिभाषया चोक्तदूषणवारणसम्भवात् । अत एव 'ष्यङ' इति सूत्रे भाष्ये "न संप्रसारणे' इति सूत्रं न कर्तव्यं भवती"त्येवैतत्परिभाषाप्रयोजनमुक्तं, न तु लक्ष्यसिद्धिरूपम् । "सहेतुकं च वाक्यं भवति प्रमाणमि"ति भाष्योक्त्या नेत्येकेऽसेर्हि दृश्यते इत्यस्यैवात्र प्रमाणतया स्वीकारात् । पूर्वत्रारुचिसूचनायैवात्र मुख्यार्थकैकेति पदोपादानम् । अत एव 'अदसोऽसेरि'ति सूत्रे "अदमुयङिति भवितव्यमि"त्युक्तम् । "अमुमुयङिति चेष्यते" इति भाष्येणेच्छाविषयत्वमेव तत्रोक्तं, न तु शास्त्रविषयत्वं तस्येति सूचितम् । अत एव 'न सम्प्रसारणे' इति सूत्रे फलाभावादेषा भाष्ये प्रत्याख्यातेति प्राहुः ।। १०४ ।।

---

निर्दिश्यमानपरिभाषया चेति । षष्ठीप्रकृतिजन्यशाब्दबोधीयविषयताश्रयत्वे सति षष्ठीप्रकृतिजन्यशाब्दबोधीयविषयताश्रयसमभिव्याहृतवर्णाघटितत्वरूपनिर्दिश्यमानत्वस्य पूर्वखण्डेऽभावादिति भावः ।

मूले—वृद्धेः पूर्वमन्तरङ्गत्वाद् द्वित्व इति । अत्रान्तरङ्गत्वम्—अपरनिमित्तकत्वरूपं बोध्यम् ।। १०४ ।।

ननु 'अव्यक्तानुकरणस्यात' इति पररूपं 'पटत्' इति 'पटिती'त्यादौ 'अलोऽन्त्यस्ये'त्यन्त्यस्य प्राप्नोतीत्यत आह—

**नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे ॥ १०५ ॥**

अनभ्यासेत्युक्ते 'बिभर्ती'त्यादौ 'भृञामिदि'त्याद्यन्त्यस्यैवाभ्यासोऽनर्थकोऽर्थावृत्त्यभावात्, किन्तु उत्तरखण्ड एवार्थवानित्यन्यत्र निरूपितम्।

एषा 'अलोऽन्त्यात्'सूत्रे भाष्ये स्पष्टा। फलानामन्यथासिद्धिकरणेन प्रत्याख्याता चेति तत एवावधार्यताम् ॥ १०५ ॥

ननु 'ब्राह्मणवत्सा च ब्राह्मणीवत्सश्चे'त्यादौ 'पुमान् स्त्रिया' इत्येकशेषापत्तिः, स्त्रीत्वपुंस्त्वातिरिक्तकृतविशेषाभावादत आह—

**प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः ॥ १०६ ॥**

तेन प्रधानस्त्रीत्वपुंस्त्वातिरिक्ताप्रधानस्त्रीत्वपुंस्त्वकृतविशेषस्यापि सत्त्वेन न दोषः।

---

प्राप्नोतीति। तथा च 'नाम्रेडितस्ये'ति सूत्रेऽन्त्यग्रहणं व्यर्थं स्यादिति भावः।

अनभ्यासविकार इति। अत्र ज्ञापकसाजात्याद् विकारपदेन भावादेश एव गृह्यते, तेनात्र "लोपोऽभ्यासस्य" 'द्यसोरेद्धावभ्यासलोपश्चे'ति सर्वस्यैवाभ्यासस्य भवतीति—केचित्। अत्र ज्ञापकं च पूर्वोक्तमन्त्यग्रहणम्, अनभ्यासेत्यंशे च 'अर्तिपिपर्त्योरि'ति निर्देशो ज्ञापक इति बोध्यम्।

भाष्ये स्पष्टेति। तत्र वचनरूपेणोक्तेत्यर्थः। प्रत्याख्याता चेति। 'हलि लोप इत्यनेनान एव लोपः।। वाम्रेडितस्येत्येव सिद्धे नाम्रेडितस्यान्त्यस्य तु वेति सूत्रकरणेनात्र 'अलोऽन्त्य'परिभाषा न प्रवर्तते इति स्वीकारान्न दोषः। मीनादीनामनुवृत्त्यैव सिद्धेरत्रग्रहणादत्र लोपोऽभ्यासेति सर्वादेशः। 'द्यसोरि'ति सूत्रे पुनर्लोपग्रहणाद् "लोपशिति शित्करणाद्वा सर्वादेशः। श्वेतादीनां लोप इत्येव सिद्धे श्वेताश्वाश्वतरेत्यत्र पुनरश्वतरादीनां ग्रहणेन, 'चतुरश्छयतावि'त्यत्राऽऽदेरित्येव सिद्धेरत्तरग्रहणेन 'विभाषाभवदि''ति वार्तिके वस्येत्येव सिद्धेरवग्रहणेन तत्सामर्थ्यादलोन्त्यपरिभाषाया अप्रवृत्तिरिति भावः॥ १०५॥

अप्रधानेति। अत्राप्राधान्यं च तत्पदप्रयोज्यविशेष्यतानिरूपितप्रकारतावच्छेदकत्वरूपमिति भावः। एतद्बलादेव 'तस्माच्छसः, अतोऽमि'त्यादौ प्रधानपुन्नपुंसकार्थे वर्तमानादित्यर्थेन 'राजभार्याः कुलपुत्र' इत्यत्र नत्वामोरभावः सिद्ध्यति। इयं च लोकसिद्धा, प्रधानानुसरणस्यागोपालाङ्गनं प्रसिद्धेरिति बोध्यम्।

स्पष्टा चेयं 'पुमान् स्त्रिया, नपुंसकमनपुंसकेने'त्यनयोर्भाष्ये। अन्तरङ्गोपजीव्यादपि प्रधानं प्रबलमिति 'हेतुमति चे'त्यत्र भाष्यकैयटयोः ॥ १०६ ॥

ननु स्वस्रादित्वप्रयुक्तो मातृशब्दस्य ङीब्निषेधः परिच्छेत्तृवाचकमातृशब्देऽपि स्यादत आह—

**अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी ॥ १०७ ॥**

तेन शुद्धरूढस्य जननीवाचकस्यैव ग्रहणं न परिच्छेत्तृवाचकस्य। योगजबोधे तदनालिङ्गितशुद्धरूढिजोपस्थितिः प्रतिबन्धिकेति व्युत्पत्तिरेव तद्बीजम्। रथकाराधिकरणन्यायसिद्धोऽयमर्थः।

कश्चित्तु—'दीधीवेवीटा'मित्यत्रानया परिभाषया दीधीङ्वेवीङोरेव ग्रहणं न दोङ्धीङ्वेञ्वीनामिति। तन्न; तथा सति दीवेधीवीटामित्येव वदेदित्यन्ये ॥ १०७ ॥

---

भाष्यकैयटयोरिति। तत्र हि "अन्तरङ्गमुपजीव्यं च प्रयोज्यक्रियानिरूपितं कर्तृत्वं बाधित्वा प्रधानीभूतप्रयोजकक्रियापेक्षं कर्मत्वं प्रवर्तते इति गत्यादिसूत्रं नियामकमित्युक्तमि"त्यन्यत्र विस्तरः ॥ १०६ ॥

अवयवप्रसिद्धेरिति। अवयवशक्तिग्रहाधीनतदुपस्थित्यपेक्षया तदघटितनिष्ठशक्तिग्रहाधीनविशिष्टार्थोपस्थितिः प्रबला, अतो वाक्यार्थबोधे सैव प्रयोजिकेति परिभाषार्थः।

तदनालिङ्गितशुद्धेति। तेन योगरूढस्थले तदुपस्थितेर्योगार्थविषयकबोधे प्रतिबन्धकत्वं नेति बोध्यम्। रथकारेति। 'वर्षासु रथकारोऽग्नीनादधीते'त्यत्रोक्तयुक्त्या रथकारपदेन समुदायनिष्ठशक्तिग्रहाधीनोपस्थितिविषयरूढ्यर्थजातिविशेषविशिष्टस्य शूद्रस्यैव ग्रहणं, न तु रथनिर्मातुस्त्रैवर्णिकस्यावयवशक्तिग्रहाधीनशक्तिग्रहप्रयोज्योपस्थितिविषयस्येत्युक्तं तत्रेति भावः। वस्तुतः—इदं व्याख्यानं चिन्त्यम्; लोके योगजबोधे वक्तुस्तात्पर्येऽपि तदनापत्तेः।

परे तु—स्वस्रादिगणे 'अर्थवद्ग्रहण'परिभाषयाऽर्थवन्मातृशब्दस्य ग्रहणात् केनार्थेनार्थवतो ग्रहणमिति तात्पर्यसन्देहे योगार्थस्यावयवशक्तिग्रहाधीनशक्तिग्रहप्रयोज्योपस्थितिविषयत्वेन विलम्बोपस्थितिकतया शीघ्रोपस्थितिकस्य अवयवशक्तिग्रहानधीनशक्तिग्रहप्रयोज्योपस्थितिविषयस्य जननीरूपार्थस्य तत्र सम्बन्धेन पश्चादुपस्थितयोगार्थस्य निराकाङ्क्षतया तत्र सम्बन्धाभाव इति तर्कमूलेयम्। 'रथकाराधिकरण'-न्यायेनापि रूढ्यर्थे तात्पर्यमेव बोध्यते, न तु रूढिजोपस्थितेर्योगार्थबोधे प्रतिबन्धकत्वम्, मानाभावादुक्तदूषणमासाच्चेति दिक् ॥ १०७ ॥

ननु वातायनार्थे गवाक्षेऽवङो वैकल्पिकत्वाद् 'गोक्ष' इत्याद्यपि स्याद्त आह—

**व्यवस्थितविभाषयाऽपि कार्याणि क्रियन्ते ॥ १०८ ॥**

लक्ष्यानुसाराद्व्यवस्था बोध्या । 'शाच्छोरि'ति सूत्रे 'लटः शत्रि'त्यादि-सूत्रेषु च भाष्ये स्पष्टा ॥ १०८ ॥

**विधिनियमसम्भवे विधिरेव ज्यायान् ॥ १०९ ॥**

नियमे ह्यश्रुताया अन्यनिवृत्तेः सामर्थ्यात् परिकल्पनमुक्तानुवाददोषश्चेति लाघवाद्विधिरेवेति बोध्यम् । 'यस्य हल' इत्यत्र 'इजादेः सनुम' इत्यादौ च भाष्ये स्पष्टेयम् ॥ १०९ ॥

ननु 'आशंसायां भूतवच्चे'त्यनेन लुङ इव लङ्लिटोरप्यतिदेशः स्याद्त आह—

**सामान्यातिदेशे विशेषानतिदेशः ॥ ११० ॥**

व्यवस्थितविभाषयाऽपीति । क्वचिदिति शेषः । विकल्पविषये सर्वत्र भावाभावयोः पर्यायेण प्रवृत्तिर्युक्ता, द्वयोरप्युद्देश्यतावच्छेदकावच्छेदेन विधानात् ।

क्वचित्तु तयोरन्यतरस्य लक्ष्यानुरोधात् सङ्कोचः क्रियते इति परिभाषार्थः; तदाह—लक्ष्यानुरोधादिति । तानि च भाष्याभिमतानि लक्ष्याणि 'देवत्रातो गलो ग्राह' इत्यादिना 'अवङ्' सूत्रे शब्देन्दुशेखरे स्पष्टानीत्यन्यत्र विस्तरः ॥ १०८ ॥

विधिनियमसम्भव इति । अपूर्वविधिनियमविधित्वयोः सम्भवेऽपूर्वविधित्वकल्पन-मेव युक्तमिति परिभाषार्थः । अत्र शास्त्रे नियमविधिपदेन "तत्र चान्यत्र च प्राप्तौ परि-संख्येति गीयते" इति जैमिनीयपरिभाषितपरिसङ्ख्याविधिर्गृह्यते ।

अश्रुताया अन्यनिवृत्तेरिति । इदं च विधिमुखेन प्रवृत्तौ बोध्यम् । निषेधमुखेन प्रवृत्तौ तु भवतीत्यस्य न भवतीत्यर्थकल्पनेन इतोऽपि गौरवमिति भावः ।

यस्य हल इत्यत्र भाष्य इति । तत्र हि 'अत इत्यस्य सम्बन्धान्नियामकत्वमुत तदसम्बन्धात्सर्वस्य लोपविधायकमि'ति सन्दिह्य 'अपूर्वे विधिर्भविष्यति न नियम" इत्युक्तम् । एवं 'हेतावि'ति सूत्रस्य लौकिकहेतुग्रहणेन विध्यर्थत्वमेव, न तु तत्प्रयोजको हेतुश्चेति कर्तृसंज्ञकहेतोर्ग्रहणेन हेतोश्चेत्तृतीया तर्हि कर्तृसंज्ञकादेवेति नियमार्थत्वमिति दिक् ॥ १०९ ॥

सामान्यातिदेश इति । सर्वातिदेशविषय इदम् । तथा च सादृश्यप्रतियोगिता-वच्छेदकधर्म-तद्व्यापकधर्म-तद्धर्मप्रयुक्तकार्याणामतिदेशे सम्भवति न तद्व्याप्य-

सामान्योपस्थितिकाले नियमेन विशेषोपस्थापकसामग्र्यभावोऽस्या बीजम्, तेनानद्यतनभूतरूपे विशेषे विहितयोर्नातिदेशः । इयमनित्या, 'नल्यपी'ति लिङ्गात्, तेन स्थानिवत्सूत्रेण विशेषातिदेशोऽपि । स्पष्टं चैतत्सर्वं स्थानिवत्सूत्रे भाष्ये ॥ ११० ॥

ननु 'तित्स्वरितमि'ति स्वरितत्वं 'चिकीर्षती'त्यादौ स्यादत आह—

## प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणम् ॥ १११ ॥

इयं च 'अङ्गस्ये'ति सूत्रे भाष्ये पठिता । वर्णग्रहणे च न प्रवर्तते इति तत्रैव कैयटे स्पष्टम् । अत एव 'सनाशंसभिक्ष उः, वले' इत्यत्र सन्वलयोः प्रत्यययोर्ग्रहणम् ।

परे तु—'तित्स्वरितमि'ति सूत्रे एषा परिभाषा लक्ष्यसंस्काराय भाष्ये क्वापि नाऽऽश्रितेति कैयटेनोक्तम् । 'अङ्गस्ये'ति सूत्रे तत्प्रत्याख्यानायैषा भाष्य एकदेशिनोक्ता—अत एव "निति प्रत्ययग्रहणं कर्तव्यमि"ति वार्तिक-

---

धर्माणां तद्धर्मप्रयुक्तकार्याणामतिदेश इति परिभाषार्थः, तेन कार्यातिदेशविधायकेन-'आशंसायामि'त्यनेन भूतत्वरूपतादृशसामान्यधर्मप्रयुक्तलुङतिदेश एव । "ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमिति सामान्यं यद् ब्राह्मणकार्यं तदेव क्षत्रियेऽतिदिश्यते, न तु माठरादिब्राह्मणविशेषनिष्ठमि"त्येतल्लोकन्यायसिद्धेयम् ।

नल्यपीतीति । स्थानिवद्भावेन कित्त्वमाश्रित्य प्राप्तस्य 'घुमास्थे'तीत्वस्यानेन निषेधः क्रियते । क्त्वात्वस्य किदकित्साधारणत्वे तद्विशेषधर्मस्य कित्त्वस्यातिदेशासम्भवेनोक्तनिषेधवैयर्थ्यमिति भावः ।

विशेषातिदेशोऽपीति । परे तु—सामान्यतः स्थानिवृत्तिधर्मातिदेशस्वीकारे 'तावि'त्यत्र त्यदाद्यकारस्यापि जराशब्दत्वातिदेशापत्त्या जरसादेशापत्तिः, अतः सङ्ग्राहकवाक्यस्याऽऽवृत्त्या तल्ल्यबादेशस्तन्क्त्वावद्भवतीत्यर्थस्याऽऽवश्यकत्वेन 'प्रदाये'त्यत्र कित्त्वस्य तत्क्त्वात्वव्यापकतयाऽतिदेशसम्भवेन 'नल्यपी'त्यस्य चारितार्थ्येनोक्तार्थज्ञापकत्वासम्भव इत्याहुः ॥ ११० ॥

वर्णग्रहणे च नेति । तेन 'अस्य च्वावि'तीत्वं 'शुक्लीभवती'त्यादावप्रत्ययस्यापि भवति । अत एवेति । एतत्परिभाषास्वीकारादेवेत्यर्थः ।

एकदेशिनेति । 'अब्भक्षेण'त्यत्रपो भीतितादेशमाशङ्क्य वर्णग्रहणेऽप्यनया समाहितत्वात्तत्त्वमिति भावः । वार्तिककृतेति । भाष्यकृता च 'दिव उदि'त्यादौ दिवमाश्रित्य तत्प्रत्याख्यातं न त्वेनामाश्रित्येति बोध्यम् ।

कृतोक्तम् । उक्तसूत्रयोर्व्याख्यानात्प्रत्यययोरेव ग्रहणमित्याहुः ॥ १११ ॥

ननु 'विपराभ्यां जेरि'त्यात्मनेपदं परा सेना जयतीत्यत्रार्थके 'पराजयति सेने'त्यत्र प्राप्नोतीत्यत आह—

**सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् ॥ ११२ ॥**

---

तेन विशब्दसाहचर्यादुपसर्गस्यैव पराशब्दस्य ग्रहणमिति तत्रैव भाष्ये स्पष्टम् ।

सहचरणं सदृशयोरेवेति सहचरितशब्देन सादृश्यवानुच्यते । रामलक्ष्मणावित्यादावपि सादृश्यमेव नियामकम् ; सदृशयोरेव सहविवक्षा तयोरेव सहप्रयोग इत्युत्सर्गाच्च ।

---

आहुरिति । केचित्तु—'वसुस्रंस्वि'त्यत्र परसाहचर्याद्वसुधातोर्ग्रहणवारणायैषा अवश्यमाश्रयणीया । अत एव 'वनो र च, वसोः सम्प्रसारणमि'त्यादि वन्वसोः प्रत्ययस्यैव ग्रहणम् । 'दिव उदि'त्यादौ तकारविशिष्टस्य उशब्दस्य तत्काले शक्तिरित्यभिप्रायेण तकारस्येत्संज्ञायां तित्स्वरप्राप्तौ "तितिप्रत्यये"ति वार्तिकोपन्यसनम् । सिद्धान्ते तपरसूत्रेण तकारहिते एव शक्तिबोधने तु तस्यानवयवत्वात् 'तित्स्वरितमि'त्यस्याप्राप्तिरिति न तद्विरोधः । किञ्च 'तिती"ति वार्तिकं "लुग्विकरणपरिभाषया पिबतेर्ग्रहणं कर्तव्यमि"ति वार्तिकमिव प्रकृतपरिभाषाया अवयुत्यानुवादः । तत्प्रत्याख्यानपरं भाष्यं च तत्सूत्रेऽस्याः प्रयोजनं नास्तीत्यभिप्रायकमिति न कश्चिद्दोष इत्याहुः ॥ १११ ॥

विशब्दसाहचर्यादिति । ननु विशब्दस्य पक्षिवाचकस्यापि सत्त्वेन कथमुपसर्ग ग्रहणमिति चेन्न । पराशब्दसाहचर्याद्विशब्दोऽपेक्षिवाची गृह्यते, स चोपसर्ग एव, तथाभूतविशब्दसाहचर्याच्च पराशब्द उपसर्गो गृह्यते इति परस्परसाहचर्याश्रयणेना दोषात् । एवं 'रामलक्ष्मणावि'त्यत्रापि रामसाहचर्याद् दुर्योधनापत्यभिन्नो लक्ष्मणो गृह्यते, स च दशरथापत्य एव प्रसिद्धः, तत्साहचर्याच्च जामदग्न्यबलरामभिन्नो रामो गृह्यते इति बोध्यम् । साहचर्यस्य लोकेऽभिधानियामकत्वमित्येतन्मूलकेयम् । तदुक्तमभियुक्तैः—

"संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥" —इति ।

अत्रापि साहचर्यं सादृश्यमेवेत्याह—सादृश्यमेव नियामकमिति ।

अत एव 'वा नपुंसकस्ये'ति सूत्रे वा शाविति न कृतम्। तत्र नपुंसकग्रहणं हि गृह्यमाणस्य शत्रन्तस्यैव नपुंसकत्वे यथा स्याद् 'बहवो ददतो येषु तानि कुलानि, बहुददती'त्यत्र मा भूद्, 'बहूनि ददन्ति येषु ते बहुददन्त' इत्यत्र यथा स्यादित्येवमर्थम्। स्पष्टं चेदं 'स्वमोर्नपुंसकादि'त्यत्र भाष्ये।

केचित्तु—'अचो रहाभ्यां द्वे' इत्यत्र श्रुतेन रेफस्य निमित्तत्वेन यरन्तर्भावादनुमितेन कार्यित्वं बाध्यत इत्येतदुदाहरणमाहुः। तन्न; तक्रकौण्डिन्यन्यायेन सिद्धेरित्यन्यत्र विस्तरः॥ ११३॥

ननु 'तत्पुरुषे तुल्यार्थ' इति स्वरः 'परमेण कारकेण, परमकारकेणे'त्यादौ स्यात्, तथा 'गातिस्थाघुपाभूभ्य' इति लुक् 'पै ओवै शोषण' इत्यतः कृतात्त्वात्परस्यापि स्यादत आह—

**लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्॥ ११४॥**

लक्षणं लाक्षणिकमुपचारात्।

---

न्यायसिद्धेऽर्थे ज्ञापकमप्याह—अत एवेति। शत्रन्तस्येति। शतृरूपस्याङ्गान्त्यस्येत्यर्थः। तथा चानुवर्तमानेन शतृपदेन श्रुतत्वात् पूर्वं नपुंसकस्य सम्बन्धः, पश्चादश्रुतेनानुवर्तमानेनाङ्गेन सह शत्रभिन्ननपुंसकस्य सम्बन्धः। एतेन—शत्रङ्गयोरुभयोरपि प्रकरणप्राप्तत्वाविशेषान्न प्रकृतपरिभाषाविषयः, शत्रन्तान्तोपस्थित्यपेक्षया शत्रन्तस्य पूर्वमुपस्थितिरिति त्वन्यदित्यपास्तम्।

तक्रकौण्डिन्यन्यायेनेति। वस्तुतस्तु—अत्र न तक्रन्यायस्य विषयः, किन्तु 'माठरपरिवेषण'न्यायस्येति तत्रैव विस्तरेण निरूपितम्॥ ११३॥

उपचारादिति। लक्षणया अंशेऽआद्यजन्तत्वकल्पनया वा लक्षणपदं लाक्षणिकेत्यर्थबोधकमित्यर्थः। प्रतिपदोक्तत्वं च—स्वीयोद्देश्यतावच्छेदकज्ञानायोपयुज्यमानानुपूर्वीमत्पदघटितशास्त्रविधेयत्वम् ( 'तत्पुरुषे तुल्यार्थे'ति शास्त्रीयोद्देश्यतावच्छेदकतृतीयान्तत्वज्ञानाय उपयुज्यमानाऽऽनुपूर्वी—तृतीयास्वरूपा, तद्वत्तृतीयापदघटित 'तृतीया तत्कृतार्थे'ति शास्त्रविधेयत्वं—तृतीयातत्पुरुषस्यैव, न तु 'विशेषणं विशेष्ये'ति कर्मधारयादेरिति समन्वयः। एवं 'गातिस्थे'ति शास्त्रीयोद्देश्यतावच्छेदकज्ञानायोपयुज्यमानानुपूर्वी—पात्वरूपा, तद्वत्पापदघटितशास्त्रं 'पापान' इति, तद्विधे-

---

मूले—परमेण कारकेणेति। अत्र परिनिष्ठितविभक्त्या कर्मधारयसमासो बोध्यः।

तत्तद्विभक्तिविशेषाद्यनुवादेन विहितो हि समासादिः प्रतिपदोक्तस्तस्यैव ग्रहणं, शीघ्रोपस्थितिकत्वात् । द्वितीयो हि विलम्बोपस्थितिकः । 'पै' इत्यस्य

---

यस्य पाशब्दस्यैव ग्रहणं, न तु'आदेच' इति शास्त्रविहितस्य पैधातुनिष्पन्न-पाशब्दस्येति बोध्यम् ।

नन्वेवं प्रतिपदोक्तत्वस्वीकारे 'त्यदादीनाम' इत्यादाविकपदानुपस्थितये 'इको गुणे'ति सूत्रे पूर्वसूत्रतो गुणादिपदानुवृत्तिकरणं भाष्योक्तमसङ्गतं स्यात्; "लक्षणप्रतिपदोक्त'परिभाषया तु नात्र निर्वाह" इति शेखरग्रन्थविरोधश्च ( 'इको गुणे'ति शास्त्रीयोद्देश्यतावच्छेदकज्ञानाय उपयुज्यमानाऽऽनुपूर्वी— गुणादिशब्दत्व-रूपा, तद्वद्गुणादिपदघटितं सार्वेत्यादि शास्त्रं, तद्विधेयगुणादेरेव प्रतिपदोक्तत्वात् ग्रहणेन त्यदादीत्यादिविहितगुणादेरग्रहणादेव तत्र वारणसम्भवात् ) इति चेन्न । स्वीयोद्देश्यतावच्छेदकं रूपं यत्र साक्षादन्यशास्त्रविधेयवृत्ति तत्रैतत्परिभाषा-प्रवृत्तिस्वीकारेण 'इको गुणे'ति शास्त्रीयोद्देश्यतावच्छेदकगुणशब्दत्वादेः सार्वे-त्याद्यन्यशास्त्रीयविधेये साक्षादवृत्तित्वेन तत्रैतत्परिभाषाप्रवृत्तेरभावेनादोषात् । अत एव च 'गतिकारकपूर्वपदस्ये'त्यत्र प्रतिपदोक्तपरिभाषाया अप्रवृत्त्या बहुव्रीहेरपि ग्रहणेन 'आध्यै, प्रध्यै' इति भाष्योक्तबहुव्रीहौ यण्सिद्धिरिति—केचित् ।

परे तु—स्वविशिष्टं स्वघटकपदेन प्रतिपदोक्ततया गृह्यते; वैशिष्ट्यं च स्वीयोद्देश्यतावच्छेदकरूपावच्छिन्नविधेयताश्रयत्व–स्वीयोद्देश्यतावच्छेदकसमर्पकज्ञान-विषयीभूतानुपूर्वीविशिष्टविधेयताश्रयत्वैतदुभयसम्बन्धेन । अत्र वैशिष्ट्यं च—स्वाव-च्छिन्नत्व–स्वावच्छिन्नपदप्रयोज्योद्देश्यतानिरूपितत्वैतदन्यतरसम्बन्धेन । आद्यसम्बन्ध-दानेन 'गतिकारके'त्यत्र प्रतिपदोक्तग्रहणासम्भवेनाविशेषाद् द्वयोर्ग्रहणम् । द्वितीय-

---

स्वीयोद्देश्येति । यत्र शास्त्रे परिभाषा सञ्चारणीया, तत् स्वपदेन ग्राह्यम् ।

स्वीयोद्देश्यतावच्छेदकं रूपमिति । अत्रावच्छेदकता साक्षात्परम्परासाधारणी ग्राह्या । साक्षादन्यशास्त्रविधेयवृत्तीति । अत्र लाक्षणिकत्वेन प्रतिपदोक्तत्वेन वाऽभिमतविधायकमेव अन्यशास्त्रेण ग्राह्यम् , न तु उदासीनशास्त्रम् ; अन्यथा 'अदेङ् गुणः' इति शास्त्रीयविधेये गुणपदे गुणपदत्वस्य साक्षाद्वृत्तितया दोष एव स्यात् । प्रतिपदोक्तत्वेन अभिमतवृत्ति विधेयतावच्छेदक-रूपावच्छिन्नोद्देश्यताकशास्त्रत्वं परिभाषालिङ्गमिति यावत् ।

परिभाषाप्रवृत्तिप्रयोजकप्रागुक्तलिङ्गकल्पनायां गौरवात् , मानाभावात् , गुणपदत्वरूपोद्दे-श्यतावच्छेदकस्य साक्षाद्विधेयवृत्तितया दोषतादवस्थ्याच्च । गुणवृद्धिपदानुवृत्त्यभावे 'इकोगुणवृद्धी' इत्यस्य 'सङ्केतेन गुणवृद्धिपदवन्निष्ठविधेयताप्रयोजकपदघटितशास्त्रे इक इति पदमुपतिष्ठते' इति तदर्थात् परम्परया गुणपदवत्त्वस्य तदीयोद्देश्यतावच्छेदकत्वादतः प्रकारान्तरेणाऽऽह— परे त्विति । स्वावच्छिन्नत्वेति । अत्र अवच्छिन्नत्वं साक्षाद् ग्राह्यम् । गतिकारकेत्यत्रेति । अत्र समासपदाभावेन समासत्वावच्छिन्नोद्देश्यताकत्वस्य अप्रसिद्धेरिति भावः । पूर्वपदेन समासा क्षेपस्तु न, 'गतिकारकपूर्वे'त्येव पाठादित्यादि शेखरे स्पष्टम् ।

'पा' इति रूपं लक्षणानुसन्धानपूर्वकं विलम्बोपस्थितिकम् ; पिबतेस्तु तच्छीघ्रोपस्थितिकम् । इदमेव ह्येतत्परिभाषाबीजम् ।

इयं च वर्णग्रहणेऽपि, 'ओत्'सूत्रे भाष्ये सञ्चारितत्वात् ।

यत्तु —वर्णग्रहणे नैषा, 'आदेच' इत्यत्रोपदेशग्रहणादिति; तत्तु तस्मिन्नेव सूत्रे शब्देन्दुशेखरे दूषितमिति तत एव द्रष्टव्यम् ।

अनित्या चेयम् , 'भुवश्च महाव्याहृतेरि'ति महाव्याहृतिग्रहणादित्यन्यत्र विस्तरः ॥ ११४ ॥

---

सम्बन्धदानेन स्वघटकपदवृत्त्यानुपूर्वीमत्पदघटितशास्त्रविधेयस्य ग्रहणात् 'विभाषा दिक्समास'इत्यत्र दिङ्नामानीति बहुव्रीहेरेव ग्रहणम् । अत्रोद्देश्यतावच्छेदकसमर्पकतान-विषयीभूतेति विशेषणदानेन 'तृतीया समासे' इति शास्त्रीयोद्देश्यतावच्छेदकसर्वादित्व-ज्ञानाय उपयुज्यमानानुपूर्वी—पूर्वत्वादिरूपा, तदवच्छिन्नोद्देश्यता—'पूर्वसदृशे'ति शास्त्रीया, तन्निरूपितविधेयताश्रयसमासस्यैव प्रतिपदोक्तत्वात्तत्र ग्रहणम् । स्वादौ च्छिन्नत्वनिवेशाद् 'गातिस्थे'त्यादौ पिबतेर्ग्रहणम् ।

सञ्चारितत्वादिति । अदोभवदि'त्यत्र प्रगृह्यत्वमाशङ्क्य 'ओतश्च्विप्रतिषेध' इति वार्तिकप्रत्याख्यानायैषा तत्रोपन्यस्तेति बोध्यम् ।

दूषितमिति केचित्तु—फलाभावाद्वर्णग्रहणे एतदप्रवृत्तिः । 'अदोभवदि'त्यादौ गौणमुख्यन्यायेन तद्वारणपरभाष्येण पूर्वभाष्यस्यैकदेशित्वबोधनादिति प्राहुः ।

अनित्येति । तेन 'भोभगो' इति सूत्रे लाक्षणिकानामपि वार्तिकनिष्पन्नानां ग्रहणं सिद्धम् ।

केचित्तु—धाग्रहणेन धेटो ग्रहणमिति प्राहुः ॥ ११४ ॥

---

पिबतेर्ग्रहणमिति । एवम् 'इको गुणवृद्धी' इत्यत्र आद्यसम्बन्धसत्त्वेऽपि द्वितीय-सम्बन्धाभावान्न दोषः, सार्वधातुकेत्यादिशास्त्रीयविधेयतायाः साक्षाद् गुणपदत्वेन अवच्छिन्नत्वा-भावात् गुणपदप्रयोज्योद्देश्यतानिरूपितत्वाभावाच्च ।

दूषितमितीति । प्राचीनाः खलुः 'आदेच' इति सूत्रे धातुग्रहणमनुवर्त्य एजन्तस्य धातोरित्यर्थेन 'गोभ्याम्, नौभ्याम्' इत्यत्राऽऽत्ववारणात् उपदेशग्रहणं 'चेता, स्तोता' इत्यत्राऽऽत्व-वारणाय । लाक्षणिकत्वेन तत्रापि वारणे उपदेशग्रहणं व्यर्थं सत् वर्णग्रहणे लक्षणप्रतिपदोक्तपरि-भाषानित्यत्वबोधनाय अनित्यत्वफलञ्च 'क्षापयति' इत्यादौ पुगसिद्धिरित्युपवर्णयन्ति स्म । तत्र धातुग्रहणानुवृत्तौ अनुबन्धविनिर्मुक्तस्य धातुसंज्ञया माङो व्यतिहारे इति निर्देशानुपपत्त्या तत्र तदनुवृत्तेरेकदेशयुक्तित्वं परिकल्प्य उपदेशग्रहणस्य 'गोभ्याम्, नौभ्याम्' इत्यत्राऽऽत्ववारणाय आवश्यकत्वात् तदनित्यत्वज्ञापकत्वस्य अनुपपत्तेस्तन्मतं नव्यैर्दूषितमिति भावः । 'क्षापयति' इत्यादौ पुग्विधिस्तु महाव्याहृतिग्रहणेन परिभाषाऽनित्यत्वेन साधनीयः । एवञ्च वर्णग्रहणे न प्रवर्तत इत्यनुगतानित्यत्वं तु कल्पनीयमिति तत्त्वम् ॥ ११४ ॥

नन्वेवं देङो दोधातोश्च कृतात्त्वस्य घुसंज्ञा न स्यात्, तथा मेङ आत्वे 'प्रणिमाते'त्यादौ 'नेर्गदनदे'ति णत्वं न स्यात्, तथा 'गै' इत्यस्यात्त्वे 'घुमास्थे तीत्वं न स्यादत आह—

## गामादाग्रहणेष्वविशेषः ॥ ११५ ॥



अत्र च ज्ञापकं दैपः पित्त्वम्। तद्धि 'अदाबि'ति सामान्यग्रहणार्थम्; अन्यथा लाक्षणिकत्वादेव विधौ तद्ग्रहणे सिद्धे किं निषेधे सामान्यग्रहणार्थेन पित्वेन, तेन चैकदेशानुमतिद्वारा सम्पूर्णा परिभाषा ज्ञाप्यते।

इयं च 'लक्षणप्रतिपदोक्त'परिभाषा-'निरनुबन्धक'परिभाषा-'लुग्विकरण'-परिभाषाणां बाधिका। 'दा धा घ्वि'ति सूत्रे भाष्ये स्पष्टा।

'गातिस्थे'ति सूत्रे इणादेशगाग्रहणमेवेष्यत इति न दोष इत्यन्यत्र विस्तरः ॥ ११५ ॥

ननु वृद्ध्यादिसंज्ञाः समुदाये स्युरत आह—

## प्रत्येकं वाक्यपरिसमाप्तिः ॥ ११६ ॥



'देवदत्तादयो भोज्यन्तामि'त्यत्र भुजिवत् ॥ ११६ ॥

---

गामादाग्रहणेष्विति। न च धेटो घाशब्दस्य लाक्षणिकत्वेन घुत्वानापत्तिः। न च गामादीनां ग्रहणं 'यस्मिन्नि'ति बहुव्रीह्याश्रयणेन दाघटित'दा धा घ्वि'ति शास्त्रे एतदप्रवृत्तिस्वीकारेणादोष इति वाच्यम्; 'घुमास्थे'त्यत्र पैधातोरपि ग्रहणापत्तेरिति वाच्यम्; गामादिग्रहणस्य धेटोऽप्युपलक्षणत्वेनादोषात्।

केचित्तु—'दो दद् घोरि'ति सूत्रे धेटा व्यावृत्तये कृतेन दाग्रहणेन "धाग्रहणेऽप्यविशेष" इति परिभाषान्तरं ज्ञाप्यते; अन्यथा धाञो ह्यादेशेन बाधात्तदप्राप्तौ धेटोऽप्यप्रतिपदोक्तत्वेनाग्रहणे तद्वैयर्थ्यापत्तिः स्पष्टैवेति प्राहुः।

परे तु— दाशब्दस्य ग्रहणं 'यस्मिन्नि'ति बहुव्रीहिणा दाशब्दघटितस्य 'दा धा घ्वि'ति सूत्रस्य सङ्ग्रहः। तथा च गामाशब्दविषये दापदघटितसूत्रे च 'लक्षण-प्रतिपदोक्त'परिभषा– 'लुग्विकरण'परिभाषा–'निरनुबन्धक'परिभाषा नोपतिष्ठन्ते इति परिभाषार्थः, तेन धेटोऽपि ग्रहणसिद्धिरिति वदन्ति ॥ ११५ ॥

वाक्यपरिसमाप्तिरिति। वाक्यजन्यबोधविषयतापर्याप्तिस्तद्घटकेषु भवतीत्यर्थः। भुजिवदिति। षष्ठ्यन्ताद्वतिः ॥ ११६ ॥

नन्वेवं संयोगसंज्ञासमाससंज्ञाऽभ्यस्तसंज्ञा अपि प्रत्येकं स्युरत आह—

## क्वचित्समुदायेऽपि ॥ ११७ ॥

'गर्गाः शतं दण्ड्यन्ताम्, अर्थिनश्च राजानो हिरण्येन भवन्ती'त्यादौ दण्डनवत्। लक्ष्यानुरोधेन च व्यवस्था ॥ ११७ ॥

ननु 'यू स्त्र्याख्यौ'त्यत्र व्यक्तिपक्षे दीर्घनिर्देशादनण्त्वेन ग्राहकसूत्राप्राप्त्या उदात्ताद्यन्यतमोच्चारणेऽन्यस्वरकस्य संज्ञा न स्यादत आह—

## अभेदका गुणाः ॥ ११८ ॥

असति यत्ने स्वरूपेणोच्चारितो गुणो न भेदको न विवक्षित इत्यर्थः।

अत्र च 'अस्थिदधी'त्यादानङादेरुदात्तस्यैवोच्चारणेन सिद्धे उदात्तग्रहणं ज्ञापकम्।

'स्वरूपेणोच्चारित' इत्युक्तेरनुदात्तादेरन्तोदात्तादित्युदात्तादिशब्दोच्चारणे विवक्षैव। 'उञ, ऊँ' इत्यत्राननुनासिके एवोच्चारणीये यत्नाधिक्येनानुनासिको-

---

समुदायेऽपीति। अभ्यस्तसंज्ञायामुभेग्रहणात् द्वित्वं, समाससंज्ञायां सहग्रहणात् संयोगसंज्ञायामनन्तरेति पर्युदासाच्चानयोः साहित्यमुद्देश्यतावच्छेदकतया विवक्षितमिति न प्रत्येकं ताः संज्ञा इति भावः।

अर्थिन इति। वाक्यशेषबोधितप्राधान्यवतः शतस्याप्रधानगर्गानुरोधेन नाऽऽवृत्तिरिति भावः। व्यवस्थेति। साहित्यस्योपलक्षणत्वविशेषणत्वाभ्यामेतन्न्याययोर्व्यवस्थेत्यर्थः ॥ ११७ ॥

अन्यस्वरकस्येति। अनुनासिकादेरुपलक्षणमिदम्। संज्ञा न स्यादिति। त्रिरूपत्वेन 'स्वं रूपमि'त्यनेन ग्रहणासम्भवादिति भावः। परिभाषासत्त्वे तु गुणातिरिक्तवैरूप्यप्रयोजकधर्माभाववत एव 'स्वं रूपमि'त्यनेन ग्रहणमिति बोध्यम्।

स्वरूपेणेति। 'असति यत्न' इत्यस्यैवावयुत्याऽनुवादोऽयम्। 'अनुदात्तादेरि'त्यत्राऽजादेरित्येवानुदात्तादेः सिद्धया तत्रानुदात्तादिपदस्यैव यत्नरूपत्वात्।

ज्ञापकमिति। न च ज्ञापितेति तद्व्यर्थम्, भाव्यमानत्वेनान्यगुणकास्याप्राप्तेरिति वाच्यम्; भाव्यमान'परिभाषायाः स्वरत्वव्याप्यधर्मविषयेऽप्रवृत्तेः पूर्वमुपपादितत्वात्। अत एव 'बहुवचने झल्येदि'त्यनेनोदात्तादिगुणकैकारविधानसिद्धिरित्यन्यत्र विस्तरः।

अनुनासिके एवोच्चारणीय इति। न च पथीयतेः क्विपि 'पन्थाः' इत्यादौ स्थानिनो निरनुनासिकस्यापि सम्भवादिदमसङ्गतमिति वाच्यम्; तस्यानभिधाने-

च्चारणाद्विवक्षा बोध्या । 'पथिमथ्यृभुक्षामि'त्यादौ स्थान्यनुरूपतयाऽनुनासिक एवोच्चारणीये निरनुनासिकोच्चारणात्तद्विवक्षा । एतदर्थमेव 'असति यत्न' इत्युक्तम् ।

न चैवमस्थ्यादीनां 'नङ्विषयस्ये'त्याद्युदात्ततयाऽन्त्यादेशस्यानङः स्थान्यनुरूपेऽनुदात्त एवोच्चारणीये उदात्तोच्चारणं विवक्षार्थं भविष्यतीति कथमस्य ज्ञापकत्वमिति वाच्यम्; परमास्थिशब्दादावन्तोदात्त उदात्तगुणकस्यापि स्थानित्वेन विवक्षायां मानाभावात् ।

"चतसर्याद्युदात्तनिपातनं करिष्यते, वधादेशे आद्युदात्तनिपातनं करिष्यते, पदादयोऽन्तोदात्ता निपात्यन्ते, सहस्य स उदात्तो निपात्यत" इत्यादिभाष्यं त्वेकश्रुत्याऽष्टाध्यायीपाठे क्वचिदुदात्ताद्युच्चारणं विवक्षार्थमित्याशयेन । त्रैस्वर्येण पाठ इति पक्षे तु ज्ञापकपरं भाष्यमिति कैयटादयः ।

परे तु—निपातनं नामान्यादृशे प्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणम्, तत्तद्रूपाद्यत्नात्तत्र तत्रोदात्तादिविवक्षा । 'तिसृचतसृ'त्यत्र द्वन्द्वप्रयुक्तेऽन्तोदात्ते उच्चारणीये आद्युदात्तोच्चारणमन्यत्र स्थान्यनुरूपे स्वर उच्चारणीये तत्तदुच्चारणं विवक्षार्थम् ।

सम्पूर्णाष्टाध्याय्याचार्येणैकश्रुत्या पठितेत्यत्र न मानम् । क्वचित्पदस्यैकश्रुत्याऽपि पाठो यथा—'दाण्डिनायनादि'सूत्रे 'ऐक्ष्वाके'ति । यद्यप्यध्येतार एकश्रुत्यैवाङ्गानि पठन्ति ब्राह्मणवत्; तथापि व्याख्यानतोऽनुनासिकत्वादिवदुदात्तनिपातनादिज्ञानमित्याहुः ।

विधेयाण्विषये त्वप्रत्यय इति निषेधान्न गुणाभेदकत्वेन सवर्णग्रहणम् । अत एव 'घटवदि'त्यादौ मतोर्मस्य नानुनासिको वकारः । अत एव तद्वाना-

---

नादोषात् । स्पष्टं चैतत्तत्रैव सूत्रे शेखरशब्दरत्नयोरिति बोध्यम् । स्थान्यनुरूप इति । यथा वधादौ हन्त्यनुरूपेऽन्तोदात्ते उच्चारणीये आद्युदात्तोच्चारणं विवक्षार्थमिति भावः । न च हनधातुरेकाच्त्वादन्तोदात्त आद्युदात्तश्चेत्याद्युदात्तवधादेशोच्चारणमपि तदनुरूपमेवेत्येतदसङ्गतमिति वाच्यम्; वधादेशस्य स्थानिवत्त्वेन धातुत्वात् 'धातोरि'त्यन्तोदात्तस्योचिततयाऽऽद्युदात्तोच्चारणस्य तदनुरूपत्वाभावात् । हनधातोर्वस्तुत आदेरुदात्तत्वेऽपि 'धातोरि'त्यनेनान्तोदात्तत्वेनैव साधुत्वविधानात् तेन रूपेणैव तस्याभिव्यक्तेस्तादृशे वधादेशे कर्तव्ये आद्युदात्तोच्चारणं विवक्षार्थमित्याशयादिति दिक् ।

तद्वानासामिति । नन्वत्र तसौ मत्वर्थे इत्यत्र तकारप्रश्लेषेण भत्वान्न दोष

सामिति सूत्रनिर्देशः ; अन्यथा "प्रत्यये भाषायामि"ति नित्यमनुनासिकः स्यात्। जातिपक्षे तु नास्योपयोग इति बोध्यम् । 'यू' इत्यादौ दीर्घमात्र-वृत्तिजातिनिर्देशान्न क्षतिरित्यन्यत्र विस्तरः ॥ ११८ ॥

ननु 'सर्वनामानी'त्यत्र णत्वाभावनिपातनेऽपि लोके सणत्वप्रयोगस्य साधुत्वं स्यादत आह—

**बाधकान्येव निपातनानि ॥ ११९ ॥**

तत्तत्कार्ये नाप्राप्ते निपातनारम्भात् । 'पुराणप्रोक्तेष्वि'ति निपातितपुराण-शब्देन पुरातनशब्दस्य बाधः प्राप्तोऽपि पृषोदरादित्वान्नेति बोध्यम् ।

पुराणेति पृषोदरादिः पुरातनेति चेत्यन्ये ।

इयं सर्वादिसूत्रे भाष्ये स्पष्टा। अबाधकान्यपि निपातनानीति तु भाष्य-विरुद्धम् ॥ ११९ ॥

---

इति चेन्न। 'असुव्वत' इति भाष्योदाहृतस्योपलक्षणत्वेनादोषात । ननु जातिपक्षे 'यू स्त्र्याख्यौ'त्यत्र ह्रस्वस्यापि ग्रहण स्यादित्वादिजातेस्तत्र सत्त्वादित्यत आह— दीर्घमात्रवृत्तीति । दीर्घनिर्देशसामर्थ्याद्दीर्घमात्रवृत्तिजातिरेव विवक्षितेति भावः ॥ ११८ ॥

णत्वाभावनिपातनेऽपीति । न च णकारघटिता यत्र संज्ञा लोके प्रसिद्धा, तत्रैव णत्वस्य साधुत्वम्, अत एव रघुनाथादिशब्दे णत्वं न, तथा च प्रकृतेऽपि णत्व-घटितस्य तस्य लोकेऽभावान्न णकारघटितस्य साधुत्वमिति वाच्यम्; सर्वनाम-संज्ञायाः पाणिनिकल्पितत्वेन शास्त्रानुसारिसंज्ञाकरणस्यौचित्यात्, णत्वघटितसंज्ञा-करणे तु तेनैव लोकेऽपि संज्ञिबोधसम्भवात् णघटितस्य साधुतापत्तेरित्याशयात् ।

पृषोदरादित्वादिति । पुरातनशब्देन निपातनात् प्राप्तस्तकारलोपः पृषोदरादिषु पाठसामर्थ्यात् पक्षे न भवतीत्यर्थः ।

अन्य इति । पृषोदरादिषु पुराणपुरातनयो द्वयोरपि पाठेनोभयसिद्धया निपातन-क्लेशो नेत्यस्मिन् पक्षे लाघवं बोध्यम् ।

अबाधकान्यपीति । पुरातनशब्दस्य लोके साधुत्वार्थं वृत्तिकृतैतदुक्तम् । अत एव 'श्रावणी'त्यपि सिद्ध्यति। भाष्यविरुद्धमिति। सर्वादिसूत्रस्थभाष्यविरुद्धमित्यर्थः । तत्र हि बाधकानि निपातनानीति स्वीकारे 'अपरस्पराः क्रियासातत्ये" इति निपात-नात समो मस्य लोपेन सततशब्दस्य लोके साधुत्वेऽपि सन्ततशब्दस्यासाधुत्वापत्ति-रित्युक्त्वा "समो वा हिततयोरि"ति यत्नान्तरस्वीकाराभिप्रायेण समाहितम् । 'अबाधकानी'त्यस्य सत्त्वे तु तेनैव सन्ततशब्दस्यापि साधुत्वसिद्धौ समो वेति वचनारम्भेण समाधानासङ्गत्यापत्त्या तद्विरोधः स्पष्ट एव । 'श्रावणी'ति तु पृषोदरादित्वात् साध्विति तदाशयः ।

ननु—'ऊख'धातोर्द्वित्वे स्वत एव ह्रस्वत्वात् पूर्वमभ्यासह्रस्वाप्रवृत्तौ हलादिःशेषे सवर्णदीर्घे ह्रस्वापत्तिरत आह—

## पर्जन्यवल्लक्षणप्रवृत्तिः ॥ १२० ॥

एवं च ह्रस्वस्यापि ह्रस्वे कृते 'लक्ष्ये लक्षणस्ये'ति न्यायेन न पुनर्ह्रस्वः । तदुक्तम्—'इको झलि'ति सूत्रे भाष्ये "कृतकारि खल्वपि शास्त्रं पर्जन्यवदि"ति । सिद्धेऽपि ह्रस्वादिकारीत्यर्थः ।

न च लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरित्यत्र न मानमिति वाच्यम् ; "समो वा लोपमेके" इति लोपेनैकसकारस्य द्वित्वेन द्विसकारस्य पुनर्द्वित्वेन च त्रिसकारस्य सिद्धौ 'समः सुटी'ति सूत्रस्यैव मानत्वात् , 'सम्प्रसारणाच्च, वृद्धिरि'त्यादौ भाष्ये स्पष्टमुक्तत्वाच्च ।

अत्र विकारकृतो लक्ष्यभेदो नेति 'सिचि वृद्धिरि'ति भाष्यात् प्रतीयत इत्यन्यत्र विस्तरः ॥ १२० ॥

---

केचित्तु—"विभाषा फाल्गुनी"ति निर्देशज्ञापितस्य 'पौर्णमास्यामयं लुब् ने'ति निषेधस्य तत्रैव सूत्रे श्रवणेति निर्देशेनानित्यत्वज्ञापनात् 'श्रावणी'ति सिद्धयतीति वदन्ति । 'अतिशायने' इति दीर्घनिपातनाल्लोकेऽतिशयनशब्दोऽसाधुरेवेति दिक् ॥ ११९ ॥

ह्रस्वे कृत इति । दीर्घान् पूर्वमाङ्गत्वादिति भावः । कृतकारीति । उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्य वाक्यमर्यादासिद्धत्वेन तन्मूलैषेति भावः । ननु पर्जन्यदृष्टान्ते तस्य तात्कालिकफलाजनकत्वेऽपि पूर्णजलाशयस्य परिरक्षणादिरूपभाविफलजनकत्वस्य सत्त्वेनात्र तत्प्रवृत्तिरनुचिता । अत एव भाष्ये "अकृतकारि खल्वपि शास्त्रमग्निवत् , यथाऽग्निर्दग्धं न दहति तथा शास्त्रमपि कृतं न करोती"त्युक्तमिति चेन्न । 'ऊखतुरि'त्यत्रापि ह्रस्वस्य ह्रस्वविधाने 'लक्ष्ये लक्षण'न्यायेन दीर्घोत्तरं पुनर्ह्रस्वाप्रवृत्तिरूपफलस्य सत्त्वेन पर्जन्यदृष्टान्तस्य सूपपादत्वात् । अत एव 'मो राजी'त्यनेनानुस्वारनिवृत्तिरूपफलसत्त्वात् सिद्धस्यापि मकारस्य पुनर्मकारविधानमुपपद्यते । यत्र तु सर्वथा फलाभावो यथा—'रमाणामि'त्यत्र 'नामी'ति दीर्घप्रवृत्तेः, तत्राग्निदृष्टान्तेनास्तु तदप्रवृत्तिः । प्रकृते तु उद्देश्यतावच्छेदकावच्छेदेनान्वयस्य क्लृप्तस्य त्यागे मानाभाव इति दिक् ।

विकारकृत इति । तेन 'उदवोढामि'त्यत्र वृद्धौ कृतायां तल्लक्ष्यत्वेन पुनः सा नेति भावः । इदमागमकृतस्याप्युपलक्षणम् । अत एव 'सर्वेषामि'त्यत्र पुनः सुडागमो नेति बोध्यम् ।

ननु 'स्यन्दू'धातोः 'स्यन्त्स्यती'त्यादावात्मनेपदनिमित्तत्वाभावनिमित्तत्वाच्च

---

तल्लक्ष्यत्वं च स्वीयप्राथमिकप्रवृत्तौ उद्देश्यतावच्छेदकावच्छेदेनाऽऽश्रीयमाणो यावान् शब्दसमुदायस्तद्विशिष्टाघटितत्वे सति स्वीयप्राथमिकप्रवृत्तिपूर्वकालिकप्राप्तिविषयाघटितत्वम् ; वैशिष्ट्यञ्च—स्वाघटकत्व–स्वघटकमात्रोद्देश्यकविकारागमातिरिक्तत्वैतदुभयसम्बन्धेन । ('सुध्युपास्ये'त्यत्र 'अनचि चे'ति शास्त्रप्रवृत्तौ यण्त्वरूपस्वीयोद्देश्यतावच्छेदकरूपेणाऽऽश्रीयमाणसमुदायः 'सुध् य्' इति, तद्घटकत्वं यद्यपि द्वित्वनिष्पन्ने द्वितीयधकारेऽस्ति तथापि द्वितीयसम्बन्धाभावात्तदुभयसम्बन्धेन तादृशसमुदायविशिष्टः—उदासीनः, तदघटितत्वं 'सुध्ध्य्' इत्यस्येति तल्लक्ष्यत्वान्न पुनर्द्वित्वं धस्येति समन्वयः ।) 'यून' इत्यत्र 'श्वयुवे'ति शास्त्रीयवकारनिष्ठप्राथमिकप्रवृत्तिपूर्वकालिकप्राप्तिर्वकारनिष्ठा, तद्विषयाघटितत्वाभावेन तल्लक्ष्यत्वाभावात् पुनः सम्प्रसारणप्राप्तौ 'न सम्प्रसारणे सम्प्रसारणमि'ति निषेधश्चरितार्थः । एतत्सूत्रमेवात्र लक्षणे तन्निवेशे मानम् । अत एव 'भूयादि'त्यत्र सकारद्वयस्य लोपः सिद्ध्यति । मात्रपदनिवेशात् 'काण्डे' इत्यादौ तल्लक्ष्यत्वाभावेन पुनः प्राप्तस्य ह्रस्वस्य प्रकारान्तरेण वारणपरं भाष्यं सङ्गच्छते । 'पड्ध्+सन्त' इत्यत्र 'खरि चे'त्यस्य प्राथमिकी धकारनिष्ठा प्रवृत्तिः, तत्पूर्वकालिकप्राप्तिर्डकारनिष्ठा, धुट्प्रवृत्तेः पूर्वं डकारे 'खरि चे'त्यस्य प्राप्तिसत्त्वात्, तादृशप्राप्तिविषयडकारघटितत्वेन तल्लक्ष्यत्वाभावात् डकारे चर्त्वं सिद्ध्यति । न चैवमपि 'या से'त्यादौ टापा सहैकादेशोत्तरं पुनस्त्यदाद्यत्वापत्तिः, 'काण्डे' इत्यनेन तुल्यत्वादिति वाच्यम् ; 'न यासयोरि'ति निर्देशेन टापा सहैकादेशस्थले तल्लक्ष्यत्वज्ञापनेनादोषात् । मात्रपदघटितनिवेशेन स्वोद्देश्यकविभक्त्यनुद्देश्यकत्वस्य ग्रहणेन टाबैकादेशस्य स्वघटकमात्रोद्देश्यकविकारत्वेन तदितराघटितत्वरूपतल्लक्ष्यत्वसत्त्वेनादोषाच्च । न च 'दीव्यती'त्यत्र श्यन्प्रवृत्त्युत्तरं दीव्येति समुदायस्य तल्लक्ष्यत्वाभावेन पुनः श्यनापत्तिः, श्यनः स्वीयप्राथमिकप्रवृत्तावाश्रीयमाण'दिव्ती'ति समुदायाघटकत्वेन तत्समुदायघटकमात्रोद्देश्यकविकारेतरत्वेन च स्वविशिष्टत्वात्, न च विकारपदेन प्रत्ययस्यापि ग्रहणेनादोष इति वाच्यम्, हेतुमण्ण्यन्तस्य तल्लक्ष्यत्वापत्त्या पुनस्ततो हेतुमण्णिचोऽनुत्पत्तिप्रसङ्गादिति वाच्यम्; विशिष्टपदेनैतल्लक्षणे विकरणेतरस्य ग्रहणेनादोषात् । श्यनादीनां प्रत्ययत्वेन स्वप्रकृतिभूतधात्वर्थप्रत्यायकतया कर्त्रर्थत्वाभावेन पुनस्तत्प्राप्तेर्दुर्वचत्वाच्च ।

भाष्यगूढार्थविदस्तु—तच्छास्त्रस्य प्रथमप्रवृत्तौ यद्व्यक्तेः स्वघटकेन येन पदेन ग्रहणं पुनः प्रवृत्तौ तेन पदेन तद्व्यक्तेस्तद्व्यक्तिविकारस्य तद्व्यक्त्युद्देश्यकागमविशिष्टस्य ग्रहणं न भवतीति 'लक्ष्ये लक्षण'न्यायार्थः । 'दीव्यती'त्यत्र दिवशब्दस्य प्रथमप्रवृत्तौ दिवादिशब्देन ग्रहणेन पुनः प्रवृत्तौ दिवादिशब्देन दिवशब्दस्य ग्रहणाभावेन न द्वितीयश्यन्प्रत्ययापत्तिः । हेतुमण्णिविषये तु धातुशब्देन पूर्वप्रवृत्तौ णिप्रकृतेर्ग्रहणम् ; पुनः प्रवृत्तौ तु ण्यन्तस्येति लक्ष्यभेदः स्पष्ट एव । 'पट्त्सन्त' इत्यत्र 'खरि चे'त्यस्य प्रथमप्रवृत्तौ धस्य झल्पदेन ग्रहणम्, द्वितीयप्रवृत्तौ तु तद्विकारस्य खर्पदेन ग्रहणमिति

'न वृद्धयश्चतुर्भ्य' इति निषेधस्य [illegible] वृद्धिलक्षणस्ये-ड्विकल्पस्याऽऽपत्तिरत आह—

## निषेधाश्च बलीयांसः ॥ १२१ ॥

अन्तरङ्गादुपजीव्यादपि बलीयांस इत्यर्थः ।

चतुर्भ्य इति तु स्पष्टार्थमेव । अत एव तत्प्रत्याख्यानं भाष्योक्तं सङ्गच्छते ।

अत एव सवर्णसंज्ञादेर्निषेधविषये न विकल्पः; अन्यथा मीमांसकरीत्या विधेरुपजीव्यत्वेन प्राबल्यात्तस्य सर्वथा बाधानुपपत्त्या दुर्वारः स इति मञ्जूषायां विस्तरः ।

अत एव 'द्वन्द्वे च, विभाषा जसी'ति चरितार्थम् ।

---

न न्यायविषयः । नन्वेवं 'भूयादि'त्यत्र 'स्कोरि'ति 'भवेदि'त्यत्र 'लिङः सलोपे'ति च सकारद्वयलोपानापत्तिः—आद्ये प्रथमवृत्तौ पदपदेन यस्य समुदायस्य ग्रहणं द्वितीयप्रवृत्तावपि तेनैव पदपदेन तस्य ग्रहणात्, द्वितीयेऽपि लिङ्पदेनैव तस्य समुदायस्य प्रवृत्तिद्वयेऽपि ग्रहणात्—इति चेन्न । अत्र प्रथमप्रवृत्तौ यद्वयक्तीत्यत्र यत्पदेन तच्छास्त्रीयैककालिक[illegible] ग्रहणेनाऽऽद्ये 'भूयास्सत्' इति समुदायस्य पदपदेन गृहीतस्य 'स्कोरि'ति शास्त्रीयैककालिकप्राप्तिविषयसकारद्वयघटितत्वेन द्वितीये 'यासस्त्' इति समुदायस्य लिङ्पदेन गृहीतस्य तादृशसकारद्वय-घटितत्वेन चोक्तन्यायविषयत्वाभावात्, प्रथमप्रवृत्त्यैव सकारद्वयनिवृत्तिरिति प्राचीनमते शङ्काया अनुदयाच्च । एवं 'यून' इत्यादावपि बोध्यम् । अत एव 'लिटि धातोरि'ति सूत्रेऽनभ्यासग्रहणप्रत्याख्यानपरं भाष्यं सङ्गच्छते; अन्यथा यङन्तप्रकृतिकण्यन्ताच्चङि शास्त्रान्तरेण द्वित्वप्राप्त्यैतन्न्यायविषयाभावेन पुनर्द्वित्व-वारणाय तदावश्यकतया प्रत्याख्यानसङ्गतिः स्पष्टैव । एवं नोनूयतेर्लिटि छान्द-सत्वादामभावे 'नोनाव' इत्यत्र प्रथमप्रवृत्तावुकारस्यैकाज्घटकाच्पदेन ग्रहणात्तद्विका-रस्य ओकारस्य पुनः प्रवृत्तावच्पदेन ग्रहणाभावेन नोशब्दस्य पुनर्द्वित्वं नेत्यादि सुध्युपास्यशब्दे शब्दरत्नप्रकाशे विस्तरेण निरूपितं सर्वमत्रगन्तव्यमिति प्राहुः ।१२०॥

बलीयांस इति । ननु चतुर्ग्रहणसामर्थ्यादेवेण्निषेधे सिद्धे एषा व्यर्थेत्यत आह—चतुर्भ्य इति ।

उपजीव्यत्वेनेति । विधिशास्त्राभावे निषेधरूपाभावस्य प्रतियोग्यप्रसिद्ध्या-ऽभावस्याप्रसिद्धिः स्यादिति भावः ।

द्वन्द्वे चेति । द्वन्द्वे विकल्पविधायकं 'विभाषा जसी'ति चरितार्थमित्यर्थः अन्यथा 'द्वन्द्वे चे'ति निषेधस्य स्वोपजीव्यसर्वनामसंज्ञायाः सर्वथा बाधानुपपत्त्यैव पर्यायसिद्धौ 'विभाषा जसी'ति सूत्रारम्भो व्यर्थ एव स्यादिति भावः ।

विघ्युन्मूलनाय प्रवृत्तिरस्या बीजम् । 'न लुमता, कमेर्णिङि'त्यनयोर्भाष्ये स्पष्टैषा ॥ १२१ ॥

ननु अत्यन्तस्वार्थिकानामर्थप्रत्यायकत्वरूपप्रत्ययत्वानुपपत्तिरत आह—

## अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे ॥ १२२ ॥

यस्यार्थः प्रकृत्या प्रत्याय्यते सोऽपि प्रत्यय इत्यस्याप्यङ्गीकारात्तस्य प्रत्ययत्वमिति न दोषः । स्वार्थ इत्यस्य स्वीयप्रकृत्यर्थ इत्यर्थः ।

महासंज्ञाबलादर्थाकाङ्क्षायामन्यानुपस्थितिरस्या बीजम् । 'सुपि स्थ' इत्यादिसूत्रेषु भाष्ये स्पष्टैषा ॥ १२२ ॥

## योगविभागादिष्टसिद्धिः ॥ १२३ ॥

इष्टसिद्धिरेव, न त्वनिष्टापादनं कार्यमित्यर्थः । तत्तत्समानविधिकद्वितीययोगेन विभक्तस्यानित्यत्वज्ञापनमेतद्बीजम् ॥ १२३ ॥

---

न लुमतेति । तत्र हि "उत्तरपदत्वे चापदादिविधावि'ति वार्तिकस्य प्रत्याख्यानप्रस्तावे 'निषेधाश्च बलीयांस' इत्यनेन 'असर्वनामस्थान' इति प्रतिषेधः प्राप्नोती"त्युक्तम् । कमेर्णिङिति । तत्र हि "त्रिङति चे'त्यत्रेग्ग्रहणाननुवृत्तिमते णिङ्णकारस्य 'णेरनिटि'त्यत्र सामान्यग्रहणार्थत्वेन ङकारस्याऽऽत्मनेपदार्थत्वेन च सावकाशत्वान् 'कामयते' इत्यत्रानया वृद्धिनिषेधः प्राप्नोती"त्युक्तम् । यद्यपीदमेकदेशि भाष्यं; तथापि भाष्यानुक्तत्वेनाप्रामाण्यशङ्कानिरासार्थतयैतदुपन्यसनं सार्थकमिति बोध्यम् ॥ १२१ ॥

सोऽपीति । अपिना स्वार्थपरिग्रहः । तथा च स्वस्वप्रकृत्यन्यतरार्थप्रत्यायकत्वं प्रत्ययत्वमित्यर्थः ।

अन्यानुपस्थितिरिति । 'उपस्थितं परित्यज्ये'ति न्यायादिति भावः ।

सुपिस्थ इति । तत्र हि 'स्थ' इति योगविभागेन 'आखूत्थ' इत्यस्य साधनावसरे "भावार्थकत्वमेव कप्रत्ययस्य न त्वन्यार्थकत्वमि"त्युक्तम् ॥ १२२ ॥

इष्टसिद्धिरिति । विश्वतोमुखत्वात् सूत्राणां योगविभागेऽप्याचार्यतात्पर्यात् तेनेष्टसिद्धिरेव नानिष्टापादनमित्यर्थः । अत एव 'आत्' इति योगविभागेन 'क्त्व' इत्यादावेव लोपः, न तु हाहाशब्दादाविति भावः । तदुक्तमभियुक्तैः—

> "अल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखम् ।
> अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥"

इति । विश्वतोमुखत्वं योगविभागादिभिरनेकार्थबोधकत्वमिति तद्व्याख्यातारः ॥ १२३ ॥

## पर्यायशब्दानां लाघवगौरवचर्चा नाऽऽद्रियते ॥ १२४ ॥

तत्र तत्रान्यतरस्यां विभाषा वेति सूत्रनिर्देशज्ञापितमिदम् ॥ १२४ ॥

## ज्ञापकसिद्धं न सर्वत्र ॥ १२५ ॥

स्पष्टमेव पठितव्येऽनुमानाद् बोधनमसार्वत्रिकत्वार्थमित्यर्थः, तेन ज्ञापकसिद्धपरिभाषयाऽनिष्टं नाऽऽपादनीयमिति तात्पर्यम् । भाष्येऽपि ध्वनितमेतत् 'ङ्याप्'सूत्रादौ ।

ज्ञापकेति न्यायस्याप्युपलक्षणम् । न्यायज्ञापकसिद्धानामपि केषाञ्चित् कथनमन्येषामनित्यत्वबोधनायेति भावः । यथा 'तत्स्थानापन्ने तद्धर्मलाभ' इति न्यायसिद्धं स्थानिवत्सूत्रं, ज्ञापकसिद्धं च तत्र 'अनल्विधावि'ति ॥१२५॥

ननु 'द्रोग्धा द्रोग्धा द्रोढा द्रोढे'त्यादौ घत्वादीनामसिद्धत्वात् पूर्वं द्वित्वे एकत्र घत्वमपरत्र ढत्वमित्यस्याप्यापत्तिरत आह—

## पूर्वत्रासिद्धीयमद्वित्वे ॥ १२६ ॥

द्वित्वभिन्ने पूर्वत्र कर्तव्ये परमसिद्धमित्यर्थः । 'पूर्वत्रासिद्धमि'त्यधिकारभवं शास्त्रमस्या लिङ्गम् ।

---

लाघवगौरवचर्चेति । लाघवगौरवविचार इत्यर्थः । तथा च पर्यायशब्देषु उच्चारणगौरवेणार्थान्तरकल्पनाभिनिवेशो न कार्य इति भावः । बहुलशब्दस्य विकल्पार्थकत्वेऽपि वाशब्दपर्यायत्वाभावेन 'मघवा बहुलमि'त्यत्र बहुलग्रहणसामर्थ्यादर्थान्तरकल्पनं नैतद्विरुद्धमिति ध्येयम् ॥ १२४ ॥

असार्वत्रिकत्वार्थमिति । तेन 'अपपरी'त्यनेन बहिर्योगे ज्ञापिता पञ्चमी 'करस्य बहिरि'त्यत्र नेति बोध्यम् । ध्वनितमिति । तत्र ज्ञापकेन 'लिङ्गविशिष्ट'परिभाषामुक्त्वाऽनया 'द्विषतीताप' इत्यत्र 'द्विषत्परयोरि'ति नेति सूचितम् ।

ज्ञापकसिद्धं च तत्रेति । ल्यपि क्त्वावृत्तितादित्वस्य स्थानिवत्त्वादेव लाभे 'अदो जग्धिरि'ति ल्यब्ग्रहणमुक्तपरिभाषायां ज्ञापकम्, तेनाल्विधौ स्थानिवद्भावनिषेधज्ञापने तु ल्यपि तादित्वाभावेन 'अदो जग्धिरि'त्यस्याप्राप्त्या, 'प्रजग्ध्ये'त्यत्र जग्ध्यादेशार्थं ल्यब्ग्रहणमावश्यकमिति भावः ॥ १२५ ॥

द्वित्वभिन्न इति । द्वित्वे कर्तव्ये त्रैपादिकासिद्धत्वं नेति तु नार्थः, तथा सति

यत्र च सिद्धत्वासिद्धत्वयोः फले विशेषस्तत्रैवेयम् । 'कृष्णर्द्धिरि'त्यादौ जश्त्वात्पूर्वमनन्तरं वा द्वित्वे रूपे विशेषाभावेन नास्याः प्रवृत्तिरित्यन्यत्र विस्तरः । 'सर्वस्य द्वे' इति सूत्रे भाष्ये स्पष्टेयम् ॥ १२६ ॥

ननु 'गोष्वश्वेषु च स्वामी'त्यादिवद् 'गोष्वश्वानां च स्वामी'त्यपि स्यात्, 'स्वामीश्वरे'ति सूत्रेण षष्ठीसप्तम्योर्विधानादत आह—

**एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भविष्यति ॥ १२७ ॥**



यत्रान्याकृतिकरणे भिन्नार्थत्वसम्भावना तद्विषयोऽयं न्याय इत्यन्यत्र विस्तरः । 'कृञ्चानुप्रयुज्यते' इति सूत्रे भाष्ये स्पष्टेयम् ॥ १२७ ॥

---

'द्युभ्यामि'त्यादौ वकारद्वित्वोत्तरमुत्वे तत्पूर्वं वकारश्रवणापत्तेः । अत्र द्वित्वपदेनाष्टमिकं पदद्वित्वं वर्णद्वित्वं पाष्ठद्वित्वं च गृह्यते, विनिगमनाविरहादिति स्पष्टमाकरे । अत एव 'वाक्क्' इति भाष्योक्तं द्वित्वोदाहरणं सङ्गच्छते । इयं चानित्या 'उभौ साभ्यासस्ये'ति लिङ्गादित्यन्यत्र विस्तरः ।

'नमुने' इत्यत्र नेति योगविभागोऽस्या ज्ञापक इति—केचित् ।

अन्ये तु—ग्राहकसूत्रेऽजिति वक्तव्येऽण्ग्रहणमस्यां ज्ञापकम् । तद्धि 'सँय्यन्ता, विद्वाँल्लिखती'त्यादावनुनासिकयवलानां यत्वबोधनद्वारा द्वित्वार्थम् । एतत्परिभाषाया अभावे तु द्वित्वात्पूर्वं परसवर्णस्य दौर्लभ्यात्तद्वैयर्थ्यापत्तिः स्पष्टैवेति प्राहुः ॥ १२६ ॥

एकस्या आकृतेरिति । अस्यां यत्र तत्रेति शेषः । आकृतिः=श्रावणप्रत्यक्षविषयतावच्छेदको धर्मः । आश्रये चोपचारात्प्रयोगः । तस्य चार्थवत एव व्याख्यानाद् ग्रहणम् । तथा च यत्र वाक्ये यदर्थकयद्धर्मवतः प्रयोगोऽस्ति, तत्र वाक्ये तदर्थकतद्धर्मवत एव सति सम्भवे प्रयोगो भवति, न तु तदर्थकभिन्नधर्मवत इति परिभाषार्थः ।

भिन्नार्थत्वसम्भावनेति । तथा च समानार्थकसमानधर्मवति एकस्मिन् तात्पर्यावधारणेऽन्यत्र तादृशे शब्दे तात्पर्यग्राहकान्तरानपेक्षेति लाघवमेवात्र बीजमिति सूचितम् । अत एव सुध्युपास्यशब्दे द्विधमेकयमित्युक्तं सङ्गच्छते ।

कृञ्चानुप्रयुज्यत इति । तत्र "आमन्तस्य लिङन्ततया प्रकृतन्यायेनानुप्रयुज्यमानाः कृभ्वस्तयोऽपि लिट्परा एव भवन्तीति व्यर्थं कृञ्चानुप्रयुज्यते इत्यत्र लिड्ग्रहणमि"त्युक्तम् ॥ १२७ ॥

ननु 'विव्याधे'त्यादौ परत्वाद् 'हलादिः शेषे' यस्य सम्प्रसारणं स्यादत आह—

**सम्प्रसारणं तदाश्रयं च कार्यं बलवत् ॥ १२८ ॥**

तदाश्रयं 'सम्प्रसारणाच्चे'ति पूर्वरूपम्।

वस्तुतो 'लिट्यभ्यासस्ये'ति सूत्रे उभयेषां ग्रहणस्योभयेषां सम्प्रसारणमेव यथा स्यादित्यर्थकत्वेनेदं सिद्धमित्येषा व्यर्थेति 'लिट्यभ्यासस्ये'ति सूत्रे स्पष्टम्। फलान्तरान्यथासिद्धिरपि तत्रैव भाष्ये स्पष्टा। 'णौ च संश्चङोरि'त्यादौ संश्चङोरित्यादि [illegible]ति तत्रापि न दोष इत्यन्यत्र विस्तरः ॥ १२८ ॥

यत्तु—

**क्वचिद्विकृतिः प्रकृतिं गृह्णाति ॥ १२९ ॥**

तेन 'निसमुपविभ्यो ह्व' इत्यत्र ह्वाग्रहणेन ह्वेञो ग्रहणसिद्धिः।

तथा—

**औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् ॥ १३० ॥**

तेन 'दादेर्धातोरि'त्यत्रौपदेशिकधातोरेव ग्रहणमिति।

—तन्न ; तयोर्निर्मूलकत्वाद्भाष्याव्यवहृतत्वाच्च, "न च विकृतिः प्रकृतिं गृह्णाती"ति 'ग्रहिज्ये'ति सूत्रस्थभाष्येणाऽऽह्वायास्तिरस्काराच्च। 'निसमुपविभ्यो ह्व' इत्यादौ ह्वेञोऽनुकरणे सौत्रः प्रयोगः।

---

इदं सिद्धमिति। 'विव्याधे'त्यादि वच्यादिग्रह्यादुदेश्यकसम्प्रसारणविषयलक्ष्यं सिद्धमित्यर्थः। व्यर्थेति —नन्वेतदभावे 'भृष्ट' इत्यत्र रमागमापत्तिः, 'जुहुवतुरि'त्यत्र सम्प्रसारणपूर्वरूपे बाधित्वा परत्वादातो लोपापत्तिः, 'शुशुवतुरि'त्यत्र सम्प्रसारणं बाधित्वेयङापत्तिरित्यत आह—अन्यथासिद्धिरिति। सम्प्रसारणस्य नित्यत्वेन पूर्वरूपस्यान्तरङ्गत्वेन पूर्वं प्रवृत्त्या दोषाभावेनैतस्या वैयर्थ्यमिति भावः। इत्यादाविति। आदिना 'स्वपिस्यमिव्येञां यङि'त्यस्य संग्रह ; अन्यथा 'वेवीयत' इत्यत्रान्तरङ्गत्वात् सम्प्रसारणात्पूर्वं द्वित्वे उत्तरखण्डस्यैव सम्प्रसारणेऽनिष्टरूपापत्तिरिति भावः ॥ १२८ ॥

सौत्रः प्रयोग इति। अत्र सूत्रे शित्परकत्वाभावेन ह्वेञ आत्वे 'आतो धातोरि'-

आत्त्वविषय एवाऽऽत्मनेपदं, प्रयोगस्थानामेवानुकरणस्य घुसंज्ञासूत्रे भाष्ये स्पष्टमुक्तत्वादित्यन्ये ।

अन्यथापि तत्रोपदेशग्रहणं कुर्वतः सूत्रकृतो वार्तिककृतश्चासम्मता । "इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते यत्रास्यैतद्रूपमिति, रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगम्, अस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते, क ? उपदेशो नामे"ति घसंज्ञासूत्रस्थभाष्येण प्रायोगिकासम्भवे तद्ग्रहणमित्यर्थस्य लाभेन भाष्यासम्मता च ।

भाष्ये सानुबन्धकेत्यादि प्रकृताभिप्रायेण । 'दादेरि'ति सूत्रे दादिपदस्यौपदेशिकदादित्ववति लक्षणेति न दोष इत्यन्यत्र विस्तरः ॥ १२९, १३० ॥

यदपि—ननु 'अजर्घा, बेभिदीती'त्यादौ तत्तद्गणप्रयुक्ता विकरणा यङ्लुकि स्युः, तथा यङ्लुकि 'बेभेदिते'त्यादौ 'एकाच' इतीण्निषेधः स्यादत आह—

**शितपा शपाऽनुबन्धेन निर्दिष्टं यद् गणेन च ।**
**यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥१३१॥**

---

अनुबन्धनिर्देशो द्विधा—स्वरूपेण, 'ङित' इत्यादिपदेन च । 'हन्ति, याति, वाति'; 'सनीवन्ते'ति सूत्रे 'भरे'ति ; 'दीङो युडचि', अनुदात्तङितः', 'दिवा- 'दिभ्यः श्यन्', 'एकाच उपदेशे' इत्युदाहरणानि ।

---

त्याकारलोपे त्रेत्रय' इत्यादौ 'घेर्ङिती'ति गुणे कृतेऽपि त्रिशब्दस्यैवात्र ह्रेशब्दस्यैव बोधकत्वेन पाणिनितात्पर्यविषयत्वात् 'स्वं रूपमि'त्यनेन बोधकत्वेनाभिमतवृत्त्याऽऽनुपूर्वीमत एव ग्रहणेन ह्वो ग्रहणे बाधकभाव इति भावः ।

औपदेशिकदादित्ववतीति । तत्रद्रीत्यौपदेशिकधातोर्ग्रहणेन दामलिडादौ घत्ववारणेऽपि 'अधोगि'त्यादौ घत्वानापत्तिर्दुर्वारैव । मम तु लक्षणादिनोभयत्र इष्टसिद्धिरिति बोध्यम् ॥ १२९, १३० ॥

शितपा शपेति । इत्थंभूतलक्षणे तृतीया । शितब्विशिष्टं शब्विशिष्टमनुबन्धविशिष्टं गणविशिष्टमेकाजिति बोधकं पदं च यत्र शास्त्रे उच्चारितमस्ति तानि पञ्चापि शास्त्राणि यङ्लुकि न प्रवर्तन्ते इति परिभाषार्थः ।

स्वरूपेणेति । 'दीङ' इत्येवमनुबन्धघटितरूपेणेत्यर्थः । प्रत्याहारेष्वनुबन्धसदृशोच्चारणेऽप्यनुबन्धाभावात् तद्व्युदासः ।

द्वित्वं 'सनाद्यन्ता' इति 'भूवादय इति धातुत्वं च भवत्येव 'गुणो यङ्लुकोरि'-त्यादिभिर्निषेधानित्यत्वकल्पनात्, तेन भष्भावोऽपि 'अजर्घा' इत्यादौ भवति। अत एव 'श्वीदित' इति सूत्रे कैयटे "यत्रैकाजग्रहणं किञ्चिदि"ति पाठः। 'एकाच उपदेशेऽनुदात्तादि'ति सूत्रे एकाज्ग्रहणेनैकदेशानुमत्यैषा ज्ञाप्यते; अन्यथोपदेशेऽनेकाचामुदात्तत्वस्यैव सत्त्वेन तद्वैयर्थ्यं स्पष्टमेवेति।

—तदपि न; भाष्यानुक्तत्वात्, एकाज्ग्रहणस्य वधिव्यावृत्त्यर्थमावश्यकत्वाच्च। न च वधिस्स्थान्युपदेश एकाजेवेति वाच्यम्; साक्षादुपदेशसम्भवेनैतद्विषये स्थान्युपदेशाग्रहणाद्, उपदेशत्वावच्छेदेनैकाजित्यर्थाच्च। किञ्चोक्तार्थमेकाज्ग्रहणम्। अत एव 'जागरितवानि'त्यादावुपदेश उगन्तत्वमादाय 'श्र्युकः किती'तीण्निषेधो न। तत्रोपदेश इत्यनुवृत्तिश्च 'स्तीर्णमि'त्यादाविण्निषेधायेत्याकरे स्पष्टम्।

न च भाष्ये यङ्लोपे 'बेभिदिते'त्यादाविट्प्रवृत्त्यर्थ'मुपदेशेऽनुदात्तादेकाचः श्रूयमाणादङ्गादित्यर्थे सनीट्प्रतिषेधो वक्तव्यो बिभित्सती'ति दोषोपन्यासवत् यङ्लुकि दोषानुपन्यासेन तत्र इडिष्टः, यङ्लोपेत्यादिभाष्यं तूपक्रमोपसंहारबलेन न यङ्लुग्विषयम्, किञ्च तस्य तद्विषयकत्वे यङ्लोपे स्थानिवत्त्वस्येव यङ्लुक्युपायाप्रदर्शनेन न्यूनतापत्तिरिति वाच्यम्; इड्विषये यङ्लुको लोकेऽनभिधानेन छन्दसि सर्वविधीनां वैकल्पिकत्वेन च तत्र दोषानुपन्यासेनादोषात्। अन्यथा "एकाज्ग्रहणं किमर्थमि"ति प्रश्नस्य, "उत्तरत्र जागर्त्यर्थमिह वध्यर्थमि"त्युत्तरस्य च भाष्ये निरालम्बनत्वापत्तेः।

---

अनित्यत्वकल्पनादिति। अत एव 'चोस्कुन्दीती'त्यादौ 'इदितो नुमि'ति नुम्, 'बोभुवती'त्यादावुवङि 'ङिच्चे'त्यन्तादेशश्चेति बोध्यम्।

वधिव्यावृत्त्यर्थमिति। 'अवधीदि'त्यादौ वृद्धिवारणायादन्तत्वाश्रयणेनास्य अनेकाच्त्वं स्पष्टमेवेति भावः। न चाच इत्येवैकत्वविवक्षया तद्वतो ग्रहणेन च सामर्थ्याद्वधिव्यावृत्तिसिद्धौ एकग्रहणघटित'मेकाजि'ति पदमुक्तपरिभाषाज्ञापकमिति वाच्यम्; निरुक्तलक्षणायां बीजाभावात्, सूत्रे एकवचनस्यातन्त्रत्वेनैकत्वविशिष्टबोधकत्वाभावात्, अजन्तेत्यर्थनिवारकत्वेनैकग्रहणस्य चारितार्थ्याच्चोक्तार्थज्ञापकत्वासम्भवात्।

निरालम्बनत्वापत्तेरिति। एकाज्ग्रहणस्य यङ्लुग्व्यावर्तकत्वेन सफलत्वे उक्तप्रश्नोत्तरयोरसङ्गत्यापत्तेरित्यर्थः।

केचित्तु—'वध्यर्थमि'त्यत्र वधिग्रहणं यङ्लुकोऽप्युपलक्षणमिति वदन्ति।

वं 'सनाद्यन्ता' इति 'भूवादय इति धातुत्वं च भवत्येव 'गुणो यङ्लुकोरि'-द्भिर्निषेधानित्यत्वकल्पनात्, तेन भष्भावोऽपि 'अजर्घा' इत्यादौ भवति।
एव 'इत्वोदित' इति सूत्रे कैयटे "यत्रैकाजग्रहणं किञ्चिदि"ति पाठः।
ाच उपदेशेऽनुदात्तादि'ति सूत्रे एकाज्ग्रहणेनैकदेशानुमत्यैषा ज्ञाप्यते, थोपदेशेऽनेकाचामुदात्तत्वस्यैव सत्त्वेन तद्वैयर्थ्यं स्पष्टमेवेति।

—तदपि न; भाष्यानुक्तत्वात्, एकाज्ग्रहणस्य वधिव्यावृत्त्यर्थमावश्य-ाच्च। न च वधिस्स्थान्युपदेश एकाजेवेति वाच्यम्; साक्षादुपदेशसम्भवे-द्विषये स्थान्युपदेशाग्रहणाद्, उपदेशत्वावच्छेदेनैकाजित्यर्थाच्च। किञ्चोक्त-मेकाजग्रहणम्। अत एव 'जागरितवानि'त्यादावुपदेश उगन्तत्वमादाय कः क्किती'तीण्निषेधो न। तत्रोपदेश इत्यनुवृत्तिश्च 'स्तीर्णमि'त्यादाविण्-ध्यायेत्याकरे स्पष्टम्।

न च भाष्ये यङ्लोपे 'बेभिदिते'त्यादाविट्प्रवृत्त्यर्थं 'ष्युपदेशेऽनुदात्तादेकाचः माणादङ्गादित्यर्थे सनीट्प्रतिषेधो वक्तव्यो बिभित्सती'ति दोषोपन्यासवत् लुकि दोषानुपन्यासेन तत्र इडिष्टः, यङ्लोपेत्यादिभाष्यं तूपक्रमोपसंहारबलेन ङ्लुग्विषयम्, किञ्च तस्य तद्विषयकत्वे यङ्लोपे स्थानिवत्त्वस्येव यङ्लु-ायाप्रदर्शनेन न्यूनतापत्तिरिति वाच्यम्; इड्विषये यङ्लुको लोकेऽनभि-न छन्दसि सर्वविधीनां वैकल्पिकत्वेन च तत्र दोषानुपन्यासेनादोषात्। था "एकाज्ग्रहणं किमर्थमि"ति प्रश्नस्य, "उत्तरत्र जागर्त्यर्थमिह र्थमि"त्युत्तरस्य च भाष्ये निरालम्बनत्वापत्तेः।

---

अनित्यत्वकल्पनादिति। अत एव 'चोस्कुन्दीती'त्यादौ 'इदितो नुमि'ति नुम्, वती'त्यादावुवङि 'ङ्च्चे'त्यन्तादेशश्चेति बोध्यम्।

वधिव्यावृत्त्यर्थमिति। 'अवधीदि'त्यादौ वृद्धिवारणायादन्तत्वाश्रयणेनास्य ाच्त्वं स्पष्टमेवेति भावः। न चाच इत्येवैकत्वविवक्षया तद्वतो ग्रहणेन च र्याद्वधिव्यावृत्तिसिद्धौ एकग्रहणघटित'मेकाजि'ति पदमुक्तपरिभाषाज्ञापकमिति म्; निरुक्तलक्षणायां बीजाभावात्, सूत्रे एकवचनस्यातन्त्रत्वेनैकत्वविशिष्ट-त्वाभावात, अजन्तेत्यर्थनिवारकत्वेनैकग्रहणस्य चारितार्थ्याच्चोक्तार्थज्ञाप-सम्भवात्।

निरालम्बनत्वापत्तेरिति। एकाज्ग्रहणस्य यङ्लुग्व्यावर्तकत्वेन सफलत्वे उक्त-त्तरयोरसङ्गत्यापत्तेरित्यर्थः।

केचित्तु—'वध्यर्थमि'त्यत्र वधिग्रहणं यङ्लुकोऽप्युपलक्षणमिति वदन्ति।

न चाऽऽर्धधातुकाक्षिप्तधातोरेकाच इति विशेषणम्, एवं च ईडि-त्यादावुत्तरखण्डस्य धातोरेकाच्त्वाभावस्तथैव उत्तरखण्डेऽपि तत्त्वात्. 'दय-तेरि'ति सूत्रे भाष्ये स्पष्टम्, एवं च प्रकृतभाष्यासङ्गतिरिति वाच्यम्, आक्षिप्तस्यान्वये च मानाभावात्। अङ्गत्वं तु विशिष्ट एवे'त्येकाच' सूत्रे भाष्ये स्पष्टम्; निरूपितं च तनादिशेषे शब्देन्दुशेखरे। धातु-खण्ड एव। अत एव 'एकाचो बशो भषि'ति सूत्रे धातोरवयवस्य वैयधिकरण्येनान्वये गर्धप्सिद्धिः प्रयोजनमुक्तं भाष्ये, न तु प्रसिद्ध'मन'

'अजर्घा, बेभिदीती'त्यादौ श्नम्श्यनादयस्तु 'चर्करीतं चे'त्य-पाठेन यङ्लुगन्ते गणान्तरप्रयुक्तविकरणस्याप्राप्त्या न भवन्ति।

छान्दसत्वादेव कार्यान्तराणामपि छन्दसि दृष्टप्रयोगेष्वदृष्ट बोध्यः। भाषायां तु तादृशानामभाव एव। श्तिप्शबादिनिर्देशास्तु इत्यादिसूत्रस्थतन्निर्देशवन्नार्थसाधका इत्यन्यत्र विस्तरः॥ १३१

---

अङ्गत्वं तु विशिष्ट एवेति। द्वित्वनिष्पन्ने 'दयतेरि'ति सूत्रस्थभाष्यान र्थवत्त्वव्याप्यधातुत्वादिधर्मातिदेशेऽपि प्रकृतित्वानतिदेशेन "सैव च प्रत्यभिज्ञानात् द्वित्वोद्देश्यस्य प्रकृतित्वेन विशिष्टे तत्त्वं सुवचमिति भावः। उत्तरखण्डे एव धातुत्वसत्त्वादित्यर्थः। 'अजर्घा' इत्यस्य प्रसिद्धत्वं त्वन्यः बोध्यम्। 'चर्करीत'शब्दो यङ्लुङन्तपरः। अत एव सप्तमे भाष्ये 'कि तान्तमि'ति प्रयोग उपपद्यते।

नार्थसाधका इति। तेषां भाष्याविचारितप्रयोजनकत्वेन पारायणा साधकत्वमेव कल्पयितुं युक्तमिति भावः।

विस्तर इति। परे तु—अत्र सूत्रे 'अज्वत' इत्युक्तावप्युपदेशेऽनुदा ऽप्रसिद्धेः' सामर्थ्यात्तस्योपदेशावच्छेदेनैकाच इत्यर्थात् उपदेशावच्छेदेना र्थाद्वा वधिव्यावृत्तिसिद्ध्यर्थैकपदघटित'मेकाजि'ति पदं व्यर्थं सद्

ज्ञापकम्। किञ्च—यङ्लोपे 'बेभिदिते'त्यादिभाष्ये यङ्लोपे दोषवार वत्त्वस्येव यङ्लुक्युपायान्तरस्याप्रदर्शनेन इडागमस्य तत्रेष्टत्वमवगत्य भाष्याभिमतत्वमेव। इड्विषये यङ्लुको लोकेऽनभिधानकल्पने तु किञ्च—तस्य छान्दसत्वेऽपि छान्दसरूपसाधकान्यप्रमाणप्रणयन रूपप्रमाणाभ्युपगमे बाधकाभावः। किञ्च—'यङ्लोप' इति भा पायाप्रदर्शनरूपन्यूनतापत्तिपरिहाराय यङ्लुगन्तेड्विषयलक्ष्याणां त कल्पनापेक्षया परिभाषाया भाष्याभिमतत्वकल्पनाया एव न्याय्यत्वम् 'एकाच' इति सूत्रशेषे भाष्ये आद्युदात्तनिपातनस्वरस्य प्रकृतिस्वरत्व 'वधिषीष्टे'त्यादावुपदेशेऽनुदात्तत्वाभावेन निषेधाविषयत्वोक्तावपि सूत्रे

ननु 'ञमोऽचि, रधेश्च, नेदृ[illegible]रि'त्येव सूत्र्यतां किं ह्रोरधिग्रहणेनेत्यत आह—

**पद्गौरवाद्योगविभागो गरीयान् ॥ १३२ ॥**

प्रतिव.क्यं भिन्नवाक्यार्थबोधकल्पनेन गौरवं स्पष्टमेव । परन्तु भाष्यासम्मतेयम्, 'टाङसी'ति सूत्रस्थभाष्यविरुद्धा च ।

तत्र च इनादेशे इकारप्रत्याख्यानं योगविभागेनैव कृतमिति बहवः ॥१३२॥

**अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः ॥१३३॥**



ग्रहणस्य फलान्तराप्रदर्शनेन तस्य यङ्लुग्व्यावर्तकत्वमेव भाष्याभिमतमिति स्पष्टमेव । किञ्च—तत्तद्गणप्रयुक्तश्यन्नादिवारणमप्यशक्यं, यङ्लुगन्तस्यादादौ पाठस्य भ्वादियङ्लुगन्तप्रकृतिकशपो निवर्तनेन चारितार्थ्यात् । यङ्लु[illegible]कल्पनेन तत्तत्कार्यवारणं तु उक्तयुक्त्याऽयुक्तमेवेति प्राहुः ॥ १३१ ॥

गरीयानिति । अतिशयगौरवविशिष्ट इत्यर्थः । गौरवस्य क्लेशजनकत्वेन हेयत्वं लोकप्रसिद्धमिति नापूर्वैषेति बोध्यम् ।

गौरवमेवोपपादयति—प्रतिवाक्यमिति । प्रत्येकं भिन्नसामग्र्या [illegible] चानेकपदार्थसम्मेलनावश्यकतया गौरवं स्फुटमेवेत्यर्थः । भाष्यासम्मतेति । ईदृशगौरवस्य कुत्रापि तेनानुक्तेरिति भावः । ननु—'अप्रतिषिद्धमि'ति न्यायात् लोकसिद्धाया अस्या भाष्यानुमतत्वमित्यत आह—टाङसीतीति ।

बहव इति । परे तु—तद्भाष्यमेकदेश्येव; अत एव 'ऋलक्' सूत्रादौ भाष्यकृता कृतं "महतो वंशस्तम्बाल्लटवाऽनुकृष्यत" इत्यनेन स्वल्पगौरवस्य महता क्लेशेन वार्तिककृता कृतस्य परिहारस्यावहेलनं सङ्गच्छते । किञ्च—वर्णगौरवाद्योगविभागगरीयस्त्वस्योक्तभाष्यविरुद्धत्वेऽपि निरुक्तपरिभाषायां लोकसिद्धायां भाष्यविरोधाभाव इति वदन्ति ॥ १३२ ॥

अर्धमात्रालाघवेनेति । हेतावेषा तृतीया । अर्धमात्रालाघवजन्यमुत्सवं पुत्रोत्सवं = पुत्रोत्सवसदृशं मन्यन्ते, पुत्रोत्सववत् तुष्यन्तीत्यर्थः ।

अन्ये तु—प्रकृत्यादित्वादेषा तृतीया । अर्धमात्रालाघवाभिन्नं पुत्रोत्सवं = पुत्रजन्मरूपं सुखजनकं व्यापारं मन्यन्ते इत्यर्थः । तथा च विशिष्टसुखजनके पुत्रजन्मरूपे व्यापारे अर्धमात्रालाघवाभेदबोधने तादृशसुखजनकत्वमुक्तलाघवस्यार्थात् सिद्धयति । किञ्च—अत्रापिशब्दशेषेणार्धमात्रालाघवेनापि पुत्रोत्सवं वैयाकरणा मन्यन्ते किमुत ततोऽधिकलाघवेनेति 'कैमुतिक'न्यायेन मात्रादिकृतलाघवस्याऽऽदरणीयतामाहुः ।